# ṚGVEDA WITH COMMENTARIES

OF

SKANDASVĀMIN, UDGĪTHA, VEṄKAṬA-MĀDHAVA AND MUDGALA





PART VII

( Maṇḍala X, 46-191 )

Edited by

VISHVA BANDHU



1965

VISHVESHVARANAND VEDIC RESEARCH INSTITUTE

HOSHIARPUR

विश्वेश्वरानन्द-वैदिक-शोध-संस्थान-प्रकाशनम्
V. V. Research Institute Publication —353



● ● ●



# विश्वेश्वरानन्द-भारतभारती-ग्रन्थमाला–२५
## Vishveshvaranand Indological Series—25



संपादकः — विश्वबन्धुः
Editor — VISHVA BANDHU

● ● ●

भारते होशिआर्पुरे वि. वै. शो. सं. मुद्रागृहे ।
शास्त्रिणा देवदत्तेन संमुद्राप्य प्रकाश्यते ॥
Printed and Published by DEV DATTA SHASTRI
at the V. V. R. I. Press, Hoshiarpur (Pb., India)

V. I. Series—25

# ṚGVEDA

*with*

**The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, the Vyākhyā by Veṅkaṭa-Mādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya**

*Edited,*

**Critically, and annotated with text-comparative data from original manuscripts and other available materials**

*By*

**VISHVA BANDHU**

*In collaboration with*

**BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI ŚĀSTRĪ AND PĪTĀMBAR DATTA**

## PART VII

**(Maṇḍala X, 46—191)**

**HOSHIARPUR**

**Vishveshvaranand Vedic Research Institute**

**1965**

वि. भाभा. ग्रन्थमाला—२५




# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं **स्कन्दस्वाम्युद्गीथीये** भाष्ये, **वेङ्कटमाधवीया** व्याख्या, **सायण**भाष्यानुसारिणी **मुद्गलीया** वृत्तिर् इत्येतैश्च पाठविमर्शौपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त इत्येषां सायुज्यभाजा

**विश्वबन्धुना**

संपादित

तत्र चाऽयं

## दशममण्डलस्य ४६-१९१ सूक्तात्मकः

## ७मो भागः

होशिआरपुरम्

विश्वेश्वरानन्द-वैदिक शोध-संस्थानम्

२०२२ वि.

प्रथमं संस्करणम्, २०२२ वि.
प्रकाशकृत् — विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,
साधु-आश्रमः (प. गृ.), होशिआरपुरम् (पं., भारतम्)



FIRST EDITION, 1965

*Publishers:*

**Vishveshvaranand Vedic Research Institute,**
**Sadhu Ashram (P.O.), Hoshiarpur (Pb. India)**




Prepared and Published under the Patronage of the Government of India in the erstwhile Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.




अथ

# ऋग्वेदे सभाष्ये

## दशममण्डलस्य ४६-१९१ सूक्तात्मकः

## सप्तमो भागः

# अथ

# ऋग्वेदे सभाष्ये

## दशमं मण्डलम्

### अष्टमेऽष्टके प्रथमोऽध्यायः ।

वेङ्कट०

अष्टमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यत्किञ्चिदस्ति मन्त्रार्थे वक्तव्यमिह बह्वृचैः[1] ॥ १ ॥

नानाविधैरभिप्रायैर्मन्त्रा दृष्टा महर्षिभिः ।
भूयसां [2]तेषु विज्ञातो† भवत्यर्थो[2] [3]यथा तथा[3] ॥ २ ॥

वैश्वदेवेषु सूक्तेषु न विविच्येह देवताः[4] ।
केषुचित् कथिता हेतुस्तत्र ह्यर्थाविनिश्चयः ॥ ३ ॥

तथा संवादसूक्तेन[5] प्रत्येकं कथयत्यृषिः ।
न त्व (तु 'अ)र्नस्वन्ता सत्पतिर्'[6] इति सूक्ते तथाऽब्रवीत् ॥ ४ ॥

'समुद्रादूर्मिर्'[7] इत्येतद् बहुधा सम्प्रदर्शितम् ।
शब्दाश्च विशयास्तत्र तादृशानि बहूनि च ॥ ५ ॥

मन्त्रेष्वपि[8] च दृश्यन्त ऋषयो ब्राह्मणेषु च ।
देवताश्च सरूपस्था नार्थो वेदेन कथ्यते ॥ ६ ॥

न शक्योऽनृषिभिर्वक्तुम् ऋगर्थ इति निश्चयः ।
यद् वेदाच्छक्यते ज्ञातुं तदुवाचात्र शौनकः ॥ ७ ॥

शाकल्यः[9] पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः ।
यथाशक्त्यनुधावन्ति[10] न सर्वं कथयन्त्यमी ॥ ८ ॥

अस्माभिस्त्विह मन्त्राणामर्थः प्रत्येकमुच्यते ।
ये ज्ञाता ये च सन्दिग्धास्तेषां वृद्धेषु निर्णयः ॥ ९ ॥

---

१. °चे वि[2] अ[1]. २-२. नास्ति वि[1]. † °ज्ञानो वि[2] अ[1]. ३-३. °तथः वि[1]. ४. °ता वि[1,2] अ[1]. ५. °क्तेषु वि[1]. ६. ऋ ५,२७,१. ७. ऋ ४,५८,१. ८. °ष्वेव वि[1]. ९. °ल्य मूको. १०. °क्त्या° मूको.

संहितायास्तुरीयांशं[1] विजानन्त्यधुनातनाः ।
निरुक्तव्याकरणयोरासीद्येषां परिश्रमः ॥ १० ॥

अथ ये ब्राह्मणार्थानां विवेक्तारः कृतश्रमाः ।
[2]शब्दरीतिं विजानन्ति[2] ते सर्वं कथयन्त्यपि ॥ ११ ॥

ताण्डके शाट्यायनके श्रमः शतपथेऽपि च ।
कौषीतके काठके[3] च स्याद् यस्येह स पण्डितः ॥ १२ ॥

ऐतरेयकमस्माकं पैप्पलादमथर्वणाम्[4] ।
तृतीयं तित्तिरिप्रोक्तं जानन् वृद्ध इहोच्यते ॥ १३ ॥

न भाल्लवकम्[5] अस्माभिस्तथा मैत्रायणीयकम् ।
ब्राह्मणं चरकाणां च श्रुतं मन्त्रोपबृंहणम् ॥ १४ ॥

यज्ञानां कथयन्तीह येऽर्थवादं[6] चतुर्विधम् ।
दृष्टमर्थमिवाऽयत्नात् तानुपासीत पण्डितः ॥ १५ ॥ इति ॥

[ ४६ ]

[7]वत्सप्रिर्भालन्दन ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[7] ।

प्र होता॑ जा॒तो म॒हान् न॑भो॒विन्नृ॒षद्वा॑ सीदद॒पामु॒पस्थे॑ ।
दधि॒र्यो धायि॒ स ते॒ वयां॑सि य॒न्ता वसू॑नि विध॒ते त॑नू॒पाः ॥ १ ॥

प्र । होता॑ । जा॒तः । म॒हान् । न॒भः॒ऽवित् । नृ॒ऽसद्वा॑ । सी॒द॒त् । अ॒पाम् । उ॒पऽस्थे॑ ।
दधिः॑ । यः । धायि॑ । सः । ते॒ । वयां॑सि । य॒न्ता । वसू॑नि । वि॒ध॒ते । त॒नू॒ऽपाः ॥ १ ॥

उद्गीथ० प्रहोतेत्युत्तरं सूक्तम् अग्निस्तुतिसमन्वितम् ।
दशर्चं दृष्टवान् सूरिर् वत्सप्रिर्वाग्विशारदः[8] ॥

यः अग्निः होता होमकारी देवानाम् आह्वानाय जातः अरणीभ्यां मथ्यमानः । उत्पन्नश्च महान् अपरिमितगुणश्च, नभोवित् नभस आदित्यस्य दिवो वा स्वरूपतो ज्ञाता च, नृषद्वा नॄन् अनुग्राह्यान् प्रति अनुग्राहकत्वेन नित्यं सद्वा गन्ता च, प्र सीदत् प्रसीदति च प्रगच्छति च प्रवर्तते च कर्मार्थमित्यर्थः । क्व प्रवर्तते । अपाम् उपस्थे आपो वृष्टिलक्षणा आहुतिरूपेणो-

---

१. °स्तीरी° मूको. २-२. शब्दं रीतिं वा जा° वि[1]. ३. च काले वि[2] अ[1]; काष्ठके वि[1].
४. ··· मथर्वणाम् वि[2] अ[1]; पैम्पलायमथर्वणम् वि[1]. ५. भाल्लभक° वि[2] अ[1]; भाल्वक° वि[1]; भाल्लवक°
ऋअ ६. °र्थवादः वि[2] अ[1]; °थबार्द वि[1]. ७-७. नास्ति मूको. ८. °प्रीवा विशा° वि[2] अ[1].

पगम्य तिष्ठन्ति यत्र सोऽपाम् उपस्थो यज्ञः तत्र, अन्तरिक्षे वा। दधिः धनानां दानशीलश्च धारणशीलश्च वा धायि[1] निहितश्च आहवनीयाद्यात्मना। सः अग्निः ते तुभ्यम् विधते स्तुतिभिः हविर्भिश्च परिचरते यजमानाय वयांसि अन्नानि वसूनि धनानि च यन्ता दाता भवतु इत्यर्थः, तनूपाः तव शरीरस्य पाता, भवत्विति शेषः ॥ १ ॥

**वेङ्कट०** वत्सप्रिर्भालन्दनः। प्र असीदत् होता। प्रादुर्भूतः महान् अन्तरिक्षस्य ज्ञाता नृषु च सीदन् अपाम् उपस्थे, धर्ता यः निहितो[2] देवैः, सः तुभ्यम् अन्नानि प्रदाता वसूनि च परिचरते तनूनां रक्षकः[3] ॥ १ ॥

इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन् ।
गुहा चतन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवोऽविन्दन् ॥ २ ॥

इमम्। विधन्तः। अपाम्। सधऽस्थे। पशुम्। न। नष्टम्। पदैः। अनु। ग्मन्।
गुहा। चतन्तम्। उशिजः। नमःऽभिः। इच्छन्तः। धीराः। भृगवः। अविन्दन् ॥ २ ॥

**उद्गीथ०** अत्र इतिहासः—अग्निः हवींषि वहन् जीर्णो वषट्कारभयात् प्रणश्य[4] अप्सु प्रविवेश। तं देवा ऋषयश्चान्वीषुः ( तु. तै २,६,६,१ ) इति। इमम् अग्निं वषट्कारभयात् नष्टम् इच्छन्तः पदैः अनु ग्मन् अनुगतवन्तः देवाश्च ऋषयश्च। किमिव। पशुम् न नष्टम् यथा पशुं[5] नष्टं केचित् अन्विष्यन्तः पदैः अनुगच्छन्ति, एवम्। अत्र गतेषु च तेषु देवर्षिषु अपाम् सधस्थे सहस्थाने गुहा गूढे संवृते जलाशये क्वचित् चतन्तम्[6] गच्छन्तम् अन्तरनुप्रविशन्तमित्यर्थः, उशिजः मेधाविनः अङ्गिरसः भृगवः च धीराः ऋषयः नमोभिः स्तुतिभिः अन्नैः नमस्कारैर्वा विधन्तः परिचरन्तः [7]अविन्दन् लब्धवन्तः इच्छन्तः वषट्कारभयाद् नष्टम् अन्विष्यन्त इत्यर्थः[7] ॥ २ ॥

**वेङ्कट०** इमम् अग्निं परिचरन्तः अपाम्[8] सधस्थे[9] पशुम् इव नष्टम् पदैः [10]अनु अगच्छन्[10]। तत्र[11] गुहायाम् गच्छन्तम् कामयमानाः नमस्कारैः इच्छन्तः प्राज्ञाः भृगवः अलभन्त[12] ॥ २ ॥

इमं त्रितो भूर्यविन्ददिच्छन् वैभूवसो मूर्धन्यघ्न्यायाः ।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य ॥ ३ ॥

इमम्। त्रितः। भूरि। अविन्दत्। इच्छन्। वैभुऽवसः। मूर्धनि। अघ्न्यायाः।
सः। शेऽवृधः। जातः। आ। हर्म्येषु। नाभिः। युवा। भवति। रोचनस्य ॥ ३ ॥

**उद्गीथ०** [7]इमम् भूरि महान्तम् अग्निम् वैभूवसः विभूवसः पुत्रः त्रितः ऋषिः[7] अविन्दत् लब्धवान् इच्छन् वषट्कारभयाद् नष्टम् अन्विष्यन्नित्यर्थः[13]। क्व लब्धवान्। मूर्धनि शिरःस्थानीये प्रधाने

---

१. अधायि मूको. २. यो नि० वि[२] अ[१]. ३ रक्षः वि[१]. ४. प्राणश्च वि[२]; प्राणाश्य वि[१] अ. ५. पशुं न मूको. ६. °न्तें मूको. ७-७. नास्ति मूको. ८. अवाम् मूको. ९. °स्ते मूको. १०-१० अनुगच्छ वि[२]; अन्वगच्छ अ[१]. ११. स वि[२] अ[१]; नास्ति वि[१]. १२. °भन्तः वि[१]. १३. °न्यिषन्नि° मूको.

प्रदेशे क्वचित् गूढे हिमवद्गुहासु [1]अन्यत्र वा[1]। कस्य मूर्धनि। अघ्न्यायाः यास्के[2] 'अघ्न्या' (२,११) इति गोनाम। तद्वत् कामनादोग्धृत्वाद् अत्र पृथिव्युच्यते। पृथिव्या इत्यर्थः। लब्धश्च सन् सः अयमग्निः शेवृधः सर्वयजमानानां दृष्टादृष्टसुखस्य वर्धयिता जातः अरणीभ्यां मथ्यमानो हविर्वहनार्थम् उत्पन्नः। कथम्। आ मर्यादया प्रयाजानूयाजानाम् असाधारणकारणव्यवस्थयेत्यर्थः। [3]कः जातः[3]। हर्म्येषु सर्वयजमानयज्ञगृहेषु। नाभिः[4] युवा भवति रोचनस्य भवतीति अत्र भूते लट्। नाभिः सर्वस्य जगतो नाभिभूतश्चाभवत्। युवा पुनर्नवश्चाभवत्[5]। रोचनस्य देवशरीराणां स्थितिकरणद्वारेण सन्दीपितस्य हविषश्च अभवत्, वोढेति शेषः॥ ३॥

**वेङ्कट०** इमम् त्रितः ऋषिः महान्तम् अविन्दत् अन्विच्छन् विभूवसः[6] पुत्रः[7] मूर्धनि पशोः[8]। सः सुखस्य वर्धयिता जातः यजमानगृहेषु बन्धकः युवा भवति आदित्यस्य॥ ३॥

मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं नेतारमध्वराणाम्।
विशामकृण्वन्नरतिं पावकं हव्यवाहं दधतो मानुषेषु॥ ४॥

मन्द्रम्। होतारम्। उशिजः। नमःऽभिः। प्राञ्चम्। यज्ञम्। नेतारम्। अध्वराणाम्।
विशाम्। अकृण्वन्। अरतिम्। पावकम्। हव्यऽवाहम्। दधतः। मानुषेषु॥ ४॥

**उद्गीथ०** मन्द्रम् होतारम् गन्तारम् यज्ञम् यज्ञकारिणं[9] यष्टव्यं वा अरतिम् सर्वगतं हविरादाय वा गन्तारम् पावकम् सर्वस्य शोधयितारम् दधतः मानुषेषु अन्विष्य अप्सु प्रविष्टं तपोभिः आराध्य लब्ध्वा प्रयाजानूयाजादिप्रदानव्यवस्थायाम् मनुष्येषु स्थापयन्तः। किं कृतवन्तः सन्तः। उच्यते—नेतारम् प्रोत्सर्पयितारम् अध्वराणाम् यज्ञानाम् विशाम् मनुष्याणाम् अर्थाय हव्यवाहम् देवानाम् अर्थाय हविषां च वोढारम् अकृण्वन् कृतवन्तः नमोभिः नमस्कारैः स्तुतिभिर्वा आराध्य असाधारणैः हविरन्नैर्वा प्रतिश्रुतैः। नित्यपक्षे उशिजः ऋत्विजः॥ ४॥

**वेङ्कट०** मन्द्रम् होतारम् ऋत्विजः नमोभिः प्राञ्चम् यजनीयम् नेतारम् यज्ञानाम् मनुष्याणाम् अकृण्वन् गन्तारम् पावकम् हव्यवाहम् निदधानाः मानुषेषु[10]॥ ४॥

प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दर्माणम्।
नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम्॥ ५॥

प्र। भूः। जयन्तम्। महाम्। विपःऽधाम्। मूराः। अमूरम्। पुराम्। दर्माणम्।
नयन्तः। गर्भम्। वनाम्। धियम्। धुः। हिरिऽश्मश्रुम्। न। अर्वाणम्। धनऽअर्चम्॥ ५॥

---

१-१. वाक्यस्य मूको. २. आस्ये वि[1]; नास्ति वि[2] अ. ३-३. ववातः मूको. ४. भिन्नाभिः मूको. ५. नास्ति वि[1]. ६. विभायसो वि[2] अ[1]; विभुवसोः वि[1]. ७. पूत्रः वि[1,2]. ८. वच्छो वि[2] अ[1]. ९. °कारिणां मूको. १०. °षेषु प्रभूर्जयन्तम् प्रति भवन्तो तर्जयन्तं महान्तकायभावत्यादित्यस्य मन्द्रं होतं। मन्द्रं होतारम् ऋत्विजोनमोभिः पाञ्चं यजनीयं नेतारं यज्ञानां मनुष्योनामकृण्वन् गन्तारं पावकं हव्यवाहं निदधाना मानुषेषु वि[1].

**उद्गीथ०** भूः जयन्तम् भूप्रभृतीन्[1] लोकानित्यर्थः। अत एव च महाम् महान्तम् विपोधाम् 'वपः' (निघ २,१) इति कर्मनाम। तदेवेदम् ईषद्विकृतं द्रष्टव्यम्। वेपसां[2] कर्मणां धारयितारम्। मूराः मूढाः असर्वज्ञा इत्यर्थः। अमूरम् अमूढम् सर्वज्ञमित्यर्थः। पुराम्[1] असुरपुराम् दर्माणम् दारयितारम्। प्रणयन्तः क्रियासु प्रवर्तयन्तः सन्त इत्यर्थः। गर्भम् सर्वभूतगर्भभूतम् अग्निम् वनाम् वननीयां सर्ववस्तुविषयाम् धियम् प्रज्ञाम् धुः[3] दधति धारयन्ति आत्मनि प्राप्नुवन्तीत्यर्थः। हिरिश्मश्रुम् हरितज्वालाश्मश्रुम् न अर्वाणम् अनर्तारम् अभक्तान् प्रति अनुग्राहकत्वेनाऽगन्तारम्, भक्तानाम् अनुग्रहीतारमित्यर्थः। धनर्चम् भक्तानां धनेनाऽर्चितारं पूजयितारम्॥ ५॥

**वेङ्कट०** प्रतिभव स्तोतः! जयन्तम् महान्तम् मेधाविनो धर्तारम् अग्निम्। तमिमं मूढाः अमूढम् पुराम् दर्तारम् हविर्भिः नयन्तः गर्भभूतम् वननीयम्[4] कर्म धारयन्ति[5] हरिवर्णश्मश्रुम् इव अश्वम् प्रीणनस्तुतिम्[6]॥ ५॥

[7]इति अष्टमाष्टके प्रथमाध्याये प्रथमो वर्गः[7]॥

नि पुस्त्यासु त्रितः स्तभूयन् परिवीतो योनौ सीददन्तः।
अतः संगृभ्या विशां दमूना विधर्मणायन्त्रैरीयते नॄन्॥ ६॥

नि। पुस्त्यासु। त्रितः। स्तुभुऽयन्। परिऽवीतः। योनौ। सीदत्। अन्तरिति।
अतः। सम्ऽगृभ्य। विशाम्। दमूनाः। विऽधर्मणा। अयन्त्रैः। ईयते। नॄन्॥ ६॥

**उद्गीथ०** पस्त्यासु 'पस्त्यम्' (निघ ३,४) इति गृहनाम। धिष्ण्यादिषु स्वेषु स्थानेष्वित्यर्थः, त्रितः स्तभूयन् सर्वम् अधर्मादिकं यजमानस्य अर्थजातं प्रतिबन्धुमिच्छन्[8] परिवीतः परितो ज्वालाभिर्व्याप्तः योनौ अन्तः वेदिमध्ये नि सीदत् निषीदति स्वमुखेनाहुतीः सङ्ग्रहीतुम्। निषद्य च अतः[9] धिष्ण्यादिस्थानात् संगृभ्य सङ्गृह्य हूयमानानि हवींषि विशाम्[10] यजमानमनुष्याणां सर्वभूतानि दमूनाः दममनस्त्वादिगुणोऽग्निः[11] विधर्मणा विविधकर्मणा[12] सह अयन्त्रैः अयमनैः गमनप्रतिबन्धरहितैः स्वर्गमार्गैः ईयते गच्छति[13] नॄन् मनुष्याकारान् देवान् प्रति॥ ६॥

**वेङ्कट०** नि-षीदति गृहेषु त्रिस्थानः[14] स्तम्भनमिच्छन् गृहाणाम् परिवीतः रश्मिभिः आयतने अन्तः। अतः हवींषि सङ्गृह्य[15] विशाम् सकाशाद् दममनाः[16] विविधेन कर्मणा रक्षसां नियमनैः सह गच्छति नेतॄन् देवान् इति[17]॥ ६॥

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः।
श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः॥ ७॥

---

१. नास्ति मूको. २. वेप्सां मूको. ३. दधुः वि[2] अ. ४. यदनी° वि[2] अ[1]. ५. सार° वि[1].
६. °तिम् इति अ[1]. ७-७. नास्ति मूको. ८. °बन्धमि° मूको. ९. अन्तः मूको. १०. प्रति वि° मूको.
११. दमने स्वादि° वि[2] अ; दमनेत्यादि° वि[1]. १२. यज्ञविविध° वि[1]. १३. इच्छन्ति मूको.
१४. त्रिस्ताद वि[2] अ[1]; त्रिस्थान वि[1]. १५. सगृह्य वि[2] अ[1]. १६. दमनाः वि[2] अ[1]. १७. नास्ति वि[1,2].

अस्य । अजरासः । दमाम् । अरित्राः । अर्चत्ऽधूमासः । अग्नयः । पावकाः ।
श्वितीचयः । श्वात्रासः । भुरण्यवः । वनऽसदः । वायवः । न । सोमाः ॥ ७ ॥

**उद्गीथ०** अस्य यजमानस्य [1]स्वभूताम् दमाम्[1] 'दमः' ( निघ १,४ ) इति गृहनाम, यजमानगृहं[2] प्रति अजरासः जरारहिताः अरित्राः अरित्रमिति नौः [3]अर्यते नुद्यते[3] येन तदुच्यते, तद्धर्मयोगाच्चात्र तच्छब्देन अग्नय उच्यन्ते। अरित्रवद् यज्ञनावं प्रणेतार इत्यर्थः, अथवा अरित्राः सर्वगामिनः, अर्चद्धूमासः अर्चिष्मद्धूमाः अग्नयः पावकाः सर्वस्य शोधयितारः श्वितीचयः श्वेतज्वालागामिनः श्वात्रासः क्षिप्राः भुरण्यवः भ्रमणशीलाः सर्वस्य भर्तारो वा वनर्षदः वनेषु काष्ठेषु[4] [5]सीदन्तः तत्र स्थातारः[5] वायवः न वायव इव, शीघ्रमागच्छन्त्विति शेषः। किमर्थम्। सोमाः, वोढव्या इति शेषः, सोमादिहवींषि वोढुमित्यर्थः ॥ ७ ॥

**वेङ्कट०** अस्य स्तोतुर्यज्ञे जरारहिताः दमनीयानां रक्षसां तारकाः निर्गच्छद्धूमाः अग्नयः शोधकाः[6] श्वेतिमानमश्नन्तः क्षिप्राः हरणशीलाः भवन्ति। प्रज्वलत्सु च अग्निषु पात्रेषु सीदन्तः सोमाः वायवः इव शीघ्रा भवन्ति हविर्धानात् प्रणीयमानाः[7] ॥ ७ ॥

प्र जिह्वया भरते वेपो अग्निः प्र वयुनानि चेतसा पृथिव्याः ।
तमायवः शुचयन्तं पावकं मन्द्रं होतारं दधिरे यजिष्ठम् ॥ ८ ॥

प्र । जिह्वया । भरते । वेपः । अग्निः । प्र । वयुनानि । चेतसा । पृथिव्याः ।
तम् । आयवः । शुचयन्तम् । पावकम् । मन्द्रम् । होतारम् । दधिरे । यजिष्ठम् ॥ ८ ॥

**उद्गीथ०** जिह्वया ज्वालाख्यया प्र भरते प्रकर्षेण धारयति वेपः यागकर्म अग्निः, प्र धारयति च वयुनानि सर्ववस्तुविषयविज्ञानानि चेतसा अन्तःकरणेन, सर्वं च जानातीत्यर्थः । य ईदृशोऽग्निः, तम् आयवः यजमानमनुष्याः शुचयन्तम् सर्वं दीपयन्तम् पावकम् शोधकं च सर्वस्य मन्द्रम् स्तुत्यम् होतारम् होमकारिणम् आह्वातारं वा देवानाम् पृथिव्याः अवयवभूते वेदिस्थाने दधिरे धारयन्ति देवयागार्थम् यजिष्ठम् अतिशयेन देवानां यष्टारम् ॥ ८ ॥

**वेङ्कट०** प्र भरते ज्वालया कर्म[8] अग्निः, प्र भरते च प्रज्ञानानि तेजसा पृथिव्याः। तम् मनुष्याः ज्वलन्तम् शोधकम् मन्द्रम् होतारम् दधिरे यजिष्ठम् ॥ ८ ॥

द्यावा यमग्निं पृथिवी जनिष्टामापस्त्वष्टा भृगवो यं सहोभिः ।
ईळेन्यं प्रथमं मातरिश्वा देवास्ततक्षुर्मनवे यजत्रम् ॥ ९ ॥

---

१-१. स्वभूतान्नन्दमाम् वि[2] अ; स्वभूतान् वि[1]. २. यज्ञगृहं वि[2] अ. ३-३. अनूद्यते मूको.
४. राष्ट्रेषु मूको. ५-५. सन्त उत्तर स्थाताः मूको. ६. °का चेति वि[1]. ७. °माना वि[2] अ[1]; °मामाः वि[1].
८. कर्माणि वि[1].

द्यावा॑ । यम् । अ॒ग्निम् । पृ॒थि॒वी इति॑ । जनि॑ष्टाम् । आप॑: । त्वष्टा॑ । भृग॑वः । यम् । सह॑:ऽभिः ।
ई॒ळेन्य॑म् । प्र॒थ॒मम् । मा॒त॒रिश्वा॑ । दे॒वाः । त॒त॒क्षुः । मन॑वे । यज॑त्रम् ॥ ९ ॥

**उद्गीथ०** यम् अग्निम् द्यावा पृथिवी जनिष्टाम् जनितवत्यौ, आपः च जनितवत्यः, त्वष्टा च जनितवान्, भृगवः च यम् सहोभिः बलैः जनितवन्तः, तम् अग्निम् ईळेन्यम् स्तोतव्यम् प्रथमम् मुख्यम् मातरिश्वा वायुः देवाः चान्येऽपि सर्वे ततक्षुः कृतवन्तः समर्पितवन्त इत्यर्थः, मनवे अधिकृतसर्वमनुष्याय यजत्रम् यष्टव्यं यष्टारं वा देवानाम् ॥ ९ ॥

**वेङ्कट०** यम्[1] अग्निम् द्यावापृथिव्यौ अजनिष्टाम्, आपः त्वष्टा च, भृगवः बलैः[2], स्तोतव्यम् प्रथमम् मातरिश्वा देवाः च अकुर्वन् मनवे राज्ञे यष्टव्यम् ॥ ९ ॥

यं त्वा॑ दे॒वा द॑धि॒रे ह॑व्य॒वाहं॑ पुरु॒स्पृहो॒ मानु॑षासो॒ यज॑त्रम् ।
स याम॑न्नग्ने स्तुव॒ते वयो॑ धा॒: प्र दे॑व॒यन् य॒शस॒: सं हि पू॒र्वीः ॥ १० ॥

यम् । त्वा॒ । दे॒वाः । द॒धि॒रे । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽस्पृह॑: । मानु॑षासः । यज॑त्रम् ।
सः । याम॑न् । अ॒ग्ने॒ । स्तु॒व॒ते । वय॑: । धा॒: । प्र । दे॒व॒ऽयन् । य॒शस॑: । सम् । हि । पू॒र्वीः ॥१०॥

**उद्गीथ०** यम् अग्निम् त्वा त्वाम् देवाः दधिरे धारितवन्तः स्थापितवन्तो यज्ञेषु हव्यवाहम् हविषां वोढारम् पुरुस्पृहः बहुस्पृहः धर्मार्थकाममोक्षार्थविषयबहुप्रार्थनाः[3] मानुषासः मनुष्याश्च यजत्रम् यष्टव्यं यष्टारं वा देवानाम्, सः त्वं हे अग्ने! यामन् यामनि देवान् प्रति गन्तरि यज्ञे स्तुवते तव स्तोत्रे मह्यं वत्सप्रये वयः अन्नम् धाः देहि प्र[4] प्रकृष्टमित्यर्थः, यः देवयन् पुनरपि मद्यज्ञे[5] देवान् यष्टुं कामयमानः सन्नित्यर्थः, यशसः कीर्तीश्च पूर्वीः प्रथमा इत्यर्थः ॥ १० ॥

**वेङ्कट०** यम् त्वा देवाः दधिरे हव्यवाहम् बहूनि प्रार्थयमानाः मानुषाश्च यष्टव्यम्, [6]सः गमने[6] अग्ने! स्तुवते [7]धनम् धेहि[7]। प्र आप्नोति त्वत्तो देवकामः बहूनि अन्नानि ॥ १० ॥

[8]इति अष्टमाष्टके प्रथमाध्याये द्वितीयो वर्गः[8] ॥

[ ४७ ]

[8]सप्तगुराङ्गिरस ऋषिः । वैकुण्ठ इन्द्रो देवता । त्रिष्टुप् छन्दः[8] ॥

ज॒गृ॒भ्मा ते॒ दक्षि॑णमिन्द्र॒ हस्तं॑ वसू॒यवो॑ वसुपते॒ वसू॑नाम् ।
वि॒द्मा हि त्वा॒ गोप॑तिं शूर॒ गोना॑मस्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दा॑: ॥ १ ॥

---

१. नास्ति वि[2] अ[1]. २. बलै मूको. ३. °र्थनिर्विषयाः बहु° वि[1,2]. ४. नास्ति वि[2] अ. ५. मद्यज्ञो मूको. ६-६. सँग° वि[1]. ७-७. नदेहि वि[2] अ[1]. ८-८. नास्ति मूको.

जगृभ्म । ते । दक्षिणम् । इन्द्र । हस्तम् । वसुऽयवः । वसुऽपते । वसूनाम् ।
विद्म । हि । त्वा । गोऽपतिम् । शूर । गोनाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ १॥

**उद्गीथ०** उत्तरं सूक्तम् 'जगृभ्मा ते' इत्यष्टर्चम् ऐन्द्रम् आङ्गिरसः सप्तगुर्ददर्श । [1]विद्म जानीमः[1] वयम् हि यस्मात् त्वा त्वाम्[2] इन्द्रम् गोपतिम् [3]गवोपलक्षितस्य हिरण्यादिधनस्य[3] स्वामिनम् हे शूर! भयरहित! शत्रुवधाय[4] शपित! गोनाम् गवां गवादिधनानाम्, दातारं चेति वाक्यशेषः । तस्मात् जगृभ्म 'हृग्रहोः' ( पावा ८,२,३२ ) इति भत्वम् । जगृह्म गृहीतवन्तो वयम् ते तव दक्षिणम् हे इन्द्र! हस्तम् । दक्षिणहस्तग्रहणं दाक्षिण्यजननार्थम् वा दक्षिणहस्तो दानोपलक्षितहविर्दानद्वारेण वा । दक्षिणं हस्तं गृहीतवन्तो वयम् वसूयवः वसुकामाः सन्तो हे वसुपते! धनस्य स्वामिन्! वसूनाम् धनानाम्, लाभायेति वाक्यशेषः । एतद् विदित्वा अस्मभ्यम् चित्रम् विचित्रं नानाजातीयम् वृषणम् वर्षितारं सर्वकामानां सर्वोपभोगसाधनमित्यर्थः, रयिम् धनम् दाः देहि ॥ १ ॥

**वेङ्कट०** विकुण्ठा नाम इन्द्रतुल्यं पुत्रमिच्छन्ती तपस्तेपे । तस्याः स्वयमेव इन्द्रः[5] पुत्रो जज्ञे । तं वैकुण्ठं[6] बृहस्पतेरंशभूतः[7] सप्तगुराङ्गिरसः[8] स्तौति पुत्रकामः । गृहीतवन्तः ते दक्षिणम् इन्द्र! हस्तम् वसुकामाः वसूनां पते! । जानीमः हि त्वा वयम् शूर! गवां पतिम् । तथा सति अस्मभ्यम् चित्रम् पुत्रात्मकम् रयिम् देहि ॥ १ ॥

स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ।
चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ २ ॥

सुऽआयुधम् । सुऽअवसम् । सुऽनीथम् । चतुःऽसमुद्रम् । धरुणम् । रयीणाम् ।
चर्कृत्यम् । शंस्यम् । भूरिऽवारम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ २ ॥

**उद्गीथ०** स्वायुधम् शोभनप्रहरणम् स्ववसम् सुरक्षणं[9] स्वन्नं वा सुनीथम् प्रशस्तं[10] सुस्तुतं[11] वा चतुःसमुद्रम् चत्वारः समुद्राः यस्य प्रकाशकत्वेन सन्ति तम्, सर्वत्र प्रख्यातमित्यर्थः, धरुणम् धारयितारम् रयीणाम् धनानाम् ईश्वरमित्यर्थः, चर्कृत्यम् अत्यर्थं कर्मणां कर्तारमित्यर्थः, शंस्यम् सर्वगुणयुक्तत्वात्[12] सर्वदा प्रशंसनीयम् भूरिवारम् बहुपरिवारं च पुत्रम् अस्मभ्यम् चित्रम् चायनीयं पूजनीयम् वृषणम्[13] रेतसः सेक्तारं बलवन्तमित्यर्थः, अथवा वर्षितारं धनानां दातारं त्यागिनमित्यर्थः, रयिम् धनसदृशम् अत्यन्तं प्रियमित्यर्थः, दाः देहि ॥ २ ॥

**वेङ्कट०** स्वायुधम् सुरक्षणम् प्रशस्यम् चतुरः समुद्रान् यो यशसा व्याप्नोति तम् धारकम् धनानाम् कार्येषु[14] पुनःपुनः प्रयोज्यम् शंस्यम् बहुभिः स्पृहणीयम् ॥ २ ॥

---

१-१. विजानीमः मूको. २. त्वम् मूको. ३-३ °क्षितहिर° वि[1]. ४. °तं श° मूको. ५. इन्द्र वि[2] अ[1]. ६. वैकर्ण वि[2] अ[1]; वैकुणं वि[1]. ७. °तै वि[2] अ[1]. ८-८ °गिराङ्गिरस वि[3] अ[1]; °गुराङ्गिरस वि[1]. ९. स्वर° मूको. १०. पुशस्ति वि[2] अ. ११. सुस्तुतिं वि[1]. १२. सर्वान्नयु° वि[1]. १३. वा मूको. १४. त्रुटितम् वि[1] अ[1].

सुब्रह्माणं देववन्तं बृहन्तमुरुं गभीरं पृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ३ ॥

सुऽब्रह्माणम् । देवऽवन्तम् । बृहन्तम् । उरुम् । गभीरम् । पृथुऽबुध्नम् । इन्द्र ।
श्रुतऽऋषिम् । उग्रम् । अभिमातिऽसहम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ३ ॥

उद्गीथ० सुब्रह्माणम् [1]'शोभनं ब्रह्म'[1] ऋग्यजुःसामलक्षणं यस्य तं न्यायेन अधीतस्वरसौष्ठवादियुक्तमित्यर्थः, देववन्तम् देवभक्तं देवैरनुगृहीतं वेत्यर्थः, बृहन्तम् प्रज्ञाबलधनैः महान्तम्, उरुम् विस्तीर्णम् आयुषा गभीरम् अक्षोभ्यं सत्येन पृथुबुध्नम् विस्तीर्णमूलं हे इन्द्र! श्रुतऋषिम् सकृच्छ्रवणेनाधिगन्तारं विद्यायाः[2] उग्रम् अप्रसह्यम् अन्यैः अभिमातिषाहम् अभिहिंसितॄणाम् अभिभवितारं पुत्रम् । अस्मभ्यम् इत्यादि व्याख्यातार्थम् ॥ ३ ॥

वेङ्कट० सुस्तुतिम्[3] देववन्तम् महान्तम् विस्तीर्णम् गम्भीरम् पृथुमूलम्[4] इन्द्र! श्रुतेन समम् ऋषिभिः उद्गूर्णम् शत्रूणामभिभवितारम् ॥ ३ ॥

सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ४ ॥

सनत्ऽवाजम् । विप्रऽवीरम् । तरुत्रम् । धनऽस्पृतम् । शूशुऽवांसम् । सुऽदक्षम् ।
दस्युऽहनम् । पूःऽभिदम् । इन्द्र । सत्यम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥४॥

उद्गीथ० सनद्वाजम् वाजसनिम् अन्नस्य बलस्य वा सम्भक्तारम् विप्रवीरम् मेधाविपुत्रम् तरुत्रम् कुलस्य तारयितारं[5] तारकम् वा क्षिप्रकारिणमित्यर्थः, धनस्पृतम् धनेन[6] आच्छादितम् अत्यन्तेश्वरमित्यर्थः, शूशुवांसम् 'टुओश्वि गतिवृद्ध्योः' । सर्वप्रकारवृद्ध्या वर्धमानम् सुदक्षम् सुबलं सूत्साहं वा दस्युहनम् शत्रूणां हन्तारम् पूर्भिदम् शत्रुपुरां भेत्तारम् अथवा [7]पुरः लिङ्गशरीरस्य[7] ज्ञानकर्मसमुच्चयेन केवलज्ञानेन वा भेत्तारं मुक्तिभाजमित्यर्थः, हे इन्द्र! सत्यम् अविसंवादिनं पुत्रम् । अस्मभ्यम् इत्यादि पूर्ववद् व्याख्येयम् ॥ ४ ॥

वेङ्कट० लब्धान्नम्[8] मेधाविपुत्रम् तारकम् धनानां स्प्रष्टारम्[9] वर्धमानम् ! सुबलम् दस्युहनम् पुरां भेत्तारम् इन्द्र! सत्यकर्माणम् ॥ ४ ॥

अश्वावन्तं रथिनं वीरवन्तं सहस्रिणं शतिनं वाजमिन्द्र ।
भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥

---

१-१. शोभनब्रह्म मूको. २. नास्ति वि[1]. ३. सस्तुतिम् वि[2] अ[1]. ४. पुरुमू° अ[1]. ५. कार° वि[2] अ[1]. ६. नास्ति मूको. ७-७. पुरमिदं शरी° वि[1]; पुरुलिङ्गशरी° वि[2] अ[1]. ८. लब्धानां वि[2] अ[1]. ९. स्पृ° वि[2] अ[1]; सृष्टारम् वि[1].

अश्वऽवन्तम् । र॒थिन॑म् । वी॒रऽव॑न्तम् । स॒ह॒स्रिण॑म् । श॒तिन॑म् । वाज॑म् । इ॒न्द्र॒ ।
भ॒द्रऽव्रा॑तम् । विप्र॑ऽवीरम् । स्वः॒ऽसाम् । अ॒स्मभ्य॑म् । चि॒त्रम् । वृष॑णम् । र॒यिम् । दाः॒ ॥ ५ ॥

**उद्गीथ०** अश्ववन्तम् अश्वसहितम् रथिनम् रथसहितं च वीरवन्तम् पुत्रसहितं च सहस्रिणम् सहस्रसङ्ख्यायुक्तम् शतिनम् शतसङ्ख्यायुक्तं च अतिबहुत्वयुक्तमित्यर्थः, वाजम् अन्नम् हे इन्द्र! भद्रव्रातम् भजनीयपरिवारं जनसङ्घातसहितं च विप्रवीरम् मेधाविपुत्रसहितं च मेधाविशूरपुरुषसहितं[1] वा स्वर्षाम् स्थितिकरणद्वारेण सर्वस्य जगतः सम्भक्तारं च अस्मभ्यम् चित्रम् विचित्रम् अनेकप्रकारं चायनीयं वा वृषणम् दानोपभोगानाम् वर्षितारं दानक्षमम् उपभोगक्षमं चेत्यर्थः, रयिम् धनं च दाः देहि ॥ ५ ॥

**वेङ्कट०** अश्वादिभिर्युक्तम् बलिनम् इन्द्र! भद्रगणम् परिवृतम् आश्रितैः[2] विप्रवीरम् सर्वस्य[3] सम्भक्तारम् ॥ ५ ॥

[4]इति अष्टमाष्टके प्रथमाध्याये तृतीयो वर्गः[4] ॥

प्र स॒प्तगु॑मृ॒तधी॑तिं सुमे॒धां बृह॒स्पतिं॑ म॒तिरच्छा॑ जिगाति ।
य आ॑ङ्गिर॒सो नम॒सोप॒सद्यो॒ऽस्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दाः॑ ॥ ६ ॥

प्र । स॒प्तऽगु॑म् । ऋ॒तऽधी॑तिम् । सु॒ऽमे॒धाम् । बृह॒स्पति॑म् । म॒तिः । अच्छ॑ । जि॒गा॒ति॒ ।
यः । आ॒ङ्गि॒र॒सः । नम॑सा । उ॒प॒ऽसद्यः॑ । अ॒स्मभ्य॑म् । चि॒त्रम् । वृष॑णम् । र॒यिम् । दाः॒ ॥ ६ ॥

**उद्गीथ०** सप्तगुम् माम् । कीदृशम् माम् । ऋतधीतिम् सत्यकर्माणं[5] प्रतिज्ञाय तथाकारिणम् अविगुणकारिणं वेत्यर्थः, सुमेधाम् सुप्रज्ञम्[6] बृहस्पतिम् यागद्वारेण महतो जगतः पातारम् मतिः तवेन्द्रस्य स्तुतिः प्र अच्छ जिगाति प्रकर्षेण अभिगच्छति फलदानाय तवेन्द्रस्य प्रसादात्। योऽहं सप्तगुः कस्य पुत्रः किमीहो वा। उच्यते—यः आङ्गिरसः योऽहं सप्तगुः अङ्गिरसः पुत्रः नमसा अन्नेन दातुमुद्यतेन उपसद्यः उपगमनार्हश्च तं मां सप्तगुं[7] प्रकर्षेण अभिगच्छति फलदानाय तव इन्द्रस्य स्तुतिरिति योजना कार्या। एतद् ज्ञात्वा हे इन्द्र! अस्मभ्यम् चित्रम् वृषणम् रयिम् दाः ॥ ६ ॥

**वेङ्कट०** प्र अभिगच्छति सप्तगुम् मां सत्यकर्माणम् सुमेधसम् बृहस्पतेरंशम्[8] जातिस्मृतिविषया बुद्धिः, यः आङ्गिरसः अहं देवानामपि नमस्कारेण उपसदनीयः ॥ ६ ॥

व॒नी॒वानो॒ मम॑ दू॒तास॒ इन्द्रं॒ स्तोमा॑श्चरन्ति सुम॒तीरि॑या॒नाः ।
हृ॒दि॒स्पृशो॒ मन॑सा व॒च्यमा॑ना अ॒स्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दाः॑ ॥ ७ ॥

व॒नी॒वानः॑ । मम॑ । दू॒तासः॑ । इन्द्र॑म् । स्तोमाः॑ । च॒र॒न्ति॒ । सु॒ऽम॒तीः । इ॒या॒नाः ।
हृ॒दि॒ऽस्पृशः॑ । मन॑सा । व॒च्यमा॑नाः । अ॒स्मभ्य॑म् । चि॒त्रम् । वृष॑णम् । र॒यिम् । दाः॒ ॥ ७ ॥

---

१. °शूरतरस° मूको. २. °तम् वि[2] अ[1]. ३. सर्वत्र वि[2] अ[1]. ४-४. नास्ति मूको.
५. °कर्मणा मूको. ६. °ज्ञाम् मूको. ७. संप्राप्त° मूको. ८. बृहस्तेरङ्गम् वि[2] अ[1].

उद्गीथ० [1]वनीवानः वननवन्तः[1] सम्भजनवन्तः तव इन्द्रस्य सम्भक्तार इत्यर्थः, मम सप्तगोः दूतासः दूतस्थानीयाः स्तोमाः स्तुतिविशेषाः हृदिस्पृशः तव हृदयस्य स्प्रष्टारः अनुप्रवेष्टार इत्यर्थः, मनसा चित्तेन पर्यालोच्य अस्माभिः वच्यमानाः उच्चार्यमाणा इत्यर्थः, त्वाम् इन्द्रम् प्रति चरन्ति गच्छन्ति सुमतीः शोभना अस्माकम् अनुग्राहिकाः तव इन्द्रस्य बुद्धीः कर्तुम् इयानाः अनेकार्थत्वाद् धातूनाम् इच्छन्तः सन्त इत्यर्थः। एतद् ज्ञात्वा हे इन्द्र! अस्मभ्यम् चित्रम् वृषणम् रयिम् दाः ॥ ७ ॥

वेङ्कट० भजनवन्तः मम[2] दूतभूताः इन्द्रम् [3]प्रति चरन्ति[3] स्तोमाः तस्य सुमतीः[4] याचमानाः हृदिस्पृशः मनसा[5] निरूप्य[6] उच्यमानाः ॥ ७ ॥

यत् त्वा यामि दद्धि तन्न इन्द्र बृहन्तं क्षयमसमं जनानाम् ।
अभि तद् द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ८ ॥

यत् । त्वा । यामि । दद्धि । तत् । नः । इन्द्र । बृहन्तम् । क्षयम् । असमम् । जनानाम् ।
अभि । तत् । द्यावापृथिवी इति । गृणीताम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ८ ॥

उद्गीथ० यत् दृष्टादृष्टफलम् त्वा त्वाम् इन्द्र! यामि याचे अहम्, दद्धि देहि तत् मया याचितम् बृहन्तम् महान्तम् क्षयम् निवासम् जनानाम् अन्येषाम् असमम् असाधारणम्। दीयमानं[7] तव प्रसादात् तत् द्यावापृथिवी अभि गृणीताम् 'साधु दत्तमित्यभिष्टुताम्†[8] स्वाश्रयं दीयमानम् अनुमन्येताम् इत्यर्थः। नियमेन च प्रतिदिनं यावज्जीवम् अस्मभ्यम् चित्रम् वृषणम् रयिम् दाः ॥८॥

वेङ्कट० यत् त्वाम् अहं याचे, देहि तत् मह्यम् इन्द्र! महान्तम् निवासम् असाधारणम् अन्येषाम्। त्वया दीयमानं द्यावापृथिव्यौ अपि अनुमन्येयाताम् इति ॥ ८ ॥

[9]इति अष्टमाष्टके प्रथमाध्याये चतुर्थो वर्गः[9] ॥

## [ ४८ ]

'वैकुण्ठ इन्द्र ऋषिः। इन्द्रो देवता। जगती छन्दः, सप्तमीदशम्येकादश्यस्त्रिष्टुभः'।

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥ १ ॥

अहम् । भुवम् । वसुनः । पूर्व्यः । पतिः । अहम् । धनानि । सम् । जयामि । शश्वतः ।
माम् । हवन्ते । पितरम् । न । जन्तवः । अहम् । दाशुषे । वि । भजामि । भोजनम् ॥ १ ॥

उद्गीथ० [10]उत्तरे सूक्ते[10] 'अहं भुवम्', 'अहं दाम्' इत्यादिके एकादशर्चे आत्मस्तावके इन्द्रो वैकुण्ठो ददर्श। अहम् भुवम् अहमिन्द्रः वैकुण्ठोऽभूवम्[11] वसुनः धनस्य पूर्व्यः पूर्वकाले भवः चिरन्तनः

---

१-१. वनवन्तः वि[२] अ[१]; नास्ति वि[१]. २. नास्ति वि[१]. ३-३. परिचरति वि[१]. ४. °तिः मूको. ५. नास्ति वि[२] अ[१]; मसा वि[१]. ६. नी° मूको. ७. नयमानं मूको. ८-८. नास्ति वि[१]. † °भीष्टताम् वि[२] अ[१]. ९-९. नास्ति मूको. १०-१०. उत्तरं सूक्तम् मूको. ११-११. °भुवं वि[१]; °ण्ठो भवं वि[२] अ.

एव पतिः स्वामी। अहम् एव धनानि सम् जयामि सम्यक् पराजित्य प्राप्नोमि शश्वतः बहोः शत्रोः स्वभूतानि। माम् एव हवन्ते आह्वयन्ति आर्ताः[1] सन्तः जन्तवः मनुष्याः पितरम् न यथा पितरं पुत्रा आर्ता[2] आह्वयन्ति, एवम्। अहम् एव दाशुषे देवेभ्यो हवींषि दत्तवते यजमानाय सर्वस्मै वि भजामि यथार्हं[3] विभज्य ददामि भोजनम् धनम्॥ १॥

**वेङ्कट०** सप्तगुस्तुतिसंहृष्ट इन्द्र[4] आत्मानं त्रिभिः सूक्तैः स्तौति। अहम् अभवम् धनस्य मुख्यः पतिः। अहम् धनानि सह जयामि बहोः शत्रोः। माम् हवन्ते पितरम् इव सर्व एव जाताः। अहम् यजमानाय वि भजामि अन्नम्॥ १॥

**अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अंजनयमहेरधि।**
**अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन् दधीचे मातरिश्वने॥ २॥**

अहम्। इन्द्रः। रोधः। वक्षः। अथर्वणः। त्रिताय। गाः। अजनयम्। अहेः। अधि।
अहम्। दस्युऽभ्यः। परि। नृम्णम्। आ। ददे। गोत्रा। शिक्षन्। दधीचे। मातरिश्वने॥२॥

**उद्गीथ०** अहम् इन्द्रः रोधः वक्षः अथर्वण इति अत्रेतिहासः सङ्क्षेपेण उच्यते—इन्द्रोऽथर्वपुत्राय दधीचे मध्वाख्यं ब्रह्म प्रोवाच। प्रोच्य च निषिद्धवान्—नेदं कस्मैचित् त्वया वक्तव्यम् इति[5]। तदेतदिहोच्यते। अहम् एव इन्द्रः रोधः रोद्धा नेदं ब्रह्म परं रहस्यं त्वया कस्मैचिद् वक्तव्यम् इति निषेद्धेत्यर्थः[6]। वक्षः वक्ता च ब्रह्मणः, तस्मै अथर्वऋषेः पुत्राय दधीच इति शेषः। त्रिताय त्रितस्य ऋषेरर्थाय[7] त्रिस्थानस्य वा लोकस्य अर्थाय गाः अपो वृष्टिलक्षणाः अजनयम् जनितवानस्मि वृष्ट्यर्थम् उत्पादितवानस्मि अहेः अधि मेघस्य उपरि। अहम् एव दस्युभ्यः शत्रुभ्यः नृम्णम् धनम् परि आ ददे पराजित्य सर्वं[8] गृह्णामि। तेन हेतुना गोत्रा[9] शिक्षन् 'लक्षणहेत्वोः क्रियायाः' (पा ३, २,१२६) इत्येवमत्रादानक्रियायाः हेतौ दानक्रियायाः शतृप्रत्ययः। गोत्रा गोत्रान् गोसमूहान् गवादिधनसङ्घातानित्यर्थः, शिक्षन् ददत्[10] दधीचे दध्यङ्ङादिभ्यः[11] इत्यर्थः, मातरिश्वने वाय्वादिदेवेभ्यश्चेत्यर्थः॥ २॥

**वेङ्कट०** अहम् इन्द्रः अथर्वणः[12] ऋषेः वक्षसो निरोधकः दधीचः[13] शिरोऽच्छिनदम्[14]। अहं कूपे[15] पतिताय त्रिताय तत उत्तरणार्थं मेघाद् उदकानि अजनयम्। अहम् दस्युभ्यः धनम् परि आ ददे[16]। मेघान् विनयन् दधीचे मातरिश्वनः पुत्राय वर्षणं च तदर्थमुत्पादयन्निति॥ २॥

**मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम्।**
**ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च॥ ३॥**

---

१. अक्ताः वि[1]; आत्ताः वि[2] अ. २. अक्ता अक्ता वि[1]; अता वि[2] अ. ३. यथाहं मूको. ४. इन्द्रम् वि[2] अ[1]. ५. तु. ऋ १,८४,१४; ११६,१२; ११७,२२; माश १४,५,५,१७; बृदे ३,१६-२३; बृउ २,५,१७. ६. निषिध्येत्यर्थः वि[2] अ. ७. ऋषेः पुत्राय रक्षाय वि[1]. ८. सर्वतः वि[2]. ९. शत्रोः वि[1]. १०. ददन् वि[1]; दधन वि[2] अ. ११. दध्यजदादि° वि[1]; दध्यंजनादि° वि[2] अ. १२. अर्व° वि[2] अ[1]; अथर्वणे वि[1]. १३. °च मूको. १४. °नम् मूको. १५. कूप वि[1]. १६. दधे मूको.

मह्यम् । त्वष्टा । वज्रम् । अतक्षत् । आयसम् । मयि । देवासः । अवृजन् । अपि । क्रतुम् ।
मम । अनीकम् । सूर्यस्यऽइव । दुस्तरम् । माम् । आर्यन्ति । कृतेन । कर्त्वेन । च ॥ ३ ॥

उद्गीथ० मह्यम् इन्द्राय त्वष्टा देवशिल्पी वज्रम् अतक्षत् कृतवान् महता यत्नेन घटितवान् आयसम् अयोविकारम् लोहमयम् । मयि इन्द्रे देवासः विश्वे देवाः अवृजन् आवर्जितवन्तः त्वयेदं[1] कर्तव्यमिति समर्पितवन्त इत्यर्थः, क्रतुम् कर्म रसानुप्रदानवृत्रवधादिकम् । किञ्च मम इन्द्रस्य अनीकम् ज्योतिः विद्युल्लक्षणम् सूर्यस्य इव दुष्टरम् दूराच्छाय(?) दुष्प्रतरं वा दुस्सहमित्यर्थः । तम् माम् एवेन्द्रम् आर्यन्ति गच्छन्ति देवाः कृतेन अनुष्ठितेन कर्त्वेन कर्तव्येन च कर्मणा हेतुना, [2]कृतं कृत्यं च[2] कर्म विज्ञापयन्तीत्यर्थः ॥ ३ ॥

वेङ्कट० मह्यम् त्वष्टा वज्रम् अकरोत् आयसम् । मयि देवाः प्रज्ञानम् अपि अवृजन् निक्षिपन्ति । मम तेजसः अनीकम् सूर्यस्य इव दुष्टरम् । माम् एव गच्छन्ति कृतेन कर्तव्येन च कर्मणा रक्षणाय इति ॥ ३

अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययम् ।
पुरू सहस्रा नि शिशामि दाशुषे यन्मा सोमास उक्थिनो अमन्दिषुः ॥ ४ ॥

अहम् । एतम् । गव्ययम् । अश्व्यम् । पशुम् । पुरीषिणम् । सायकेन । हिरण्ययम् ।
पुरु । सहस्रा । नि । शिशामि । दाशुषे । यत् । मा । सोमासः । उक्थिनः । अमन्दिषुः ॥ ४ ॥

उद्गीथ० अहम् एतम् भूमिष्ठम् अन्तरिक्षस्थं दिविष्ठं च गव्ययम् गोसमूहमित्यर्थः, अश्व्यम् अश्वसमूहं च पशुम् हिरण्ययम् हिरण्यालङ्कारोपेतम् अन्यमपि नानाजातीयम् पुरीषिणम् उदकवन्तम् मेघं च सायकेन वज्रेण पराजित्य यजमानाय प्रयच्छामीत्यर्थः । कदा । उच्यते — यत् यदा मा माम् सोमासः सोमाः उक्थिनः उक्थ्यपात्रस्था[3] इत्यर्थः, शस्त्रादिस्तुतिसहिता वा अमन्दिषुः तर्पयन्ति, तदा ॥ ४ ॥

वेङ्कट० अहम् एतम्[4] गोमयम् अश्वमयं च पशुम् प्रज्ञायुक्तम् आयुधेन जयामि हिरण्यालङ्कृतम्, पुरूणि च धनसहस्राणि यजमानाय संस्करोमि, यदा मां सोमाः शस्त्रिणः तर्पयन्ति ॥ ४ ॥

अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥ ५ ॥

अहम् । इन्द्रः । न । परा । जिग्ये । इत् । धनम् । न । मृत्यवे । अव । तस्थे । कदा । चन ।
सोमम् । इत् । मा । सुन्वन्तः । याचत । वसु । न । मे । पूरवः । सख्ये । रिषाथन ॥ ५ ॥

उद्गीथ० अहम् इन्द्रः न परा जिग्ये इत् धनम् कदाचिदपि पराजितवान् अपहारितवान् धनं शत्रुभिः ।

---

१. तत्वोदयं मूको. २-२. °तं तु वि². ३. उक्थपा° मूको. ४. एव तम् वि¹.

न मृत्यवे **मरणाय** अव तस्थे **उपस्थितवान्** कदा चन **कदाचिदपि मरणावस्थः शत्रुभिः न कदाचिदपि कृतपूर्व इत्यर्थः। किञ्च** हे पूरवः! **मनुष्याः!** सोमम् इत् मा सुन्वन्तः **मदर्थं सोममेवाभिषुण्वन्तः सन्तः यूयं मामिन्द्रम्** याचत **प्रार्थयध्वम्** वसु **धनम्, नान्येन प्रकारेण। सोम एव प्रियः, तेनैवाहम् आराधितः सन् दृष्टादृष्टफलं प्रयच्छामि, नान्येन प्रकारेणेत्यर्थः। एतस्मिंश्च** मे **मम** सख्ये **सखिकर्मणि सोमाभिषवलक्षणे मदर्थे वर्तमानाः सन्तः** न रिषाथन **न रिष्यथ न कदाचिदपि विनङ्क्ष्यथ यूयम् कर्मक्षयेणेत्यर्थः ॥ ५ ॥**

**वेङ्कट०** अहम् इन्द्रः न **पराजितो भवामि आत्मीयम्** धनम्, न **च** मृत्यवे अव-**स्थितो भवामि** कदा **चित्।** सोमम् सुन्वन्तः **यूयम्**[1] **माम् धनम्** याचत[2]। न **मे मनुष्याः!** सख्ये **यूयम् रिष्टा भवथेति ॥ ५ ॥**

**[3]इति अष्टमाष्टके प्रथमाध्याये पञ्चमो वर्गः[3] ॥**

## अहमेताञ्छाश्वसतो द्वाद्वेन्द्रं ये वज्रं युधयेऽकृण्वत।
## आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्ननमस्युर्नमस्विनः ॥ ६ ॥

अहम्। एतान्। शाश्वसतः। द्वाऽद्वा। इन्द्रम्। ये। वज्रम्। युधये। अकृण्वत।
आह्वयमानान्। अव। हन्मना। अहनम्। दृळ्हा। वदन्। अनमस्युः। नमस्विनः ॥ ६ ॥

**उद्गीथ० यच्छब्दयोगाद् द्वितीये पादे व्याख्यारम्भः क्रियते।** इन्द्रम् **माम्** ये शत्रवः वज्रम् **अन्तर्णीतमत्वर्थमेतत्[4]। वज्रवन्तम्** युधये **युद्धाय** अकृण्वत[5] **कृतवन्तः आत्मना सह योधितवन्त इत्यर्थः,** अहम् **इन्द्रः तान्** एतान् **शत्रून् शाश्वसतः 'श्वस प्राणने'। अत्यर्थं श्वसतः[6] प्राणतः[7] अतिप्राणिनः महाबलानित्यर्थः,** द्वाद्वा **द्वौद्वावपि संयुक्तान् बहूनपि समुदितान् इत्यर्थः,** आह्वयमानान् **युद्धार्थम् आह्वयतः '[8]प्रगल्भान् अभीकान् श्वसतः[8] इत्यर्थः,** हन्मना[9] **हननेन वज्रेणेत्यर्थः,** अव अहनम् **अवदायोद्यम्य[10] वज्रं हतवानस्मि** दृळ्हा[11] **दृढानि निकार-हननाद्यभिभववाक्यानि[12]** वदन्[13] **भाषमाणः** अनमस्युः **अनमनशीलः अनमनस्वभाव[14] इत्यर्थः, नमनवतः अङ्गाक्षेपवत[15] इत्यर्थः, अथवा अनमस्युः सन्ध्यर्थम् अनमनशीलः** नमस्विनः **सन्ध्यर्थं नमनवतः ॥ ६ ॥**

**उद्गीथ०** अहम् एतान् **अत्यन्तं श्वसतः द्वन्द्वं-द्वन्द्वम्,** ये **अमी माम्** इन्द्रम् **बलिनं युद्धार्थम्** अकृण्वत **अभ्यगच्छन्,** तान् आह्वयमानान्[16] **वज्रेण** अव अहनम् **धृष्टानि** वचनानि वदन् **अनमनशीलः नमनवतः ॥ ६ ॥**

---

१. नास्ति वि[2]. २. अयाचत वि[2] अ[1]; अयाचन्त वि[1]. ३-३. नास्ति मूको. ४. °न्तर्हित° वि[1]. ५. कृण्वन्तः मूको. ६. °न्तः मूको. ७. °न्तः वि[2] अ. ८-८. प्रगल्भं अभीकां श्वसन्त मूको. ९. महन्मना वि[2]; महन् महा वि[2] अ. १०. अवदय° मूको. ११. दृढा मूको. १२. °धमिवाक्यानि मूको. १३. वदु मूको. १४. अवत्वस्थोस्व° मूको. १५. अङ्क्षे° वि[1]. १६. °नानहं मूको.

अभीदमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥ ७ ॥[1]

अभि । इदम् । एकम् । एकः । अस्मि । निष्षाट् । अभि । द्वा । किम् । ऊँ इति । त्रयः । करन्ति ।
खले । न । पर्षान् । प्रति । हन्मि । भूरि । किम् । मा । निन्दन्ति । शत्रवः । अनिन्द्राः ॥७॥

**उद्गीथ०** अभि अस्मि अभिभवाम्यहम् इदम् सर्वं शत्रुजातम् । कथम् । एकम् शत्रुं तावत् एकः एवाभिभवामि निष्षाट् निश्शब्दोऽत्र[2] प्रकर्षे [3]निश्शुक्लम् अनीरक्तम्[3] इति यथा । प्रकर्षेण अभिभविता शत्रूणाम्, अथवा निष्कृष्याभिभविता । अभि द्वा, अस्मीति क्रियापदम् अनुवर्तते । अभिभवामि द्वावपि एक एव । किम् उ त्रयः करन्ति[4] त्रयोऽपि मम किं कुर्वन्ति, त्रीनप्येक एव अभिभवामीत्यर्थः । किञ्च खले न यथा च खलके पर्षान् शीर्षस्य(?) पूरयितॄन् गोधूमादिकणान् बलीवर्दः पादेन हन्ति, एवम् प्रति हन्मि भूरि बहूनपि शत्रून् । ईदृशं सन्तं माम् किम् किमर्थम् निन्दन्ति कुत्सयन्ति शत्रवः अनिन्द्राः अविद्यमान इन्द्रो ज्ञेयतया येषां ते अनिन्द्राः मम इन्द्रस्य स्वरूपतोऽज्ञातारः[5] ॥ ७ ॥

**वेङ्कट०** अहम् इदम् एकम् शत्रुम् एकः अभि भवामि निष्षहमाणः, तथा अभि भवामि द्वौ अपि एकः । किम् वा मम[6] त्रयः कुर्वन्ति । सोऽहम् खले इव व्रीहिस्तम्बान् युद्धे परुषवचनान् राक्षसान् बहून् अपि प्रति हन्मि । तं माम् इन्द्रम् अजानन्तः किम् निन्दन्ति शत्रवः ॥ ७ ॥

अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम् ।
यत् पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि ॥ ८ ॥

अहम् । गुङ्गुऽभ्यः । अतिथिऽग्वम् । इष्करम् । इषम् । न । वृत्रऽतुरम् । विक्षु । धारयम् ।
यत् । पर्णयऽघ्ने । उत । वा । करञ्जऽहे । प्र । अहम् । महे । वृत्रऽहत्ये । अशुश्रवि ॥ ८ ॥

**उद्गीथ०** अहम् इन्द्रः गुङ्गुभ्यः बहुवचनसामर्थ्याद् गुङ्ग्वादिभ्यः 'या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये' (ऋ २,३२,८) इति मन्त्रान्तरे श्रुताभ्यः देवताभ्य इत्यर्थः । तादर्थ्ये चतुर्थ्येषा । गुङ्ग्वादिदेवतानाम् अर्थाय अतिथिग्वम् नाम राजानम् इष्करम् इषः अन्नस्य हविराख्यस्य कर्त्तारम्, एतदन्नेन[7] कृतवानस्मीति शेषः । किञ्च इषम् न यथा इषम् अन्नं व्रीह्यादिकं वृष्टिप्रदानद्वारेण मनुष्येषु स्थितिप्रदत्वेन स्थितिकरत्वेन अवधारितवानस्मि, एवम् वृत्रतुरम् शत्रूणां तूर्वितारं[8] हिंसितारम् अतिथिग्वं राजानम् विक्षु मनुष्येषु धारयम् धारितवानस्मि पूज्यत्वेन स्थितिकरत्वेन च । कदा । यत् यदा पर्णयघ्ने पर्णयनामासुरस्य हनने वधे उत वा अपि वा करञ्जहे करञ्जनामासुरस्य हनने वधे च महे महति

---

१. या. (३,१०) व्याख्याता द्र. २. निश° मूको. ३-३. निशुक्लमणीर° मूको. ४. किरन्ति मूको. ५. °तार इत्यर्थः मूको. ६. मममम वि[1]. ७. °दनेन मूको. ८. तुर्वि° मूको.

वृत्रहत्ये वृत्रवधे चाहम् प्र अशुश्रवि प्रकर्षेण श्रुतवानस्मि, तस्य वीर्यशौर्यशस्त्रास्त्रादिसम्पदमिति शेषः ॥ ८ ॥

**वेङ्कट०** अहम् गुङ्गुभ्यः जनपदेभ्यो दिवोदासम् निष्कर्तारम् अन्नम् इव सिद्धम् वृत्रतुरम् अस्थापयम् मनुष्येषु। यदा पर्णयस्य[1] हन्तरि अपि च करञ्जस्य हन्तरि महति सङ्ग्रामे अहम् विश्रुतोऽभवम् इति[2] ॥ ८ ॥

प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता।
दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करम् ॥ ९ ॥

प्र। मे। नमी। साप्यः। इषे। भुजे। भूत्। गवाम्। एषे। सख्या। कृणुत। द्विता।
दिद्युम्। यत्। अस्य। समऽइथेषु। मंहयम्। आत्। इत्। एनम्। शंस्यम्। उक्थ्यम्। करम् ॥ ९ ॥

**उद्गीथ०** यः मे मम [3]प्र नमी[3] प्रणमनशीलः स्तुत्या यागेन च प्रह्वीभवनशीलः स्तोता यष्टा चेत्यर्थः, सः साप्यः सपतिरर्चतिकर्मा (तु. निघ ३,१४)। सर्वस्य स्तुत्यः पुण्यकृद् अयम् इह परत्र च कल्याणफलभागिति प्रशंसनीयो भवतीत्यर्थः। इषे षष्ठ्यर्थे चतुर्थीयम्। इषः अन्नस्य भुजे भोजनाय च भूत् भवति भोज्यत्वाद् भोजनशक्तिमांश्च भवतीत्यर्थः। गवाम् वृष्टिलक्षणानाम् अपाम् गवाम् सास्नादिमतीनां[4] वा एषे 'इष्[5] गतौ' तुमर्थे सेन्(?)[6] प्रत्ययः। एषितुं गन्तुं गमनाय, प्राप्तये लाभायेत्यर्थः, सख्या सख्यानि सखिकर्माणि स्तुतियागरूपेण द्विता द्विधा, स्थितानि इति शेषः, कृणुत[7] कृणुते[8] यथाकालम् सदा करोतीत्यर्थः। किञ्च दिद्युम् आयुधम् यत् यदा अस्य सम्भक्तस्य स्वभूतम् समिथेषु सङ्ग्रामेषु मंहयम् 'मह पूजायाम्' इत्यस्य छान्दसोऽयमनुस्वारः। महयम् पूजयामि 'अहो तीक्ष्णम्, अहो विलक्षणम्, अहो दृढप्रहारि च' इति स्तौमीत्यर्थः। आत् तदा। इत् इति पदपूरणः। एनम् मद्भक्तम्[9] शंस्यम् सज्जनैः स्तुत्यम् उक्थ्यम् प्रशस्यम् अतीतेऽपि काले करम् करोमि ॥ ९ ॥

**वेङ्कट०** प्र भवति मदीयः स्तोता समाश्रयणीयो मनुष्यैः अन्नाय भोगाय च। तं मनुष्याः गवाम् अन्वेषणे द्वैधं सख्याय कृण्वन्ति उभयत आश्रयन्ते। अस्य जयार्थम् आयुधम् अहं सङ्ग्रामेषु यदा इच्छामि आदातुम्, अनन्तरम् एव एनम् शंस्यम् उक्थ्यम् च करोमि ॥ ९ ॥

प्र नेमस्मिन् ददृशे सोमो अन्तर्गोपा नेममाविरस्था कृणोति।
स तिग्मशृङ्गं वृषभं युयुत्सन् द्रुहस्तस्थौ बहुले बद्धो अन्तः ॥ १० ॥

प्र। नेमस्मिन्। ददृशे। सोमः। अन्तः। गोपाः। नेमम्। आविः। अस्था। कृणोति।
सः। तिग्मऽशृङ्गम्। वृषभम्। युयुत्सन्। द्रुहः। तस्थौ। बहुले। बद्धः। अन्तरिति ॥ १० ॥

---

१. वर्ण° वि[1] क्ष[3]; पूर्ण° वि[1]. २. नास्ति वि[1,2,3]. ३-३. प्रणमी मूको. ४. °दिवम° मूको. ५. इषु मूको. ६. सन् मूको. ७. भकृ° मूको. ८. नास्ति वि[1]. ९. मध्वक्तम् मूको.

**उद्गीथ०** नेमस्मिन् [१]अर्धे यजमानजने[१] प्र ददृशे मदर्थम् अभिषूयमाणः[२] प्रकर्षेण प्रकृष्टो वा दृश्यते सोमः अन्तः वेदिमध्ये। किञ्च गोपाः मदर्थं[३] यागपशोः गोप्ता यजमानजनः नेमम् प्रथमार्थे द्वितीयैषा। नेमः अर्धः अस्था यागपशोः[४] अस्थीनि आविः कृणोति [५]मदर्थम् मम प्रदानानि[५] गृह्णन् प्रकाशीकरोति। अधिकृतानां जनानाम् [६]अर्धो यः[६] समृद्धः स मदर्थं सोमयागं करोति, इतरः स्वल्पधनः पशुयागं मदर्थमेव करोतीत्यर्थः। किञ्च सः[७] तिग्मशृङ्गम् वृषभम् तीक्ष्णशृङ्गं[८] वृषभसदृशं माम् युयुत्सन् योद्धुमिच्छन् [९]द्रुहः द्रोग्धा[९] तस्थौ तिष्ठति[१०] बहुले बहूनामादातरि विस्तीर्णे स्थाने लोहपञ्जरभूमिगृहादौ निगलैः बद्धः अन्तः गुप्तिमध्ये न बहिः ॥ १० ॥

**वेङ्कट०** प्र दृश्यते समार्थम् अभिषुतः सोमः नेमस्मिन् अन्तः। नेमशब्दोऽर्धपर्यायः[११], युध्यतोः अन्यतरस्मिन्नित्यर्थः[१२]। तम् नेमम् अयं गोपायिता इन्द्रः आविः कृणोति अस्था वज्रेण। यः सः[१३] तस्य शत्रुः तिग्मशृङ्गम् वृषभम्[१४] मां तस्य जयाय युध्यन्तम् युयुत्सन् द्रोग्धा बद्धः तमसि अन्तः तिष्ठति। बहुलशब्दः तमोवचन इति ॥ १० ॥

आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।
ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हम् ॥ ११ ॥

आदित्यानाम् । वसूनाम् । रुद्रियाणाम् । देवः । देवानाम् । न । मिनामि । धाम ।
ते । मा । भद्राय । शवसे । ततक्षुः । अपराऽजितम् । अस्तृतम् । अषाळ्हम् ॥ ११ ॥

**उद्गीथ०** आदित्यानाम् वसूनाम् च रुद्रियाणाम् रुद्रा एव रुद्रियाः, रुद्राणां[१५] वा पुत्रा मरुतः रुद्रियाः, तेषां च देवानाम् अहम् देवः न मिनामि न हिनस्मि असंवर्धनेन न विनाशयामि, योगक्षेमेण[१६] सह संवर्धयामीत्यर्थः। किम्। धाम स्थानं तेजो वा। कस्मात्। ते देवाः मा माम् इन्द्रम् भद्राय भजनीयाय रसानुप्रदानवृत्रवधादिकर्मसमर्थाय शवसे बलाय बलसाध्यकर्मकरणाय इत्यर्थः, ततक्षुः कृतवन्तः निरूपितवन्त इत्यर्थः। कीदृशम्। [१७]अपराजितम् अस्तृतम् अहिंसितम् अषाळ्हम् अनभिभूतं चेत्यर्थः[१७] ॥ ११ ॥

**वेङ्कट०** आदित्यानाम् वसूनाम् मरुताम् च देवः देवानाम् न हिनस्मि अहं तेजः। ते माम् भजनीयाय बलाय पुरस्कुर्वन्ति अपराजितम् अहिंसितम् अनभिभूतम् ॥ ११ ॥

'इति अष्टमाष्टके प्रथमाध्याये षष्ठो वर्गः' ॥

---

१-१. अर्धयज० मूको. २. °मभिष्टूय° वि[२]. ३. किमर्थं मूको. ४. यागः पशोः मूको. ५-५. मम मदप्रदा° वि[२] अ. ६. अक्षयः स मूको. ७. ये सः मूको. ८. नास्ति वि[२]. ९-९. नास्ति मूको. १०. तिष्ठामि वि[२]. ११. न शब्दोत्थप° वि[२] अ[१]; नमशब्दोथप° वि[१]. १२. अन्यस्मि° अ[१]. १३. नास्ति वि[१]. १४. वृषं वि[२] अ[१]. १५. रुद्रियाणां मूको. १६. °क्षेमं मूको. १७-१७. अपरा मूको.

## [ ४९ ]

[1]वैकुण्ठ इन्द्र ऋषिः। इन्द्रो देवता। जगती छन्दः, द्वितीयैकादश्यौ त्रिष्टुभौ[1]।

अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम्।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन् भरे॥ १॥

अहम्। दाम्। गृणते। पूर्व्यम्। वसु। अहम्। ब्रह्म। कृणवम्। मह्यम्। वर्धनम्।
अहम्। भुवम्। यजमानस्य। चोदिता। अयज्वनः। साक्षि। विश्वस्मिन्। भरे॥ १॥

वेङ्कट० अहम्[2] दाम् स्तुवते मुख्यम् धनम्, अहम् एव स्तोतुः स्तोत्रम् मह्यम् वर्धनम् करोमि धनं प्रयच्छन्। अहम् भुवम् धनम् अस्य चोदिता यजमानस्य। तथा अयज्वनः चाभिभवामि सर्वस्मिन् सङ्ग्रामे॥ १॥

मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः।
अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे॥ २॥

माम्। धुः। इन्द्रम्। नाम। देवता। दिवः। च। ग्मः। च। अपाम्। च। जन्तवः।
अहम्। हरी इति। वृषणा। विऽव्रता। रघू इति। अहम्। वज्रम्। शवसे। धृष्णु। आ। ददे॥

उद्गीथ० [3]दिवः च ग्मः च द्यावापृथिव्योश्चेत्यर्थः[3], अपाम् च 'आपः' (निघ १,३) इत्यन्तरिक्षनाम। अन्तरिक्षस्य च, स्वामिनम्[4] इति शेषः, देवता यागाङ्गदेवत्वेनेत्यर्थः, [4]माम् इन्द्रम् नाम[4] धुः यज्ञेषु धारयन्ति जन्तवः यजमानमनुष्याः बिभ्रति। अहम् एव हरी हरिनामानावश्वौ अन्वर्थसंज्ञाकौ वृषणौ वर्षितारौ विव्रता खुरदन्तैः मेघविदारणवर्षवहनादिनानाकर्माणौ रघू शीघ्रगामिनौ, अधितिष्ठामीति शेषः। अहम् एव च वज्रम् धृष्णु धर्षणशीलं शत्रूणाम् अभिभवितृ आ ददे गृह्णामि धारयामि। किमर्थम्। शवसे अस्त्रजन्यबलार्थम्, आत्मनः परबलनिवृत्त्यर्थं वा। मशकेभ्यो धूम इति यथा अर्थनिवृत्त्या तादर्थ्यं[5] लक्ष्यते॥ २॥

वेङ्कट० इन्द्रनामानम् माम् देवता हविर्भिः धारयन्ति त्रिषु[7] लोकेषु जाताः। अहम् अश्वौ वृषणौ विश्वकर्माणौ[8] लघुगमनौ योजयामि। स्पष्टं शिष्टम्॥ २॥

अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः।
अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे॥ ३॥

अहम्। अत्कम्। कवये। शिश्नथम्। हथैः। अहम्। कुत्सम्। आवम्। आभिः। ऊतिऽभिः।
अहम्। शुष्णस्य। श्नथिता। वधः। यमम्। न। यः। ररे। आर्यम्। नाम। दस्यवे॥ ३॥

---

१-१. नास्ति मूको. २. अहिम् मूको. ३-३. श्चेत्यर्थः मूको. ४. स्थानम् वि[2] अ. ५-५. नास्ति मूको. ६. तादात्म्यम् वि[2] अ. ७. तिष्ठ वि[2] अ[1]. ८. विविधं कर्माणौ वि[1].

उद्गीथ० अहम् एव अत्कम् आयुधानाम् अन्यतमं[1] कवचम् कवये कवेः मेधाविनोऽपि शस्त्रास्त्रप्रज्ञाबलैः[2] प्रहारवञ्चनकुशलस्यापि स्वभूतम् शिश्नथम् ताडयामि छिनद्मि चेत्यर्थः । केन । हथैः हननैः[3] शस्त्रास्त्रप्रहारैरित्यर्थः । अहम् एव कुत्सम् ऋषिम् वज्रं वा आवम् रक्षामि आभिः ऊतिभिः एतैः शस्त्रास्त्रप्रज्ञाबलविषयैः सर्वतः पालनैः । अहम् एव शुष्णस्य असुरस्य श्नथिता ताडयिता हन्ता सन् वधः वज्रम् यमम् शुद्धोऽपि यमिरत्र सामर्थ्याद् उत्पूर्वार्थे द्रष्टव्यः । उद्यमम् उद्यतवानस्मि उच्चैः क्षिप्तवानस्मि तस्योपरि । कीदृशस्य शुष्णस्य । यः शुष्णः न ररे न रातवान् न दत्तवान् । किम् । आर्यम् नाम[4] अर्यस्येदम् [5]आर्यम् । अर्यस्य[5] त्रिभुवनेश्वरस्य मम नाम इन्द्र इत्येतत् । दस्यवे 'दसु उपक्षये' । शत्रूणां उपक्षपयित्रे मह्यम् । मत्तोऽन्यो न कश्चिदस्ति इन्द्रनामा । अहमेव इन्द्र इति । बलाभिमानेन मम नामापहृतवान् यः शुष्णः, तस्य हन्ता सन्नहम् उच्चैस्तस्योपरि वज्रं क्षिप्तवान् अस्मीत्यर्थः ॥ ३ ॥

वेङ्कट० अहम् आच्छादकम् शत्रुपुरम् कवये उशनसे शिश्नथम् [6]आयुधैः, अहम्[6] कुत्सम् अरक्षम् एभिः रक्षणैः, अहम् शुष्णस्य श्नथनार्थम् [7]आयुधम् उदयच्छम्[7], यः अहम्[8] न दत्तवान् [8]अस्मि आर्याणां[8] देयम् उदकम् असुराय इति ॥ ३ ॥

> अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् ।
> अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥ ४ ॥

अहम् । पिताऽइव । वेतसून् । अभिष्टये । तुग्रम् । कुत्साय । स्मत्ऽइभम् । च । रन्धयम् ।
अहम् । भुवम् । यजमानस्य । राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥४॥

उद्गीथ० अहम् पिता इव यथा पिता पुत्रान् संसाधयति वशमानयत्यात्मनः परिचर्याद्यर्थम्, एवम् अहम् वेतसून् बहुवचनसामर्थ्याद् अत्र पितृशब्देन पुत्रा उच्यन्ते । कार्यकारणयोरभेदोपचारात् । वेतसोः राज्ञः पुत्रान् रन्धयम्[9] अडभावश्छान्दसत्वात्[10] । अरन्धयम् संसाधितवानस्मि स्ववशे कृतवानस्मि । किमर्थम् । अभिष्टये यागाभिमुख्येन मम यजमानायेत्यर्थः । किञ्च तुग्रम् तुग्रनामानं राजानम् कुत्साय कुत्सस्य ऋषेः अर्थाय स्मदिभम् च प्रशस्यहस्तिनं च राजानम् अन्वर्थसंज्ञिनं रन्धयम् संसाधितवानस्मि कुत्सस्य वशमानीतवानस्मीत्यर्थः । किञ्च अहम् भुवम् भवामि यजमानस्य सर्वस्य एव स्वभूते राजनि गुणे दीप्ते यज्ञे । अथवा राजशब्दः लुप्तभावप्रत्ययोऽत्र द्रष्टव्यः । अहम् भवामि सर्वस्य यजमानस्य राजत्वे ईश्वरत्वे, स्वामी भवामीत्यर्थः । किञ्च यत् यदा प्र भरे प्रहरामि शत्रोरुपरि वज्रम् तुजये हिंसनाय, तदा प्रिया मम प्रियाणि देवसौत्यानि न आधृषे आधर्षणाय अभिभवनाय शत्रुभ्यो न, प्रयच्छामीति शेषः ॥ ४ ॥

---

१. अन्यं मूको. २. शास्त्रा° मूको. ३. नास्ति वि[1]. ४. नास्ति मूको. ५-५. आर्यस्य मूको. ६-६. नास्ति वि[2] अ[1]. ७-७. °धे मुदकय° वि[2] अ[1]. ८-८. °स्मार्या° वि[2] अ[1]. ९. अन्धयम् वि[2] अ. १०. अनभावाच्छान्दस (°च्छाब्द वि[2] अ) त्वात् मूको.

**वेङ्कट०** अहम् पिता इव पुत्राय[1] वेतसून् नाम जनपदान्[2] अभीच्छते तत्स्वामिनम् तुग्रम् स्मदिभम्[3] च द्वौ कुत्साय वशम् अनयम्। अहम् भुवम् यजमानस्य विराजनार्थम् प्र हरामि[4] यस्मात् तस्मै यजमानाय पुत्राय इव प्रियाणि धनानि शत्रूणामाधर्षणाय ॥ ४ ॥

अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक् ।
अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरन्धयम् ॥ ५ ॥

अहम् । रन्धयम् । मृगयम् । श्रुतर्वणे । यत् । मा । अजिहीत । वयुना । चन । आनुषक् ।
अहम् । वेशम् । नम्रम् । आयवे । अकरम् । अहम् । सव्याय । पट्ऽगृभिम् । अरन्धयम् ॥५॥

**उद्गीथ०** अहम् रन्धयम् संसाधितवानस्मि मृगयम् नाम राजानम् श्रुतर्वणे श्रुतर्वनाम्नः ऋषेः राज्ञो वा अर्थाय। कस्मात्। यत् यस्मात् मा माम् अजिहीत गतवन्ति सम्बन्धित्वेन सम्प्राप्तवन्ति। कथम्। आनुषक् [5]आनुपूर्व्येण निसर्गमारभ्य[5] अव्यवच्छेदेनेत्यर्थः। वयुना चन वयुनान्यपि। न केवलम् अभिजनबलशौर्यैश्वर्यादीनि, परानुग्रहप्रज्ञा अपीत्यर्थः। किञ्च अहम् वेशम् प्रतिवेश्यं संयोषितम् नम्रम् नमनशीलं विधेयम् आयवे मनुष्यस्य अर्थाय आयोर्वा राज्ञोऽर्थाय अकरम् कृतवानस्मि। किञ्च अहम् सव्याय सव्यनाम्नो मम पुत्रस्यार्थाय पड्गृभिनामानम् अरन्धयम् साधितवानस्मि सङ्गमितवानस्मीत्यर्थः ॥ ५ ॥

**वेङ्कट०** अहम् वशम् अनयम् मृगयम् नाम श्रुतर्वणे, यदा माम् प्राप्तवान् श्रुतर्वा प्रज्ञानेन अनुषक्तः[6]। चन इति पूरणम्। अहम् वेशम् नाम प्रणतम् कृतवानस्मि आयवे। अहम् सव्याय ऋषये पड्गृभिम् नाम वशम् अनयम् इति[7] ॥ ५ ॥

[8]इति अष्टमाष्टके प्रथमाध्याये सप्तमो वर्गः[8] ॥

अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजम् ।
यद्वर्धयन्तं प्रथयन्तमानुषग् दूरे पारे रजसो रोचनाकरम् ॥ ६ ॥

अहम् । सः । यः । नवऽवास्त्वम् । बृहत्ऽरथम् । सम् । वृत्राऽइव । दासम् । वृत्रऽहा । अरुजम् ।
यत् । वर्धयन्तम् । प्रथयन्तम् । आनुषक् । दूरे । पारे । रजसः । रोचना । अकरम् ॥ ६ ॥

**उद्गीथ०** अहम् वृत्रहा वृत्रस्य हन्ता[9] सः यः अहम् वृत्रा इव द्वितीयैकवचनस्य आकार आदेशः। यथा वृत्रम् असुरं सञ्चूर्णितवानस्मि[10], एवम् नववास्त्वम् नववास्तुम् अभिनवगृहं नवसङ्ख्यायुक्तगृहं वा बृहद्रथम् महारथम् दासम् उपक्षपयितव्यम् अन्वर्थसंज्ञिनम् असुरम् सम् अरुजम् संरुग्णवानस्मि वज्रेण सञ्चूर्णितवानस्मीत्यर्थः। कदा। यत् यदा वर्धयन्तम् ऐश्वर्याभिवृद्ध्याऽऽत्मानं वृद्धं कुर्वन्तम् प्रथयन्तम् पुत्रपौत्रादिप्रजाविस्तारेण च विस्तारयन्तम् आत्मानम् आनुषक् आनु-

---

१. पुत्रोव वि[2] अ[1]; पुत्रं वि[1]. २. °पदम् मूको. ३. स्मदिहम् वि[2] अ[1]. ४. भरा° वि[1]. ५-५. आनुपूर्वनिसर्गमारस्य मूको. ६. °नुषम् वि[2] अ[1]; °नुषक्तम् वि[1]. ७. °ति भावः अ[1]. ८-८. नास्ति मूको. ९. हा मूको. १०. °संरुणितवा° मूको.

पूर्व्येण अव्यवच्छेदेनेत्यर्थः, दूरे विप्रकृष्टे पारे परस्मिन्नर्धे[1] रजसः द्युलोकस्य[2] अवयवभूते रोचना द्वितीयैकवचनस्याऽऽकार आदेशः। रोचनं दीपनशीलं देवजनम् अकरम् कृतवानस्मि, तदा ॥ ६ ॥

वेङ्कट० अहम् सः अस्मि, यः नववास्त्वम् बृहद्रथम् च वृत्रम् इव असुरम् सम् अरुजम् वृत्रहा, यदा[3] वर्धमानम् प्रथमानम् च अनुषक्तः[4] नववास्त्वं बृहद्रथं च लोकस्य दूरे पर्यन्ते आत्मीयेन तेजसा अकरम् अपनोदितवान् अस्मि इत्यर्थः ॥ ६ ॥

अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा ।
यन्मा सावो मनुष आह निर्णिज ऋधक् कृषे दासं कृत्व्यं हथैः ॥ ७ ॥

अहम् । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा ।
यत् । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासम् । कृत्व्यम् । हथैः ॥७॥

उद्गीथ० अहम् आदित्यात्मना स्थितः सन् परि यामि सर्वतो गच्छामि मेरुं प्रदक्षिणमावर्त इत्यर्थः। केन उह्यमानः। सूर्यस्य स्वभूतैः आशुभिः क्षिप्रगामिभिः एतशेभिः अश्वैः प्र वहमानः प्रकर्षेण उह्यमानः ओजसा बलेन बलनिमित्तेन महता वेगेनेत्यर्थः। अथवा अहं सूर्यात्मना स्थितः सन् परियामि सर्वतो गच्छामि मेरुं प्रदक्षिणम् आवर्ते मम सूर्यस्य स्वभूतैः आशुभिः अश्वैः सह प्रवहमानः प्रकर्षेण वहन्नादित्यरथं बलेन। वायुरज्जुभिः किलादित्यमण्डलम्[5] आकृष्यत इत्ययमर्थो व्याख्यातः। किंच यत् यदा मा माम् सावः सोमस्याभिषोता मनुषः मनुष्यः स्तुतिभिः आह ब्रवीति स्तौति इत्यर्थः, निर्णिजे दशापवित्रेण शोधयित्रा[6] परिपूते मदर्थं संस्कृते सोमे, तदा स्तुत्या सोमपानेन च वृद्धवीर्यः सन् ऋधक् कृषे प्राणैर्वियोजयामीत्यर्थः, दासम् उपक्षपयितव्यम् कृत्व्यम् कर्तनीयं छेत्तव्यं च शत्रुम् हथैः हननैर्वज्रप्रहारैः ॥ ७ ॥

वेङ्कट० अहम् सूर्यस्य स्वभूतैः [7]परि यामि[7] अश्वैः एतशैः प्रकर्षेण[8] उह्यमानो बलेन। यदा माम् यजमानस्य अभिषवः ब्रवीति शत्रोः निर्णेजनाय अपनोदितुं शत्रुम्, तदा[9] पृथक् करोमि तस्य यजमानस्य छेत्तव्यम् दासम् आयुधैः ॥ ७ ॥

अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम् ।
अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयम् ॥ ८ ॥

अहम् । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयम् । शवसा । तुर्वशम् । यदुम् ।
अहम् । नि । अन्यम् । सहसा । सहः । करम् । नव । व्राधतः । नवतिम् । च । वक्षयम् ॥८॥

---

१. °न्नर्धे वि[1]. २. सद्युलो° मूको. ३. यथा मूको. ४. अनुक्रम मूको. ५. °ण्डलैः वि[2] अ. ६. °यित्रे मूको. ७-७. परिर्ययामि वि[1]; पथियाति वि[2]; पयियामि अ[1]. ८. प्रकर्षण मूको. ९, तथा मूको.

**उद्गीथ०** अहम् सप्तहा सप्त नमुच्यादीन्[1] असुरान् हतवान् नहुषः नहुषस्य राज्ञोऽर्थाय। तदुक्तम्—'अध्वर्यवो य उरणं जघान' ( ऋ २,१४,४ ) इत्यत्र। नहुष्टरः 'नह बन्धने'। नद्धृतरः अतिशयेन नद्धा शत्रूणां नागपाशतः निगलैश्च बन्धनस्य कर्ता। किञ्च प्र अश्रावयम् प्रकर्षेण श्रावितवानस्मि युद्धकाले अभयशब्दम् 'मा भैषीः' इत्युक्तवानस्मि इत्यर्थः, शवसा बलेनार्तपरित्राणसमर्थेन, युक्तत्वादिति शेषः, तुर्वशम् राजानम् यदुम् च। किञ्च अहम् अन्यम् शत्रुम् सहः अन्तर्णीतमत्वर्थमेतत्[2]। सहस्वन्तम् महाबलमित्यर्थः, सहसा बलेन नि करम् नीचैः करोमि अभिभवामीत्यर्थः। किञ्च नव नवतिम् च व्राधतः ¿ 'बाधः' ( निघ २,९ )?[4] इति बलनाम। बाधवतः बलवतः शत्रून् वक्षयम् वहामि[3] जीवितान्तं प्रापयामीत्यर्थः ॥ ८ ॥

**वेङ्कट०** 'सप्त यत्पुरः शर्म शारदीः' ( ऋ १,१७४,२ ) इत्युक्तम्। अहम् सप्तहा हविर्भिर्मां बध्नतः अत्यन्तं बन्धकः प्र अश्रावयम् जने बलेन तुर्वशम् यदुम् च। अहम् आत्मीयेन सहसा अन्यम् [5]सहस्विनम् नि[5] करोमि, नव च पुरीः नवतिम् च वर्धमानाः देशान्तरं प्रापयम् व्यनाशयमिति[6] ॥ ८ ॥

अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि।
अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥ ९ ॥

अहम्। सप्त। स्रवतः। धारयम्। वृषा। द्रवित्न्वः। पृथिव्याम्। सीराः। अधि।
अहम्। अर्णांसि। वि। तिरामि। सुऽक्रतुः। युधा। विदम्। मनवे। गातुम्। इष्टये ॥ ९ ॥

**उद्गीथ०** अहम् सप्त सप्तसङ्ख्याकान् स्रवतः नदान् सिन्धुलोहितप्रभृतीन् द्रवित्न्वः द्रवितॄन् द्रवणशीलान् सन्ततवाहिन इत्यर्थः, धारयम्[7] अधारयम् धारितवानस्मि वृषा वर्षिता सन्। क्व अधारयम्[8]। 'पृथिव्याम् अधि पृथिव्या मध्ये। कीदृशान्। सीराः सरणशीलान्। नत्वाभावश्छान्दसः। सुक्रतुः शोभनकर्मा च अहम् अर्णांसि उदकानि वि तिरामि प्रयच्छामि। किञ्च अहम् युधा सम्प्रहारेण[9] असुरान् पराजित्य विदम् लब्धवानस्मि मनवे मनुष्यस्यार्थाय गातुम् देवान् प्रति गन्तारं यज्ञम् इष्टये देवयागाय ॥ ९ ॥

**वेङ्कट०** अहम् सप्त नदीः अधारयम् वृषा द्रवन्तीः पृथिव्याम् सरणशीलाः। अहम् उदकानि प्रयच्छामि सुकर्मा। युद्धेन प्रयच्छामि मनुष्याय मार्गम् यजमानाय ॥ ९ ॥

अहं तदासु धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत्।
स्पार्हं गवामूधःसु वक्षणास्वा मधोर्मधु श्वात्र्यं सोममाशिरम् ॥ १० ॥

---

१. प्राच्या मूको. २. °न्तर्हित° वि[1]. ३. वक्ष्यामि° मूको. ४. 'व्राधन्' इति महन्नाम ( निघ ३,३ ). ५-५. सहस्थिनग्नि वि[2]; हस्तिनग्नि अ[1]; सहस्मिन्नत्ति वि[1]. ६. व्यनाशमि° मूको. ७. नास्ति मूको. ८. °रयन् वि[1]; °रय वि[2] अ. ९-९. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र.

अहम् । तत् । आसु । धारयम् । यत् । आसु । न । देवः । चन । त्वष्टा । अधारयत् । रुशत् । स्पार्हम् ।
गवाम् । ऊधःऽसु । वक्षणासु । आ । मधोः । मधु । श्वात्र्यम् । सोमम् । आऽशिरम् ॥ १० ॥

**उद्गीथ०** अहम् एव तत् पयः आसु गोषु धारयम् धारयामि वृष्टिप्रदानद्वारेण यवसोदकम् जनयन् । यत् पयः आसु गोषु देवः चन देवोऽपि त्वष्टा आदित्यो वा देवशिल्पी वा प्रजापतिर्वा न अधारयत् धारयितुं न शक्नोति । कीदृशम् पयः । रुशत् रोचिष्णु स्पार्हम् स्पृहणीयम् । गवां केषु प्रदेशेषु धारयसि । गवाम् ऊधःसु इति प्रतिवचनम् । किञ्च वक्षणासु नदीषु च धारयामि मधु उदकम् । कीदृशम् । श्वात्र्यम् क्षिप्रगामीत्यर्थः । कियन्तं कालं धारयसि इति चेत्, [1]आ मधोः आ वृष्ट्युदकात्[1] यावद् आगामिवर्षासु [2]वृष्ट्युदकं पातयिष्यामि[2] तावदित्यर्थः । किञ्च सोमम् आशिरम् सोमं च आशिरं च धारयामि हविष्ट्वेन । क्व । सामर्थ्याद् यज्ञे ॥ १० ॥

**वेङ्कट०** अहम् तत् आसु गोषु अधारयम्, यत् आसु गोषु त्वष्टा अपि[3] देवः न अधारयत्[4], दीप्तं पयः[5] स्पृहणीयम् गवाम् ऊधस्सु वहनशीलासु अत्यन्तं स्वादु सुखावहम् सोमम् प्रति आशिरम् ॥ १० ॥

एवा देवाँ इन्द्रो विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः ।
विश्वेत् ता ते हरिवः शचीवोऽभि तुरासः स्वयशो गृणन्ति ॥ ११ ॥

एव । देवान् । इन्द्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा । सत्यऽराधाः ।
विश्वा । इत् । ता । ते । हरिऽवः । शचीऽवः । अभि । तुरासः । स्वऽयशः । गृणन्ति ॥ ११ ॥

**उद्गीथ०** एव एवम् अनेन उक्तप्रकारेण देवान् प्रति इन्द्रः प्र विव्ये प्रकर्षेण गच्छति अनुग्रहीतुम्[6] नॄन् मनुष्यांश्च प्रति च्यौत्नेन बलेन, शत्रून् अभिभूयेति शेषः, मघवा धनवान् सत्यराधाः सत्यधनः सत्यवादी ऋतधामेत्यर्थः[7] । पूर्वार्धेन स्तुत्वेदानीं प्रत्यक्षीकृत्य स्तौति । अत एव च भिन्नवाक्यताऽनयोः । विश्वा इत् ता यानि मयोक्तानि सामर्थ्यकृतानि कर्माणि तानि सर्वाण्येव ते तव स्वभूतानि हे हरिवः! हर्यश्व! शचीवः! रसानुप्रदानवृत्रवधादिकर्मवन्! प्रज्ञावन्! वा तुरासः तुराः परया भक्त्या योगात् त्वरिताः सन्त [8]आद्दताः सन्त[8] इत्यर्थः, स्वयशः तव स्वं[9] यशः तव स्वभूतां कीर्तिं चेत्यर्थः, अभि गृणन्ति अभिष्टुवन्ति स्तोतारः । कर्मकीर्तिस्तुतिद्वारेण तद्वत्स्तुतिरिहोच्यते । रसानुप्रदानवृत्रवधादिकर्मकीर्तिमन्तं च त्वां सर्वे स्तोतारः स्तुवन्तीत्यर्थः ॥ ११ ॥

**वेङ्कट०** अथ इन्द्रभावात् आत्मानं स्तौति — एवम्[10] देवान् मनुष्यान् च इन्द्रः प्र विव्ये स्वेषु कार्येषु

---

१-१. वृष्ट्युदका मूको. २-२. °कनातमिष्यामि मूको. ३. अभि वि[1]; नास्ति अ[1]. ४. असाधा° वि[2] अ[2]; ताधा° वि[1]. ५. वयं वि[1]. ६. अन्नं ग्रही° मूको. ७. °धावेत्य° मूको. ८-८. नास्ति वि[2] अ. ९. स्वयं मूको. १०. °वम् देवम् मूको.

प्रगमयति। 'तस्मात् पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते' ( तै ६,३,१,४-५ ) इति ब्राह्मणम्। बलेन मघवा सत्यधनः। विश्वानि एव तानि ते हरिवः! शचीवः![1] कर्माणि अभि गृणन्ति त्वरमाणाः हे स्वभूतयशः! इति[2] ॥ ११ ॥

[3]इति अष्टमाष्टके प्रथमाध्याये अष्टमो वर्गः[3] ॥

[ ५० ]

[3]वैकुण्ठ इन्द्र ऋषिः। इन्द्रो देवता। जगती छन्दः, तृतीयाचतुर्थ्यौ अभिसारिण्यौ, पञ्चमी त्रिष्टुप्[3]।

**प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे।**
**इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥ १ ॥**[4]

प्र। वः। महे। मन्दमानाय। अन्धसः। अर्च। विश्वानराय। विश्वऽभुवे।
इन्द्रस्य। यस्य। सुऽमखम्। सहः। महि। श्रवः। नृम्णम्। च। रोदसी इति। सपर्यतः ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'प्र वो महे' इति सप्तर्चम् ऐन्द्रम् इन्द्रो वैकुण्ठो ददर्श। प्र वो महे इति ··· कस्मात् कारणात् प्राचेत यूयं स्तुतिम् इन्द्रार्थमिति ··· ॥ १ ॥

**वेङ्कट०** प्र उच्चारय त्वं महते सोमेन मोदमानाय सर्वस्य नेत्रे सर्वस्य भावयित्रे। यस्य इन्द्रस्य सुष्ठु मंहनीयम्[5] बलम् महत् श्रवणीयम् नृम्णम् च द्यावापृथिव्यौ परिचरतः। सहोनृम्णयोरल्पो भेदः ॥ १ ॥

**सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इन्द्रो मावते नरे।**
**विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्वभि शूर मन्दसे ॥ २ ॥**

सः। चित्। नु। सख्या। नर्यः। इनः। स्तुतः। चर्कृत्यः। इन्द्रः। माऽवते। नरे।
विश्वासु। धूःऽसु। वाजऽकृत्येषु। सत्ऽपते। वृत्रे। वा। अप्ऽसु। अभि। शूर। मन्दसे ॥ २ ॥

**उद्गीथ०** यस्मात् स नृभ्यो हितः इनः सर्वेश्वरः। सः चित् निपातानाम् उच्चावचार्थत्वात् चिच्छब्दोऽत्र हेत्वर्थे। नु इति क्षिप्रनाम। ··· ··· ··· ॥ २ ॥

**वेङ्कट०** सः खलु इन्द्रः सख्या नृहितः[6] ईश्वरः स्तुतः पुनःपुनः [7]कर्तव्यः कार्येषु[7] मत्सदृशाय मनुष्याय। स त्वं सर्वेषु वोढव्येषु बलकृत्येषु च सत्पते![8] [9]मेघे† वा[9] उदकेषु [10]अभि माद्यसि[10] शूर![11] तत्तदर्थं स्तोतृभिः स्तूयमानः ॥ २ ॥

**के ते नर इन्द्र ये त इषे ये ते सुम्नं सधन्यमियक्षान्।**
**के ते वाजायासुर्याय हिन्विरे के अप्सु स्वासूर्वरासु पौंस्ये ॥ ३ ॥**

1. °व वि[2] अ[1]; च शिवः वि[1]. 2. नास्ति वि[1,2]. 3-3. नास्ति मूको. 4. या. (११,९) व्याख्यातेयमृग् द्र. 5. मंहीयं वि[2] अ[1]; महनीयं वि[1]. 6. °तम् मूको. 7-7. °व्यकार्ये वि[1]; °व्यकासु इन्द्रः वि[2] अ[1]. 8. सचते वि[2] अ[1]; सप्ते वि[1]. 9-9. °घा इव मूको. † = वृत्रवधे इति भावः द्र. 10-10. आभि माद्यन्ति वि[1]; प्रमा अ[1]. 11. स शू° वि[1].

के । ते । नरः । इन्द्र । ये । ते । इषे । ये । ते । सुम्नम् । सऽधन्यम् । इयक्षान् ।
के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । उर्वरासु । पौंस्ये ॥ ३ ॥

**वेङ्कट०** के ते मनुष्याः इन्द्र! यादृशाः तव अन्नाय भवन्ति, ये च त्वदीयम् सुखम् धनयुक्तम् त्वत्तः प्राप्तुमिच्छन्ति। के वा तुभ्यम् बलाय असुरहनननिमित्ताय हविः प्रेरयन्ति, के वा उदकाद्यर्थम् इति ॥ ३ ॥

भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ ४ ॥

भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः ।
भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः । विश्वऽचर्षणे ॥ ४ ॥

**वेङ्कट०** अभवः त्वम् इन्द्र! स्तोत्रेण महान्। भुवः च सर्वेषु सवनेषु यष्टव्यः। भुवः च नृणाम् च्यावकः सर्वस्मिन् सङ्ग्रामे, प्रशस्यः च मन्त्रयितव्यः सर्वस्य द्रष्टः! ॥ ४ ॥

अवा नु कं ज्यायान् यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः ।
असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे ॥ ५ ॥

अव । नु । कम् । ज्यायान् । यज्ञऽवनसः । महीम् । ते । ओमात्राम् । कृष्टयः । विदुः ।
असः । नु । कम् । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ ५ ॥

**उद्गीथ०** ...... विदुः लभन्ते। किञ्च यः त्वम् अजरः जरारहितः स त्वम् असः [1]भव नु[1] क्षिप्रम् कम् सुखम्। ईप्सितार्थप्रदानेन अस्माकं सुखकरो भवेत्यर्थः। वर्धाः च पुत्रपौत्रादि-वृद्ध्या[2] वर्धयिता च भव। किञ्च विश्वा इत् सर्वाण्येव एता एतानि सवना सवनानि यज्ञान् [3]प्रातःसवनादीनि च[3] तूतुमा तूर्णं क्षिप्रम् कृषे कुरु अङ्गभावप्रतिपत्त्या परिसमापय इत्यर्थः ॥ ५ ॥

**वेङ्कट०** रक्ष क्षिप्रम् प्रशस्ततरः सम्भक्तयज्ञान्। महत्तव रक्षणम् कृष्टयः जानन्तु। भव त्वम् इह अजरः, क्षिप्रं वर्धस्व च। विश्वानि त्वम् एतानि सवनानि तूर्णानि कुरुषे ॥ ५ ॥

एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥ ६ ॥

[4]एता । विश्वा । सवना । तूतुमा । कृषे । स्वयम् । सूनो इति । सहसः । यानि । दधिषे ।[4]
वराय । ते । पात्रम् । धर्मणे । तना । यज्ञः । मन्त्रः । ब्रह्म । उत्ऽयतम् । वचः ॥ ६ ॥

---

१-१. °वतु मूको. २. °त्राभिवृ° त्रि[1]. ३-३. प्रसेवनादीनि व वि[2] अ. ४-४. या. (५,२५) व्याख्यातोऽयमर्धर्चः द्र.

**उद्गीथ०** कस्मादेवमुच्यते । यस्मात् एता एतानि विश्वा सर्वाणि सवना प्रातःसवनादीनि यज्ञान् वा तूतुमा तूर्णं क्षिप्रम् कृषे करोषि त्वं क्षिप्रम् आगच्छन् । स्वयम् आत्मना हे सूनो! पुत्र! सहसः बलस्य यानि सवनानि दधिषे वृष्टिप्रदानद्वारेण अङ्गत्वप्रतिपत्त्या वा धारयसि । किञ्च वराय श्रेष्ठाय ते तुभ्यम् पात्रम् इदं सोमस्य पूर्णम् धर्मणे सर्वस्य धारयित्रे, तना धनं च अस्मदीयम् यज्ञः च मन्त्रः च कृतः स्तुतिलक्षणः ब्रह्म अन्नं च सवनीयं पुरोडाशादिकम् उद्यतम्, यच्चेदम् [1]अर्थकृतं वचः[1] स्तुतिलक्षणं तदपि तवैव ॥ ६ ॥

**वेङ्कट०** एतानि विश्वानि सवनानि[2] तूर्णानि[3] कुरुषे । स्वयम् एव हे[4] सहसः सूनो! यानि धारयसि शत्रूणां निवारणाय । तव रक्षणं भवतु अस्माकम्, धारणाय च धनम्[5] । तुभ्यम् यज्ञः यजूंषि[6] महच्च शस्त्रलक्षणम् वचः[7] उद्यतम् इति ॥ ६ ॥

ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने ।
प्र ते सुम्नस्य मनसा पथा भुवन् मदे सुतस्य सोम्यस्यान्धसः ॥ ७ ॥

ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनाम् । च । वसुनः । च । दावने ।
प्र । ते । सुम्नस्य । मनसा । पथा । भुवन् । मदे । सुतस्य । सोम्यस्य । अन्धसः ॥ ७ ॥

**उद्गीथ०** हे विप्र! मेधाविन्! इन्द्र! ते तव अर्थाय ये ब्रह्मकृतः ब्रह्मणोऽन्नस्य सवनीयपुरोडाशादिकस्य स्तुतेर्वा कर्तारः सुते अभिषुते सति सोमे सचा '[8]नित्यमिति अत्रार्थः[8]' । अथवा सुत इति तृतीयार्थे सप्तमी, सचाशब्दश्च सहार्थे । सुतेन सोमेन सहेत्यर्थः । वसूनाम् च दृष्टधनानां च वसुनः च दृष्टधनस्य च दावने दानाय । दानेन च अत्र तत्पूर्वको लाभो लक्ष्यते । त्वत्तो लाभायेत्यर्थः । ते ब्रह्मकृतः सुम्नस्य स्वर्गसुखस्य पथा प्राप्तिमार्गेण प्र भूवन् प्रकर्षेण भवन्तु मनसा, त्वया अनुगृह्यमाणा इति शेषः, त्वत्प्रसादात् स्वर्गं प्राप्नुवन्त्वित्यर्थः[9], मदे सति सुतस्य अभिषुतस्य सोम्यस्य सोममयस्य अन्धसः अन्नस्य सम्बन्धिनि त्वयि तृप्ते सतीत्यर्थः ॥ ७ ॥

**वेङ्कट०** ये ते[10] मेधाविन्! स्तोत्रकृतः सुते सोमे संभूय बहूनाम् वसूनाम् एकस्य च दानार्थम्, ते स्तोतारः सुखस्य पूजनीयेन मार्गेण प्र भवन्तु मदे सञ्जाते तव अभिषुतस्य सोममयस्य अन्नस्य सम्बन्धिनि इति ॥ ७ ॥

[11]इति अष्टमाष्टके प्रथमाध्याये नवमो वर्गः[11] ॥

[ ५१ ]

[11]अयुजां देवा ऋषयः, युजां सौचीकोऽग्निः । युजां देवा देवता, अयुजाम् अग्निः । त्रिष्टुप् छन्दः[11] ।

महत् तदुल्बं स्थविरं तदासीद् येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥ १ ॥

---

१-१. °कृतवचः मूको. २. नास्ति वि[2] अ[1]; °वतानि वि[1]. ३. सवनानि वि[1]. ४. नास्ति वि[1]. ५. सत्यम् वि[1]. ६. यजूंषि वि[1,2]; यजूंहि अ[1]. ७. वचन वि[1]. ८-८. °मित्यर्थः वि[2] अ. ९. °वन्तीत्यर्थः मूको. १०. ये वि[1]. ११-११. नास्ति मूको.

[1]महत् । तत् । उल्बम् । स्थविरम् । तत् । आसीत्[1] । येन । आऽविष्टितः । प्रऽविवेशिथ । अपः ।
विश्वाः । अपश्यत् । बहुधा । ते । अग्ने । जातऽवेदः । तन्वः । देवः । एकः ॥ १ ॥

**उद्गीथ०** उत्तराणि त्रीणि सूक्तानि 'महत्तदुल्बम्' 'विश्वे देवाः शास्तन' 'यमैच्छाम मनसा' इत्यादीनि नवर्चषड्चैकादशर्चानि, विश्वेषां च देवानां सौचीकस्य चाग्नेः संवादसूक्तानि । प्रथमस्य सूक्तस्यायुजः सर्वा वैश्वदेव्यः, युजः आग्नेय्यः । द्वितीयं च सूक्तम् आग्नेयम् । उत्तमं वैश्वदेवम् । 'तदद्य वाचः', 'पञ्च जना मम होत्रं जुषन्ताम्' (ऋ १०, ५३, ४; ५) इत्येते च द्वे आग्नेय्यौ । 'संवादेषु च सर्वेषु य[2] ऋषिः सैव देवता' (तु. बृदे २,८६-८७) इति वचनाद् ऋषिदेवतयोः एकत्वम् । 'महत् तदुल्बं स्थविरं तदासीत्, येनाविष्टितो वषट्कारभयाद् अग्निरप्सु प्रविवेश' इतीतिहासः । विश्वे देवाः सौचीकमग्निमाहुः— महत् परिमाणतः तत् उल्बम् जरायुपर्यायः[3] गर्भवेष्टनम् स्थविरम् स्थूलं च तत् आसीत् अभूत्, [4]येन उल्बेन[4] आविष्टितः आवेष्टितः प्रविवेशिथ वषट्कारभयात् प्रविष्टवानसि[5] त्वम् अपः । किञ्च विश्वाः ऋतुषु अप्सु ओषधीषु च प्रविष्टाः अपश्यत् दृष्टवान् बहुधा अनेकप्रकारम् ते तत्र स्वभूताः हे अग्ने ! जातवेदः ! तन्वः मूर्तीः[6] देवः एकः ॥ १ ॥

**वेङ्कट०** 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त । सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवताः प्रैषमैच्छन्' (तै २,६,६,१) इति ब्राह्मणम् । तत्र[7] देवानां वचनम्— 'महत् तत् उल्बम्' इति । महत् तत् प्रावरणम् स्थूलम् च आसीत्, येन [8]आवेष्टितः त्वम् अग्ने ![8] प्रविष्टवानसि उदकम् । तस्य उल्बस्यान्तः[9] तव तनूर्व्याप्ताः बहुधा एकः देवः अपश्यत् अग्ने ! जातप्रज्ञ ! ॥ १ ॥

**को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।**
**क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देवयानीः ॥ २ ॥**

कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः । बहुधा । परिऽअपश्यत् ।
क्व । अह । मित्रावरुणा । क्षियन्ति । अग्नेः । विश्वाः । सम्ऽइधः । देवऽयानीः ॥ २ ॥

**उद्गीथ०** देवैरेवमुक्तोऽग्निस्तान् पृच्छति— कः असौ देवः यः मा मामग्निम् ददर्श दृष्टवान्, पूर्वमिति शेषः । कतमः सः देवः यः मे मम अग्नेः स्वकाः तन्वः बहुधा बहुप्रकारम् पर्यपश्यत् सर्वतो दृष्टवान्, पश्चादिति शेषः । कस्मादेवं वाक्यशेषेण व्याख्यायते । 'तं यमश्च वरुणश्चान्वपश्यताम्'[10] (शांब्रा १,२) इति शाङ्खायनश्रुतेः[11] । अनुपूर्वम् इति व्याख्यायते । क्व अह क्व च हे मित्रावरुणा ! मित्रावरुणग्रहणमत्र प्राधान्यात् । अथवा सर्वदेवोपप्रदर्शनार्थम्[12] । हे मित्रावरुणौ ! परीक्षितारः[13] विश्वे देवाः ! इत्यर्थः, क्षियन्ति निवसन्ति अनुप्रविष्टास्तिष्ठन्तीत्यर्थः, अग्नेः मम स्वभूताः विश्वाः सर्वाः समिधः समिद्धाः सन्दीप्ताः तन्वः देवयानीः देवान् प्रति गन्त्र्यः ॥ २ ॥

---

१-१. या. (६,३५) निगमोऽयं द्र. २. च वि[1]; नास्ति वि[2] अ. ३. °पर्यायं वि[2]. ४-४. तद् ये° वि[1]; योनौ तद् उल्बेन वि[2] अ. ५. विप्रवानसि मूको. ६. कृत्तीः मूको. ७. तु वि[2] अ[1]. ८-८. आवे ··· वि[2] अ[1]. ९. उखस्या° वि[2] अ[1]. १०. °श्च स्वप° वि[1]. ११. शाखान्तरश्रु° मूको. १२. सर्वप्रद° वि[1]. १३. परिक्षित मूको.

**वेङ्कट०** तद् इदम् अग्नेर्वचनम्—कः मा ददर्श। कतमः सः देवः, यः मम तनूः[1] बहुधा [2]निविष्टाः† पर्यपश्यत्। क हे मित्रावरुणौ! ता व्याप्ताः समिद्धाः तन्वो देवयानसाधनभूताः‡ मदीया निवसन्ति इति देवानां मुखतः स्थितौ स प्रश्नं कुर्वाणो मित्रावरुणौ पृच्छति[2] ॥२॥

ऐच्छा॑म त्वा बहु॒धा जा॑तवेदः॒ प्रवि॑ष्टमग्ने अ॒प्स्वोष॑धीषु ।
तं त्वा॑ य॒मो अ॑चिकेच्चित्रभानो दशान्तरु॒ष्याद॑ति॒रोच॑मानम् ॥ ३ ॥

ऐच्छा॑म । त्वा॒ । ब॒हु॒धा । जा॒त॒ऽवे॒दः॒ । प्रऽवि॑ष्टम् । अग्ने॒ । अ॒प्ऽसु । ओष॑धीषु ।
तम् । त्वा॒ । य॒मः । अ॒चि॒के॒त् । चि॒त्र॒भा॒नो॒ इति॑ चित्रऽभानो । द॒श॒ऽअ॒न्त॒रु॒ष्यात् । अ॒ति॒ऽरोच॑मानम् ॥३॥

**उद्गीथ०** देवा आहुः—ऐच्छाम अन्विष्टवन्तो[3] वयम् त्वा त्वामग्निम् बहुधा, बहुप्रकारम् हे जातवेदः! अग्ने! प्रविष्टम् अप्सु ओषधीषु। ऋतुषु[4] च श्रुतिदर्शनात्। इत्थम् तम् त्वा त्वाम् यमः अचिकेत् दृष्टवान्, वरुणश्च। 'तं वरुणश्च [5]यमश्चान्वपश्यताम्'[5] (शांब्रा १,२) इति श्रुतेः। हे चित्रभानो विचित्रदीप्ते! दशान्तरुष्यात् दशान्तरुष्यादिति विभक्तिवचनव्यत्ययः कार्यः। दशान्तर्निवासान्[6] अतिरोचमानम् अतीत्य एकादशे निवासे उषित्वा दीप्यमानम् ॥ ३ ॥

**वेङ्कट०** नीचीनं[7] त्वाम् अनु-ऐच्छाम[8] जातवेदः! बहुधा निलीनम् प्रविष्टम् अग्ने! अप्सु[9] च ओषधीषु च। तम् त्वा यमः अजानात्[10] चित्रदीप्ते! दशान्तरुष्यात् अतिरोचमानम्। अन्तरुष्यं गूढम् आवासस्थानम्। दशत्वविशिष्टं गूढम्[11] आवासस्थानम् अतीत्य रोचमानम्। अग्नेर्हि गूढानि दशाऽऽवासस्थानानि भवन्ति—पृथिव्यादयस्त्रयः अग्न्यादयस्त्रय आप ओषधयो वनस्पतयः पुरुषशरीरं चेति ॥ ३ ॥

हो॒त्राद॒हं व॑रुण॒ बिभ्य॒दाय॒ं नेदे॒व मा॑ यु॒नज॒न्नत्र॑ दे॒वाः ।
तस्य॑ मे त॒न्वो॑ बहु॒धा निवि॑ष्टा ए॒तमर्थ॒ं न चि॑केता॒हम॒ग्निः ॥ ४ ॥

हो॒त्रात् । अ॒हम् । व॒रु॒ण॒ । बिभ्य॑त् । आ॒य॒म् । न । इत् । ए॒व । मा॒ । यु॒नज॑न् । अत्र॑ । दे॒वाः ।
तस्य॑ । मे॒ । त॒न्वः॑ । ब॒हु॒धा । निऽवि॑ष्टाः । ए॒तम् । अर्थ॑म् । न । चि॒के॒त॒ । अ॒हम् । अ॒ग्निः ॥ ४ ॥

**उद्गीथ०** अग्निराह—होत्रात् होतृकर्मणः कर्तव्यात् अहम् हे वरुण! बिभ्यत् आयम् आगतवानस्मि दूरं नष्टोऽस्मीत्यर्थः। न इत् एव न-शब्दोऽत्र माङर्थे, युनजन् इत्येतेन सम्बध्यते। इच्छब्दो यस्मादर्थे। एवशब्दस्तस्मादर्थे। एवं च योजना कार्या—यस्मादहं होत्राद्[12] बिभ्यदायन्, तस्मात् मा मां न युनजन् मा नियुञ्जन्त्वित्यर्थः, अत्र अस्मिन्[13] होतृकर्मणि कर्तृत्वेन। तस्य मे योऽहं होत्राद् बिभ्यदायम् तस्य मम तन्वः बहुधा बहुप्रकारम् बहुषु स्थानेषु

---

१. °नू वि[2] अ[1]; तत्र वि[1]. २-२. नास्ति वि[1]. † °ष्टा वि[2] अ[1]. ‡ देवयासा° वि[2] अ[1]. ३. आप्नु इष्टवतो वि[1]. ४. नास्ति वि[2]. ५-५. यश्चान्वपश्यानि वि[2] अ[1]. ६. °वासतान् मूको. ७. लिङ्गं वि[1]. ८. अन्वे° मूको. ९. नास्ति वि[1]. १०. अजाया° वि[2] अ[1]; अजानां वि[1]. ११. श्रद्धम् वि[2] अ[1]. १२. होतृन् मूको. १३. तस्मिन् मूको.

पूर्वोक्तेषु अबादिषु निविष्टाः [1]होतृकर्मकर्तृत्वम् अनिच्छन्त्यः[1] सत्यः संवृताः स्थिता इत्यर्थः। यत एवम् अतः एतम् होतृकर्मलक्षणम् अर्थम् प्रयोजनम् न चिकेत न जानामि, कर्तुं न शक्नोमीत्यर्थः[2], अहम् अग्निः ॥ ४ ॥

वेङ्कट० हव्यवहनार्थे वरुण! [3]बिभ्यत् अहम्[3] गतवान् अस्मि। न एव माम् पुनश्च अस्मिन् हौत्रे युञ्जन्तु अमी देवाः। तस्य मम तन्वः बहुधा[4] निविष्टाः। तदिदं कार्यम् भवद्भिः उच्यमानं हव्यवहनम्[5] न बुध्ये अहम् अग्निः कर्तव्यम् इति ॥ ४ ॥

एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने ।
सुगान् पथः कृणुहि देवयानान् वह हव्यानि सुमनस्यमानः ॥ ५ ॥

आ । इहि । मनुः । देवऽयुः । यज्ञऽकामः । अरम्ऽकृत्य । तमसि । क्षेषि । अग्ने ।
सुऽगान् । पथः । कृणुहि । देवऽयानान् । वह । हव्यानि । सुऽमनस्यमानः ॥ ५ ॥

उद्गीथ० देवा आहुः—आ इहि आगच्छ होतृकर्म कर्तुम्। कस्मात्। यतः मनुः अधिकृतमनुष्यः देवयुः देवान् स्तोतुं यष्टुं च कामयमानः यज्ञकामः यज्ञान् कर्तुं कामयमानश्च आस्ते। एतत् ज्ञात्वा किमर्थम् अरंकृत्य अलंकृत्य निवार्य होतृकर्म न करोमीति प्रतिषेधं कृत्वा तमसि अन्धकारे [6]अपाम् मध्ये[6] क्षेषि निवससि हे अग्ने!। आगत्य च सुगान् सततप्रहतान् पथः कृणुहि कुरु देवयानान् देवान् प्रति गमनसाधनान् स्वर्गमार्गान्। वह प्रापय देवान् प्रति हव्यानि हवींषि सुमनस्यमानः सुमनसः प्रीतियुक्तमनसः अस्मान्[7] कर्तुमिच्छन् ॥ ५ ॥

वेङ्कट० आ गच्छ। सर्वो मनुष्यः देवयुः यज्ञकामः भवति[8]। अलङ्कुर्वन् आत्मानं निवससि गूढे जले[9] त्वम् अग्ने!। सुगान् मार्गान् कृणु यैर्मनुष्या देवान् प्रति गच्छन्ति। वह इति स्पष्टम् ॥ ५ ॥

[10]इति अष्टमाष्टके प्रथमाध्याये दशमो वर्गः[10] ॥

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः ।
तस्माद् भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः ॥ ६ ॥

अग्नेः । पूर्वे । भ्रातरः । अर्थम् । एतम् । रथीऽइव । अध्वानम् । अनु । आ । अवरीवुरिति ।
तस्मात् । भिया । वरुण । दूरम् । आयम् । गौरः । न । क्षेप्नोः । अविजे । ज्यायाः ॥ ६ ॥

उद्गीथ० अग्नेः मम पूर्वे पूर्वकालीयाः भ्रातरः अर्थम् एतम् होतृकर्मलक्षणम् प्रयोजनम् रथी इव यथा[11] रथी अध्वानम् अन्वावृणोति अनुपूर्वं व्याप्नोति गच्छन्, एवम् अनु आ अवरीवुः अनुपूर्वम् आवृतवन्तः

---

१-१. °त्वेनेच्छन्त्यः मूको. २. करोमीत्यर्थः मूको. ३-३. बिभ्य ··· वि[२] अ[१]. ४. बहुधना मूको. ५. °वाहनम् वि[१]. ६-६. अपामधि मध्ये मूको. ७. अस्माकम् मूको. ८. °तु वि[१]. ९. नास्ति वि[१]. १०-१०. नास्ति मूको. ११. रथा मूको.

अनुष्ठानेन व्याप्तवन्तः, अनुष्ठितवन्त इत्यर्थः। अनुष्ठाय च वषट्कारं मृता इति शेषः। तस्मात् कारणात् अहमपि भिया भयेन वषट्कारभयादित्यर्थः, हे वरुण! दूरम् आयम् आगतवानस्मि। किमिव। गौरः न यथा गौरमृगः क्षेप्नोः इषूणां क्षेप्तुः धानुष्कस्य भयात् अविजे 'ओविजी भयचलनयोः'। आकर्षणक्षणे[1] ज्यायाः धनुर्गुणस्य दूरं गच्छति, एवम् ॥ ६ ॥

वेङ्कट० भूपतिर्भुवनपतिर्भूतानांपतिरिति त्रयः अग्नेः ज्यायांसः भ्रातरः तमिमम् अर्थम् [2]हौत्रम् अनुक्रमेण[2] आ-वृतवन्तः यथा सारथिः अध्वानम् आवृणोति। ते च क्रमेण मृताः। तस्मात् मरणाद् भयेन अहम् वरुण! दूरम् गतवान्। यथा गौरः मृगः शरस्य क्षेप्तुः धनुषः ज्यायाः कम्पते, तथा प्रचलितोऽस्मि स्वस्मात् स्थानादिति ॥ ६ ॥

कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥ ७ ॥

कुर्मः। ते। आयुः। अजरम्। यत्। अग्ने। यथा। युक्तः। जातऽवेदः। न। रिष्याः।
अथ। वहासि। सुऽमनस्यमानः। भागम्। देवेभ्यः। हविषः। सुऽजात ॥ ७ ॥

उद्गीथ० देवा आहुः — हे अग्ने! जातवेदः! मरणात् मा भैषीः। कुर्मः ते तव आयुः जीवितम् अजरम् जरारहितम् विनाशरहितम् यत् तत्, यथा येन प्रकारेण युक्तः होतृकर्मणि अस्माभिः नियुक्तः सन् न रिष्याः न हिंस्यसे म्रियस इत्यर्थः। अथ अमरत्वकरणानन्तरम् वहासि वह प्रापय सुमनस्यमानः सुमनसः अस्मान् कर्तुमिच्छन् स्वयं वा सुप्रीतमनाः सन् भागम् स्वंस्वम् अंशम् देवेभ्यः, दातुमिति शेषः, देवानां वार्थाय हविषः संबन्धिनम् हे सुजात! सुजन्मन्! ॥ ७ ॥

वेङ्कट० कुर्मः तव वयम् आयुः अग्ने! जरारहितम् यत् भवति, यथा हविर्वहने युक्तः त्वम् जातवेदः न म्रियसे। अथ वह त्वं हविः अग्ने! सौमनस्यं[3] कुर्वन् हविषः भागम् देवेभ्यः शोभनजनन! ॥ ७ ॥

प्रयाजान् मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥ ८ ॥[4]

प्रऽयाजान्। मे। अनुऽयाजान्। च। केवलान्। ऊर्जस्वन्तम्। हविषः। दत्त। भागम्।
घृतम्। च। अपाम्। पुरुषम्। च। ओषधीनाम्। अग्नेः। च। दीर्घम्। आयुः। अस्तु। देवाः ॥

उद्गीथ० अग्निराह — प्रयाजान् मे मह्यम् अनुयाजान् च केवलान् असाधारणान् ऊर्जस्वन्तान् रसवन्तान् हविषः मध्ये दत्त भागम् स्विष्टदाख्यम्, घृतम् च पृथक्पृथक् आज्यभागे अग्निहोत्रादिषु च अपाम् सम्बन्धि

---

१. अनाकर्षणलक्षणे अथवा न सति, अनाकर्षणे सतीत्यर्थः मूको. २-२. होत्रानुक्र° वि[1]; होत्र° वि[2].
३. सोमस्य वि[2] अ[1]; सौमनस्य वि[1]. ४. या. ( ८,२२ ) द्र.

अद्भ्य उत्पन्नम् इत्यर्थः, पुरुषम् च पुरुषशब्देनात्र पुंलिङ्गत्वाद् आग्नेयः सवनीयः पशुरुच्यते। तं च ओषधीनाम् सम्बन्धिनम्। अथवा पुरु बहु कर्म सनोतीति पुरुषः पुरोडाशः[1]। तं च दर्शपूर्णमासादिकर्मसु ओषधीनां विकारत्वेन सम्बन्धिनम्। अग्नेः च मम हवींषि वहतः दीर्घम् आयुः अस्तु हे देवाः! ॥ ८ ॥

**वेङ्कट०** तर्हि प्रयाजानुयाजान् सर्वान् मह्यम् दत्त। अवत्ते प्रधाने प्रत्यभिघारणात्[2] सारवन्तं च हविषः भागम् सर्वस्य दत्त स्विष्टकृदाख्यम्, घृतम् च अद्भ्यः उत्पन्नम्, पुरुषम् च ओषधीभ्य उत्पन्नं दत्त। तथाऽस्य अग्नेः दीर्घम्[3] च आयुः अस्तु देवाः! इति। अमुमितिहासं[4] प्रकृत्य[5] कौषीतकिनां ब्राह्मणम्—'तस्मादाहुराग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेयमाज्यम्' (तु. शांब्रा १,२)। 'आग्नेयः पुरोडाशो भवति' (श १,५,३,२२;२,४,४,१२) इति। 'शरीरदायादा ह वाऽग्नयो भवन्ति' (आग्निगृ ३,६,२,२२) इति च ब्राह्मणम्, 'पुरुषाहुतिर्ह्यस्य प्रियतमा' (तै २,२,२,५) इति च ॥ ८ ॥

तव॑ प्र॒या॒जा अ॑नुया॒जाश्च॒ केव॑ल॒ ऊर्ज॑स्वन्तो ह॒विषः॑ सन्तु भा॒गाः।
तवा॑ग्ने य॒ज्ञो३॒॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः ॥ ९ ॥

तव॑। प्र॒ऽया॒जाः। अ॒नु॒ऽया॒जाः। च॒। केव॑ले। ऊर्ज॑स्वन्तः। ह॒विषः॑। स॒न्तु॒। भा॒गाः।
तव॑। अग्ने॒। य॒ज्ञः। अ॒यम्। अ॒स्तु॒। सर्वः॑। तुभ्य॑म्। न॒मन्ता॒म्। प्र॒ऽदिशः॑। चत॑स्रः ॥ ९ ॥

**उद्गीथ०** एवमुक्ता देवा एनं प्रत्यूचुः—तव अग्नेः प्रयाजाः अनुयाजाः च केवले असाधारणे ऊर्जस्वन्तः रसवन्तः हविषः मध्ये सन्तु भवन्तु भागाः भागभूताः। तव एव च हे अग्ने! यज्ञः अयम् अस्तु भवतु[6] सर्वः एव। तुभ्यम् नमन्ताम् प्रणमन्ताम् प्रदिशः प्रकृष्टा दिशः चतस्रः अपि। अथवा [7]प्रगतत्वाद् दिग्भिः[7] सह मिश्रिताः[8] प्रदिशोऽवान्तरदिश उच्यन्ते। ताश्च इतराश्च चतस्रो दिशः ॥ ९ ॥

**वेङ्कट०** प्रयाजादयः तव सन्तु। यज्ञः[9] च अयम् त्वदीयः सर्वः। तुभ्यम् एव नमन्ताम् मुख्याः चतस्रः दिशः ॥ ९ ॥

[10]इति अष्टमाष्टके प्रथमाध्याये एकादशो वर्गः[10] ॥

## [ ५२ ]

[10]सौचीकोऽग्निर्ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः[10]।

विश्वे॑ देवाः शा॒स्तन॑ मा॒ यथे॒ह होता॑ वृ॒तो म॒नवै॒ यन्नि॒षद्य॑।
प्र मे॑ ब्रूत भाग॒धेयं॒ यथा॑ वो॒ येन॑ प॒था ह॒व्यमा वो॒ वहा॑नि ॥ १ ॥

---

१. °शम् मूको. २. प्रत्यभिवारणात् मूको. ३. दीर्घम् वि[२] अ[१]. ४. मिति' वि[२] अ[१]. ५. प्रस्तुत्य वि[१]. ६. °वतः मूको. ७-७. °तत्वादि° मूको. ८. °तान् मूको. ९. यः वि[२]. १०-१० नास्ति मूको.

विश्वे । देवाः । शास्तन । मा । यथा । इह । होता । वृतः । मनवै । यत् । निऽसद्य ।
प्र । मे । ब्रूत । भागऽधेयम् । यथा । वः । येन । पथा । हव्यम् । आ । वः । वहानि ॥ १ ॥

**उद्गीथ०** देवैरेवमुक्तः अग्निराह — हे विश्वे देवाः! यजमानेन युष्माभिश्चाहम्[1] वृतः । इदानीं यूयम् शास्तन एवमिदं त्वया कर्तव्यमिति अनुशाध्वम् मा माम् । अनुशिष्टश्च सन् अहम् होता इह अत्र होतृकर्मणि वेद्यां यज्ञे वा निषद्य उपविश्य यथा येन प्रकारेण मनवै जानामि यत् कर्म कर्तुम्, तथैव करिष्यामीति शेषः । किञ्च मे मह्यम् प्र ब्रूत प्रकथयत यूयम् भागधेयम् हविर्भागम् वः युष्माकम् स्वभूतम् यथा येन प्रकारेण वहानि, तं प्रकारमिति योज्यम् । किञ्च येन पथा मार्गेण [2]हव्यम् हविः[2] वः युष्मान् प्रति आ वहानि आभिमुख्येन प्रापयाणि[3], तं पन्थानं मह्यम् प्र ब्रूत यूयम् ॥ १ ॥

**वेङ्कट०** हे विश्वे देवाः! माम् अनु-शास्तन, यथा अस्मिन् यज्ञे भवद्भिः होतृत्वेन वृतः भवतः[4] स्तौमि, यत्र वा निषद्य । प्र ब्रूत मम भागधेयम् यथा भवद्भिः कल्पितम् । येन च पथा हव्यम् युष्माकम् आ वहानि, तं च प्रब्रूत इति ॥ १ ॥

अहं होता न्यसीदं यजीयान् विश्वे देवा मरुतो मा जुनन्ति ।
अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वाम् ॥ २ ॥

अहम् । होता । नि । असीदम् । यजीयान् । विश्वे । देवाः । मरुतः । मा । जुनन्ति ।
अहःऽअहः । अश्विना । आध्वर्यवम् । वाम् । ब्रह्मा । सम्ऽइत् । भवति । सा । आऽहुतिः । वाम् ॥

**उद्गीथ०** एवं च कृते सति अहम् अग्निः होता भूत्वा नि असीदम् निषीदामि वेद्यां होतृकर्म कर्तुम् यजीयान् यष्टृतरः । निषण्णं च सन्तम् विश्वे देवाः भवन्तः मरुतः च ऋत्विजश्चेत्यर्थः, मा माम् अग्निम् जुनन्ति लोडर्थेऽत्र लट् । जुनातिर्गत्यर्थः शुद्धोऽपि अत्र अभिपूर्वार्थो[5] द्रष्टव्यः । अभिजुनन्तु, सम्परिचारार्थस्याधिकारार्थं च अभिगच्छन्तु इत्यर्थः । किञ्च अहरहः दिवसेदिवसे हे अश्विनौ! आध्वर्यवम्, युवयोः कार्यत्वेन भवत्विति शेषः । सा आहुतिः वाम् या मयि होतव्या आहुतिः साऽपि वां युवयोरेव होतव्यत्वेन[6] भवतु । युवाम् अध्वर्यू भवतम् इत्यर्थः । ब्रह्मा च समित् समिद्धः[7] सर्वस्य सन्दीपकः प्रकाशकश्चन्द्रमाः भवति भवत्वित्यर्थः ॥ २ ॥

**वेङ्कट०** अहम् होता भूत्वा होतृषदने[8] निषण्णोऽस्मि यष्टृतमः । तस्मात् व्याप्ताः देवाः मरुतः माम् होतृषदने प्रेरयन्ति । हे अश्विनौ! अस्मिन् अहरहः युवयोरेव आध्वर्यवम्[9] अस्तु । तद्भवद्भ्याम् अनुष्ठातव्यम् । ब्रह्मा भवतु समिद्धश्चन्द्रमाः । सा युवयोः आहुतिः । सोमात्मको हि चन्द्रमा हूयत[10] इति ॥ २ ॥

---

१. °श्चार्य मूको. २-२ यथा हविः हव्यं वि[2] अ. ३. °याणि मूको. ४ भयवत् वि[1].
५. अपिपू° मूको. ६. °त्वेन न मूको. ७ °द्धतः वि[2] अ; °न्धतः वि[1]. ८. °सदने वि[1].
९. अध्वर्युम् वि[2] अ[1]; अध्वर्युवम् वि[1]. १०. हुत वि[1].

अयं यो होता किरु स यमस्य कमप्यूहे यत् समञ्जन्ति देवाः।
अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहम् ॥ ३ ॥[1]

अयम्। यः। होता। किः। ऊँ इति। सः। यमस्य। कम्। अपि। ऊहे। यत्। सम्ऽअञ्जन्ति। देवाः।
अहःऽअहः। जायते। मासिऽमासि। अथ। देवाः। दधिरे। हव्यऽवाहम्॥ ३ ॥

**उद्गीथ०** अयम् यः होता अग्निः सः किः कर्ता यमस्य आदित्यस्य। 'अग्नेर्वा आदित्यो जायते' (ऐब्रा ८,२८) इति श्रुतेः। कम् अपि अन्नमपि हविराख्यम् ऊहे वहति। यत् समञ्जन्ति सम्यग्गच्छन्ति प्राप्नुवन्ति भक्षणेन भक्षयन्तीत्यर्थः, देवाः। किञ्च अहरहः अहन्यहनि जायते अग्निहोत्रार्थम् उत्पद्यते, मासिमासि[2] मासेमासे च पिण्डपितृयज्ञार्थम्। सर्वयागकालप्रदर्शनार्थं चेदं वचनम्। [3]अर्धमासे वा। अथ देवाः नि-दधिरे हव्यवाहम्[3]॥ ३॥

**वेङ्कट०** अयम् यः होता, सः कः भवति मृत्योः। कम् अपि हुतम् अमृतो हि इतो वहति, यदि आत्मनि संश्लेषयन्ति ऋत्विजः। सोऽयमग्निः सूर्यो भूत्वा अहरहः जायते, चन्द्रमाः मासिमासि। तम् इमम् अग्निम् देवाः दधिरे हविषां वोढारम्॥ ३॥

मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरन्तम्।
अग्निर्विद्वान् यज्ञं नः कल्पयाति पञ्चयामं त्रिवृतं सप्ततन्तुम् ॥ ४ ॥

माम्। देवाः। दधिरे। हव्यऽवाहम्। अपऽम्लुक्तम्। बहु। कृच्छ्रा। चरन्तम्।
अग्निः। विद्वान्। यज्ञम्। नः। कल्पयाति। पञ्चऽयामम्। त्रिऽवृतम्। सप्तऽतन्तुम्॥ ४ ॥

**वेङ्कट०** माम् देवाः दधिरे हविषां वोढारम् हविर्वहनभयाद् अपक्रान्तम् बहूनि कृच्छ्राणि स्थानानि चरन्तम् तत्रोपलभ्य अग्निः अयम् विद्वान् यज्ञम् अस्माकम् कल्पयति इति मन्यमानाः पञ्चविधगमनम्। पाङ्क्तो हि यज्ञः। त्रिवृच्च सवनैः। सप्ततन्तुः छन्दोभिः॥ ४॥

आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि।
आ बाह्वोर्वज्रमिन्द्रस्य धेयामथेमा विश्वाः पृतना जयाति ॥ ५ ॥

आ। वः। यक्षि। अमृतऽत्वम्। सुऽवीरम्। यथा। वः। देवाः। वरिवः। कराणि।
आ। बाह्वोः। वज्रम्। इन्द्रस्य। धेयाम्। अथ। इमाः। विश्वाः। पृतनाः। जयाति॥ ५ ॥

**वेङ्कट०** आ याचे[4] युष्मान् अमृतत्वम् सुपुत्रम्, यथा अमृतो बलवान् अहं सन् युष्माकम् देवाः! परिचर्याम् करवाणि। बाह्वोः च इन्द्रस्य वज्रम् आ धेयाम्। अथ स इन्द्रः इमाः विश्वाः

---

१. या. (६,३५) व्याख्याता द्र. २. मासि मूको. ३-३. ··· मूको; या. अनु पाठपूर्तिः द्र.
४. यांद्वे वि[2] अ[1]; याचो वि[1].

पृतनाः जयाति इति ॥ ५ ॥ यथा कुर्वन्त आत्मानं पुनश्च होतारम् अकुर्वन् देवाः तच्चाग्निरेवोत्तरया दर्शयति ॥

त्रीणि॑ श॒ता त्री स॒हस्रा॑ण्य॒ग्निं त्रिं॒शच्च॑ दे॒वा नव॑ चासपर्यन् ।
औक्ष॑न् घृ॒तैरस्तृ॑णन् ब॒र्हिर॑स्मा॒ आदिद्धोता॑रं॒ न्य॑सादयन्त ॥ ६ ॥

त्रीणि॑ । श॒ता । त्री । स॒हस्रा॑णि । अ॒ग्निम् । त्रिं॒शत् । च॒ । दे॒वाः । नव॑ । च॒ । अ॒स॒प॒र्य॒न् ।
औक्ष॑न् । घृ॒तैः । अस्तृ॑णन् । ब॒र्हिः । अ॒स्मै॒ । आत् । इत् । होता॑रम् । नि । अ॒सा॒द॒य॒न्त॒ ॥ ६ ॥

**वेङ्कट०** पूर्वं ( ऋ ३,९,९ ) व्याख्याता ॥ ६ ॥

[1]इति अष्टमाष्टके प्रथमाध्याये द्वादशो वर्गः[1] ॥

## [ ५३ ]

[1]देवा ऋषयः, चतुर्थीपञ्चम्योः सौचीकोऽग्निर्ऋषिः । अग्निर्देवता, चतुर्थीपञ्चम्योर्देवाः ।
आद्याः पञ्च अष्टमी च त्रिष्टुभः, शिष्टा जगत्यः[1] ।

यमैच्छा॑म॒ मन॑सा॒ सो॒३॑ऽयमागा॑द्य॒ज्ञस्य॑ वि॒द्वान् परु॑षश्चिकि॒त्वान् ।
स नो॑ यक्षद् दे॒वता॑ता॒ यजी॑यान् नि हि षत्स॒दन्त॑रः॒ पूर्वो॑ अ॒स्मत् ॥ १ ॥

यम् । ऐच्छा॑म । मन॑सा । सः । अ॒यम् । आ । अ॒गा॒त् । य॒ज्ञस्य॑ । वि॒द्वान् । परु॑षः । चि॒कि॒त्वान् ।
सः । नः॒ । य॒क्ष॒त् । दे॒वऽता॑ता । यजी॑यान् । नि । हि । स॒त्स॑त् । अन्त॑रः । पूर्वः॑ । अ॒स्मत् ॥ १ ॥

**वेङ्कट०** यम् अन्विष्टवन्तः वयम् मनसा, सः अयम् अग्निः आ जगाम यज्ञं जानन्[2] यज्ञस्य परूंषि[3] चिकित्वान्, सः अस्मान् यजतु यज्ञे यष्टृतमः । नि असीदत् हि प्रागेव अस्मद्गमनात्[4] आगत्य मनुष्याणाम् अस्माकं च अन्तरः मध्ये सञ्चरन्निति ॥ १ ॥

अरा॑धि॒ होता॑ नि॒षदा॑ यजी॑यानभि प्रयां॑सि॒ सुधि॑तानि॒ हि ख्यत् ।
यजा॑महै य॒ज्ञिया॒न् हन्त॑ दे॒वाँ ईळा॑महा॒ ईड्याँ॒ आज्ये॑न ॥ २ ॥

अरा॑धि । होता॑ । नि॒ऽसदा॑ । यजी॑यान् । अ॒भि । प्रयां॑सि । सुऽधि॑तानि । हि । ख्यत् ।
यजा॑महै । य॒ज्ञिया॑न् । हन्त॑ । दे॒वान् । ईळा॑महै । ईड्या॑न् । आज्ये॑न ॥ २ ॥

**वेङ्कट०** अभूत् होता निषदनेन यष्टृतमः । अभि पश्यति हवींषि सुनिहितानि 'यजामहै यज्ञियान् शीघ्रम् देवान् हविषा, ईडामहै [5]च ईड्यान्[5] स्तोत्रेण प्रयाजानुयाजादीन् केवलेन आज्येन हूयमानान्' इति मन्यमानः[6] ॥ २ ॥

---

१-१. नास्ति मूको. २. °वन् जानन् वि[2] अ[1]. ३. परु ··· वि[2] अ[1]; पक्तु वि[1]. ४. °मनम् मूको. ५-५. वेड्यां वि[2] अ[1]; चेड्या वि[1]. ६. किमन्यमान वि[2] अ[1].

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥ ३ ॥

साध्वीम् । अकः । देवऽवीतिम् । नः । अद्य । यज्ञस्य । जिह्वाम् । अविदाम । गुह्याम् ।
सः । आयुः । आ । अगात् । सुरभिः । वसानः । भद्राम् । अकः । देवऽहूतिम् । नः । अद्य ॥

**वेङ्कट०** साधुम् [1]अकरोत् यज्ञम् अस्माकम्[1] । अद्य यज्ञस्य गुह्याम् जिह्वाम् वयं लब्धवन्तः । सः देवैः प्रत्तम् आयुः वसानः सुगन्धः आ जगाम । भजनीयम् च अकरोत् अस्माकम् इमं यज्ञम् अद्य इति ॥ ३ ॥

तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ॥ ४ ॥[2]

तत् । अद्य । वाचः । प्रथमम् । मसीय । येन । असुरान् । अभि । देवाः । असाम ।
ऊर्जऽअदः । उत । यज्ञियासः । पञ्च । जनाः । मम । होत्रम् । जुषध्वम् ॥ ४ ॥

**वेङ्कट०** तत् इदानीम्[3] वाचः प्रथमम् अहम् मसीय उच्चारयामि, येन वयं स्तोतारः असुरान् अभि भवेम । किं तद्वाचः प्रथममित्याह[4] — ऊर्जादः इति । हे अन्नादः! अपि च यज्ञियाः![5] पञ्च जनाः! देवादयः! मम होत्रम् सेवध्वम् । एवं[6] हि उच्यमाने अग्निम् अनुमन्यन्ते[7] सर्वे इति ॥ ४ ॥

पञ्च जना मम होत्रं जुषन्तां गोजाता उत ये यज्ञियासः ।
पृथिवी नः पार्थिवात् पात्वंहसोऽन्तरिक्षं दिव्यात् पात्वस्मान् ॥ ५ ॥

पञ्च । जनाः । मम । होत्रम् । जुषन्ताम् । गोऽजाताः । उत । ये । यज्ञियासः ।
पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ ५ ॥

**वेङ्कट०** पञ्च जनाः मम होत्रम् सेवन्ताम् भूमेर्जाताः अपि [8]च ये[8] यज्ञार्हाः । पृथिवी अस्मान् पार्थिवात् आहन्तुः परिरक्षतु, अन्तरिक्षम् अन्तरिक्ष्यादिति ॥ ५ ॥

[9]इति अष्टमाष्टके प्रथमाध्याये त्रयोदशो वर्गः[9] ॥

तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ६ ॥

तन्तुम् । तन्वन् । रजसः । भानुम् । अनु । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् ।
अनुल्बणम् । वयत । जोगुवाम् । अपः । मनुः । भव । जनय । दैव्यम् । जनम् ॥ ६ ॥

---

१-१. °रोन्यज्ञ° मूको. २. या. (३,८) व्याख्यानं द्र. ३. अद्य वि[1]. ४. °मत्याह वि[2] अ[1]. ५. यज्ञीयाः मूको. ६. एव मूको. ७. °मनुष्या वि[2] अ[1]. ८-८. ये च वि[1]. ९-९. नास्ति मूको.

वेङ्कट० यज्ञम् तन्वन्[1] लोकस्य भासकम् आदित्यम् अनु गच्छ[2]। ज्योतिष्मतः मार्गान्[3] रक्ष कर्मणा कृतान्। 'इमानेवास्मै[4] लोकान्[5] ज्योतिष्मतः करोति' ( तै ३,४,३,६ शांब्रा ८,८ ) इति ब्राह्मणम्। सोऽयम् अग्निः अनुल्बणम् [6]करोतु स्तोतॄणाम्[6] कर्म। 'यदेव यज्ञ उल्वणं क्रियते तस्यैवैषा शान्तिः' ( तै ३,४,३,७ ) इति ब्राह्मणम्। स त्वम् अग्ने! मनुः स्तोता भव, जनय दैव्यम्[7] जनम् इति ॥ ६ ॥

अ॒क्षा॒नहो॑ नह्यतनो॒त सो॑म्या॒ इष्कृ॑णुध्वं रश॒ना ओत पिं॑शत ।
अ॒ष्टाव॑न्धुरं वहता॒भितो॒ रथं॒ येन॑ दे॒वासो॒ अन॑यन्न॒भि प्रि॒यम् ॥ ७ ॥

अ॒क्ष॒ऽनहः॑ । न॒ह्य॒त॒न॒ । उ॒त । सो॒म्याः॒ । इष्कृ॑णुध्वम् । र॒श॒नाः । आ । उ॒त । पिं॒श॒त ।
अ॒ष्टाऽव॑न्धुरम् । व॒ह॒त । अ॒भितः॑ । रथ॑म् । येन॑ । दे॒वासः॑ । अन॑यन् । अ॒भि । प्रि॒यम् ॥ ७ ॥

वेङ्कट० अक्षेषु नह्यान् अश्वान्[8] नह्यत इदानीं हे देवाः! सोमार्हाः!। निष्कृणुध्वम् च रशनाः, अपि च संश्लिष्टाः[9] कुरुत। अष्टावन्धुरम्[10] आदित्यरथम् अभितः वहत यज्ञं प्रति, येन देवाः आत्मानम् प्रियम् अभि प्रापयन्तीति यज्ञं प्रति जिगमिषतां देवानाम् इतरेतरवचनम् इति ॥ ७ ॥

अश्म॑न्वती रीयते॒ सं र॑भध्व॒मुत्ति॑ष्ठत॒ प्र त॑रता सखायः ।
अत्रा॑ जहाम॒ ये अस॒न्नशे॑वाः शि॒वान् व॒यमुत्त॑रेमा॒भि वाजा॑न् ॥ ८ ॥

अश्म॑न्ऽवती । री॒य॒ते॒ । सम् । र॒भ॒ध्व॒म् । उत् । ति॒ष्ठ॒त । प्र । त॒र॒त । स॒खा॒यः॒ ।
अत्र॑ । ज॒हा॒म॒ । ये । अस॑न् । अशे॑वाः । शि॒वान् । व॒यम् । उत् । त॒रे॒म॒ । अ॒भि । वाजा॑न् ॥८॥

वेङ्कट० अश्मन्वती नाम नदी गच्छति। सम्-रब्धाः भवत, उत् तिष्ठत, प्र तरत च तां नदीं हे सखायः!। अस्यां नद्याम् परित्यजामः, ये अभवन् अस्माकम् असुखाः। अथ शिवान् वाजान् हवींषि अभि उत् तरेम ॥ ८ ॥

त्वष्टा॑ मा॒या वे॑द॒पसा॑म॒पस्त॑मो॒ बिभ्र॒त् पात्रा॑ देव॒पाना॑नि॒ शंत॑मा ।
शिशी॑ते नू॒नं प॑र॒शुं स्वा॑य॒सं येन॑ वृ॒श्चादेत॑शो॒ ब्रह्म॑ण॒स्पतिः॑ ॥ ९ ॥

त्वष्टा॑ । मा॒याः । वे॒त् । अ॒पसा॑म् । अ॒पःऽत॑मः । बिभ्र॑त् । पात्रा॑ । दे॒व॒ऽपाना॑नि । शम्ऽत॑मा ।
शिशी॑ते । नू॒नम् । प॒र॒शुम् । सु॒ऽआ॒य॒सम् । येन॑ । वृ॒श्चात् । एत॑शः । ब्रह्म॑णः । पतिः॑ ॥ ९ ॥

वेङ्कट० त्वष्टा कर्माणि वेत्ति कर्म कुर्वतां देवानाम् अतिशयेन कर्मणः कर्ता धारयन् पात्राणि देवानां

---

१. वयम् मूको. २. °च्छन् मूको. ३. मार्गात् मूको. ४. °वास्मिन् वि[1]; °वास्माव अ[2]; °व तत शां. (८,८). ५. लोका ज्यो° मूको. ६-६. करोतृणां वि[1] अ[1]. ७. दे° मूको. ८. अश्चान् मूको. ९. °ष्टा मूको. १०. अस्वाबन्धुर वि[2] अ[1]; अष्टावसुन्धरम् वि[1].

सोमपानसाधनभूतानि सुखतमानि। सोऽयं तीक्ष्णीकरोति आयुधम् अयसः सारेण निर्मितम्, येन पात्राणि वृश्चति[1] श्वेतवर्णः कर्मणः स्वामी ॥ ९ ॥

सतो नूनं कवयः सं शिशीत वाशीभिर्याभिरमृताय तक्षथ ।
विद्वांसः पदा गुह्यानि कर्तन येन देवासो अमृतत्वमानशुः ॥ १० ॥

सतः । नूनम् । कवयः । सम् । शिशीत । वाशीभिः । याभिः । अमृताय । तक्षथ ।
विद्वांसः । पदा । गुह्यानि । कर्तन । येन । देवासः । अमृतऽत्वम् । आनशुः ॥ १० ॥

**वेङ्कट०** प्रशस्ताः सम्प्रति हे कवयः! तीक्ष्णीकुरुत ताः, याभिः वाशीभिः आयुधैः सोमाय पात्राणि तक्षथ[2]। विद्वांसः रश्मिभूताः गुह्यानि स्थानानि कृतवन्त ऋभवः, येन कृतेन देवा ऋभवः अमृतत्वम् प्राप्ताः त्वष्टुः शिष्याः ॥ १० ॥

गर्भे योषामदधुर्वत्समासन्यपीच्येन मनसोत जिह्वया ।
स विश्वाहा सुमना योग्या अभि सिषासनिर्वनते कार इज्जितिम् ॥ ११ ॥

गर्भे । योषाम् । अदधुः । वत्सम् । आसनि । अपीच्येन । मनसा । उत । जिह्वया ।
सः । विश्वाहा । सुऽमनाः । योग्याः । अभि । सिसासनिः । वनते । कारः । इत् । जितिम् ॥ ११ ॥

**वेङ्कट०** तेऽमी ऋभवः चर्मणोऽन्तः[3] काञ्चन योषाम् अदधुः। 'निश्चर्मण ऋभवो गामपिंशत' ( ऋ १, ११०,८ ) इत्युक्तम्। तस्याश्च आस्ये वत्सम् निहितवन्तः अन्तर्हितेन मनसा। अपि च जिह्वया युक्तां[4] योषां न्यदधुः। सः ऋभूणां गणः सर्वदा सुमनाः योग्याः स्तुतीः अभि वनते[5] सम्भजनशीलः कर्तैव शत्रुजयमिति ॥ ११ ॥

[6]इति अष्टमाष्टके प्रथमाध्याये चतुर्दशो वर्गः[6] ॥

## [ ५४ ]

[6]बृहदुक्थो वामदेव्य ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[6]।

तां सु ते कीर्तिं मघवन् महित्वा यत् त्वा भीते रोदसी अह्वयेताम् ।
प्रावो देवाँ आतिरो दासमोजः प्रजायै त्वस्यै यदशिक्ष इन्द्र ॥ १ ॥

ताम् । सु । ते । कीर्तिम् । मघऽवन् । महिऽत्वा । यत् । त्वा । भीते इति । रोदसी इति । अह्वयेताम् ।
प्र । आवः । देवान् । आ । अतिरः । दासम् । ओजः । प्रऽजायै । त्वस्यै । यत् । अशिक्षः । इन्द्र ॥

१. पृच्छति वि[2] अ[1]. २-२. तकक्षथ वि[2] अ[1]; रक्षथ वि[1]. ३. °न्त मूको. ४ युक्ता मूको.
५. नवते वि[2] अ[1]; भवनते वि[1]. ६-६ नास्ति मूको.

**वेङ्कट०** बृहदुक्थो वामदेव्यः। ताम् सु ते[1] कीर्तयामि तव मघवन्! कीर्तिम् महत्त्वेनाऽऽगताम्, [2]यत् त्वाम्[2] असुरादिभ्यः भीते द्यावापृथिव्यौ अह्वयेताम्। तदानीम् प्र आवः देवान्, व्यनाशयः[3] च असुरम् बलम्। प्रजायै कस्यैचिद्[4] यजमानलक्षणायै यदा प्रयच्छसि[5] धनमिति ॥ १ ॥

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत् सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥ २ ॥

यत्। अचरः। तन्वा। ववृधानः। बलानि। इन्द्र। प्रऽब्रुवाणः। जनेषु।
माया। इत्। सा। ते। यानि। युद्धानि। आहुः। न। अद्य। शत्रुम। ननु। पुरा। विवित्से।

**वेङ्कट०** यदि त्वम् अचरः शरीरेण वर्धमानो वर्धमानशरीरः बलानि इन्द्र! वृत्रनिधनादीनि[6] प्रब्रुवाणः जनपदेषु। सा भवतः माया एव, यानि च युद्धानि ऋषयः आहुः। कुत इत्याह—न खलु त्वम् अद्य शत्रुम् लभसे कञ्चन। ननु इति प्रश्ने। किम् अलभथाः पुरा शत्रुम् इति। तदपि न उपपन्नम् इति ॥ २ ॥

क उ नु ते महिमनः समस्यास्मत् पूर्व ऋषयोऽन्तमापुः ।
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥ ३ ॥

के। ऊँ इति। नु। ते। महिमनः। समस्य। अस्मत्। पूर्वे। ऋषयः। अन्तम्। आपुः।
यत्। मातरम्। च। पितरम्। च। साकम्। अजनयथाः। तन्वः। स्वायाः ॥ ३ ॥

**वेङ्कट०** के नु खलु ते महिम्नः सर्वस्य अस्मत् पूर्वे ऋषयः अन्तम् आपुः, येन महिम्ना पृथिवीम् द्याम् च सहैव स्वस्मात् शरीरात् अजनयथाः इति ॥ ३ ॥

चत्वारि ते असुर्याणि नामादाभ्यानि महिषस्य सन्ति ।
त्वमङ्ग तानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ ॥ ४ ॥

चत्वारि। ते। असुर्याणि। नाम। अदाभ्यानि। महिषस्य। सन्ति।
त्वम्। अङ्ग। तानि। विश्वानि। वित्से। येभिः। कर्माणि। मघऽवन्। चकर्थ ॥ ४ ॥

**वेङ्कट०** चत्वारि ते उत्तरस्मिन् सूक्ते वक्ष्यमाणानि असुराणां हन्तॄणि अहिंसितानि शरीराणि सन्ति महतः। त्वम् एव तानि विश्वानि अङ्ग साकल्येन जानासि, यैः कर्माणि मघवन्! चकर्थ ॥ ४ ॥

---

१. ती वि[2] अ[1]. २-२. नास्ति वि[1] अ[1]. ३. स्यनाशयत् वि[2] अ[1]. ४. कस्य चि° वि[1] अ[1].
५. °च्छति वि[2] अ[1]. ६. वृत्रधनानी वि[2] अ[1]; वृत्रधनादीनि वि[1].

त्वं विश्वा दधिषे केवलानि यान्याविर्या च गुहा वसूनि ।
काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिन्द्रासि दाता ॥ ५ ॥

त्वम् । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा । वसूनि ।
कामम् । इत् । मे । मघऽवन् । मा । वि । तारीः । त्वम् । आऽज्ञाता । त्वम् । इन्द्र । असि । दाता ॥

**वेङ्कट०** त्वम् व्याप्तानि धारयसि सर्वाणि, यानि वसूनि आविर्-भूतानि, यानि च गुहायाम् निहितानि तानि[1] । तथा सति मदीयम् कामम् मा हिंसीः मघवन्! । त्वम् आभिमुख्येन जानासि अभिलषितम् । त्वम्[2] इन्द्र! असि दाता च तदिति[3] ॥ ५ ॥

यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो असृजन्मधुना सं मधूनि ।
अध प्रियं शूषमिन्द्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि ॥ ६ ॥

यः । अदधात् । ज्योतिषि । ज्योतिः । अन्तः । [4]यः । असृजत् । मधुना । सम् । मधूनि[4] ।
अध । प्रियम् । शूषम् । इन्द्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्थात् । अवाचि ॥ ६ ॥

**वेङ्कट०** यः इन्द्रः अदधात् आदित्यादिके ज्योतिषि अन्तः ज्योतिः, यः[1] च सम् असृजत् मधुरेण रसेन मधूनि । सम्प्रति तस्मै इन्द्राय प्रियम् बलकरम् स्तोत्रम् ब्रह्मकृतः बृहदुक्थात् अवाचि मत्तः प्रादुर्भूतमिति ॥ ६ ॥

[5]इति अष्टमाष्टके प्रथमाध्याये पञ्चदशो वर्गः[5] ॥

[ ५५ ]

[5]बृहदुक्थो वामदेव्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[5] ।

दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै ।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः ॥ १ ॥

दूरे । तत् । नाम । गुह्यम् । पराचैः । यत् । त्वा । भीते इति । अह्वयेताम् । वयःऽधै ।
उत् । अस्तभ्नाः । पृथिवीम् । द्याम् । अभीके । भ्रातुः । पुत्रान् । मघऽवन् । तित्विषाणः ॥ १ ॥

**वेङ्कट०** दूरे तत् शरीरम् गुह्यम् पराचा[6] मनुष्याणाम् । यदा त्वा अनावृष्ट्या भीते द्यावापृथिव्यौ अह्वयेताम् अन्नस्य निधानार्थम्, तदानीं तेन शरीरेण उत् अस्तभ्नाः[7] द्यावापृथिव्यौ तव समीपे

---

१. नास्ति वि[1]. २. च… वि[1] अ[1]. ३. °ति च वि[1]. ४-४. तु. ऋ १०,१२०,३.
५-५. नास्ति मूको. ६. पराचीनं वि[1] अ[1]. ७. अस्तभ्नाः सि वि[2]; अस्तभ्नासि अ[1]; अस्तभ्नाति वि[3].

वर्तमाने भ्रातुः पर्जन्यस्य पुत्रान् हे[1] मघवन्! दीपयन्निति विद्युद्रूपम् इन्द्रमाह। 'विद्युदेवेन्द्रः' (तु. माश १४,८,७,१) इति च वाजसनेयकम्[2]। यद्वा पर्जन्यम्। तदानीं[3] वायुरस्य भ्रातेति ॥ १ ॥

**महत् तन्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम्।**
**प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च ॥ २ ॥**

महत्। तत्। नाम। गुह्यम्। पुरुऽस्पृक्। येन। भूतम्। जनयः। येन। भव्यम्।
प्रत्नम्। जातम्। ज्योतिः। यत्। अस्य। प्रियम्। प्रियाः। सम्। अविशन्त। पञ्च ॥ २ ॥

**वेङ्कट०** महत् तत् शरीरम् गूढम् बहुस्पृक्[4] आकाशात्मकम्, येन भूतम् अजनयः येन च भव्यम्[5]। 'आकाशाद् वायुर्वायोरग्निः' (तैआ ८,२,१) इत्यादि ब्राह्मणम्। पुराणम् जातम् ज्योतिः यत् अस्य स्वभूतम् प्रियम् आदित्याख्यम्[6] अपि वोदकं, तत् प्रीयमाणाः[7] सम् अविशन्त पञ्च जनाः ॥ २ ॥

**आ रोदसी अपृणादोत मध्यं पञ्च देवाँ ऋतुशः सप्तसप्त।**
**चतुस्त्रिंशता पुरुधा वि चष्टे सरूपेण ज्योतिषा विव्रतेन ॥ ३ ॥**

आ। रोदसी इति। अपृणात्। आ। उत। मध्यम्। पञ्च। देवान्। ऋतुऽशः। सप्तऽसप्त।
चतुःऽत्रिंशता। पुरुधा। वि। चष्टे। सऽरूपेण। ज्योतिषा। विऽव्रतेन ॥ ३ ॥

**वेङ्कट०** तेजसा[8] जीवात्मना वा आ-पूरयति द्यावापृथिव्यौ, अपि च अन्तरिक्षम् पञ्च देवान् 'गन्धर्वाः पितरो देवा असुरा रक्षांसि' (या ३,८) इति पञ्च देवाः। कालेकाले सप्त मरुतः सप्ताऽऽदित्यरश्मीन्[9] सप्त च इन्द्रियाणि। अयम् चतुस्त्रिंशता देवैः सह पुरुधा वि पश्यति समानरूपेण ज्योतिषा उपश्चाख्येन[10] नानाविधकर्मणेति ॥ ३ ॥

**यदुष औच्छः प्रथमा विभानामजनयो येन पुष्टस्य पुष्टम्।**
**यत् ते जामित्वमवरं परस्या महन्महत्या असुरत्वमेकम् ॥ ४ ॥**

यत्। उषः। औच्छः। प्रथमा। विऽभानाम्। अजनयः। येन। पुष्टस्य। पुष्टम्।
यत्। ते। जामिऽत्वम्। अवरम्। परस्याः। महत्। महत्याः। असुरऽत्वम्। एकम् ॥ ४ ॥

**वेङ्कट०** प्रसङ्गाद् उषसः स्तुतिः। यत् उषः![11] औच्छः मुख्या तेजसाम्। अग्रे हि उषाः[12] प्रादु-

---

१. हो वि[2]; नास्ति वि[1]. २. °कमिति वि[1,2]. ३. तुलान्तानि वि[1]. ४. बहुस्पृह वि[2] अ[1]. ५ इव्यम् वि[2] अ[1]. ६. आदित्यम् अ[1]; आदित्यात्याम् वि[2]. ७. प्रियमाणाः वि[2] अ[1]; प्रीयमाणः वि[1]. ८. °जसा दीप्त्या अ[1]. ९. सप्तादित्यार° मूको. १०. मदाख्येन वि[1]. ११. उषस वि[2] अ[1]. १२. उषः वि[2] अ[1]; उ वि[1].

भवति ततोऽन्यानि तेजांसि। येन च [1]अजनयः पुष्टस्य[1] पुष्टम्[2] आदित्यम् यत् च ते [3]बान्धवम् मित्रतोन्मुखम् उपरि[3] स्थितायाः, तदिदम् महत् महत्याः तव असुरत्वम् बलकृतमिति ॥ ४ ॥

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ५ ॥

विऽधुम् । दद्राणम् । समने । बहूनाम् । युवानम् । सन्तम् । पलितः । जगार ।
देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ५ ॥

वेङ्कट० विधातारम् द्रावकम् युद्धे बहूनाम् युवानम् सन्तम् जरा ग्रसति। देवस्य पश्य तस्य महत्त्वेन कृतं [4]कर्म। अद्य[4] म्रियते सः ह्यः जीवति[5]। इन्द्रं कालात्मानं स्तौति इति। तदेवम् अस्मिन् सूक्ते चत्वारि इन्द्रशरीराणि दर्शितानीति ॥ ५ ॥

[6]इति अष्टमाष्टके प्रथमाध्याये षोडशो वर्गः[6] ॥

शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीळः ।
यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ६ ॥

शाक्मना । शाकः । अरुणः । सुऽपर्णः । आ । यः । महः । शूरः । सनात् । अनीळः ।
यत् । चिकेत । सत्यम् । इत् । तत् । न । मोघम् । वसु । स्पार्हम् । उत । जेता । उत । दाता ॥६॥

वेङ्कट० बलेन शक्तः आरोचमानः कश्चन सुपर्णः आ गच्छति, यः [7]महान् शूरः[7] प्रत्नः नीडस्याकर्ता इति इन्द्रम् आह। सः यत् कर्तव्यम् उपगच्छति, तत् तथैव[8] भवति, न तु मोघम्। स स्पृहणीयम् वसु जयति, प्रयच्छति च स्तोतृभ्यः ॥ ६ ॥

ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥ ७ ॥

आ । एभिः । ददे । वृष्ण्या । पौंस्यानि । येभिः । औक्षत् । वृत्रऽहत्याय । वज्री ।
ये । कर्मणः । क्रियमाणस्य । मह्ना । ऋतेऽकर्मम् । उत्ऽअजायन्त । देवाः ॥ ७ ॥

वेङ्कट० आ ददे[9] वर्षणनिमित्तानि बलानि मरुद्भिः, यैः मरुद्भिः मनुष्याणाम् उपद्रवहननाय वर्षति वज्री, ये मरुतो महता इन्द्रेण क्रियमाणस्य कर्मणः साहाय्यार्थम् ऋतेकर्मम् अनुक्ता एव प्रादुर्भवन्ति देवाः इति ॥ ७ ॥

---

१-१. अजनयषुपुष्टस्ये वि[2]; अजनम् पुष्टस्य अ[1]; जनयः पुष्टस्य वि[1]. २. पुष्टिमत्स्यन्त वृष्टम् वि[2] अ[1]. ३-३. °वमित्रोमु° वि[2] अ[1]. ४-४. नास्ति वि[2] अ[1]. ५. जजीवे° वि[1]; जिजी° वि[2] अ[1]. ६-६. नास्ति मूको. ७-७. मह्रा··· वि[2] अ[1]. ८. °व न वि[2] अ[1]. ९. दधे अ[1].

युजा कर्माणि जनयन् विश्वौजा अशस्तिहा विश्वमनास्तुराषाट् ।
पीत्वी सोमस्य दिव आ वृधानः शूरो निर्युधाधमद् दस्यून् ॥ ८ ॥

युजा । कर्माणि । जनयन् । विश्वऽओजाः । अशस्तिऽहा । विश्वऽमनाः । तुराषाट् ।
पीत्वी । सोमस्य । दिवः । आ । वृधानः । शूरः । निः । युधा । अधमत् । दस्यून् ॥ ८ ॥

वेङ्कट० सहायेन मरुद्गणेन कर्माणि जनयन् व्याप्तबलः रक्षोहा व्याप्तमनाः तूर्णम् अभिभविता सः दिवः आ-गत्य सोमम् पीत्वा वर्धमानः शूरः निर्-धमति युद्धेन असुरान् अपबाधते इति ॥ ८ ॥

[1]इति अष्टमाष्टके प्रथमाध्याये सप्तदशो वर्गः[1] ॥

[ ५६ ]

[1]बृहदुक्थो वामदेव्य ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, चतुर्थीपञ्चमीषष्ठ्यो जगत्यः[1] ।

इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने तन्व१श्चारुरेधि प्रियो देवानां परमे जनित्रे ॥ १ ॥

इदम् । ते । एकम् । परः । ऊँ इति । ते । एकम् । तृतीयेन । ज्योतिषा । सम् । विशस्व ।
सम्ऽवेशने । तन्वः । चारुः । एधि । प्रियः । देवानाम् । परमे । जनित्रे ॥ १ ॥

वेङ्कट० बृहदुक्थः । वाजिनं[2] नाम स्वं पुत्रं मृतं वदति—इदम् ते एकम् ज्योतिः अग्निः, तम् [3]अनुगच्छ यस्तवाग्नेयः[3] अंशः । परः वायुश्च तव एकम् ज्योतिः, तं प्राणैः प्रविश । अथ तृतीयेन ज्योतिषा सूर्येण आत्मना सम् गच्छस्व । तन्वाः संवेशने तस्मिन् सूर्ये कल्याणः भव प्रीयमाणः देवानाम् उत्तमे जनके । 'देवानां ह्येतत् परमं जनित्रं यत् सूर्यः' इति ॥ १ ॥

तनूष्टे वाजिन् तन्वं१ नयन्ती वाममस्मभ्यं धातु शर्म तुभ्यम् ।
अह्रुतो महो धरुणाय देवान् दिवीव ज्योतिः स्वमा मिमीयाः ॥ २ ॥

तनूः । ते । वाजिन् । तन्वम् । नयन्ती । वामम् । अस्मभ्यम् । धातु । शर्म । तुभ्यम् ।
अह्रुतः । महः । धरुणाय । देवान् । दिविऽइव । ज्योतिः । स्वम् । आ । मिमीयाः ॥ २ ॥

वेङ्कट० [4]तव तनूः इव इयम् वाजिन्![4] पृथिवी [5]स्वकार्यभूतां तनुम्[5] आत्मानं प्रापयन्ती वामम् धनम् अस्मभ्यम् प्रयच्छतु, तुभ्यम् च सुखम् । स त्वम् अनवपतितः महतः धारणाय देवान् तव कारणभूतान्[6] [7]दिवि इव[7] स्थितम् ज्योतिः सूर्यं स्वकारणभूतम् आ विश इति ॥ २ ॥

---

१-१. नास्ति मूको. २. वाजिं वि[1]. ३-३. 'गच्छस्त° वि[2] अ[1]. ४-४. नास्ति वि[1].
५-५. °तान् तनुपम् मूको. ६. कारण° वि[2] अ[1]. ७-७. दिविव वि[2] अ[1]; देवीव वि[1].

वाज्य॑सि वा॒जिने॑ना सु॒वेनीः॑ सुवि॒तः स्तोमं॑ सुवि॒तो दिवं॑ गाः ।
सु॒वि॒तो धर्म॑ प्रथ॒मानु॑ स॒त्या सु॑वि॒तो दे॒वान्त्सु॑वि॒तोऽनु॒ पत्म॑ ॥ ३ ॥

वा॒जी । अ॒सि॒ । वा॒जिने॑न । सु॒ऽवेनीः॑ । सु॒वि॒तः । स्तोम॑म् । सु॒वि॒तः । दिव॑म् । गाः॒ ।
सु॒वि॒तः । धर्म॑ । प्र॒थ॒मा । अनु॑ । स॒त्या । सु॒वि॒तः । दे॒वान् । सु॒वि॒तः । अनु॑ । पत्म॑ ॥ ३ ॥

**वेङ्कट०** पुत्र! त्वम् वाजिनेन सारेण अन्नेन बलेन वा वाजी भवसि नाम्ना सुक्रान्तः[1] । स त्वं मया प्रसूतः[2] स्तोतव्यम् ज्योतिः गच्छ, सुवितः द्युलोकम्, सुवितः धर्माणि प्रथमानि[3] सत्यफलानि त्वया कृतानि, सुवितः देवान्, सुवितः [4]एव पतत्[4] ज्योतिः इति ॥ ३ ॥

म॒हि॒म्न ए॑षां पि॒तर॑श्च॒नेशि॑रे दे॒वा दे॒वेष्व॑दधु॒रपि॒ क्रतु॑म् ।
सम॑विव्यचुरु॒त यान्यत्वि॑षु॒रैषां॑ त॒नूषु॒ नि वि॑विशुः॒ पुन॑ः ॥ ४ ॥

म॒हि॒म्नः । ए॒षा॒म् । पि॒तरः॑ । च॒न । ई॒शि॒रे । दे॒वाः । दे॒वेषु॑ । अ॒द॒धुः॒ । अपि॑ । क्रतु॑म् ।
सम् । अ॒वि॒व्य॒चुः॒ । उ॒त । यानि॑ । अत्वि॑षुः । आ । ए॒षा॒म् । त॒नूषु॑ । नि । वि॒वि॒शुः॒ । पु॒न॒रिति॑ ॥ ४ ॥

**वेङ्कट०** महिम्नः एषाम् देवानाम् अस्मत्-पितरः [5]अपि आसन्[5] ईश्वराः, महिमानम् [6]अलभन्त एषाम्[6] । देवाः एषु [7]देवेषु नि-अदधुः[7] कर्म । सङ्गता आसन् अपि च यानि दीप्यन्ते ज्योतींषि । आ नि विविशुः एषाम् तनूषु पुनः अपि [8]प्राक् ततो[8] जाता अङ्गिरसः ॥ ४ ॥

सहो॑भि॒र्विश्वं॒ परि॑ चक्रमू॒ रज॒ः पूर्वा॒ धामा॒न्यमि॑ता॒ मिमा॑नाः ।
त॒नूषु॒ विश्वा॒ भुव॑ना॒ नि ये॑मिरे॒ प्रासा॑रयन्त पुरु॒ध प्र॒जा अनु॑ ॥ ५ ॥

सहः॑ऽभिः । विश्व॑म् । परि॑ । च॒क्र॒मुः॒ । रजः॑ । पूर्वाः॑ । धामा॑नि । अमि॑ता । मिमा॑नाः ।
त॒नूषु॑ । विश्वा॑ । भुव॑ना । नि । ये॒मि॒रे॒ । प्र । अ॒सा॒र॒य॒न्त॒ । पु॒रु॒ध । प्र॒ऽजाः । अनु॑ ॥ ५ ॥

**वेङ्कट०** बलैः विश्वम् परि अक्रामन् लोकम् पूर्वाणि स्थानानि अन्यैः अमितानि परिच्छिन्दन्तः । तनूषु च आत्मीयासु विश्वानि भुवनानि नि यच्छन्ति, प्रसारितवन्तः बहुधा ज्योतींषि प्रजासु ॥ ५ ॥

द्विधा॑ सू॒नवोऽसु॑रं स्व॒र्विद॒मास्था॑पयन्त तृ॒तीये॑न॒ कर्म॑णा ।
स्वां प्र॒जां पि॒तर॒ः पित्र्यं॒ सह॒ आव॑रेष्वदधु॒स्तन्तु॒मात॑तम् ॥ ६ ॥

---

१. सुक्रान्ताः वि[२] अ[१]. २. प्रस्तुत वि[१]. ३. °मा वि[१]. ४-४. नास्ति वि[१].
५-५. व्यान्ति वि[१]. ६-६. भवन्तैषां वि[१]. ७-७. देवा व्यदधुः वि[१]; °वेषु अस्य मधुः वि[२] अ[१].
८-८. प्रान्ततो वि[१].

द्विधा । सूनवः । असुरम् । स्वःऽविदम् । आ । अस्थापयन्त । तृतीयेन । कर्मणा ।
स्वाम् । प्रऽजाम् । पितरः । पित्र्यम् । सहः । आ । अवरेषु । अदधुः । तन्तुम् । आऽततम् ॥६॥

**वेङ्कट०** आदित्यं तस्य सूनवः देवाः बलवन्तम् सर्वज्ञम् द्विधा आ स्थापयन्ते, उदितं च कुर्वन्ति, अस्तमितं[1] च तृतीयेन कर्मणा प्रजननाख्येन[2]। तृतीयं हि तत् कर्म। 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' ( तै ६,३,१०,५ ) इति ब्राह्मणम्। 'उद्ग्राभं च [3]निग्राभं च[3] ब्रह्म देवा अवीवृधन्' ( तै १,१,१३,१ ) इति मन्त्रः। तस्य ब्राह्मणम् 'असौ वा आदित्य उद्यन्नुद्ग्राभ[4] एष निम्रोचन् निग्राभः' ( तै ५,४,६,६ ) इति। स्वाम् प्रजाम् पितरः अङ्गिरस आत्मनः पितुरादित्यस्य कर्मद्वारेण बलसाधकम्[5] सहः अपरेषु मनुष्येषु[6] एव अदधुः तन्तुम् आततम्। 'अयं हि आततः तन्तुर्यत् प्रजाः' इति। तथा च अनुशासनम्—'प्रजातन्तुं मा व्यवच्छेत्सीः' ( तैआ ७,११,१ ) इति ॥ ६ ॥

नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ।
स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादा परेषु ॥ ७ ॥

नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा ।
स्वाम् । प्रऽजाम् । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ॥ ७ ॥

**वेङ्कट०** नावा इव [7]उदकम् मुख्याश्चतस्रो[7] दिशः पृथिव्याः स्वस्तिभिः अति गच्छ दुर्गाणि च सर्वाणि। स्वाम् प्रजाम् इत्थम् बृहदुक्थः महत्त्वेन[8] अपरेषु अग्न्यादिषु आ अधत्त। अथ परेषु दिव्येषु यतोयतोऽयं सम्भूतः, तेषु विन्यदधात्[9]। तत्र मन्त्रः—'सूर्यं चक्षुर्गच्छतु वातमात्मा' ( ऋ १०,१६,३ ) इति ॥ ७ ॥

[10]इति अष्टमाष्टके प्रथमाध्याये अष्टादशो वर्गः[10] ॥

[ ५७ ]

[11]बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायना ऋषयः। विश्वे देवा देवता। गायत्री छन्दः[11]।

मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः। मान्तः स्थुर्नो अरातयः ॥१॥

मा । प्र । गाम । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः । मा । अन्तरिति । स्थुः । नः । अरातयः ॥१॥

**वेङ्कट०** कात्यायनः—"अथ हैक्ष्वाको राजाऽसमातिर्गौपायनान् बन्ध्वादीन् पुरोहितांस्त्यक्त्वान्यौ

---

१. अस्तुमितं वि[1] अ[1]; अमितं वि[1]. २. प्रजाननाख्यन्नारपुमानुषेष्वदधुस्ततु वि[1]. ३-३. नास्ति वि[1]; निग्रहं च वि[2] अ[1]. ४. उद्यत मुद्ग्राम वि[1]; उद्यन्नुद्ग्राह वि[2] अ[1]. ५. अबल° वि[2] अ[1]. ६. मानुषेषु वि[1]. ७-७. °कमु° वि[1,2]; °कोमु° अ[1]. ८. हेतुत्वेन वि[2] अ[1]. ९. विन्यधात् वि[1]. १०-१०. नास्ति मूको.

मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे। तम् इतरे क्रुद्धा अभिचेरुः। अथ तौ मायाविनौ सुबन्धोः प्राणानाचिक्षिपतुः। अथ हास्य भ्रातरस्त्रयो 'मा प्र गाम' इति षट्कं गायत्रं स्वस्त्ययनं जप्त्वा 'यत्ते यमम्' इति द्वादशर्चम् आनुष्टुभं मनआवर्तनं जेपुः'' ( ऋअ २,१०,५७;५८ ) इति। तत्र शाट्यायनकम्—'असमातिं राथप्रौष्ठं गौपायना अभ्यदासन्। ते खाण्डवे सत्रमासत। अथ हाऽसमातौ राथप्रौष्ठे किलाताकुली ऊषतुरसुरमायौ। तौ ह स्माऽनग्नावधिधायौदनं पचतोऽनग्नौ मांसम्। अथासुराशनं जग्ध्वेक्ष्वाकवः पराबभूवुः। तमसमातिं राथप्रौष्ठं गौपायनानामाहुतयोऽभ्यतपन्। सोऽब्रवीद् इमौ किलाताकुली इमा वै मा गौपायनानामाहुतयोऽभितपन्तीति। तावब्रूतां तस्य वा आवमेव भिषजौ स्वः। आवं प्रायश्चित्तिः। आवं तथा करिष्यावो यथा त्वैता नाभितप्स्यन्तीति। तौ परेत्य सुबन्धोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमाहृत्यान्तःपरिधि न्यधत्ताम्' (जैब्रा ३,१६८) इत्यादि। तं सुबन्धोरसुमादातुं खाण्डवादसमातिं प्रति गच्छन्तो गौपायना वदन्ति—समीचीनात् मार्गात् वयम् असमातिगृहमेव गच्छामः, मा च यज्ञात्[1] इन्द्र! सोमिनः। मा च अस्माकम् मार्गे तिष्ठन्तु परिपन्थिनः। अत्र शाट्यायनकम्—'यच्चेदमिमो यच्च सत्रम् आस्महे, तस्मादुभयस्माद् मा प्रगामेति' ( जैब्रा ३,१६८ ) ॥ १ ॥

## यो य॒ज्ञस्य॑ प्र॒साध॑न॒स्तन्तु॑र्दे॒वेष्वात॑तः । तमाहु॑तं नशीमहि ॥ २ ॥

यः । य॒ज्ञस्य॑ । प्र॒ऽसाध॑नः । तन्तु॑ः । दे॒वेषु॑ । आऽत॑तः । तम् । आऽहु॑तम् । न॒शी॒म॒हि॒ ॥ २ ॥

वेङ्कट० यः अयम् अग्न्याख्यः यज्ञस्य प्रसाधनः[2] तन्तुः देवेषु आततः[3], तम् असमातिगृहे[4] आहुतम् प्राप्नुमः ॥ २ ॥

## मनो॒ न्वा हु॑वामहे नाराश॒ंसेन॒ सोमे॑न । पि॒तॄ॒णां च॒ मन्म॑भिः ॥ ३ ॥

मन॑ः । नु । आ । हु॒वा॒म॒हे॒ । ना॒रा॒श॒ंसेन॑ । सोमे॑न । पि॒तॄ॒णाम् । च॒ । मन्म॑ऽभिः ॥ ३ ॥

वेङ्कट० सुबन्धोः मनः[5] क्षिप्रम् आ ह्वयामहे अनुप्रकम्प्यमानेन नाराशंसेन सोमेन पितॄणाम् च स्तुतिभिः ॥ ३ ॥

## आ त॑ एतु॒ मन॒ः पुन॒ः क्रत्वे॒ दक्षा॑य जी॒वसे॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ ४ ॥

आ । ते॒ । ए॒तु॒ । मन॑ः । पुन॒रिति॑ । क्रत्वे॑ । दक्षा॑य । जी॒वसे॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ ४ ॥

वेङ्कट० आ गच्छतु पुनः अपि ते सुबन्धो! मनः प्राणितुम् अपानितुम् जीवितुम् चिरम् सूर्यम् च द्रष्टुम् इति ॥ ४ ॥

## पुन॑र्नः पितरो॒ मनो॒ ददा॑तु॒ दैव्यो॒ जन॑ः । जी॒वं व्रातं॑ सचेमहि ॥ ५ ॥

पुन॑ः । न॒ः । पि॒त॒रः॒ । मन॑ः । ददा॑तु । दैव्य॑ः । जन॑ः । जी॒वम् । व्रात॑म् । स॒चे॒म॒हि॒ ॥ ५ ॥

---

1. प्रज्ञात् मूको  2 प्रधानः वि[2] अ[1].  3. °तमः नमेनः वि[1]  4. असातिगृ° मूको.
5. नास्ति वि[1].

वेङ्कट० हे पितरः! पुनः अपि[1] अस्माकम् मनः ददातु दैव्यः [2]जनः। ततः[2] वयं जीवन्तः प्राणसंघातं प्राप्नुमः[3] ॥ ५ ॥

वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि ॥ ६ ॥

वयम्। सोम। व्रते। तव। मनः। तनूषु। बिभ्रतः। प्रजाऽवन्तः। सचेमहि ॥ ६ ॥

वेङ्कट० वयम् सोम! कर्मणि तव मनः अङ्गेषु धारयन्तः प्रजावन्तः जीवं व्रातम् सचेमहि इति ॥ ६ ॥

[4]इति अष्टमाष्टके प्रथमाध्याये एकोनविंशो वर्गः[4] ॥

[ ५८ ]

[4]बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायना ऋषयः। मनआवर्तनं देवता। अनुष्टुप् छन्दः[4]।

यत् ते यमं वैवस्वतं मनो जगाम दूरकम्।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ १ ॥

यत्। ते। यमम्। वैवस्वतम्। मनः। जगाम। दूरकम्। तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥

वेङ्कट० 'यत्' इति [5]द्वादशर्चं सूक्तं[5] निगदसिद्धम्। पुरुषस्य म्रियमाणस्य मनो नाम महद् भूतं बहुधा विशीर्णं भवति तस्य मनसः ततस्ततः पुनः सम्भरणम्। दूरकम् इति क्रियाविशेषणम्। यत् तव मनः विवस्वतः पुत्रम् यमम्[6] दूरम्[7] जगाम, तत् तव मनः आ वर्तयामः अस्मिन् लोके निवासाय जीवनाय चेति ॥ १ ॥

यत् ते दिवं यत् पृथिवीं मनो जगाम दूरकम्।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ २ ॥

यत्। ते। दिवम्। यत्। पृथिवीम्। मनः। जगाम। दूरकम्।
तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥ २ ॥

यत् ते भूमिं चतुर्भृष्टिं मनो जगाम दूरकम्।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ३ ॥

यत्। ते। भूमिम्। चतुःऽभृष्टिम्। मनः। जगाम। दूरकम्।
तत्। ते। आ। वर्तयामसि। इह। क्षयाय। जीवसे ॥ ३ ॥

---

१. वि वि[2] अ[1]. २-२. नास्ति वि[1]. ३. °मः पुत्रं मम दूरं जगाम वि[1]. ४-४. नास्ति मूको. ५-५. द्वादशं वि[1]. ६. यं वि[1]; यम वि[2] अ[1]. ७. दूरान् वि[1].

वेङ्कट० चतुर्भृष्टिः[1] पृथिवी चतसृषु दिक्षु चतुर्धा श्रूयतीति ॥ ३ ॥

यत् ते चतस्रः प्रदिशो मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ४ ॥

यत् । ते । चतस्रः । प्रऽदिशः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ४ ॥

यत् ते समुद्रमर्णवं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ५ ॥

यत् । ते । समुद्रम् । अर्णवम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ५ ॥

वेङ्कट० अर्णवः उदकवान् ॥ ५ ॥

यत् ते मरीचीः प्रवतो मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ६ ॥

यत् । ते । मरीचीः । प्रऽवतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ६ ॥

वेङ्कट० प्रवतः प्रगच्छन्त्यः[2] इति ॥ ६ ॥

[3]इति अष्टमाष्टके प्रथमाध्याये विंशो वर्गः[3] ॥

यत् ते अपो यदोषधीर्मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ७ ॥

यत् । ते । अपः । यत् । ओषधीः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ७ ॥

यत् ते सूर्यं यदुषसं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ८ ॥

यत् । ते । सूर्यम् । यत् । उषसम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ८ ॥

---

१. चतुर्भुष्टि वि[2] अ[1]; चतुर्भुष्टिः वि[1]. २. °च्छन्तः वि[2] अ[1]. ३-३. नास्ति मूको.

यत् ते पर्वतान् बृहतो मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ९ ॥

यत् । ते । पर्वतान् । बृहतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ९ ॥

यत् ते विश्वमिदं जगन्मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ १० ॥

यत् । ते । विश्वम् । इदम् । जगत् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १० ॥

यत् ते पराः परावतो मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ ११ ॥

यत् । ते । पराः । पराऽवतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ११ ॥

यत् ते भूतं च भव्यं च मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥ १२ ॥

यत् । ते । भूतम् । च । भव्यम् । च । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १२ ॥

[1]इति अष्टमाष्टके प्रथमाध्याये एकविंशो वर्गः[1] ॥

[ ५९ ]

[1]बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायना ऋषयः । १-३ निर्ऋतिर्देवता, ४ निर्ऋतिः सोमश्च, ५-६ असुनीतिः, ७ पृथिवी-द्यव्वन्तरिक्ष-सोम-पूष-पथ्या-स्वस्तयः, ८-१० द्यावापृथिव्यौ, १० ( पूर्वार्धस्य ) इन्द्र-द्यावापृथिव्यः । त्रिष्टुप् छन्दः, ८ पङ्क्तिः, ९ महापङ्क्तिः, १० पङ्क्त्युत्तरा[1] ।

प्र तार्यायुः प्रतरं नवीयः स्थातारेव क्रतुमता रथस्य ।
अध च्यवान उत् तवीत्यर्थं परातरं सु निर्ऋतिर्जिहीताम् ॥ १ ॥

---

१-१. नास्ति मूको.

प्र । तारि । आयुः । प्रऽतरम् । नवीयः । स्थातारौऽइव । क्रतुऽमता । रथस्य ।
अध । च्यवानः । उत् । तवीति । अर्थम् । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ १ ॥

वेङ्कट० आदितश्चतस्रो निर्ऋत्यपनोदनार्थाः । प्र वर्धताम् अत्यन्तम् अस्माकं नवतरम् आयुः, यथा कर्मवता सारथिना[1] रथस्य स्थातारौ क्रियेते, सव्येषुः[2] सारथिः च । अथ प्रच्यवमानः जीविताद् अयं सुबन्धुः अभिलषितं वर्धयतु । दूरतरम्[3] [4]सुबन्धुम् आश्रितेयम् निर्ऋतिः[4] गच्छतु ॥ १ ॥

सामन् नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्रवांसि ।
ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ २ ॥

सामन् । नु । राये । निधिऽमत् । नु । अन्नम् । करामहे । सु । पुरुध । श्रवांसि ।
ता । नः । विश्वानि । जरिता । ममत्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ २ ॥

वेङ्कट० साम्नि गीयमाने धनार्थम् निधानवद् अन्नम् [5]हविश्च निर्ऋत्यै[5] '[6]कुर्मः । तदेवाह[6]—करामहे सुष्ठु बहुधा हवींषि [7]इति । तानि च हवींषि[7] सर्वाणि अस्मदीयानि जीर्णा स्तुता वा स्वदताम्[8] इति ॥ २ ॥

अभी ष्व१र्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान् ।
ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीताम् ॥ ३ ॥

अभि । सु । अर्यः । पौंस्यैः । भवेम । द्यौः । न । भूमिम् । गिरयः । न । अज्रान् ।
ता । नः । विश्वानि । जरिता । चिकेत । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ ३ ॥

वेङ्कट० अभि भवेम शत्रून् बलैः[9], यथा[10] द्यौः भूमिम्[11] अभिभवति[12], यथा वा [13]मेघान् अश्मानः । तानि[13] अस्माकम् विश्वानि[14] हवींषि जरिता निर्ऋतिः जानातु इति ॥ ३ ॥

मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तम् ।
द्युभिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ ४ ॥

मो इति । सु । नः । सोम । मृत्यवे । परा । दाः । पश्येम । नु । सूर्यम् । उत्ऽचरन्तम् ।
द्युऽभिः । हितः । जरिमा । सु । नः । अस्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ ४ ॥

वेङ्कट० एषा निगदसिद्धा ॥ ४ ॥

---

१. रथिना मूको. २. सन्येषु वि[1]. ३. दूरं वि[2] अ[1]. ४-४. °न्धुमाश्रियेत यत् नि° वि[2]; °येतर्यान्नि° अ[1]; °न्धुः आश्रीते यन्नि° वि[1]. ५-५. °विश्च ··· कारयै वि[2] अ[1]. ६-६. कर्मदेवाह वि[1]; कुर्वस्तदेवाह वि[2] अ[1]. ७-७. नास्ति वि[1]. ८. स्वाद° मूको. ९. बलैर्यथा वि[1]. १०. यदा मूको. ११. भूमी वि[2] अ[1]. १२. ऽभवति मूको. १३-१३. °घान्ता रश्मी स्ता° वि[1] अ[1]; °घा रश्मिन्ता° वि[1]. १४. °नि शतकः वि[1].

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥ ५ ॥

असुऽनीते । मनः । अस्मासु । धारय । जीवातवे । सु । प्र । तिर । नः । आयुः ।
ररन्धि । नः । सूर्यस्य । सम्ऽदृशि । घृतेन । त्वम् । तन्वम् । वर्धयस्व ॥ ५ ॥

**वेङ्कट०** या मनुष्याणाम् असुं शरीरतो नयति सा असुनीतिर्नाम । [1]असुनीते ! अस्मासु[1] मनः[2] धारय । चिरं जीवनाय प्र वर्धय च अस्माकम् आयुः । स्थापय च अस्मान् सूर्यस्य सन्दर्शने । घृतेन च त्वम् आत्मनः तन्वम् वर्धयस्व इति ॥ ५ ॥

[3]इति अष्टमाष्टके प्रथमाध्याये द्वाविंशो वर्गः[3] ॥

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥ ६ ॥

असुऽनीते । पुनः । अस्मासु । चक्षुः । पुनरिति । प्राणम् । इह । नः । धेहि । भोगम् ।
ज्योक् । पश्येम । सूर्यम् । उत्ऽचरन्तम् । अनुऽमते । मृळय । नः । स्वस्ति ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां या स्वस्तिः ॥ ७ ॥

पुनः । नः । असुम् । पृथिवी । ददातु । पुनः । द्यौः । देवी । पुनः । अन्तरिक्षम ।
पुनः । नः । सोमः । तन्वम् । ददातु । पुनरिति । पूषा । पथ्याम् । या । स्वस्तिः ॥ ७ ॥

**वेङ्कट०** पुनः अस्मभ्यम् [4]असुम् इयम्[4] पृथिवी ददातु, पुनः द्यौः च देवी, तथा अन्तरिक्षम् । पुनः नः सोमः च शरीरम् प्रयच्छतु । तथा पुनः पूषा पथ्याम् वाचं च[5] या नाम्ना स्वस्तिः । 'वाग्वै पथ्या स्वस्तिः' ( माश ३,२,३,८ ) इति ब्राह्मणम् ॥ ७ ॥

शं रोदसी सुबन्धवे यह्वी ऋतस्य मातरा ।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥ ८ ॥

शम् । रोदसी इति । सुऽबन्धवे । यह्वी इति । ऋतस्य । मातरा ।
भरताम् । अप । यत् । रपः । द्यौः । पृथिवि । क्षमा । रपः । मो इति । सु । ते । किम् । चन । आममत् ॥

---

१-१. नास्ति वि[2] अ[1]; सुनितं वि[1]. २. नो वि[1]. ३-३. नास्ति मूको. ४-४. अनुमीयं मूको.
५. नास्ति वि[2] अ[1].

वेङ्कट० अथ उत्तराभिः द्यावापृथिव्योः स्तवः। शम् सुखं[1] प्रयच्छताम् द्यावापृथिव्यौ सुबन्धवे महत्यौ यज्ञस्य मातरौ, रपः च अस्मात् अप हरताम्[2]। 'रप इत्यभिधानं तु गदितं पापकृच्छ्रयोः' (बृदे ७,९४)। हे द्यावापृथिव्यौ! क्षमायां यत्पापम्[3] तदपहरतम् इत्युक्त्वा सुबन्धुमाहुः— मैवं त्वाम् किम्-चिदपि कृच्छ्रम् हिनस्तु इति ॥ ८ ॥

अवं द्वके अवं त्रिका दिवश्चरन्ति भेषजा।
क्षमा चरिष्ण्वेककं भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥९॥

अवं। द्वके इति। अवं। त्रिका। दिवः। चरन्ति। भेषजा। क्षमा। चरिष्णु। एककम्। भरताम्। अपं। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः। मो इति। सु। ते। किम्। चन। आममत् ॥९॥

वेङ्कट० [4]द्युलोकात् भेषजानि[4] [5]द्विकं त्रिकं[5] च अव चरन्ति। तत्राश्विनौ द्विकम् अवचरतः, इडा सरस्वती भारती इति[6] त्रिकमिति। क्षमायाम् चरति एकम् इति अग्निमाह ॥ ९ ॥

समिन्द्रेरय गामनड्वाहं य आवहदुशीनराण्या अनः।
भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥ १० ॥

सम्। इन्द्र। ईरय। गाम्। अनड्वाहम्। यः। आ। अवहत्। उशीनराण्याः। अनः। भरताम्। अपं। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः। मो इति। सु। ते। किम्। चन। आममत् ॥

वेङ्कट० सम्-प्र-ईरय इन्द्र! गन्तारम्[7] [8]अनड्वाहम्, यः अनड्वान् आ वहति उशीनराण्याः पूर्णम् अनः। उशीनराणिः ओषधी यया ऽऽर्तम् अनुलिम्पन्ति[8] ॥ १० ॥

[9]इति अष्टमाष्टके प्रथमाध्याये त्रयोविंशो वर्गः[9] ॥

[ ६० ]

[1]बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायना ऋषयः, षष्ठ्या अगस्त्यस्वसा एषां माता ऋषिका। आदितश्चतसृणां षष्ठ्याश्च असमातिर्देवता, पञ्चम्या इन्द्रः, सप्तम्याद्येकादश्यन्तानां जीवः, द्वादश्या हस्तः। आद्याः पञ्च गायत्र्यः, अष्टमीनवम्यौ पङ्क्ती, शिष्टा अनुष्टुभः[1]।

आ जनं त्वेषसंदृशं माहीनानामुपस्तुतम्। अगन्म बिभ्रतो नमः ॥ १ ॥

आ। जनम्। त्वेषऽसंदृशम्। माहीनानाम्। उपऽस्तुतम्। अगन्म। बिभ्रतः। नमः ॥ १ ॥

---

१. नास्ति वि[2] अ[1]; सं वि[1]. २. भरतां वि[1]. ३. यद्वाचं वि[2] अ[1]. ४-४. °कान् भेषजान् वि[2] अ[1]. ५-५. °कत्रिकं वि[2] अ[1]. ६. नास्ति वि[2] अ[1]. ७. नन्ता° वि[2] अ[1]. ८. नास्ति वि[1]. ९-९. नास्ति मूको.

**वेङ्कट०** [1]चतसृभिः असमातिं[†][1] स्तुवन्ति। आ-गताः जनपदम् दीप्तसन्दर्शनम् महताम् एषाम् उपस्तुतम् नमस्कारम् कुर्वन्तः ॥ १ ॥

असमातिं नितोशनं त्वेषं निययिनं रथम् । भजेरथस्य सत्पतिम् ॥ २ ॥

असमातिम् । निऽतोशनम् । त्वेषम् । निऽययिनम् । रथम् । भजेऽरथस्य । सत्ऽपतिम् ॥ २ ॥

**वेङ्कट०** [2]असमातिम् शत्रूणां हन्तारम् दीप्तम् निययिनम् रथम् इति औपमिकम्[2], रथो हि शत्रून् अभिगच्छति, भजेरथस्य वंशे जातम् अपि वा भजेरथो[3] नाम अस्य शत्रुः कश्चित् तस्य निययिनं सतां पतिम् इति ॥ २ ॥

यो जनान् महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान् युधा ॥ ३ ॥

यः । जनान् । महिषान्ऽइव । [4]अतिऽतस्थौ । पवीरवान्[4] । उत । अपवीरवान् । युधा ॥ ३ ॥

**वेङ्कट०** यः, शत्रून् अत्यतिष्ठत्, यथा सिंहो [5]महिषान् अतितिष्ठति[5], खड्गवान् अपि च अखड्गः योधनेनेति ॥ ३ ॥

यस्येक्ष्वाकुरुप व्रते रेवान् मराय्येधते । दिवीव पञ्च कृष्टयः ॥ ४ ॥

यस्य । इक्ष्वाकुः । उप । व्रते । रेवान् । मरायी । एधते । दिविऽइव । पञ्च । कृष्टयः ॥ ४ ॥

**वेङ्कट०** यस्य इक्ष्वाकुः राजा जनपदस्य पालनकर्मणि उप भवति धनवान् शत्रूणां मारकः, तस्मिन्[6] निषादपञ्चमाश्चत्वारो वर्णाः दिवि इव सुखं निवसन्ति[7] ॥ ४ ॥

इन्द्र क्षत्रासमातिषु रथप्रोष्ठेषु धारय । दिवीव सूर्यं दृशे ॥ ५ ॥

इन्द्र । क्षत्रा । असमातिषु । रथऽप्रोष्ठेषु । धारय । दिविऽइव । सूर्यम् । दृशे ॥ ५ ॥

**वेङ्कट०** इन्द्र! बलानि अस्मिन् रथप्रोष्ठपुत्रे[8] असमातौ धारय दिवि इव सूर्यम् दर्शनाय इति इन्द्रम् आशास्ते ॥ ५ ॥

अगस्त्यस्य नद्भ्यः सप्ती युनक्षि रोहिता ।
पणीन् न्यक्रमीरभि विश्वान् राजन्नराधसः ॥ ६ ॥

अगस्त्यस्य । नत्ऽभ्यः । सप्ती इति । युनक्षि । रोहिता ।
पणीन् । नि । अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥ ६ ॥

**वेङ्कट०** अनया अगस्त्यस्य स्वसा एषां[9] माता राजानं स्तौति। अगस्त्यस्य नन्दयितृभ्यो

---

१-१. नास्ति वि[१]. † अतमान्तं वि[१] अ[३]. २-२. नास्ति वि[१]. ३. °रथोऽपि वि[१]. ४-४. या. (१२,३०) एष निगमः द्र. ५ महिषमा° अ[३]. ६. तं वि[१] अ[३]. ७. °सति वि[२] अ[१]. ८. राथ° वि[२] अ[३]. ९. °षा वि[१].

भागिनेयेभ्यः[१] विजयार्थम् अश्वौ[२] योजय रोहितवर्णौ, पणीन् च नि अभि भव सर्वान् राजन्! अयजमानान् इति ॥ ६ ॥

[३]इति अष्टमाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[३] ॥

**अयं मातायं पितायं जीवातुरागमत् । इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ॥७॥**

अयम् । माता । अयम् । पिता । अयम् । जीवातुः । आ । अगमत् ।
इदम् । तव । प्रऽसर्पणम् । सुबन्धो इति सुऽबन्धो । आ । इहि । निः । इहि ॥ ७ ॥

वेङ्कट० "अथाग्निं द्वैपदेन सूक्तेनास्तुवन् । अग्निः स्तुत आजगाम । आगत्य चाऽऽह — 'किंकामा आगच्छतेति । सुबन्धोरेवाऽसुं पुनर्वनुयामेत्यब्रुवन् । एषोऽन्तःपरिधीत्यब्रवीत् । तमाददध्वमिति । तं निराह्वयन्[४] — 'अयं मातायं पिता०' " इति शाट्यायनकम् ( तु. जैब्रा ३,१६९ ) । अयम् अग्निः माता अयम् एव पिता सञ्जीवयिता आ जगाम । इदम् तव, शरीरम् प्रसर्पणम् इति निर्दिशति, सुबन्धो! आ इहि । उत परितः स्थितस्त्वम् निर्-गच्छ ।

शौनकः — "स्तुतः स राजा सुप्रीतस्तस्थौ[५] गौपायनानभि[६] ॥
सूक्तेन ते स्तुवन्नग्निं द्वैपदेन यथात्रिपु ।
अथाग्निरब्रवीदेतान् अयमन्तःपरिध्यसुः ॥
सुबन्धोरस्य चेक्ष्वाकोर्मया गुप्तो हिताऽर्थिना ।
सुबन्धवे प्रदायासुं जीवेत्युक्त्वा च पावकः ॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ।
'अयं मात(ता' इ)ति हृष्टास्ते सुबन्धोरसुमाह्वयन् ॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि ।
सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते ॥
लब्ध्वासुं चायमप्यस्यां पृथक् पाणिभिरस्पृशन् ।" (बृदे ७,९७-१०२) इति ॥ ७ ॥

**यथा युगं वरत्रया नह्यन्ति धरुणाय कम् ।**
**एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ८ ॥**

यथा । युगम् । वरत्रया । नह्यन्ति । धरुणाय । कम् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ८ ॥

वेङ्कट० यथा युगम् वरत्रया बध्नन्ति रथस्य धारणार्थम्, एवमेव[७] अहं त्वदीयम् मनः धारयामि [८]जीवनाय, न[८] मृत्यवे, अपि च अविनाशायेति ॥ ८ ॥

---

१. नास्ति वि१. २. °श्वो वि२ अ१. ३-३. नास्ति मूको. ४. निराह मूको. ५. सव्रीडस्त° बृदे. ६. °यनानिति मूको. ७. एव वि१. ८-८. जीवनाय ना ··· वि२ अ१.

यथेयं पृथिवी मही दाधारेमान् वनस्पतीन् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ९ ॥

यथा । इयम् । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ९ ॥

**वेङ्कट०** निगदसिद्धा ॥ ९ ॥

यमादहं वैवस्वतात् सुबन्धोर्मन आभरम् । जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ १० ॥

यमात् । अहम् । वैवस्वतात् । सुऽबन्धोः । मनः । आ । अभरम् ।
जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ १० ॥

**वेङ्कट०** निगदसिद्धा ॥ १० ॥

न्यग्वातोऽव वाति न्यक् तपति सूर्यः । नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ॥ ११ ॥

न्यक् । वातः । अव । वाति । न्यक् । तपति । सूर्यः ।
नीचीनम् । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ ११ ॥

**वेङ्कट०** द्युलोकाद् वातः निचीनम् गच्छति । न्यक् च तपति सूर्यः । गौः च निचीनम् पयः क्षरति । तद्वद् न्यक् भवतु तव[1] पापम् इति ॥ ११ ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥ १२ ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः ।
अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः ॥ १२ ॥

**वेङ्कट०** निगदसिद्धेति । 'तं सुबन्धुम् असुः पुनः प्राविशत् । स यथापुरम् अभवत् । तदाभ्यां किलाताकुलीभ्याम् 'आचक्षतेमे वा ऋषयोऽसुं निराह्वयन्'' ( जैब्रा ३,१६९ ) इत्यादि शाट्यायनकम् ॥ १२ ॥

[2]इति अष्टमाष्टके प्रथमाध्याये पञ्चविंशो वर्गः[2] ॥

[ ६१ ]

[2]नाभानेदिष्ठो मानव ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[2] ॥

इदमित्था रौद्रं गूर्तवचा ब्रह्म क्रत्वा शच्यामन्तराजौ ।
क्राणा यदस्य पितरा मंहनेष्ठाः पर्षत् पक्थे अहन्ना सप्त होतॄन् ॥ १ ॥

---

१. तदेव वि[1]. २-२. नास्ति मूको.

इदम् । इत्था । रौद्रम् । गूर्तऽवचाः । ब्रह्म । क्रत्वा । शच्याम् । अन्तः । आजौ ।
क्राणा । यत् । अस्य । पितरा । मंहनेऽस्थाः । पर्षत् । पक्थे । अहन् । आ । सप्त । होतॄन् ॥१॥

**वेङ्कट०** नाभानेदिष्ठो मानवः। तत्र 'नाभानेदिष्ठं वै मानवम्' ( ऐब्रा ५,१४ ) इत्यादिकं ब्राह्मणमनुसन्धेयम्। 'मनुः पुत्रेभ्यो दायं व्यभजत्। स नाभानदिष्ठम्' ( तै ३,१,९,४ ) इत्यादिकं चाध्वर्युभ्यः[1] श्रोतव्यम्। इदम् स्तोत्रम् इत्थम् उद्युक्तवचनः अयमृषिः प्रीणनं रुद्रस्य प्रज्ञानेन अङ्गिरसां सत्रकर्मणि[2] अन्तः तेषां सङ्घे यज्ञ इत्यर्थः, तत्र करोति। यत् ब्रह्म दायविभागं कुर्वाणौ अस्य पितरौ अन्ये च मंहनेष्ठाः भागप्रदाने स्थिता भ्रातरश्चाकल्पयन्, सोऽयम् अस्मिन् यज्ञे पक्तव्ये षष्ठेऽहनि तत्रत्यैर्मुग्धैः अप्रज्ञाते सप्त वषट्कर्तॄन् अन्वितान् पारयतु[3] इति ॥ १ ॥

स इद् दानाय दभ्याय वन्वञ्च्यवानः सूदैरमिमीत वेदिम् ।
तूर्वयाणो गूर्तवचस्तमः क्षोदो न रेत इतऊति सिञ्चत् ॥ २ ॥

सः । इत् । दानाय । दभ्याय । वन्वन् । च्यवानः । सूदैः । अमिमीत । वेदिम् ।
तूर्वयाणः । गूर्तवचःऽतमः । क्षोदः । न । रेतः । इतःऽऊति । सिञ्चत् ॥ २ ॥

**वेङ्कट०** सः रुद्रः स्तोतॄणां धनप्रदानाय तच्छत्रूणां वधाय च तान्[4] सम्भजन्[5] च्यावयन्[6] रक्षांसि प्रेर्यमाणैः शरैः अभिमन्यते यज्ञवास्तु। तूर्णगमनः सोऽयम् अत्यन्तम् उद्युक्तवचाः[7] रुद्रः उदकम् इव आत्मीयम् रेतः इतऊति असिञ्चत्, जनयामास अश्विनौ इत्यर्थः ॥ २ ॥

मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता ।
आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ ॥ ३ ॥

मनः । न । येषु । हवनेषु । तिग्मम् । विपः । शच्या । वनुथः । द्रवन्ता ।
आ । यः । शर्याभिः । तुविऽनृम्णः । अस्य । अश्रीणीत । आऽदिशम् । गभस्तौ ॥ ३ ॥

**वेङ्कट०** [8]प्रसङ्गाद् द्वाभ्याम् अश्विनोः[8] स्तुतिः। यथा तीक्ष्णाग्रम् मनः शीघ्रं दूरं गच्छति, एवम् येषु ह्वानेषु युवाम् विपः[9] स्तोतॄन् ऋत्विजः प्रज्ञानेन वनुथः द्रवन्तौ। आभिमुख्येन यः अध्वर्युः अङ्गुलीभिः बहुधनः अस्य मम स्वभूतो युवाभ्याम् आदिश्यं सोमं श्रीणाति हस्ते स्थितं गृहीतं च। येषु हवनेषु[10] वनुथस्तस्य हस्तात् तं सोमं पातुम् उत्तरत्र सम्बन्धः ॥ ३ ॥

कृष्णा यद्गोष्वरुणीषु सीदद् दिवो नपाताश्विना हुवे वाम् ।
वीतं मे यज्ञमा गतं मे अन्नं ववन्वांसा नेषमस्मृतध्रू ॥ ४ ॥

---

१. °र्युभिः वि[1]. २. तत्र° वि[2] अ[1]. ३. °यति वि[1]. ४. तत् वि[1]. ५. °भतं वि[2] अ[1]. ६. चापतयन् वि[2] अ[1]. ७. °वचनाः वि[1]. ८-८. गद्याभ्यामश्विनो वि[1]. ९. अपि वन वि[2]; अपि मनुः अ[1]. १०. भुवनेषु वि[2] अ[1].

कृष्णा । यत् । गोषु । अरुणीषु । सीदत् । दिवः । नपाता । अश्विना । हुवे । वाम् ।
वीतम् । मे । यज्ञम् । आ । गतम् । मे । अन्नम् । ववन्वांसा । न । इषम् । अस्मृतध्रू इत्यस्मृतऽध्रू ॥ ४ ॥

वेङ्कट० अरुण्यो गाव उषसाम् अश्वाः (तु. निघ १,१५)। यदा रात्रिः अरुणीषु गोषु[1] सीदति व्युच्छतीत्यर्थः, तदानीं पूर्वोक्तह्वानैः वाम् अश्विनौ! हुवे[2] दिवः नपातौ। तथा[3] सति कामयेथाम् मे यज्ञम्। आ गच्छतम् च मे सोमम् यथा घासं भजमानौ अश्वौ शीघ्रम् आगच्छतः अस्मृतद्रोहौ[4] ॥ ४ ॥ यथा स्वांशेन भगवान् रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रम् असृजत् तद् उत्तराभिः तिसृभिर्ऋग्भिः वदति ॥

प्रथिष्ट यस्य वीरकर्ममिष्णदनुष्ठितं नु नर्यो अपौहत् ।
पुनस्तदा वृहति यत् कनाया दुहितुरा अनुभृतमनर्वा ॥ ५ ॥

प्रथिष्ट । यस्य । वीरऽकर्मम् । इष्णत् । अनुऽस्थितम । नु । नर्यः । अप । औहत् ।
पुनरिति । तत् । आ । वृहति । यत् । कनायाः । दुहितुः । आः । अनुऽभृतम् । अनर्वा ॥ ५ ॥

वेङ्कट० प्रथितमासीत्[5] तस्य[6] प्रजापतेः इष्णत् वीरकर्म रेतः, क्रियमाणा वीराः यस्य रेतसः सन्ति। प्रजापतेर्हि रेतसः सर्वे वीराः क्रियन्ते। तेन प्रजापतिना निषिक्तम् नृहितः रुद्रः अप औहत्। तदेवाह[7]—पुनः तत् आ वृहति इति, '[8]यद् रेतः[8] कमनीयायाः दुहितुः आसीत् अनुभृतम् प्रजापतिना अप्रत्यृतः अन्यस्मिन् रुद्र इति ॥ ५ ॥

'[9]इति अष्टमाष्टके प्रथमाध्याये षड्विंशो वर्गः[9] ॥

मध्या यत् कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्याम् ।
मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ ॥ ६ ॥

मध्या । यत् । कर्त्वम् । अभवत् । अभीके । कामम् । कृण्वाने । पितरि । युवत्याम् ।
मनानक् । रेतः । जहतुः । विऽयन्ता । सानौ । निऽसिक्तम् । सुऽकृतस्य । योनौ ॥ ६ ॥

वेङ्कट० मध्ये यत् कर्म अभवत् मिथुनीभावाख्यम्[10] अन्तिके कामम् कृण्वाने पितरि प्रजापतौ युवत्याम्, तदानीम् अल्पम् रेतः जहतुः तौ [11]इतरेतरम् अभिगच्छन्तौ[11] समुच्छ्रिते स्थाने निषिक्तम्[12] प्रजापतिना रेतो यज्ञस्य योनौ दुहितुः इति ॥ ६ ॥

पिता यत् स्वां दुहितरमधिष्कन् क्ष्मया रेतः संजग्मानो नि षिञ्चत् ।
स्वाध्योऽजनयन् ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥ ७ ॥

---

१. नास्ति वि[१]. २. भुवने वि[२] अ[१]. ३. यथा वि[१]. ४. °द्रोहौ प्रथिष्ट वि[१]. ५ प्रमासी° वि[२] अ[१]; तमासी° वि[१]. ६. अस्य वि[२] अ[१]. ७ नास्ति वि[२] अ[१]. ८-८. यद्रेतं वि[१]. ९-९. नास्ति मूको. १०. °भावस्य वि[१]. ११-११. इतरेतसौ रुद्रं पुनःरतुत्यद्भुकमाणौ वि[१]. १२. विषि° वि[१].

पिता । यत् । स्वाम् । दुहितरम् । अधिऽस्कन् । क्ष्मया । रेतः । सम्ऽजग्मानः । नि । सिञ्चत् ।
सुऽआध्यः । अजनयन् । ब्रह्म । देवाः । वास्तोः । पतिम् । व्रतऽपाम् । निः । अतक्षन् ॥ ७ ॥

**वेङ्कट०** पिता यत्[1] स्वाम् दुहितरम् दिवम् उषसं वा अध्यस्कन्दत्, तदानीम् अनया पृथिव्या सञ्जग्मानः अस्मिन् लोके आगतः । 'तामृश्यो भूत्वा रोहितं भूतामभ्यैत्'[2] (ऐब्रा ३,३३) इति ब्राह्मणम् । तस्याम् रेतः नि असिञ्चत् । ततो रेतसो रुद्रं पुरस्कृत्य सुकर्माणः सर्वे देवाः ब्रह्म अजनयन् । किं तद् ब्रह्म इति आह — वास्तोः पतिम् व्रतस्य पालयितारम् ततः निर्-अगमयन् इति ॥ ७ ॥

स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः ।
सरत् पदा न दक्षिणा परावृङ् न ता नु मे पृशन्यो जगृभ्रे ॥ ८ ॥

सः । ईम् । वृषा । न । फेनम् । अस्यत् । आजौ । स्मत् । आ । परा । ऐत् । अप । दभ्रऽचेताः ।
सरत् । पदा । न । दक्षिणा । पराऽवृक् । न । ताः । नु । मे । पृशन्यः । जगृभ्रे ॥ ८ ॥

**वेङ्कट०** उत्तरतः स्थितः सः 'वास्तोष्पतिः एतद् आयुधमस्यति' इति निरस्यमानम् आयुधं प्रत्यक्षं पश्यन् वदति — सङ्ग्रामे यथा वृषा इन्द्रो नमुचेर्वधाय अपाम्[3] फेनम् अस्यत् । अथ अस्मत्तः अप परा गच्छति दभ्रचेताः राक्षसादिः[4] । सरति न पदानि स्थानानि दक्षिणानां गवाम् परावृक् परावर्जयिता[5] । दक्षिणा मह्यम् अङ्गिरोभिर्दत्ताः [6]पृशन्यः राक्षसः न गृह्णाति[6] । पथिकानामभिस्पर्शने कुशलः पृशन्यः । 'महे यत् पित्र ईं रसं दिवे करव त्सरत् पृशन्यः' (ऋ १,७१,५) इति मन्त्रः ॥ ८ ॥

मक्षू न वह्निः प्रजाया उपब्दिरग्निं न नग्न उप सीददूधः ।
सनितेध्मं सनितोत वाजं स धर्ता जज्ञे सहसा यवीयुत् ॥ ९ ॥

मक्षु । न । वह्निः । प्रऽजायाः । उपब्दिः । अग्निम् । न । नग्नः । उप । सीदत् । ऊधः ।
सनिता । इध्मम् । सनिता । उत । वाजम् । सः । धर्ता । जज्ञे । सहसा । यविऽयुत् ॥ ९ ॥

**वेङ्कट०** वास्तोष्पतिना रुद्रेण गोप्यमानेऽस्मिन् यज्ञे शीघ्रम् न[7] आगच्छति अग्निः, यः प्रजायाः उपपीडकः । राक्षसः[8] आगच्छति[9] यज्ञे प्रज्वलति । अग्निम् च हव्यवाहनम् न[10] नग्नः राक्षसः उप सीदति रात्रौ । सोऽयम् अग्निः सनिता भवति इध्मम्, सनिता अपि च हविः । सः धर्ता च जातः यज्ञस्य बलेन रक्षसो योद्धेति ॥ ९ ॥

मक्षू कनायाः सख्यं नवग्वा ऋतं वदन्त ऋतयुक्तिमग्मन् ।
द्विबर्हसो य उप गोपमागुरदक्षिणासो अच्युता दुदुक्षन् ॥ १० ॥

---

१. यदा वि[2] अ[1]. २. °तामधिगच्छम् वि[2] अ[1]; °मभिगच्छः वि[1]. ३. वां वि[2] अ[1].
४. रदक्षरः मूको. ५. °वर्जनात् राक्षसोनन्तात् मूको. ६-६. पृशन्यः राक्षसो गृह्णाति स्पृशने मूको.
७. नास्ति वि[2] अ[1]. ८. राक्षसाम् मूको. ९. °छतो अग्रतो वि[1]. १०. नास्ति मूको.

मक्षु । कनायाः । सख्यम् । नवऽग्वाः । ऋतम् । वदन्तः । ऋतऽयुक्तिम् । अग्मन् ।
द्विऽबर्हसः । ये । उप । गोपम् । आ । अगुः । अदक्षिणासः । अच्युता । दुधुक्षन् ॥ १० ॥

**वेङ्कट०** [1]शीघ्रम् कमनीयायाः पृश्न्याः सख्यम् अगच्छन् अङ्गिरसः, ऋतम् वदन्तः यज्ञयोगम् अगच्छन्। द्वयोः स्थानयोः अनयोर्द्यावापृथिव्योः परिवृत्रहाः ये अङ्गिरसः उपप्राप्तवन्तः यज्ञस्य गोपायितारम् इन्द्रम् ते दक्षिणावर्जिताः। नहि सत्रिणां सन्ति दक्षिणाः। उदकानि दिवम् दुधुक्षन्। सख्यम् अभवद् अनया पृश्न्या† इति[1] ॥ १० ॥

[2]इति अष्टमाष्टके प्रथमाध्याये सप्तविंशो वर्गः[2] ॥

मक्षू कनायाः सख्यं नवीयो राधो न रेत ऋतमित् तुरण्यन् ।
शुचि यत् ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ११ ॥

मक्षु । कनायाः । सख्यम् । नवीयः । राधः । न । रेतः । ऋतम् । इत् । तुरण्यन् ।
शुचि । यत् । ते । रेक्णः । आ । अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः ॥ ११ ॥

**वेङ्कट०** शीघ्रम् कमनीयायाः पृश्न्याः सख्यम् नवतरम् अगच्छन्[3]। धनम् इव रेतः सिच्यमानम्[4] उदकम् दिवः प्रेरितवन्तः शुद्धम् यत् इन्द्र! तुभ्यम् रेक्णः [पाथोलक्षणं[5] धनम् आ प्रायच्छन् अमृतस्य दोग्ध्र्याः उस्रियायाः पयः इति। तत्र ब्राह्मणम्— 'अङ्गिरसो वै सत्रमासत। तेषां पृश्निः धर्मदुघासीत्। सर्जीषेणाजीवत्। तेऽब्रुवन् कस्मै नु सत्रमास्महे येऽस्या ओषधीर्न जनयाम इति। ते दिवो वृष्टिमसृजन्त' ( तैब्रा २,१,१,१ ) इति ॥ ११ ॥

पश्वा यत् पश्वा वियुता बुधन्तेति ब्रवीति वक्तरी रराणः ।
वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु ॥ १२ ॥

पश्वा । यत् । पश्वा । विऽयुता । बुधन्त । इति । ब्रवीति । वक्तरि । रराणः ।
वसोः । वसुऽत्वा । कारवः । अनेहा । विश्वम् । विवेष्टि । द्रविणम् । उप । क्षु ॥ १२ ॥

**वेङ्कट०** यदा इन्द्रस्य स्तोतारः असुरैः अपहृतम् आत्मीयं धनं जानन्ति प्रागेव तत आगत्य इन्द्रः सन्निरुणद्धीति[6] समुदायार्थः। गवा यदा वियुक्तानि तत्स्थानानि पश्चाद् अजानन्[7], तदानीम् अयम् इन्द्र इत्थं प्र-ब्रवीति स्तोतरि रममाणः। कथम् इत्याह वसोरिति। वसोः सङ्घात् कारवः कारोः स्तोतुः अनेहा अपाप इन्द्रः विश्वम् च धनम् असुरैः अपहृतं शीघ्रम् उप विवेष्टि उपव्याप्नोति, यथा न तत् हरन्ति असुरा इति। वसुत्वा इति समूहे त्वा नामकरणः। क्षु-शब्दः क्षिप्रवचन इति ॥ १२ ॥

---

१-१. नास्ति वि[२]. † पृथिव्याः वि[२] अ[१]. २-२. नास्ति मूको. ३. भवग° वि[२].
४. ऋक्षमा° वि[२] अ[१]; ऋच्य° वि[१]. ५. पयोल° वि[१]. ६. तन्निरु° वि[१]. ७. भजायन् वि[१].

तदिन्न्वस्य परिषद्वानो अग्मन् पुरू सदन्तो नार्षदं बिभित्सन् ।
वि शुष्णस्य संग्रथितमनर्वा विदत् पुरुप्रजातस्य गुहा यत् ॥ १३ ॥

तत् । इत् । नु । अस्य । परिऽसद्वानः । अग्मन् । पुरु । सदन्तः । नार्सदम् । बिभित्सन् ।
वि । शुष्णस्य । सम्ऽग्रथितम् । अनर्वा । विदत् । पुरुऽप्रजातस्य । गुहा । यत् ॥ १३ ॥

वेङ्कट० तत्रैव शीघ्रम् अस्य इन्द्रस्य परिचारका रश्मयः प्रकाशनार्थम् अगच्छन् । पुरूणि कृत्रिमाणि [1]सीदन्तः तिष्ठन्तोऽसुरा[1] यत्र नार्षदम् कण्वं भेत्तुमैच्छन्निति । अत्र शाट्यायनकम् — 'सा होवाच पुनर्वाव त्वा परोक्षेणैव जिघांसन्ति । अश्रौषं वा एषां संवदमानानाम् । आसन्दीं वै ते हिरण्मयीं प्रच्छाये निधास्यन्ति । तस्यां मोपवेशीरिति । ते ह प्रययुः । तस्मै ह हिरण्मयीम् आसन्दीं प्रच्छाये निदधुः । तस्यां ह प्रमत्त उपविवेश' ( जैब्रा ३, ७३ ) इत्यादि । किञ्चायम् [2]वि विदत् शुष्णासुरस्य[2] बहुप्रादुर्भावस्य [3]स्नायुभिः सङ्ग्रथितम्[3] मर्म गुहायाम् अन्तःशरीरे यत् तद् निगूढम् अनर्वा अप्रत्यृत इति ॥ १३ ॥

भर्गो ह नामोत यस्य देवाः स्व१र्ण ये त्रिषधस्थे निषेदुः ।
अग्निर्ह नामोत जातवेदाः श्रुधी नो होतर्ऋतस्य होताध्रुक् ॥ १४ ॥

भर्गः । ह । नाम । उत । यस्य । देवाः । स्वः । न । ये । त्रिऽसधस्थे । निऽसेदुः ।
अग्निः । ह । नाम । उत । जातऽवेदाः । श्रुधि । नः । होतः । ऋतस्य । होता । अध्रुक् ॥ १४ ॥

वेङ्कट० अपि च भर्गः ह नाम तत् तेजः, यस्य सर्वे देवाः वशवर्तिनः, स्वर्ग इव ये देवाः त्रिषधस्थे बर्हिषि निषीदन्ति । किं तत् तेज इत्याह — अग्निः ह नाम अपि च जातवेदाः च । अथ प्रत्यक्षः । शृणु अस्माकम् स्तुतिम् होतः! यज्ञस्य ह्वाता देवानाम् द्रोहवर्जितः ॥ १४ ॥

उत त्या मे रौद्रावर्चिमन्ता नासत्याविन्द्र गूर्तये यजध्यै ।
मनुष्वद् वृक्तबर्हिषे रराणा मन्दू हितप्रयसा विक्षु यज्यू ॥ १५ ॥

उत । त्या । मे । रौद्रौ । अर्चिऽमन्ता । नासत्यौ । इन्द्र । गूर्तये । यजध्यै ।
मनुष्वत् । वृक्तऽबर्हिषे । रराणा । मन्दू इति । हितऽप्रयसा । विक्षु । यज्यू इति ॥ १५ ॥

वेङ्कट० अपि च तौ मे रुद्रस्य पुत्रौ दीप्तिमन्तौ नासत्यौ इन्द्र! स्तोत्राय यज्ञाय[4] च भवेताम् मम पितुः मनोरिव मह्यं स्तीर्णबर्हिषे रममाणौ मदिष्णू[5] दत्तान्नौ मनुष्येषु यष्टव्यौ ॥ १५ ॥

[6]इति अष्टमाष्टके प्रथमाध्याये अष्टाविंशो वर्गः[6] ॥

---

१-१. °दन्तो तिष्ठन्तासुरा वि² अ¹; °दन्तोसुराः वि¹. २-२. विविधशुष्मा° वि¹. ३-३. स्नाभिसंग्रामस्थितं वि¹. ४. नास्ति वि¹. ५. महिष्णू वि² अ¹. ६-६. नास्ति मूको.

अयं स्तुतो राजा वन्दि वेधा अपश्च विप्रस्तरति स्वसेतुः ।
स कक्षीवन्तं रेजयत् सो अग्निं नेमिं न चक्रमर्वतो रघुद्रु ॥ १६ ॥

अयम् । स्तुतः । राजा । वन्दि । वेधाः । अपः । च । विप्रः । तरति । स्वऽसेतुः ।
सः । कक्षीवन्तम् । रेजयत् । सः । अग्निम् । नेमिम् । न । चक्रम् । अर्वतः । रघुऽद्रु ॥ १६ ॥

**वेङ्कट०** अयम् स्तुतः सोमः राजा वन्द्यते अस्माभिः विधाता। अन्तरिक्षम् च मेधावी तरति यस्य[1] स्वभूता[2] रश्मयो बन्धका विद्यन्ते । सः अयम् कक्षीवन्तम् पर्वतमध्ये वाणिज्यार्थं गतं ततः रेजयत्, तथा अग्निम् च देवेभ्यो निलीनम् अप्सु प्रविष्टम्, यथा नमनशीलं लघुगमनम् चक्रम् अर्वतः रेजयन्ति । नुमभावश्छान्दसः ॥ १६ ॥

स द्विबन्धुर्वैतरणो यष्टा सबर्धुं धेनुमस्वं दुहध्यै ।
सं यन्मित्रावरुणा वृञ्ज उक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥ १७ ॥

सः । द्विऽबन्धुः । वैतरणः । यष्टा । सबःऽधुम् । धेनुम् । अस्वम् । दुहध्यै ।
सम् । यत् । मित्रावरुणा । वृञ्जे । उक्थैः । ज्येष्ठेभिः । अर्यमणम् । वरूथैः ॥ १७ ॥

**वेङ्कट०** सः द्वयोर्लोकयोः बन्धुः[3] वितरणकुशलो[4] हविषाम्[5] यष्टा अग्निः पयसो दोग्ध्रीम् धेनुम् अस्वम् अप्रसूतां निवृत्तप्रसवां शयवे पुनः दोहाय अकरोद् यदा स शयुः मित्रावरुणौ सम् वृञ्जे समगमयद् आत्मनि शस्त्रैः प्रशस्तैः अर्यमणम् च देवं वरणीयैः । तदानीम् अग्निः तान् यजन्नित्थम् अकरोत् इति । 'ते देवा अकामयन्तोभयं संवृञ्जीमहि ब्रह्म चान्नं च' ( तै ७, ३,९,१ ) इति ब्राह्मणम् ॥ १७ ॥

तद्बन्धुः सूरिर्दिवि ते धियंधा नाभानेदिष्ठो रपति प्र वेनन् ।
सा नो नाभिः परमास्य वा घाहं तत् पश्चा कतिथश्चिदास ॥ १८ ॥

तत्ऽबन्धुः । सूरिः । दिवि । ते । धियम्ऽधाः । नाभानेदिष्ठः । रपति । प्र । वेनन् ।
सा । नः । नाभिः । परमा । अस्य । वा । घ । अहम् । तत् । पश्चा । कतिथः । चित् । आस ॥

**वेङ्कट०** द्यावापृथिव्यौ स्तूयेते। तद्बन्धुः तन्मातृकः सूरिः दिवि स्थितस्य तवादित्यस्य स्वभूतः ततो लब्धबीजः[6] कर्मणो धारकः नाभानेदिष्ठः प्र-लपति कामयमानः अङ्गिरोभ्यो धनम् । सा अस्माकम् नाभिः परमा अस्य आदित्यस्य । अहम् तस्य पश्चात् कतिपयानाम् अभवम् पूरणः । अनेन सन्निकृष्टो ममादित्येन जन्यजनकसम्बन्ध इति ॥ १८ ॥

इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः ।
द्विजा अहं प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना ॥ १९ ॥

---

१. यज्ञस्य वि[1]. २. भूता वि[1]. ३. द्विब° मूको. ४. विशलनकु° वि[2] अ[1]. ५. °विषा वि[1].
६. खण्डबी° वि[1].

इयम् । मे । नाभिः । इह । मे । सधऽस्थम् । इमे । मे । देवाः । अयम् । अस्मि । सर्वः ।
द्विऽजाः । अहं । प्रथमऽजाः । ऋतस्य । इदम् । धेनुः । अदुहत् । जायमाना ॥ १९ ॥

**वेङ्कट०** इयम् माध्यमिका वाक् मे नाभिः सन्नाहिनी । "[1]सा या[1] सा वागसौ स आदित्यः" ( माश १०, ५,१,४ ) इति ब्राह्मणम् । इह एतस्मिन् मण्डले मे स्थानम् । इमे मे रश्मयः स्वभूताः । [2]अयम् अहम्[2] अस्मि सर्वः प्राणात्मना च । द्विजाः परस्य आत्मनः[3] प्रथमं जाताः । इदम् सर्वम् अदुहत् माध्यमिका वाक् जायमाना एवेति ॥ १९ ॥

अधासु मन्द्रो अरतिर्विभावाव स्यति द्विवर्तनिर्वनेषाट् ।
ऊर्ध्वा यच्छ्रेणिर्न शिशुर्दन् मक्षू स्थिरं शेवृधं सूत माता ॥ २० ॥

अध । आसु । मन्द्रः । अरतिः । विभाऽवा । अव । स्यति । द्विऽवर्तनिः । वनेषाट् ।
ऊर्ध्वा । यत् । श्रेणिः । न । शिशुः । दन् । मक्षु । स्थिरम् । शेऽवृधम् । सूत । माता ॥ २० ॥

**वेङ्कट०** अध आसु दिक्षु मोदमानः गन्ता दीप्तिमान् परि अव स्यति द्वयोर्लोकयोः गन्ता वने काष्ठानि अभिभवन् । ऊर्ध्वा उद्युक्ता जनानाम् श्रेणिः सेना इव यदा अयम् शिशुः अग्निः अरण्यं दमयति, तम् इमं शीघ्रम् [4]स्थिरम् सुखस्य[4] वर्धकं यज्ञे[5] जनयामास अरणिरिति ॥ २० ॥

[6]इति अष्टमाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः[6] ॥

अधा गाव उपमातिं कनाया अनु श्वान्तस्य कस्य चित् परेयुः ।
श्रुधि त्वं सुद्रविणो नस्त्वं याळाश्वघ्नस्य वावृधे सूनृताभिः ॥ २१ ॥

अध । गावः । उपऽमातिम् । कनायाः । अनु । श्वान्तस्य । कस्य । चित् । परा । ईयुः ।
श्रुधि । त्वम् । सुऽद्रविणः । नः । त्वम् । याट् । आश्वऽघ्नस्य । ववृधे । सूनृताभिः ॥ २१ ॥

**वेङ्कट०** सम्प्रति स्तुतिवाचः कमनीयायाः स्तुतेः उपगन्तारम् इन्द्रम् अनु परा गच्छन्ति प्रवृद्धस्य कस्य चित् स्तोतुः इत्यात्मनो निर्देशः । [7]श्रुधि त्वम्[7] हे सुधन! अग्ने! अस्माकम् अभिलषितम् । त्वम्[8] इमम् इन्द्रं यजेति अभिलषितं निर्दिशति । सोऽयम् आश्वघ्ननाम्न[9] ऋषेः[10] स्तुतिभिः ववृधे इति ॥ २१ ॥

अध त्वमिन्द्र विद्ध्य१स्मान् महो राये नृपते वज्रबाहुः ।
रक्षा च नो मघोनः पाहि सूरीननेहसस्ते हरिवो अभिष्टौ ॥ २२ ॥

---

१-१. या सा त्रि[2] अ[1]; सा वि[1]. २-२. अहम् अयम् वि[2] अ[1]. ३. वरण्यात्म° वि[2] अ[1]. ४-४. सुखस्य स्थिरं अ[1]. ५. यज्ञेन वि[1] अ[1]. ६-६. नास्ति मूको. ७-७. नास्ति वि[2] अ[1], ८. तं त्रि[2] अ[1], ९. अश्व° वि[2] अ[1]. १०. ऋषयः वि[1].

अध॑ । त्वम् । इ॒न्द्र॒ । वि॒द्धि॒ । अ॒स्मान् । म॒हः । रा॒ये । नृ॒ऽप॒ते॒ । वज्र॑ऽबाहुः ।
रक्ष॑ । च॒ । नः॒ । म॒घोनः॑ । पा॒हि॒ । सू॒रीन् । अ॒ने॒हसः॑ । ते॒ । ह॒रि॒ऽवः॒ । अ॒भिष्टौ॑ ॥ २२ ॥

**वेङ्कट०** सम्प्रति त्वम् इन्द्र! जानीहि अस्मान् महते धनाय [1]नृणां पते! वज्रबाहुः[1], रक्ष[2] च अस्मान् हविष्मतः, पाहि स्तोतॄन्, अपापाः तव हरिवः! अभ्येषणे वयं स्याम इति ॥ २२ ॥

अध॒ यद्रा॑जाना॒ गवि॑ष्टौ॒ सर॑त् स॒रण्युः॑ का॒रवे॑ ज॒रण्युः॑ ।
विप्र॒ः प्रेष्ठ॒ः स ह्ये॑षां ब॒भूव॒ परा॑ च॒ वक्ष॑दु॒त प॑र्षदेनान् ॥ २३ ॥

अध॑ । यत् । रा॒जा॒ना॒ । गोऽइ॑ष्टौ । सर॑त् । स॒रण्युः॑ । का॒रवे॑ । ज॒रण्युः॑ ।
विप्रः॑ । प्रेष्ठः॑ । सः । हि । ए॒षा॒म् । ब॒भूव॑ । परा॑ । च॒ । वक्ष॑त् । उ॒त । प॒र्ष॒त् । ए॒ना॒न् ॥ २३ ॥

**वेङ्कट०** सम्प्रति यत् हे राजानौ! मित्रावरुणौ! गवाम् इच्छायाम् सरत् सरणशीलः यज्ञं प्रति कारवे कर्म कुर्वते[3] अङ्गिरसां गणाय स्तोत्रम् इच्छन्। सः अयम् विप्रः एषाम् अङ्गिरसां प्रियतमः भवतु, परा च ब्रवीतु तेषां कर्तव्यम्, अपि च पारयतु एनान् इति ॥ २३ ॥

अधा॒ न्व॑स्य॒ जेन्य॑स्य पु॒ष्टौ वृ॒था रेभ॑न्त ईमहे॒ तदू॒ नु ।
स॒रण्यु॑रस्य सू॒नुरश्वो॒ विप्र॑श्चासि॒ श्रव॑सश्च सा॒तौ ॥ २४ ॥

अध॑ । नु । अ॒स्य॒ । जेन्य॑स्य । पु॒ष्टौ । वृ॒था॑ । रेभ॑न्तः । ई॒म॒हे॒ । तत् । ऊँ इति॑ । नु ।
स॒रण्युः॑ । अ॒स्य॒ । सू॒नुः । अश्वः॑ । विप्रः॑ । च॒ । अ॒सि॒ । श्रव॑सः । च॒ । सा॒तौ ॥ २४ ॥

**वेङ्कट०** पृथक्कृत्य वरुणं [1]स्तौति। अथ[1] क्षिप्रम् अस्य वरुणस्य पुष्ट्यर्थम्, स्तुतिभिर्जेतव्यस्य तत्[4] स्वभूतं गोधनम् अनायासेन तं स्तुवन्तः याचामहे। सरणशीलः अस्य पुत्रभूतः[5] अश्वः। वरुणाद्धयश्वो जातः। अथ प्रत्यक्षः। स त्वं वरुण! मेधावी च भवसि, स्तोतॄणाम् अन्नस्य [1]दातौ च[1] प्रवृत्तः ॥ २४ ॥

यु॒वोर्यदि॑ स॒ख्याया॒स्मे शर्धा॑य॒ स्तोमं॑ जुजु॒षे नम॑स्वान् ।
वि॒श्वत्र॒ यस्मि॒न्ना गिरः॑ समी॒चीः पू॒र्वीव॑ गा॒तुर्दाश॑त् सू॒नृता॑यै ॥ २५ ॥

यु॒वोः । यदि॑ । स॒ख्याय॑ । अ॒स्मे इति॑ । शर्धा॑य । स्तोम॑म् । जु॒जु॒षे । नम॑स्वान् ।
वि॒श्वत्र॑ । यस्मि॑न् । आ । गिरः॑ । स॒म्ऽई॒चीः । पू॒र्वीऽइ॑व । गा॒तुः । दाश॑त् । सू॒नृता॑यै ॥ २५ ॥

**वेङ्कट०** युवोः यदि सख्याय अस्माकं बलवते स्तोमम् सेवते हविष्मान् अध्वर्युणा सङ्गृहीतेन हविषा तद्वान् होता। यस्मिन् सख्ये सिद्धे सति सर्वस्मिन् जनपदे गिरः समीच्यः आ

---

१-१. नास्ति वि[2] अ[1]. २. नास्ति वि[1]. ३. कुरुते वि[1]. ४. तव वि[1]. ५. पुत्रः वि[2].

गच्छन्ति उदाराणाम् इदं गृहाण इदं गृहाण इत्यादिका उदिताः, प्राची इव दिक्, प्रयच्छन्ति। उदारः सूनृतायै वाचे देवानां स्तुतिं श्रुत्वा प्रयच्छतीति ॥ २५ ॥

स गृ॒णा॒नो अ॒द्भिर्दे॒ववा॒निति॑ सु॒बन्धु॒र्नम॑सा सू॒क्तैः।
वर्ध॑दु॒क्थैर्वचो॑भि॒रा हि नू॒नं व्यध्वै॑ति॒ पय॑स उ॒स्रिया॑याः ॥ २६ ॥

सः। गृ॒णा॒नः। अ॒त्ऽभिः। दे॒वऽवा॑न्। इति॑। सु॒ऽबन्धुः॑। नम॑सा। सु॒ऽउ॒क्तैः।
वर्ध॑त्। उ॒क्थैः। वचः॑ऽभिः। आ। हि। नू॒नम्। वि। अध्वा॑। ए॒ति॒। पय॑सः। उ॒स्रिया॑याः ॥

वेङ्कट० सः वरुणः स्तूयमानः अद्भिः देवताभिस्तद्वान् इति शोभनबन्धुः नमस्कारेण सूक्तैः च सोऽयं वर्धताम्[1]। उक्थैः[2] उच्यमानैः आ गच्छतु। इदानीम्[3] तस्य यागार्थं गोपयसः मार्गः वि एति स्तनाग्राणि क्षरन्तीति ॥ २६ ॥

त ऊं॒ षु णो॑ म॒हो यज॑त्रा भू॒त दे॑वास ऊ॒तये॑ स॒जोषाः॑।
ये वाजाँ॒ अन॑यता वि॒यन्तो॒ ये स्था निचे॑तारो॒ अमू॑राः ॥ २७ ॥

ते। ऊँ॒ इति॑। सु। नः॒। म॒हः। य॒ज॒त्राः॒। भू॒त। दे॒वा॒सः॒। ऊ॒तये॑। स॒ऽजोषाः॑।
ये। वाजा॑न्। अन॑यत। वि॒ऽयन्तः॑। ये। स्थ। नि॒ऽचे॒तारः॑। अमू॑राः ॥ २७ ॥

वेङ्कट० ते अस्माकम् सुष्ठु महते हे यष्टव्याः! भवत देवाः! रक्षणाय सङ्गताः, ये च यूयं मह्यं पशून् अनयत सत्राद् विविधं गच्छन्तः अङ्गिरसः, ये च भवथ निचेतारः विवेक्तारोऽर्थानाम् अमूढाः इति अङ्गिरस आशास्त इति ॥ २७ ॥

[4]इति अष्टमाष्टके प्रथमाध्याये त्रिंशो वर्गः[4] ॥

व्याख्यत् प्रथममध्यायम् अष्टमस्याष्टकस्य सः।
जजान यो जह्नुकुले लौहित्यो माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाऽष्टके प्रथमोऽध्यायः समाप्तः ॥

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके प्रथमोऽध्यायः ॥



१. °ताद् वि[1] अ[2]. २. उदकैरथ वि[2] अ[1]. ३. तदा° वि[2] अ[1]. ४-४. नास्ति मूको.

## अथ द्वितीयोऽध्यायः ।

वेङ्कट० 'ये यज्ञेन दक्षिणया' व्याचिख्यासति माधवः ।
मन्त्रब्राह्मणयोरर्थे वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

मन्त्रे-मन्त्रे[1] ऋषीन् ब्रूते भगवांस्त्विह शौनकः ।
छन्दांसि देवताश्चैव किं तथार्थं न भाषते ॥ २ ॥

तेष्विहार्थे[2] न तात्पर्यम् इति वक्तुं न युज्यते ।
पदे क्रमे च कुरुते यस्माद् यत्नम् अतन्द्रितः ॥ ३ ॥

छन्दोदेवतयोः[3] कृत्वा सामान्याल्लक्षणं पुनः ।
प्रतिमन्त्रं च वदति[4] किमर्थं न तथाऽवदत्[5] ॥ ४ ॥

सुज्ञानोऽर्थस्ततो[6] नोक्त इति कश्चिदभाषत[7] ।
दुर्ज्ञानोर्थस्ततो[8] नोक्त इति 'केचिद् व्यवस्थिताः'[9] ॥ ५ ॥

ननु च ब्राह्मणार्थश्च[10] दुर्ज्ञानः कथ्यते कथम् ।
कथयन्ति हि कर्माणि कल्पसूत्रैः समञ्जसम् ॥ ६ ॥

अत्र ब्रूमो ब्राह्मणार्थम् अपि मध्यमबुद्धयः ।
अपरे चानुधावन्ति केवलादपि पाठतः ॥ ७ ॥

समाना बहवो वेदाः सन्ति न्यायाश्च लौकिकाः ।
ब्राह्मणार्थो[11] बहुविदा[12] शक्यो ज्ञातुं प्रयत्नतः ॥ ८ ॥

[13]न्यायशब्दौ ब्राह्मणेषु भवेतां विशयौ यदि ।
वदन्ति बहुधा तत्र कल्पसूत्रकृतोऽपि च[13] ॥ ९ ॥

इन्द्राण्येन्द्रस्य संवादो 'वि हि सोतोरसृक्षत'[14] ।
न तस्मिन् गहने सूक्ते विवेकं शौनकोऽब्रवीत् ॥ १० ॥

न दोषा बहुधा वादे[15] ब्राह्मणे दर्शनात् तथा ।
ब्राह्मणार्थो हि बहुधा कल्पसूत्रैरुदीर्यते[16] ॥ ११ ॥

---

१. मन्त्रोम अ[१]. २. तेष्विवार्थे° मूको. ३. °दैव° वि[१,२] अ[१]. ४. भवति वि[२] अ[१] ५. तद्राव° वि[१]. ६. सुज्ञातोऽ° वेंऋअ. ७. काचिद्व्यवस्थिता अ[१]; केचिदवस्थिता वेंऋअ. ८. दुर्मनो° वि[२] अ[१]. ९-९. काचिदभाषत अ[१]; केचिदभाषत वेंऋअ; कश्चिद्व्यवस्थिता वि[२]. १०. °णार्थोपि वेंऋअ. ११. °णार्थे वि[१]. १२. °विधा अ[१]. १३-१३. नास्ति वि[२] अ[१]; आरम्भे द्वितीयश्लोकोऽयम् वि[१]. १४. ऋ १०,८६,१. १५. नास्ति वि[१] अ[१]. १६. °सूक्तैरु वि[१].





ननु शाखा बहुविधा कल्पसूत्रकृतोऽपि च ।
एकैकामाश्रिताः शाखाम् अन्याश्चाम्वाशयात् पुनः ॥ १२ ॥

न युक्तः परिहारोऽयं जैमिनिः सर्ववेदवित् ।
अर्थन्निराकृतं तेन कार्यं बौधायनोऽब्रवीत् ॥ १३ ॥

एवं बहून्युपादाय ब्राह्मणानीह भाषते ।
वैकल्पिकान् बहूनर्थान् एवं कात्यायनादयः ॥ १४ ॥

मा प्राक्षीरितष्ठ न वयं जानीमोऽत्र विनिर्णयम् ।
ब्रूते यास्कस्तु मन्त्रार्थं शाकल्यश्चानुधावति ॥ १५ ॥



[ ६२ ]

[1]नाभानेदिष्ठो मानव ऋषिः । विश्वे देवा देवता, १-६ अङ्गिरसो वा, ८-११ सावर्णेर्दानम् । जगती छन्दः; ५,८,९ अनुष्टुभः; ६-७ प्रगाथः (=६ बृहती, ७ सतोबृहती ); १० गायत्री; ११ त्रिष्टुप्[1] ।

ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।
तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ १ ॥

ये । यज्ञेन । दक्षिणया । सम्ऽअक्ताः । इन्द्रस्य । सख्यम् । अमृतऽत्वम् । आनश ।
तेभ्यः । भद्रम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ १ ॥

**वेङ्कट०** नाभानेदिष्ठः । ये यूयम् अहीनैकाहसत्राणि कुर्वन्तः यज्ञेन[2] दक्षिणया च सङ्गताः इन्द्रस्य सख्यम् अमृतत्वम् च आनशिध्वे, तेभ्यः युष्मभ्यम् कल्याणम् अस्तु अङ्गिरसः! । ते इदानीम् आगतम् प्रति-गृह्णीत मनोः पुत्रं मां सुप्रज्ञाः![3] ॥ १ ॥

य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे वलम् ।
दीर्घायुत्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ २ ॥

ये । उत्ऽआजन् । पितरः । गोऽमयम् । वसु । ऋतेन । अभिन्दन् । परिऽवत्सरे । वलम् ।
दीर्घायुऽत्वम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ २ ॥

**वेङ्कट०** पणिभिरपहृतम् गोमयम् वसु ये[4] उदाजन् पितरः अङ्गिरसः, ये च यज्ञेन अभिन्दन् संवत्सरे पर्यागते सत्रान्ते वलम् असुरम्, तेभ्यो युष्मभ्यम् दीर्घायुष्ट्वम् अस्तु अङ्गिरसः! इति ॥ २ ॥

---

१-१. नास्ति मूको. २. यज्ञे वि[2] अ[1]. ३ °प्रज्ञाम् वि[1]. ४. यदा वि[2] अ[1].

य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ३ ॥

ये । ऋतेन । सूर्यम् । आ । अरोहयन् । दिवि । अप्रथयन् । पृथिवीम् । मातरम् । वि ।
सुप्रजाःऽत्वम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ३ ॥

**वेङ्कट०** ये यज्ञेन[1] दिवि सूर्यम् आ अरोहयन्, पृथिवीम् च मातरम् वि अप्रथयन्, [2]तेभ्यो युष्मभ्यम्[2] सुपुत्रत्वम् अस्तु अङ्गिरसः! इति ॥ ३ ॥

अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ४ ॥

अयम् । नाभा । वदति । वल्गु । वः । गृहे । देवऽपुत्राः । ऋषयः । तत् । शृणोतन ।
सुऽब्रह्मण्यम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ४ ॥

**वेङ्कट०** अयम् नाभानेदिष्ठः वदति कल्याणम् युष्माकम् यज्ञे। हे देवानां पुत्राः! ऋषयः! तत् यूयं शृणुत। [2]तेभ्यो युष्मभ्यम् ब्रह्मवर्चसम्[2] अस्तु अङ्गिरसः! इति ॥ ४ ॥

विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥५॥

विऽरूपासः । इत् । ऋषयः । ते । इत् । गम्भीरऽवेपसः ।
ते । अङ्गिरसः । सूनवः । ते । अग्नेः । परि । जज्ञिरे ॥ ५ ॥[3]

**वेङ्कट०** प्रमाणतो रूपतश्च नानारूपाः ऋषयः ते अमी गम्भीरकर्माणः, ते इमे अङ्गिरसः पुत्राः, ते इमेऽङ्गिरसः अग्नेः जाताः[4]। अङ्गारेभ्योऽङ्गिरा जातस्ततोऽङ्गिरसो जाता इति ॥ ५ ॥

[5]इति अष्टमाष्टके द्वितीयाध्याये प्रथमो वर्गः[5] ॥

ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते ॥ ६ ॥

ये । अग्नेः । परि । जज्ञिरे । विऽरूपासः । दिवः । परि ।
नवऽग्वः । नु । दशऽग्वः । अङ्गिरःऽतमः । सचा । देवेषु । मंहते ॥ ६ ॥

**वेङ्कट०** ये[6] अग्नेः परि जाताः विविधरूपाः द्युलोकात, तेषां[7] मध्ये अङ्गिरसां वरिष्ठः अयमग्निः नवग्वः च [8]दशग्वः च[8] सह देवेषु स्थितो [9]मह्यं प्रयच्छति। अङ्गिरसां सत्रमासीनानां केचन नवसु मास्सु उदतिष्ठन् केचन दशसु मास्सु इत्यङ्गिरसामयनम् उक्तम्। तेषामग्निर्नवग्वश्च[9] दशग्वश्चोक्तः ॥ ६ ॥

---

१. वज्रेन वि[2]; वज्रेण अ[1]; यज्ञन वि[1]. २-२. °भ्यो वो यम्नत्र° वि[3]. ३. या. (११,१७) व्याख्यानं द्र. ४. °ताः यः वि[1]. ५-५. नास्ति मूको. ६. नास्ति वि[1]. ७. तेषामेवां वि[2] अ[1]. ८-८. नास्ति वि[2] अ[1]. ९-९. नास्ति अ[1].

इन्द्रेण युजा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम् ।
सहस्रं मे दददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत ॥ ७ ॥

इन्द्रेण । युजा । निः । सृजन्त । वाघतः । व्रजम् । गोऽमन्तम् । अश्विनम् ।
सहस्रम् । मे । ददतः । अष्टऽकर्ण्यः । श्रवः । देवेषु । अक्रत ॥ ७ ॥

वेङ्कट० इन्द्रेण सहायेन निर्-अगमयन् वोढारः अङ्गिरसः पणिभिरवरुद्धम् व्रजम् गवाश्वयुक्तम् । तेऽमी सम्प्रति मह्यम् सहस्रम् अष्टकर्णीः विस्तृतकर्णीः गाः प्रयच्छन्तः कीर्तिम् देवेषु अकुर्वन्निति । सप्तभिरङ्गिरसः स्तुताः । तत्र देवतानुक्रमण्यां शौनकः—

"ऋषयोऽङ्गिरसस्तुष्टा यद्दुर्मानवाय तु ।
तत्पुण्यानि च कर्माणि 'ये यज्ञेने(न' इ)त्यकीर्तयत् ॥
सावर्णिना च यद् दत्तं मानवाय महद्वसु ।
तदुक्तं सूक्तशेषेण 'प्र नूनं जायतामयम्' " ॥

एवं च सर्वानुक्रमण्याम् 'ये यज्ञेनैकादशाद्याः षडङ्गिरसां [1]स्तुतिर्वा' ( ऋअ २,१०,६२ ) इत्यादि । अथवा सप्त अङ्गिरसां[1] स्तुतिर्वेति समीचीनम् इति प्रतिभाति ॥ ७ ॥

प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।
यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥ ८ ॥

प्र । नूनम् । जायताम् । अयम् । मनुः । तोक्मऽइव । रोहतु ।
यः । सहस्रम् । शतऽअश्वम् । सद्यः । दानाय । मंहते ॥ ८ ॥

वेङ्कट० प्र-जातो भवतु, अयम् क्षिप्रम् मनुः तोक्म इव रोहतु बीजम् यथा जलक्लिन्नं[2] रोहति, यः अयं मनुः गवाम् सहस्रम् बह्वश्वम् सद्यः एव दानाय प्रेरयति ॥ ८ ॥

न तमश्नोति कश्चन दिव इव सान्वारभम् ।
सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथे ॥ ९ ॥

न । तम् । अश्नोति । कः । चन । दिवःऽइव । सानु । आऽरभम् ।
सावर्ण्यस्य । दक्षिणा । वि । सिन्धुःऽइव । पप्रथे ॥ ९ ॥

उद्गीथ० [3]यम् माम् अङ्गिरसः सकाशं प्रेषयति मनुः[3], तम् माम् अङ्गिरसः सकाशं वेगेन

---

१-१. स्तुतिर्वा इत्यनादि रथवां सता भङ्गिरजां मूको. २. बल° वि². ३-३. ममाङ्गिरस्सकाशं प्रेषति मन्त्रः मूको.

गच्छन्तम् न अश्नोति न प्राप्नोति विधारयितुम् कः चन कश्चिदपि, वेगेनापीत्यर्थः। किमिव। दिवः इव सानु आरभम् यथा द्युलोकस्य सानु समुच्छ्रितं देशम् आरभम् संस्प्रष्टुं न प्राप्नोति कश्चिद् अपुण्यकृत्, एवम्। त्वया प्रेषितः सन् अहमङ्गिरसः सकाशं शीघ्रं गच्छामीत्यर्थः। कस्मात्। यतः सावर्ण्यस्य मनोः। सवर्ण एव सावर्ण्यः। सवर्णास्तु दक्षकन्यायां[1] दक्षेण ब्रह्मलोके देवधर्मेण स्वयमुत्पादिताश्चत्वारो मनवः। सावर्ण्यस्य मनोरुपदेश्यत्वेन[2] सम्बन्धिनी दक्षिणा अङ्गिरःसत्रोपयोज्या गोसहस्रदक्षिणा[3] वि पप्रथे मे लब्धव्यत्वेन मम मनसि विविधं विस्तीर्यते। किमिव। सिन्धुः इव यथा सिन्धुर्नदी विविधं विस्तीर्यते, एवम् ॥ ९ ॥

वेङ्कट० न तम्[4] आरब्धुम् कः-चिद् आप्नोति दिवः इव समुच्छ्रितम् आदित्यम्। यथा मनुः प्रयच्छति, तथा[4] नान्यः शक्नोति दातुमित्यर्थः। तस्य सावर्ण्यस्य इयम् [5]दक्षिणा नदी इव[5] पृथिव्याम् वि प्रथते ॥ ९ ॥

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा। यदुस्तुर्वश्च मामहे ॥ १० ॥

उत। दासा। परिऽविषे। स्मद्दिष्टी इति स्मत्ऽदिष्टी। गोऽपरीणसा।

यदुः। तुर्वः। च। ममहे ॥ १० ॥

उद्गीथ० उपचयं दर्शयति— उत अपि दासा दासौ 'दासृ दाने', 'दसु उपक्षये' वा। दातारौ वा धनानाम्, उपक्षपयितारौ वा शत्रूणाम् यदुतुर्वशौ राजानौ स्मद्दिष्टी स्मच्छब्दः प्रशस्तवचनः। दिष्टिर्दानम्। प्रशस्तदानौ गोपरीणसा ''परीणसा' (निघ ३, १) इति[6] बहुनाम। [6]बह्व्यो गावो ययोरिति[6] बहुव्रीहौ समासे पूर्वनिपातश्चास्य छान्दसत्वात् प्रयोगस्य। बहुगू। यदुः तुर्वः[8] च पदवचने पदैकदेशवचनम् एतत्, 'अयं नाभा वदति' (ऋ १०,६२,४) इतिवत्। तुर्वशश्च परिविषे परिवेषणाय। परिवेषणेन चात्र तत्पूर्वको भोगो लक्ष्यते। मम भोगायेत्यर्थः। मामहे मंहतेः दानार्थस्य, 'मह पूजायाम्' इत्यस्य वा एतद्रूपम्। गोसहस्रं मह्यं दत्तवान् गोसहस्रप्रदानेन मां पूजितवान् वा ॥ १० ॥

वेङ्कट० अपि च सावर्णेः दासा मनोः भोजनाय प्रशस्तदेशनौ परिणद्धपशू परिवृतौ गोभिः[9] यदुः च तुर्वः[10] च प्रयच्छतः प्रेषयतः[11] पशून्। [12]प्रत्येकमन्वयाद् एकवचनमिति[12] ॥ १० ॥

सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा।
सावर्णेर्देवाः प्र तिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम् ॥ ११ ॥

सहस्रऽदाः। ग्रामऽनीः। मा। रिषत्। मनुः। सूर्येण। अस्य। यतमाना। एतु। दक्षिणा।

सावर्णेः। देवाः। प्र। तिरन्तु। आयुः। यस्मिन्। अश्रान्ताः। असनाम। वाजम् ॥ ११ ॥

---

१. °न्यायाः मूको. २. °देश्यर्थेन मूको. ३. °स्राद° मूको. ४. नास्ति वि[2] अ[1]. ५-५. °क्षिणां दिवः वि[2] अ[1]. ६-६. नास्ति मूको. ७-७. बह्वी मूको. ८. तुर्वशुः मूको. ९. गोभिः वि[2] अ[1]. १०. तुर्वशः वि[1]. ११. प्रेषितौ वि[1]. १२-१२. °मन्वयादेकमन्वयादेक° वि[2] अ[1].

**उद्गीथ०** गोसहस्रप्राप्त्युपायप्रदर्शनेन परितुष्टस्य आशीर्वचनमेतत् । सहस्रदाः प्राप्त्युपायप्रदर्शनेन गोसहस्रस्य दाता ग्रामणीः पुत्रादिसङ्घातस्य दानेन नेता मा रिषत् मा हिंसिष्ट केनचित् मनुः मम पिता । किञ्च अस्य मनोरुपदेश्यत्वेन सम्बन्धिनी दक्षिणा अङ्गिरसस्तत्रोपयोज्या गोसहस्रलक्षणा सूर्येण सह यतमाना दातुः फलप्रदानाय सङ्गच्छमाना सूर्यप्राप्तिलक्षणं फलं प्रयच्छन्ती सतीत्यर्थः, एतु मां प्रति स्वत्वेन आगच्छतु । किञ्च सावर्णेः सवर्ण एव सावर्णिः[1] । सावर्ण्यस्य मनोः अस्मत्पितुः आयुः जीवितम् देवाः सर्वे प्र तिरन्तु प्रवर्धयन्तु, यस्मिन् मनौ सति, यस्य मनोः प्रसादादित्यर्थः, अश्रान्ताः उपार्जनखेदेन अखिन्नाः सन्तः वयम् असनाम सम्भक्तवन्तः वयं लब्धवन्तः इत्यर्थः, वाजम् अन्नं बलं सङ्घातं वा गोसहस्रलक्षणम् ॥ ११ ॥

**वेङ्कट०** सहस्रस्य दाताऽयं गवां[2] ग्रामस्य नेता मनुः मा रिष्टो भवतु । सूर्येण च अस्य दक्षिणा गच्छन्ती[3] सङ्गच्छताम् । परस्मिँल्लोके[4] तस्यास्य सवर्णपुत्रस्य मनोः देवाः वर्धयन्तु जीवितम्, यस्मिन् अश्रान्ताः वयं भजेमहि अन्नं गोलक्षणमिति ॥ ११ ॥

[5]इति अष्टमाष्टके द्वितीयाध्याये द्वितीयो वर्गः[5] ॥

## [ ६३ ]

[4]गयः प्लात ऋषिः । विश्वे देवा देवता, पञ्चदशीषोडश्योः पथ्या स्वस्तिः । जगती छन्दः, पञ्चदशी त्रिष्टुब्वा, अन्त्ये त्रिष्टुभौ[4] ।

परावतो ये दिधिषन्त आप्यं मनुप्रीतासो जनिमा विवस्वतः ।
ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवन्तु नः ॥ १ ॥

पराऽवतः । ये । दिधिषन्ते । आप्यम् । मनुऽप्रीतासः । जनिम । विवस्वतः ।
ययातेः । ये । नहुष्यस्य । बर्हिषि । देवाः । आसते । ते । अधि । ब्रुवन्तु । नः ॥ १ ॥

**उद्गीथ०** उत्तरे सूक्ते द्वे 'परावतः', 'कथा देवानाम्' इत्येते सप्तदशके वैश्वदेवे गयो ददर्श । परावतः दूरात्, आगत्येति शेषः, ये देवाः दिधिषन्ते धारयन्ति कुर्वन्ति अस्माभिः सह आप्यम् आपित्वं स्तुत्यत्वस्तोतृत्वेज्यत्वयष्टृत्वलक्षणम् मनुप्रीतासः मनुना तर्पिताः, येषां च देवानाम् जनिम जन्म विवस्वतः आदित्यस्य सकाशात्[6] स्थितिकरणद्वारेण, ये च देवाः ययातेः राज्ञः नहुष्यस्य नहुषपुत्रस्य बर्हिषि वेदिस्तरणे आसते यागाङ्गत्वेन तिष्ठन्ति, ते[7] देवाः अधि ब्रुवन्तु नः । 'अधीत्युपरिभावम् ऐश्वर्यं वा' ( या १,३ ) । उपरि भूत्वा वदन्तु आदिशन्तु अस्मान्, इदं दृष्टादृष्टफलं शुभं कर्म कुरुतेति ईश्वरा भूत्वा अस्मान् वदन्त्वित्यर्थः[8] ॥ १ ॥

---

१. सावर्णः वि[1]; सावर्ण्यः वि[2] अ. २. नास्ति वि[1]. ३. °च्छन्ति वि[2] अ[1]. ४. अपरा° वि[1]. ५-५. नास्ति मूको ६. सकाशात् यजमानस्य सकाशात् वि[2] अ. ७. नास्ति मूको. ८. °दन्त कुर्विस्य° मूको.

**वेङ्कट०** गयः प्लातः। दूराद् आगत्य ये धारयन्ति ज्ञातेयम्। तदेवाह — मनुष्यैः प्रीताः धारयन्ति विवस्वतः जन्म मनुष्यान् इति, ययातेः च ये नहुषपुत्रस्य यज्ञे देवाः आसते, ते देवाः अधि[1] ब्रुवन्तु अस्मानिति ॥ १ ॥

विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि वः ।
ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवम् ॥ २ ॥

विश्वा । हि । वः । नमस्यानि । वन्द्या । नामानि । देवाः । उत । यज्ञियानि । वः ।
ये । स्थ । जाताः । अदितेः । अत्ऽभ्यः । परि । ये । पृथिव्याः । ते । मे । इह । श्रुत । हवम् ॥

**उद्गीथ०** हि यस्मात् विश्वा सर्वाणि[2] वः युष्माकम् नामानि रूढानि गौणानि क्रियाजानि च नमस्यानि नमस्कारार्हाणि स्तुत्यर्हाणि चेत्यर्थः, हे देवाः! उत अपि यज्ञियानि यज्ञार्हाणि चेत्यर्थः, वः युष्माकं सम्बन्धीनि। अतः कारणात् ये यूयम् स्थ भवथ जाताः उत्पन्नाः अदितेः देवमातुः [3]सकाशाद्, दिवीति[3] शेषः। अद्भ्यः परि 'आपः' (निघ १,३) इत्यन्तरिक्षनाम। अन्तरिक्षस्य चोपरि ये जाताः। ये पृथिव्याः उपरि जाताः। ते सर्वेऽपि देवाः मे मम इह अस्मिन् यज्ञे वर्तमानस्य हवम् यागार्थम् आह्वानम् श्रुत शृणुत यूयम् ॥ २ ॥

**वेङ्कट०** विश्वानि हि वः नमस्कार्याणि स्तोतव्यानि च शरीराणि, अपि च देवाः! तानि यज्ञियानि युष्माकम्। ये यूयं दिवः अन्तरिक्षात् पृथिव्याः च जाताः, ते मे इह आगत्य शृणुत हवम् इति ॥ २ ॥

येभ्यो माता मधुमत् पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान् वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ ३ ॥

येभ्यः । माता । मधुऽमत् । पिन्वते । पयः । पीयूषम् । द्यौः । अदितिः । अद्रिऽबर्हाः ।
उक्थऽशुष्मान् । वृषऽभरान् । सुऽअप्नसः । तान् । आदित्यान् । अनु । मद । स्वस्तये ॥ ३ ॥

**उद्गीथ०** येभ्यः आदित्येभ्यः माता जननी मधुमत् मधुस्वादुमत् पिन्वते सिञ्चते ददातीत्यर्थः, पयः वृष्ट्युदकं क्षीरं वा स्तन्यलक्षणम्। कीदृशम्। पीयूषम् आप्याययितृ। द्यौः दीप्ता स्तुत्या वा अदितिः देवमाता अद्रिबर्हाः अद्रिभिः मेघैः परिवृद्धा, उक्थशुष्मान् उक्थानि शस्त्राणि तदुपलक्षितसर्वस्तुतिबलान् वृषभरान् वृष्टिनिमित्तसङ्ग्रामान् वा स्वप्नसः सुकर्मणः[4] सुरूपान् वा सुप्रज्ञान् वा तान् आदित्यान् अनु मद अनुपूर्वम्[5] स्तुहि तर्पय वा हे मम कर्मात्मन्!। किमर्थम्। स्वस्तये अविनाशाय आत्मनः वृद्ध्यर्थमित्यर्थः ॥ ३ ॥

**वेङ्कट०** येभ्यः देवेभ्यः माता मधुमन्तं सारम् पिन्वते पीयूषम् द्यौः च अदीना परिवृद्धमेवा।

---

१. नास्ति वि[2] अ[1]. २. कर्माणि मूको. ३-३. °शादिति वि[1]. ४. °कर्माणः मूको. ५. अपूर्वम् मूको.

द्यावापृथिव्यौ हविरुत्पादयतः तान् स्तुतिबलान् वृष्टेराहर्तॄन् सुकर्मणः आदित्यान् अनु[1] स्तुहि[2] अविनाशायेति ॥ ३ ॥

नृचक्ष॑सो अनि॑मिषन्तो अ॒र्हणा॑ बृ॒हद् दे॒वासो॑ अमृत॒त्वमा॑नशुः ।
ज्यो॒तीर॑था॒ अहि॑माया॒ अना॑गसो दि॒वो व॒र्ष्माणं॑ वसते स्व॒स्तये॑ ॥ ४ ॥

नृऽचक्ष॑सः । अनि॑ऽमिषन्तः । अ॒र्हणा॑ । बृ॒हत् । दे॒वासः॑ । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः॒ ।
ज्योतिः॒ऽर॑थाः । अहि॑ऽमायाः । अना॑गसः । दि॒वः । व॒र्ष्माण॑म् । व॒स॒ते॒ । स्व॒स्तये॑ ॥ ४ ॥

**उद्गीथ०** नृचक्षसः कृताकृतप्रत्यवेक्षणार्थम् अनुग्रहबुद्धया वा नराणां द्रष्टारः । कथम् । अनिमिषन्तः अक्षिनिमेषम् अकुर्वन्तः सन्तः अर्हणा अर्हणेन पूजया च, युक्ता इति शेषः । बृहत् महच्च अमृतत्वम् मरणवर्जितत्वम् देवासः देवा आदित्याः आनशुः प्राप्तवन्तः । किञ्च ज्योतीरथाः दीप्तिमण्डलरथाः अहिमायाः अहीनप्रज्ञा वा अहेर्वा मेघस्य असुरस्य वा मायाभिः परवञ्चन· प्रज्ञाभिः प्रज्ञावन्तः अनागसः अनपराधाः निर्दोषा इत्यर्थः, दिवः द्युलोकस्यापि सकाशात् वर्ष्माणम् परिवृद्धताम्[3] वसते आत्मन्याच्छादयन्ति धारयन्तीत्यर्थः, अथवा दिवः द्युलोकस्यापि वर्ष्माणं वृद्धत्वं महत्त्वं वसते आच्छादयन्ति स्वेन तेजसा । किमर्थम् । स्वस्तये सर्वस्याऽविनाशाय वृद्धय इत्यर्थः ॥ ४ ॥

**वेङ्कट०** नृचक्षसः नृणां द्रष्टारः [4]निमेषम् अकुर्वाणाः[4] लोकस्य परिचारणार्थम् बृंहितम् अमृतत्वम् देवाः प्राप्ताः । दीप्तरथाः अहन्तव्यप्रज्ञाः अनागसः आदित्याः लोकस्य समुच्छ्रितं देशम् अधिवसन्ति लोकस्याऽविनाशायेति ॥ ४ ॥

स॒म्राजो॒ ये सु॒वृधो॑ य॒ज्ञमा॑य॒युरप॑रिह्वृता दधि॒रे दि॒वि क्षय॑म् ।
ताँ आ वि॑वास॒ नम॑सा सुवृ॒क्तिभि॑र्म॒हो आ॑दि॒त्याँ अदि॑तिं स्व॒स्तये॑ ॥ ५ ॥

स॒म्ऽराज॑ः । ये । सु॒ऽवृध॑ः । य॒ज्ञम् । आ॒ऽय॒युः । अप॑रिऽह्वृताः । द॒धि॒रे । दि॒वि । क्षय॑म् ।
तान् । आ । वि॒वा॒स॒ । नम॑सा । सु॒वृ॒क्तिऽभि॑ः । म॒हः । आ॒दि॒त्यान् । अदि॑तिम् । स्व॒स्तये॑ ॥ ५ ॥

**उद्गीथ०** सम्राजः सम्यग् दीप्ताः ये आदित्याः सुवृधः सुष्ठु वृद्धाश्च यज्ञम् आययुः आगताः अङ्गभावाय अपरिह्वृताः अहिंसिताः केनचिदपि दधिरे धारयन्ति कुर्वन्तीत्यर्थः, दिवि द्युलोके क्षयम् निवासम्, तान् आ विवास परिचर हे मम कर्मात्मन्! नमसा हविरन्नेन सुवृक्तिभिः दोषैः सुष्ठु वर्जिताभिः स्तुतिभिश्च महः महतः[5] आदित्यान् अदितिपुत्रान् अदितिम् च स्वस्तये अविनाशाय आत्मनः वृद्धयर्थमित्यर्थः ॥ ५ ॥

**वेङ्कट०** सर्वेषां राजानः ये सुप्रवृद्धाः[6] यज्ञम् आयान्ति, अहिंसिताः धारयन्ति च द्युलोके निवासम् ।

---

१. नास्ति वि[2] अ[1]. २. तुभ्यं वि[2] अ[1]; स्तु वि[1]. ३. °तराम् मूको. ४-४. हिमेषं कु° वि[2]; °र्वाणः वि[1]; हिमेषां कु° अ[1]. ५, महान्तः मूको. ६. सु वि[1].

तान् परिचर हविषा स्तुतिभिश्च महतः[1] आदित्यान् अदितिम् च स्वस्तये ॥ ५ ॥

[2]इति अष्टमाष्टके द्वितीयाध्याये तृतीयो वर्गः[2] ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन॑ ।
को वोऽध्वरं तुविजाता अरं करद् यो नः पर्षदत्यंहः स्वस्तये ॥ ६ ॥

कः । वः । स्तोम॑म् । राधति । यम् । जुजो॑षथ । विश्वे॑ । देवासः । मनुषः । यति॑ । स्थन॑ ।
कः । वः । अध्वरम् । तुविऽजाताः । अर॑म् । करत् । यः । नः । पर्ष॑त् । अति॑ । अंहः । स्वस्तये॑ । ६ ॥

**उद्गीथ०** कः मनुषः मनुष्यः वः युष्माकम् स्तोमम् स्तुतिम् राधति राधयति[3] संसाधयति करोतीत्यर्थः, यम् मनुष्यम् जुजोषथ स्तुतिश्रवणेन सेवध्वे सततं यूयम्, येनास्मत्स्तुतिश्रवणाय चिरात् आगतवन्त इत्युपालम्भवचनमेतत्[4]। किञ्च हे विश्वे देवासः! यति परिमाणतः स्थन[5] स्थ भवथ यूयम्। किम् अल्पपरिमाणा येन कियन्तोऽपि अस्मत्स्तुतिश्रवणाय शीघ्रा नाऽऽयाथ[6] इत्यभिप्रायः। किञ्च कः वा स मनुष्यः वः युष्मदर्थम् अध्वरम् यज्ञं हे तुविजाताः! बहुभूताः! अरम् पर्याप्तम् करत् करोति, यः यजमानमनुष्यः अग्निचित्सव्यादिकः नः अस्मानपि दृष्टमात्र एव पर्षत् पारयति अति अंहः पापम् स्वस्तये अविनाशाय। उपालम्भवचनम्[7] एतदपि। एतदुक्तं भवति— को वाऽन्यो[8] मत्तो विशिष्टतरः युष्माकं स्तोता यष्टा च अस्ति, येन 'यष्टॄन् स्तोतॄश्चास्मान्' प्रति शीघ्रं नाऽऽगतवन्तः स्थ यूयमिति ॥ ६ ॥

**वेङ्कट०** कः स्तोता युष्माकम् स्तोमम् संराधयति[10], यम् यूयं सेवध्वे। हे विश्वे देवा! ज्ञातारः यूयं यत्सङ्ख्याः भवथ। छान्दसो डतिः[11]। कः च वः यज्ञम् हे बहुजननाः! अलङ्करोति, यः यज्ञः अस्मान् अंहः अति[12] पारयति स्वस्तये ॥ ६ ॥

येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।
त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ ७ ॥

येभ्यः । होत्रा॑म् । प्रथमाम् । आऽयेजे । मनुः । समि॑द्धऽअग्निः । मन॑सा । सप्त । होतृ॑ऽभिः ।
ते । आदित्याः । अभ॑यम् । शर्म॑ । यच्छत । सुऽगा । नः । कर्त॑ । सुऽपथा॑ । स्वस्तये॑ ॥ ७ ॥

**उद्गीथ०** येभ्यः युष्मभ्यम् आदित्येभ्यः होत्राम् आहुतिम् प्रथमाम् प्रकृष्टाम् आयेजे आभिमुख्येन मर्यादया वा ददाति मनुः मनुष्यो यजमानः समिद्धाग्निः सन्दीप्ताहवनीयाद्याग्निः मनसा अत्र वाक्यशेषोऽध्याहार्यः। वषट्करिष्यन् देवानां मनसा, ध्यायतीति शेषः, सप्त होतृभिः सप्तभिः ऋत्विग्भिः होतृपूर्वैः सह, ते यूयं हे आदित्याः! अदितेः पुत्राः! विश्वे देवाः!

---

१. अहत वि[2] अ[1]. २-२ नास्ति मूको. ३ धारयति वि[1] अ. ४. °म्भनवच° वि[2] अ. ५. स्थान मूको. ६. नाया वि[2] अ; नेया वि[1]. ७ अवचनम् मूको. ८. वोऽन्यो वि[1]. ९-९. अस्मत्स्ते.तृभ्यश्च मूको. १०. °यन्ति मूको. ११. डतिः वि[2] अ[1]; धतिः वि[1] १२. वनि मति वि[1]; अत्तिमति वि[2] अ[1].

अभयम् विनाशभयरहितम् शर्म विमानगृहं स्वर्गसुखं वा यच्छत दत्त अस्मभ्यम्। स्वर्गं गच्छतां च नः अस्माकम् सुगा सुगमान् सुपथा स्वर्गमार्गान् कर्त कुरुत यूयम् स्वस्तये असुरादिपरिपन्थिसकाशाद् अस्माकम् ॥ ७ ॥

वेङ्कट० येभ्यः युष्मभ्यं मनुष्याणामग्रे प्रथमम् यज्ञम् आभिमुख्येन इष्टवान्[१] मनुः समिद्धाग्निः श्रद्दधानेन मनसा सप्तभिश्च वषट्कर्तृभिः सह, ते यूयम् आदित्याः! अभयम् सुखम् च प्र-यच्छत, सुगानि सुपथानि च अस्माकम् स्वस्तये गन्तव्यानि कुरुतेति ॥ ७ ॥

य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।
ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ ८ ॥

ये । ईशिरे । भुवनस्य । प्रऽचेतसः । विश्वस्य । स्थातुः । जगतः । च । मन्तवः ।
ते । नः । कृतात् । अकृतात् । एनसः । परि । अद्य । देवासः । पिपृत । स्वस्तये ॥ ८ ॥

उद्गीथ० ये यूयं भवन्तः ईशिरे सदा ईशते भुवनस्य भूतजातस्य वृष्ट्युदकस्य वा स्वर्गादिलोकजातस्य वा प्रचेतसः प्रवृद्धप्रज्ञाः विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतः च जङ्गमस्य मन्तवः स्वरूपतो ज्ञातारः सर्वज्ञा इत्यर्थः, ते यूयम् नः अस्मान् कृतात् प्रतिषिद्धसेवनेन जनितात् अकृतात् विकृताद्[२] विहिताकरणेन [३]च कृतादित्यर्थः[३], एनसः पापात् परि सर्वतः अद्य वर्तमाने अहनि देवासः! पिपृत पालयत स्वस्तये अविनाशायास्माकम् ॥ ८ ॥

वेङ्कट० ये ईशते जगतः सुमतयः विश्वस्य[४] स्थावरस्य जङ्गमस्य च वेदितारः, ते अस्मान् कृतात् कायिकात् अकृतात् मानसजात् च पापात् अद्य देवाः! परि पारयत स्वस्तये ॥ ८ ॥

भरेष्विन्द्रं सुहवं हवामहेऽहोमुचं सुकृतं दैव्यं जनम् ।
अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ ९ ॥

भरेषु । इन्द्रम् । सुऽहवम् । हवामहे । अंहःऽमुचम् । सुऽकृतम् । दैव्यम् । जनम् ।
अग्निम् । मित्रम् । वरुणम् । सातये । भगम् । द्यावापृथिवी इति । मरुतः । स्वस्तये ॥ ९ ॥

उद्गीथ० भरेषु सङ्ग्रामेषु इन्द्रम् सुहवम् स्वाह्वानम् हवामहे आह्वयामो वयम्, आत्मनः पालनार्थमिति शेषः। किञ्च अंहोमुचम् अंहसः पापाद् मोचयितारं भक्तजनस्य सुकृतम् पुण्यकृतम् दैव्यम् देवेषु भवम् जनम् उक्तव्यतिरिक्तं च आह्वयामः। अग्निम् मित्रम् वरुणम् च आह्वयामः सातये शत्रुधनलाभाय। भगम् द्यावापृथिवी मरुतः च आह्वयामः स्वस्तये सर्वप्रकाराविनाशाय च ॥ ९ ॥

वेङ्कट० सङ्ग्रामेषु इन्द्रम् स्वाह्वानम् हवामहे अंहसो मोचकम्, अन्यं च सुकर्माणम् दैव्यम् जनम् इत्युक्त्वा[५] तं जनम् उद्दिशति—अग्निम् इति ॥ ९ ॥

---

१. इष्टवान् वि[२] अ[१]. २. नास्ति वि[१]. ३-३. चाकृता° वि[१]. ४. यज्ञस्य वि[१]. ५. °त्युक्त्वा वि[१].

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥ १० ॥

सुऽत्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् । सुऽशर्माणम् । अदितिम् । सुऽप्रनीतिम् ।
दैवीम् । नावम् । सुऽअरित्राम् । अनागसम् । अस्रवन्तीम् । आ । रुहेम । स्वस्तये ॥ १० ॥

**उद्गीथ०** सुत्रामाणम् सुष्ठु त्रात्रीं[1] भक्तजनस्य पालयित्रीम् पृथिवीम् विस्तीर्णां प्रख्यातां वा द्याम् दीप्तां स्तुत्यां वा अनेहसम् क्रोधरहिताम् प्रसन्नचेतसमित्यर्थः, सुशर्माणम् सुसुखां[2] स्वाश्रयां वा अदितिम् अदीनाम् अनुपक्षीणाम् सुप्रणीतिम् सुष्ठु प्रणीतिम् स्तोतॄणां यष्टॄणां च ईप्सितान् कामान् प्रति प्रापयित्रीमित्यर्थः, नावम् स्वरित्राम् नौः अर्यते[3] प्रणुद्यते येन तद् अरित्रम् । अवर्णकं केन्द्रपालमिति च अपभ्रंशेन नाविकानां[4] प्रसिद्धम् । शोभनस्तुतियागप्रणोदनामित्यर्थः[5], अनागसम् पापरहिताम् अस्रवन्तीम् आ रुहेम अधितिष्ठेम प्राप्नुयामेत्यर्थः, स्वस्तये अविनाशाय । अथवा एवंगुणविशिष्टाम् स्तुतिनावं यज्ञनावं वा दैवीं देवसम्बन्धिनीं देवार्थां शोभनर्त्विग्यजमानारित्राम्[6] अस्रवन्तीं विच्छेदम् अगच्छन्तीम्[7] देव-प्रसादात् सदा कुर्याम[8] इत्याशास्महे इत्यर्थः । [9]किमर्थम् । अस्माकम्[9] अविनाशाय अमृतत्वप्राप्तय इत्यर्थः ॥ १० ॥

**वेङ्कट०** सुष्ठु त्रायन्तीम् विस्तृताम् द्याम् अपापाम् सुसुखाम् अदीनाम् सुष्ठु प्रणेत्रीम् देवसम्बन्धिनीम् नावम् शोभनारित्राम् निर्दोषाम् अस्रवन्तीम् आ रुहेम स्वस्तये इति[10] द्याम् अभिप्रेत्य आहेति ॥ १० ॥

[11]इति अष्टमाष्टके द्वितीयाध्याये चतुर्थो वर्गः[11] ॥

विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुतः ।
सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥ ११ ॥

विश्वे । यजत्राः । अधि । वोचत । ऊतये । त्रायध्वम् । नः । दुःऽएवायाः । अभिऽह्रुतः ।
सत्यया । वः । देवऽहूत्या । हुवेम । शृण्वतः । देवाः । अवसे । स्वस्तये ॥ ११ ॥

**उद्गीथ०** हे यजत्राः! यष्टव्याः! देवाः! विश्वे सर्वे यूयम् अधि वोचत अधिष्ठाय ब्रूत अस्मान् ऊतये अवनाय, सर्वकामप्राप्तये भवत यूयम् इति सर्वान् कामान् अवाप्नुतेति ब्रूतेत्यर्थः[12] । किञ्च त्रायध्वम् नः पालयतास्मान् दुरेवायाः दुस्तर्यायाः अभिह्रुतः अभिहिंसित्र्याः राक्षसजातेः सकाशात् । किञ्च सत्यया सद्गुणग्राहिण्या देवहूत्या देवा आहूयन्ते यया सा देवहूतिः, तया देवहूत्या स्तुत्या वः युष्मान् शृण्वतः स्तुतीराकर्णयतः हुवेम सदा आह्वयेमेत्याशास्महे वयं हे देवाः! । किमर्थम् । अवसे हविषा युष्माकं तर्पणाय, स्वस्तये अस्माकं च अविनाशाय ॥ ११ ॥

**वेङ्कट०** हे विश्वे देवाः! अधि ब्रूत रक्षणार्थम् । [13]त्रायध्वम् अस्मान्[13] दुरेवायाः अभिहिंसित्र्याः । दुरेवा

---

१. त्रातारम् वि[२] अ. २. °खम् मूको. ३. नास्ति मूको. ४. नाव° मूको. ५. °णोदाना° मूको. ६. °त्रम् मूको. ७. °मवग° मूको. ८. °र्यां मूको. ९-९. किमस्माकं मूको. १०. °ति तत् वि[१]. ११-११. नास्ति मूको. १२. भवते° मूको. १३-१३. त्रायस्व अस्मात् वि[१].

दुर्गतिः । सत्यया युष्मान् स्तुत्या आह्वयामः शृण्वतः[१] उक्तं हे देवाः! रक्षणायाविनाशाय च ॥११॥

अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥ १२ ॥

अप । अमीवाम् । अप । विश्वाम् । अनाहुतिम् । अप । अरातिम् । दुःऽविदत्राम् । अघऽयतः ।
आरे । देवाः । द्वेषः । अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥ १२ ॥

उद्गीथ० हे देवाः! अप युयोतन अपनयतेत्यर्थः[२], अस्मत् अस्मत्तः आरे दूरे दूरमित्यर्थः, अमीवाम् रोगजातिम्[३] । अप नयत च यूयम् विश्वाम् सर्वाम् अनाहुतिम् । अनाहुत्या अत्रायज्ञो[४] लक्ष्यते । अयज्ञशीलतां चेत्यर्थः । अप नयत च अरातिम् अदानशीलतां चेत्यर्थः । अपनयत दुर्विदत्राम् दुर्ज्ञानम्[५] कुत्सितां द्रोहबुद्धिमित्यर्थः, अघायतः अस्माकं पापं कर्तुमिच्छतः सम्बन्धिनीम् । किञ्च आरे दूरे अस्मत् अस्मत्तः द्वेषः द्वेष्टॄन् अप युयोतन अपनयत । एवं सर्वं यथोक्तं कृत्वा उरु बहु नः अस्मभ्यम् शर्म विमानगृहं स्वर्गसुखं वा यच्छत दत्त स्वस्तये अविनाशाय ॥ १२ ॥

वेङ्कट० अस्मत्तः अमीवादिकम् दूरे पृथक् कुरुत । अमीवा रक्षः । अनाहुतिः अहोता । अदाता [६]अरातिः । दुर्विदत्रा[६] दुष्टा बुद्धिः पापमिच्छतः । इत्थं[७] द्वेष्टॄन् सर्वान् अस्मत्तो दूरे पृथक् कुरुत । विस्तीर्णम् सुखम् अस्मभ्यम् यच्छत स्वस्तये ॥ १२ ॥

अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ १३ ॥

अरिष्टः । सः । मर्तः । विश्वः । एधते । प्र । प्रऽजाभिः । जायते । धर्मणः । परि ।
यम् । आदित्यासः । नयथ । सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥ १३ ॥

उद्गीथ० अरिष्टः अहिंसितः केनचित् सः मर्तः मनुष्यः विश्वः सर्वः एधते वर्धते वृद्ध्या सर्वप्रकारया, प्रजाभिः च पुत्रपौत्रादिभिः[८] प्र जायते प्रवृद्धो भवति धर्मणः परि यज्ञकर्मणः उपरि, देवयागार्थमित्यर्थः[९], यम् मनुष्यम् हे आदित्यासः! अदितेः पुत्राः! नयथ प्रापयथ सर्वत्र प्रवर्तयथ सुनीतिभिः सुनयैः अति विश्वानि दुरिता अतीत्य सर्वाणि पापानि स्वस्तये अविनाशाय ॥ १३ ॥

वेङ्कट० अविनष्टः सः मर्तः विश्वः वर्धते, प्र जायते च प्रजाभिः कर्मणः अनन्तरम्, यम्[१०] आदित्याः! अति नयथ सुनयनैः विश्वानि दुरितानि स्वस्तये ॥ १३ ॥

---

१. शृणुत वि[२] अ[१]. २. °पयात मूको. ३. रोगेजा° मूको. ४, अत्र य° मूको. ५. दुर्विज्ञा° वि[१]. ६-६. °राता राकरोनिदु° वि[१], ७. इच्छन् वि[१]. ८. °त्राद्याभिः वि[१]. ९. देव…र्थः वि[२] अ; देवय… र्थामित्यर्थः वि[१]. १०. यदा वि[१].

यं दे॑वा॒सोऽव॑थ॒ वाज॑साता॒ यं शूर॑साता मरुतो हि॒ते धने॑ ।
प्रा॒त॒र्यावा॑णं॒ रथ॑मिन्द्र सान॒सिमरि॑ष्यन्त॒मा रु॑हेमा स्व॒स्तये॑ ॥ १४ ॥

यम् । दे॒वा॒सः॒ । अव॑थ । वाज॑ऽसातौ । यम् । शूर॑ऽसाता । म॒रु॒तः॒ । हि॒ते । धने॑ ।
प्रा॒तः॒ऽयावा॑नम् । रथ॑म् । इ॒न्द्र॒ । सा॒न॒सिम् । अरि॑ष्यन्तम् । आ । रु॒हे॒म॒ । स्व॒स्तये॑ ॥ १४ ॥

**उद्गीथ०** हे देवासः! विश्वे देवाः! हे मरुतः! हे इन्द्र! सर्वे यूयम् यम्[1] रथम् आत्मीयम् अवथ[2] गमयथ वाजसातौ राक्षससङ्ग्रामे, यम् च रथम् अवथ शूरसाता शूरसातौ असुरसङ्ग्रामे हिते प्रिये शत्रु-धने प्राप्तव्यत्वेन निमित्तभूते प्रियं शत्रुधनं प्राप्तुमित्यर्थः, तम् रथम् प्रातर्यावाणम् प्रातःप्रातः यज्ञान् प्रति गन्तारम् सानसिम् अत्यर्थं[3] सम्भक्तारं शत्रुधनानाम् अरिष्यन्तम् अहिंस्यमानम् अविनाशिनमित्यर्थः, आ रुहेम युष्माभिः सह सायुज्यं प्राप्य अधितिष्ठेमेति आशास्महे वयम् स्वस्तये अविनाशायात्मनः ॥ १४ ॥

**वेङ्कट०** यम् देवाः! रक्षथ अन्नभजने, यम् च युद्धे हे मरुतः! निहितं धनमुद्दिश्य, तं प्रातरेव युद्धं प्रति गन्तारम् रथम् भजनीयम् इन्द्र! अरिष्यन्तम् आ रुहेम अविनाशाय ॥ १४ ॥

स्व॒स्ति नः॑ प॒थ्या॑सु॒ धन्व॑सु स्व॒स्त्य१॒॑प्सु वृ॒जने॒ स्व॑र्वति ।
स्व॒स्ति नः॑ पुत्रकृ॒थेषु॒ योनि॑षु स्व॒स्ति रा॒ये म॑रुतो दधातन ॥ १५ ॥

स्व॒स्ति । न॒ः । प॒थ्या॑सु । धन्व॑ऽसु । स्व॒स्ति । अ॒प्ऽसु । वृ॒जने॑ । स्वः॑ऽवति ।
स्व॒स्ति । न॒ः । पु॒त्र॒ऽकृ॒थेषु॑ । योनि॑षु । स्व॒स्ति । रा॒ये । म॒रु॒तः॒ । द॒धा॒त॒न॒ ॥ १५ ॥

**उद्गीथ०** स्वस्ति अविनाशम्[4] नः अस्मभ्यम् पथ्यासु गृहेषु धन्वसु च अटवीषु निरुदकासु । स्वस्ति अविनाशम् अप्सु च उदकेषु सामुद्रनादेयादिषु वृजने च सङ्ग्रामे । कीदृशे। स्वर्वति सर्वयुद्धोपकरणवति । स्वस्ति अविनाशम् नः अस्माकम् पुत्रकृथेषु पुत्राणां कर्त्रीषु जनयित्रीषु योनिषु स्त्रीयोनिषु । स्वस्ति अविनाशमेव राये धनाय च हे मरुतः! दधातन धत्त दत्तेत्यर्थः ॥ १५ ॥

**वेङ्कट०** स्वस्ति अस्माकम् मार्गयोग्येषु सोदकेषु देशेषु निरुदकेषु च धन्वसु[5] । स्वस्ति च उदकेषु बले च सेनालक्षणे सर्वैरायुधैर्युक्ते[6] । स्वस्ति अस्माकम् पुत्राणां कर्तृपूतपादकेषु स्त्रीणाम् योनिषु । स्वस्ति धनाय मरुतः! कुरुतेति ॥ १५ ॥

स्व॒स्तिरिद्धि प्रप॑थे॒ श्रेष्ठा॒ रेक्ण॑स्वत्य॒भि या वा॒ममेति॑ ।
सा नो॑ अ॒मा सो अर॑णे॒ नि पा॑तु स्वावे॒शा भ॑वतु दे॒वगो॑पा ॥ १६ ॥

---

१. नास्ति मूको. २. अप मूको. ३. इत्यर्थः मूको. ४. °नशाय मूको. ५. धन्वे॒ मूको.
६. °कैः मूको.

स्वस्तिः । इत् । हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामम् । एति ।
सा । नः । अमा । सो इति । अरणे । नि । पातु । सुऽआवेशा । भवतु । देवऽगोपा ॥ १६ ॥

**उद्गीथ०** इत् इत्यवधारणे। हि इति पदपूरणः। मध्यस्थाना स्त्री स्वस्तिरित्युच्यते। स्वस्तिः इत् स्वस्तिरेव नान्या काचित् देवता प्रपथे श्रेष्ठा प्रकृष्टे पथि अन्तरिक्षलक्षणे अतिशयेन प्रशस्या रेक्णस्वती वृष्ट्युदकधनेन धनवती, एति गच्छति च या वामम् अभि वननीयं प्रशस्यं वा स्वं प्रायणीयादिहविः प्रति, सा स्वस्तिः नः अस्मान् नि पातु नियमेन रक्षतु। क्व। अमा गृहे स्थिता। सो अरणे अथारण्ये नि पातु। अथवा निसो लोपोऽत्र द्रष्टव्यः। निररणे गृहान्निर्गमने 'गृहाद् बहिश्चेत्यर्थः'[1]। किञ्च स्वावेशा भवतु सूपसर्पा वा अस्तु देवगोपा देवी चासौ गोपा गोप्त्री च सर्वस्य वृष्टिद्वारेणेति देवगोपा। देवानां वा गोपा गोप्त्री देवगोपा। देवाः गोपाः गोप्तारो यस्याः सा वा[2] देवगोपा[3] ॥ १६ ॥

**वेङ्कट०** स्वस्तिकरी भवतु गन्तुमुद्युक्तानाम् प्रपथे। श्रेष्ठा धनवती पृथिवी या [4]अभि गच्छति[4] वननीयं[5] यज्ञम्, सा अस्मान्[6] गृहे रक्षतु, सैव अरमणे अरण्यादिके। स्वावेशा अस्माकं भवतु देवा यस्याः गोप्तारः ॥ १६ ॥

**एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।**
**ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥**

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

**उद्गीथ०** एव एवम् उक्तेन प्रकारेण प्लतेः ऋषेः सूनुः पुत्रः गयो नाम मनीषी मेधावी अवीवृधत् वर्धितवान् वीर्येण वः युष्मान् हे विश्वे सर्वे आदित्याः! अदितेः पुत्राः! हे अदिते! हे (?) ईशानासः सर्वस्येश्वराः हे (?) नरः मनुष्याकाराः शूराः वेत्यर्थः। कथं वर्धितवान्। यतः अमर्त्येन अमर्त्यसदृशेन गुणैः देवतुल्येनेत्यर्थः। अथवा 'देवो भूत्वा देवानप्येति' ( बृउ ४,१० ) इति वचनात् अमर्त्येन सता, देवेनेत्यर्थः। अमर्त्येन[7] गयेन अस्तावि स्तुतः जनः दिव्यः दिवि भवः, सर्वदेवजन इत्यर्थः। स्तूयमानस्य च वीर्यं वर्धत इत्यत एवमुच्यते— वर्धितवान् वीर्येणेति ॥ १७ ॥

**वेङ्कट०** [8]एवम् प्लतेः[8] पुत्रः अवीवृधत् युष्मान् हे विश्वे आदित्याः! अदिते! स्तोता प्रज्ञः। ईश्वराः[9] धनस्य भवन्ति मनुष्याः अमर्त्येन देवजनेन[10] स्तुतेन। स दैव्यः जनः गयेन मया अस्तावि इति ॥ १७ ॥

[11]इति अष्टमाष्टके द्वितीयाध्याये पञ्चमो वर्गः[11] ॥

---

१-१. नास्ति वि[२]. २. नास्ति मूको. ३. नास्ति वि[१]. ४-४. हि गच्छती वि[२] अ[१]. ५. वन्दनीयं वि[१]. ६. अस्माद् वि[२] अ[१]. ७. यद्वा अमर्त्येन वि[१]; अमर्त्येन द्वामर्त्येन वि[२] अ. ८-८. नास्ति वि[१]. ९. ब्धवर वि[२] अ[१]. १०. °वयजनेन वि[२] अ[१]. ११-११. नास्ति मूको.

[ ६४ ]

[1]गयः प्लात ऋषिः । विश्वे देवा देवता । जगती छन्दः, द्वादशी अन्त्ये च त्रिष्टुभः[1] ।

कथा देवानां कतमस्य यामनि सुमन्तु नाम शृण्वतां मनामहे ।
को मृळाति कतमो नो मयस्करत् कतम ऊती अभ्या ववर्तति ॥ १ ॥

कथा । देवानाम् । कतमस्य । यामनि । सुऽमन्तु । नाम । शृण्वताम् । मनामहे ।
कः । मृळाति । कतमः । नः । मयः । करत् । कतमः । ऊती । अभि । आ । ववर्तति ॥ १ ॥

**उद्गीथ०** देवानाम् स्तुतीः[1] शृण्वताम् मध्ये कतमस्य देवस्य सुमन्तु सुज्ञानम् सुबोधं सर्वजनप्रकाशं प्रसिद्धं रूढम् नाम आदित्यचन्द्रेन्द्रादि यामनि यान्ति यजमानाः अनेन स्वर्गापवर्गौ प्रति, याति[3] वा स्वयं देवान् प्रतीति यामा यज्ञः तस्मिन् यामनि यज्ञे कथा कथं केन प्रकारेण मनामहे मन्यतेः अर्चतिकर्मणः एतद्रूपम् ( तु. निघ ३,१४ )। मन्यामहे स्तुम इत्यर्थः । नामस्तुत्या चाऽत्र नामवत एव स्तुतिः लक्ष्यते। स्तुतिभाजां[4] सर्वदेवानां मध्ये कतमं देवम् अमन्यन्त स्तुतिभाजम्, केन प्रकारेण वयं यज्ञे स्तुम इत्यर्थः । स्तुतश्च सन् कः देवः मृळाति मृडयति सुखयति अस्मान् दृष्टफलप्रदानेन। कतमः वा देवः नः अस्माकम् मयः स्वर्गापवर्गसुखम् करत् करोति। कतमः देवः ऊती [5]ऊत्या गत्या अस्माकं[5] यज्ञगमनमार्गेण इत्यर्थः, अभि आ ववर्तति [6]अस्मदभिमुखम् आवर्तते[6] [7]यागाङ्गतया वा यागं[7] गच्छ तीत्यर्थः ॥ १ ॥

**वेङ्कट०** कथम् देवानाम् मध्ये कतमस्य वा यामनि[8] सुष्ठु स्तुत्यम् नाम शृण्वताम् उच्चारयामः । कः अस्मान् मृडयति[9] 'मृळतिरुपदयाकर्मा' इति यास्कः ( १०,१० )। कतमः अस्माकम् सुखम् करोति। कतमः [10]रक्षणाय अभि आ गच्छति[10] ॥ १ ॥

क्रतूयन्ति क्रतवो हृत्सु धीतयो वेनन्ति वेनाः पतयन्त्या दिशः ।
न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधि कामा अयंसत ॥ २ ॥

क्रतुऽयन्ति । क्रतवः । हृत्ऽसु । धीतयः । वेनन्ति । वेनाः । पतयन्ति । आ । दिशः ।
न । मर्डिता । विद्यते । अन्यः । एभ्यः । देवेषु । मे । अधि । कामाः । अयंसत ॥ २ ॥

**उद्गीथ०** क्रतूयन्ति देवार्थं [11]सर्वे यज्ञं[11] कर्तुमिच्छन्तीत्यर्थः, क्रतवः सङ्कल्पाः मम मनोवृत्तय इत्यर्थः । क्व स्थिताः। हृत्सु हृदयेषु, स्थिता इति शेषः, धीतयः बुद्धयश्च । मनोबुद्ध्याख्येन अन्तः करणद्वयेन सङ्कल्पाध्यवसायलक्षणेन अहं देवयागं कर्तुमिच्छामीत्यर्थः । किञ्च वेनन्ति कामयन्ते वेनाः मेधाविनः ऋत्विजो वा। पतयन्ति पतन्ति च गच्छन्ति च आ दिशः प्रतिदेवं,

---

१-१. नास्ति मूको. २. °तिः मूको. ३ या मूको. ४. भाज मूको. ५-५. गत्य ··· अस्मा मूको. ६-६. °खं मा माव° मूको. ७-७, गां गता वा यागा मूको. ८. याने मूको. ९. मृलयाति वि[2] अ[1]. १०-१०. °णायायाग° वि[1], ११-११, सर्वयज्ञं मूको.

यजमानजोषणादौ वर्तन्ते चेत्यर्थः । कस्माद्देवयागमहम्[1] ऋत्विक्सहितः [2]इच्छामि । यस्मात्[2] मर्डिता इष्टादृष्टफलदानेन सुखयिता न विद्यते नास्ते अन्यः कश्चित् एभ्यः देवेभ्यः सकाशात् । यतश्च देवेषु अधि[3] देवानामुपरि मे मम कामाः इच्छा भक्तिरूपाः अयंसत नियता निबद्धा अनुपरता वा अवस्थिता इत्यर्थः, यतश्च सदा देवभक्तोऽहमित्यर्थः ॥ २ ॥

**वेङ्कट०** कर्म कर्तुमिच्छन्ति[4] ह्रत्सु[5] निहिताः । तदेवाह — कामयन्ते प्रज्ञाः, आ गच्छन्ति दिशः दिश्यमानाः [6]कामाः, यतः न मर्डिता[6] विद्यते अन्यः एभ्यः देवेभ्यः । किं बहुना । देवेषु मदीयाः कामाः नियम्यन्ते ॥ २ ॥

**नरा॒शंसं॑ वा पू॒षण॒मगो॑ह्यम॒ग्निं दे॒वेद्ध॑म॒भ्य॑र्चसे गि॒रा ।**
**सूर्या॒मासा॑ च॒न्द्रम॑सा य॒मं दि॒वि त्रि॒तं वात॑मु॒षस॑म॒क्तुम॒श्विना॑ ॥ ३ ॥**

नरा॒शंस॑म् । वा॒ । पू॒षण॑म् । अगो॑ह्यम् । अ॒ग्निम् । दे॒वऽइ॑द्धम् । अ॒भि । अ॒र्च॒से॒ । गि॒रा ।
सूर्या॒मासा॑ । च॒न्द्रम॑सा । य॒मम् । दि॒वि । त्रि॒तम् । वात॑म् । उ॒षस॑म् । अ॒क्तुम् । अ॒श्विना॑ ॥ ३ ॥

**उद्गीथ०** नराशंसम् वा नराशंसोऽत्र यज्ञ उच्यते । वेति समुच्चयार्थे । यज्ञं च पूषणम् च आदित्यम् । कीदृशम् । अगोह्यम् अगूहनीयं सर्वजनप्रकाशमित्यर्थः । अग्निम् च । कीदृशम् देवेद्धम् देवैः इन्द्रादिभिः ऋत्विग्भिर्वा हविषां दातृभिः [7]कर्मार्थं सन्दीपितम्[7] अभि अर्चसे उत्तमस्य स्थाने मध्यमोऽयं व्यत्ययेन । अभ्यर्चामि अभिष्टौमीत्यर्थः । केन । गिरा स्तुत्या । सूर्यामासा चन्द्रमसा सह यमम् च दिवि, स्थितमिति शेषः, त्रितम् त्रिस्थानम् इन्द्रं च वातम् च उषसम् च अक्तुम् रात्रिं च अश्विनौ च ॥ ३ ॥

**वेङ्कट०** नराशंसम् वा पूषणम् वा गूहितुमशक्यम् अग्निम् वा देवैरिद्धम्[8] अभि-ष्टुहि स्तुत्या, सूर्याचन्द्रमसौ च । चन्द्रमसो विशेषणम् मासेति । माः हि चन्द्रमाः[9] । यमम् च दिवि स्थितं त्रिस्थानमिन्द्रं वायुम् उषसम् रात्रिम् अश्विनौ चेति ॥ ३ ॥

**क॒था क॒विस्तु॑वी॒रवा॒न् कया॑ गि॒रा बृह॒स्पति॑र्वावृधते सुवृ॒क्तिभि॑ः ।**
**अ॒ज एक॑पात् सु॒हवे॑भि॒र्ऋक्व॑भि॒रहि॑ः शृणोतु बु॒ध्न्यो॒३॒ हवी॑मनि ॥ ४ ॥**

क॒था । क॒विः । तु॒वि॒ऽरवा॑न् । कया॑ । गि॒रा । बृ॒ह॒स्पति॑ः । व॒वृ॒ध॒ते॒ । सु॒वृ॒क्तिऽभि॑ः ।
अ॒जः । एक॑ऽपात् । सु॒ऽहवे॑भिः । ऋक्व॑ऽभिः । अहि॑ः । शृ॒णो॒तु॒ । बु॒ध्न्य॑ः । हवी॑मनि ॥ ४ ॥

**उद्गीथ०** कथा कथं केन प्रकारेण कविः मेधावी मनुः गयनामा तुवीरवान् 'तुवि' ( निघ ३,१ ) इति बहुनाम । रव-शब्दे[10] च वकारे लुप्ते रशब्दोऽत्र शिष्टो द्रष्टव्यः । तुविरववान्[11] बहुशब्दवान्

---

१. कस्मादेव° वि[2]. २-२. नास्ति मूको. ३-३. अपि मूको. ४. °मिच्छया वि[1] अ[1]; °च्छन्ति प्रज्ञाया ह्रन् वि[1]. ५. सु वि[1]; भृत्सु वि[2] अ[1]. ६-६. कामयतमद्धिता वि[2] अ[1]; कामानम धिता वि[1]. ७-७. °र्थसन्दीपनं मूको. ८. दैवै° वि[1]. ९. तु. या ११,५; SEy १६५-६. १०. °वा च शब्देन मूको. ११. तुवीरान् मूको.

बहुस्तुतिरित्यर्थः, कया कतमया वेत्यर्थः, गिरा स्तुत्या स्तोत्रशस्त्रलक्षणया बृहस्पतिः बृहत्याः स्तुतेः ईश्वरः वावृधते अत्यर्थं वर्धयति देवान् वीर्येण सुवृक्तिभिः सुष्ठु दोषैर्वर्जिताभिः स्तुतिभिः याज्यापुरोनुवाक्यालक्षणाभिश्च । किञ्च अजः अजातः सततगमनः आदित्यः एकपात् 'ब्रह्मणः एकः पादः' इत्यादिनिर्वचनः । अहिः अयनशीलः सततगामी वायुश्च बुध्न्यः बुध्ने अन्तरिक्षे भवः सुहवेभिः शोभनाह्वानैः अस्माभिः ऋत्विग्भिः ऋक्भिः स्तुतिमद्भिश्चेत्यर्थः[1], आहूयमानः स्तूयमानश्चेत्यर्थः, शृणोतु । किम् । सामर्थ्याद् आह्वानं स्तुतिञ्चेति शेषः । क । हवीमनि आह्वयन्ति देवान्, जुह्वति वा हविरस्मिन्निति हविमा यज्ञः ॥ ४ ॥

वेङ्कट० कथम् क्रान्तप्रज्ञोऽग्निः बहुमान् कया वा स्तुत्या बृहस्पतिः वावृधते[2], तथा[3] स्तुतिभिः[4] अजः च एकपात् स्वाह्वानैः स्तोत्रैः । अहिः बुध्न्यः च शृणोतु अस्मान् आह्वाने ॥ ४ ॥

दक्ष॑स्य वादिते॒ जन्म॑नि व्र॒ते राजा॑ना मि॒त्रावरु॒णा वि॑वाससि ।
अतू॑र्तपन्थाः पुरु॒रथो॑ अर्य॒मा स॒प्तहो॑ता॒ विषु॑रूपेषु॒ जन्म॑सु ॥ ५ ॥[5]

दक्ष॑स्य । वा॒ । अ॒दि॒ते॒ । जन्म॑नि । व्र॒ते । राजा॑ना । मि॒त्रावरु॑णा । आ । वि॒वा॒स॒सि॒ ।
अतू॑र्तऽपन्थाः । पु॒रु॒ऽरथः॑ । अ॒र्य॒मा । स॒प्तऽहो॑ता । विषु॑ऽरूपेषु । जन्म॑ऽसु ॥ ५ ॥

उद्गीथ० अत्र एकवाक्यतायै यच्छब्दमध्याहृत्य उत्तरार्धं पूर्वं व्याचक्षते, ह(?) पश्चात् तच्छब्दमध्याहृत्य पूर्वार्धम् । यः[6] दक्षः अतूर्तपन्थाः त्वरावर्जितमार्गः अविहतगतित्वात्[7] प्रसन्नगतिरित्यर्थः, नियतगतिर्वा सदा । पुरुरथः बहुरंहणो महागतिरित्यर्थः । अर्यमा अराणां तमसाम् असुराणां च नियन्ता । सप्तहोता सप्त रश्मयो यत्र रसान् जुह्वति प्रक्षिपन्ति सः, सप्तर्षयो वा भरद्वाजादयो यं ह्वयन्ति स्तुवन्ति स सप्तहोता । विषुरूपेषु प्रत्यहम् अन्यत्र चान्यत्र च आकाशप्रदेशे [8]उद्गमनाद् अतुल्यरूपेषु[8] जन्मसु उत्पत्तिषु उदयलक्षणासु, वर्तत इति शेषः । तस्य[9] दक्षस्य वा अदिते! अदितिरत्र नैरुक्तपक्षे प्रातस्तनी सन्ध्या । [10]सा पुनरवश्यायरसानुप्रदानसम्बन्धाद् मध्यस्थानानुसम्बद्धोच्यते[10] । हे अदिते! प्रातस्तनि सन्ध्ये! दक्षस्य वा दक्षनाम्नः आदित्यस्य [11]वा उद्यतः[11] जन्मनि व्रते जन्माख्ये कर्मणि उदयलक्षणे सति । वाशब्दाद् दक्षाद्वा तव जन्मनि सति त्वत्तो जायमाने दक्षे त्वयि जायमाने सतीत्यर्थः । राजानौ सर्वस्येश्वरौ दीप्तौ वा[12] मित्रावरुणा आ विवाससि । 'अहर्वै मित्रो रात्रिर्वरुणः' ( ऐब्रा ४, १० ) इति श्रुतेः अहोरात्रावत्र मित्रावरुणावुच्येते । तौ त्वं परिचरसि अनुप्रविशती सती । अर्धं हि सन्ध्यायाः अहरनुप्रविशति अर्धं रात्रिम् ।

१. स्तुतति ···मद्भि॰ मूको २. वावर्धते वि² अ¹; तथा वावर्धिते वि¹. ३. नास्ति वि¹.
४. स्तुतिः वि¹. ५. या. ( ११,२३ ) व्याख्यातचरी द्र. ६. यत् मूको. ७. हविर्हरितत्वात् वि² अ. ८-८. °मनात्तुल्य° मूको. ९. कस्य वि¹. १०-१०. सा रोवश्यायरसाऽनुप्रदानसंबन्धात् मध्यस्थानाम् वा सा संबद्धोच्यते मूको. ११-११. बान्धतः वि² अ¹; वाध्यतौ वि¹. १२. नास्ति मूको.

ऐतिहासिकपक्षे अदितिर्देवता सम्बोध्योच्यते—हे अदिते! देवमातः! यो दक्षः अतूर्तपन्थाः इत्यादिगुणः तस्य दक्षस्य जन्मनि सति त्वत्तः उत्पत्तौ सत्याम् उदये [1]व्रते कर्मणि[1] च, दृष्टे सति इति शेषः, जगदनुग्रहलक्षणं[2] दक्षस्य कर्म दृष्ट्वेत्यर्थः[3], राजानौ दीप्तौ सर्वलोकेश्वरौ वा मित्रावरुणावपि मम पुत्राविव जगतः[4] कर्म कुर्याताम् इति आ विवाससि आशास्से[5] इत्यर्थः ॥ ५ ॥

वेङ्कट० हे अदिते! यथा दक्षस्य जन्मनि तस्मिन्[6] जाते तस्य यज्ञकर्मणि मित्रावरुणौ पर्यचरः वेदिभूता, एवम् इदानीम् अपि कुरु इति पृथिवीम् आशास्ते। वा-शब्द उपमार्थः। अहिंसितमार्गः बहुरथः[7] अयम् अर्यमा भवति सप्तर्तवो यस्य होतारो नानारूपेषु जन्मसु अन्वहम् उद्यन् इति। 'आदित्यो दक्षः' इत्यादिकं निरुक्तं (११,२३) द्रष्टव्यम् ॥ ५ ॥

[8]इति अष्टमाष्टके द्वितीयाध्याये षष्ठो वर्गः[8] ॥

ते नो॒ अर्व॑न्तो हव॒न॒श्रुतो॒ हवं॒ विश्वे॑ शृण्वन्तु वा॒जिनो॑ मि॒तद्र॑वः ।
स॒ह॒स्र॒सा मे॒धसा॑ताविव॒ त्मना॑ म॒हो ये धनं॑ समि॒थेषु॑ जभ्रि॒रे ॥ ६ ॥

ते । न॒ः । अर्व॑न्तः । ह॒व॒न॒ऽश्रु॑तः । हव॑म् । विश्वे॑ । शृ॒ण्व॒न्तु॒ । वा॒जिन॑ः । मि॒तऽद्र॑वः ।
स॒ह॒स्र॒ऽसाः । मे॒धसा॑तौऽइव । त्मना॑ । म॒हः । ये । धन॑म् । स॒म्ऽइ॒थेषु॑ । ज॒भ्रि॒रे ॥ ६ ॥

उद्गीथ० यच्छब्दसम्बन्धाद् उत्तरोऽर्धः पूर्वं व्याख्येयः। सहस्रसाः मेधसातौ इव हवींषि सहस्राणि सम्भजते[9] इति [10]अयं सहस्रसाः[10] अग्निः। स यथा मेधसातौ यज्ञे हविः सहस्राणि देवान् प्रति आहरति त्मना आत्मना स्वयमेव, एवम्[11] ये महः महत् शत्रुधनम् समिथेषु देवासुरसङ्ग्रामेषु जभ्रिरे शत्रुं जित्वा आहरन्ति आत्मानं प्रति, स्वीकुर्वन्तीत्यर्थः ते विश्वे देवाः अर्वन्तः अरणवन्तो यज्ञं प्रति गमनवन्तः अरः अर्त्तारो वा सर्वत्र गन्तार इत्यर्थः, हवनश्रुतः स्तोतॄणां यष्टॄणां च आह्वानस्य श्रोतारः नः अस्माकम् हवम् आह्वानम् शृण्वन्तु वाजिनः हविरन्नवन्तो बलवन्तो वा वेगवन्त इत्यर्थः, मितद्रवः मितं परिच्छिन्नं महान्तमपि अध्वानम् अप्रतिबन्धेन गन्तारः। अथवा अत्र [12]वाजिनः देवाश्वा रश्मयो[12] वा ॥ ६ ॥

वेङ्कट० ते अस्माकम् अश्वाः ह्वानश्रुतः ह्वानम् विश्वे शृण्वन्तु बलिनः मितमार्गाः परिच्छिन्दन्तोऽध्वानम् सहस्रस्य दातारः यज्ञे इव आत्मनैव ये सङ्ग्रामेषु महत् धनम् हरन्ति शत्रुभ्यः ॥ ६ ॥

प्र वो॑ वा॒युं र॑थ॒युजं॒ पुर॑न्धिं॒ स्तोमै॑ः कृणुध्वं स॒ख्याय॑ पू॒षण॑म् ।
ते हि दे॒वस्य॑ सवि॒तुः सवी॑मनि॒ क्रतुं॑ सच॑न्ते स॒चित॒ः सचे॑तसः ॥ ७ ॥

---

१-१. व्रतकर्मणि मूको. २. भगवदनु° वि[1]; भगदनु° वि[2] अ. ३. दृष्टेवेत्यर्थः मूको. ४. जगतं वि[2] अ. ५. आशाससे वि[2]. ६. तस्माद् वि[2] अ[1]. ७. °बहुवनः वि[2] अ[1]. ८-८. नास्ति मूको. ९. संभजन्ते मूको. १०-१०. असह° मूको. ११. हिदं मूको. १२-१२. वाजिनश्चारश्म° वि[1]; वाजिनो-देवाश्चा रश्म° वि[2].

प्र । वः । वायुम् । रथऽयुजम् । पुरम्ऽधिम् । स्तोमैः । कृणुध्वम् । सख्याय । पूषणम् ।
ते । हि । देवस्य । सवितुः । सवीमनि । क्रतुम् । सचन्ते । सऽचितः । सऽचेतसः ॥ ७ ॥

**उद्गीथ०** वः इति प्रथमार्थे द्वितीया । हे ऋत्विजः! वः यूयम् वायुम् । कीदृशम् । रथयुजम् स्वरथे अश्वानां नियुदाख्यानां सदागमनाय नियोक्तारम् । अविशिष्टं वा देवजनं रथयुजम् स्वरथे अश्वानां प्रतिगमनाय नियोक्तारम्[1] पुरन्धिम् बहुप्रज्ञं बहुकर्माणं वा पूषणम् च आदित्यं च स्तोमैः स्तुतिभिः प्र कृणुध्वम् प्रकर्षेण स्तुतिं कुरुध्वम् । किमर्थम् । सख्याय सखिभावाय स्तुत्यत्वस्तोतृत्वयष्टृत्वेज्यत्वलक्षणाय । कस्मादेवमुच्यध्वे । हि यस्मात् ते यथोक्ताः सर्वे देवाः देवस्य सवितुः सवीमनि प्रसवे[2] अभ्यनुज्ञायाम्, वर्तमाना इति शेषः, देवेन सवित्रा अभ्यनुज्ञाताः सन्त इत्यर्थः, क्रतुम् अस्मद्यागकर्म सचन्ते सेवन्ते अङ्गभावप्रतिपत्त्या सचितः सचेतना विशिष्टविज्ञानोपेता[3] इत्यर्थः, सचेतसः समानचित्ताः ॥ ७ ॥

**वेङ्कट०** प्र कृणुध्वम् यूयम्[4] वायुम् रथस्य योक्तारम्[5] इन्द्रं बहुकर्माणं भगम् स्तोमैः सख्याय पूषणम् च । ते हि देवस्य सवितुः प्रसवे यज्ञं सेवन्ते चित्तयुक्ताः एकबुद्धयः ॥ ७ ॥

त्रिः सप्त सस्रा नद्यो महीरपो वनस्पतीन् पर्वताँ अग्निमूतये ।
कृशानुमस्तॄन् तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥ ८ ॥

त्रिः । सप्त । सस्राः । नद्यः । महीः । अपः । वनस्पतीन् । पर्वतान् । अग्निम् । ऊतये ।
कृशानुम् । अस्तॄन् । तिष्यम् । सधऽस्थे । आ । रुद्रम् । रुद्रेषु । रुद्रियम् । हवामहे ॥ ८ ॥

**उद्गीथ०** त्रिः सप्त त्रीन् वारान्[6] [7]सप्त एकविंशतिमित्यर्थः[7], सस्राः स्रवन्तीः समुद्रं प्रति गन्त्रीः नद्यः नदीः महीः महतीः अपः च वनस्पतीन् च पर्वतान् च अग्निम् च ऊतये अस्माकम् अवनाय रक्षणाय[8] यज्ञं प्रत्यागमनाय तर्पणाय वा कृशानुम् च सोमपालम्[9] अस्तॄन् शत्रुवधाय[10] आयुधानां क्षेप्तॄन् अन्यांश्च देवान् तिष्यम् च नक्षत्रम् अन्यं वा [11]देवविशेषं कञ्चित्[11] सधस्थे सहस्थाने वेद्याख्ये स्थाने स्थितेषु सत्सु रुद्रेषु शब्दकारिषु ऋत्विक्षु रुद्रम् च रुद्रियम् शब्दकारिणम् आ हवामहे आह्वयामहे ॥ ८ ॥

**वेङ्कट०** एकविंशतिसङ्ख्याकाः सरन्तीः नदीः महान्ति[12] च उदकानि वनस्पतीन् शिलोच्चयान् अग्निम् च रक्षणाय कृशानुम् सोमपालं[13] तदनुचरान् इषूणां क्षेप्तॄन् तिष्यम् च नक्षत्रं यज्ञे रुद्रम् च स्तोमार्हम्[14] स्तोतृषु आ ह्वयामहे ॥ ८ ॥

सरस्वती सरयुः सिन्धुरूर्मिभिर्महो महीरवसा यन्तु वक्षणीः ।
देवीरापो मातरः सूदयित्न्वो घृतवत् पयो मधुमन्नो अर्चत ॥ ९ ॥

---

१. वियो° मूको. २. प्रसवे प्रसवे वि[2] अ. ३. विशिष्टविज्ञनेन विशिष्ट° वि[1]; नास्ति वि[2].
४. नास्ति वि[2] अ[1]. ५. योद्धार° वि[2] अ[1]. ६. धारान् मूको. ७-७. सप्तविंश° वि[1]. ८. नास्ति वि[2].
९. स्तोमपा° मूको. १०. अस्य कर्तृत्व° वि[2]. ११-११. °विशेष कश्चित् मूको. १२. महन्ति वि[1].
१३. पालकं वि[1]. १४. स्तोममर्हं वि[2].

सर॑स्वती । स॒रयुः॑ । सिन्धुः॑ । ऊ॒र्मिऽभिः॑ । म॒हः । म॒हीः । अव॑सा । आ । य॒न्तु॒ । व॒क्षणीः॑ ।
दे॒वीः । आपः॑ । मा॒तरः॑ । सू॒द॒यि॒त्न्वः॑ । घृ॒तऽव॑त् । पयः॑ । मधु॑ऽमत् । नः॒ । अ॒र्च॒त॒ ॥ ९ ॥

**उद्गीथ०** [1]सरस्वती सरयुः[1] सिन्धुः इत्येताः तिस्रो[2] नद्यः महीः महत्यः ऊर्मिभिः [3]सह महः महत्[3] उदकम् वक्षणीः वहन्त्यः अवसा तर्पणहेतुना[4] हविषा आत्मनस्तर्पणार्थम् इत्यर्थः, आ यन्तु आगच्छन्तु अस्मद्यज्ञं प्रति स्रवत्यः । आगत्य च तृप्ताः सत्यः देवीः[5] देव्यः आपः सर्वस्य पाव्यः मातरः सर्वस्य मातृभूताः निर्मात्र्यो[6] वा सूदयित्न्वः क्षरित्र्यः घृतवत् क्षरणवद् दीप्तिमद् वा प्रभूतं शुद्धं वेत्यर्थः, पयः उदकम् मधुमत् मधुस्वादयुक्तम्[7] नः अस्मभ्यम् अर्चत अनेकार्थत्वाद् धातूनां दत्तेत्यर्थः ॥ ९ ॥

**वेङ्कट०** तिस्रः इमाः ऊर्मिभिः महतोऽपि महत्योऽत्यन्तं[8] महत्यो रक्षणेन आ गच्छन्तु नद्यः । देव्यः तासाम् आपः मातृभूताः प्रेरयित्र्यः घृतयुक्तम् आत्मीयम् पयः मधुमत् अस्मभ्यम् प्रयच्छन्तु ॥ ९ ॥

उ॒त मा॒ता बृ॒हद्दि॒वा शृ॑णोतु न॒स्त्वष्टा॑ दे॒वेभि॒र्जनि॑भिः पि॒ता वचः॑ ।
ऋ॒भु॒क्षा वाजो॒ रथ॒स्पति॒र्भगो॑ र॒ण्वः शंसः॑ शशमा॒नस्य॑ पातु नः ॥ १० ॥

उ॒त । मा॒ता । बृ॒ह॒त्ऽदि॒वा । शृ॒णो॒तु॒ । नः॒ । त्वष्टा॑ । दे॒वेभिः॑ । जनि॑ऽभिः । पि॒ता । वचः॑ ।
ऋ॒भु॒क्षाः । वाजः॑ । रथः॒ऽपतिः॑ । भगः॑ । र॒ण्वः । शंसः॑ । श॒श॒मा॒नस्य॑ । पा॒तु॒ । नः॒ ॥ १० ॥

**उद्गीथ०** [9]उत अपि च बृहद्दिवा महादीप्तिः माता देवमाता शृणोतु नः अस्माकम् वचः स्तुतिवचनम्, त्वष्टा च शृणोतु, तथा देवेभिः देवैः जनिभिः देवपत्नीभिश्च[9] सह शृणोतु पिता सर्वस्य पितृभूता द्यौः । ऋभुक्षाः महान् वाजः च शृणोतु सौधन्वनः । कीदृशः । रथस्पतिः रथानां करणात् स्वामी, रथकार इत्यर्थः । भगः च शृणोतु रण्वः रमणीयो मरुद्गणः[10] शंसः शंसनीयः स्तुत्यः । सर्व एव यथोक्तः शशमानस्य शंसमानस्य स्तुवतो मम वच इति सम्बन्धः कार्यः । श्रुत्वा च पातु रक्षतु नः[11] अस्मान् ॥ १० ॥

**वेङ्कट०** अपि च माता बृहद्दिवा नाम अस्माकम् शृणोतु । त्वष्टा च देवैः देवपत्नीभिः[12]च पिता वचः शृणोतु, तथा ऋभुक्षाः[12] वाजः च कनीयान् मध्यमः रथस्य पतिः विभ्वा च । भगः रमणीयः स्तुत्यः भवतु स्तोतुः । मरुद्गणश्च अस्मान् रक्षतु ॥ १० ॥

[1]इति अष्टमाष्टके द्वितीयाध्याये सप्तमो वर्गः[1] ॥

र॒ण्वः संदृ॑ष्टौ पितु॒माँ इ॑व॒ क्षयो॑ भ॒द्रा रु॒द्राणां॑ म॒रुता॒मुप॑स्तुतिः ।
गोभिः॑ ष्याम य॒शसो॒ जने॒ष्वा सदा॑ देवास॒ इळ॑या सचेमहि ॥ ११ ॥

---

१. सरयुः सरस्वती वि[1]. २. एतास्तिस्रो वि[2] अ. ३-३. संग्रामहे मूको. ४. तर्पणेन हेतुना वि[1]. ५. हे देवीः मूको. ६. निमन्त्र्यौ मूको. ७. °स्वादुयु° मूको. ८. महतोत्यन्तं वि[2] अ[1]. ९-९ नास्ति मूको. १०. °गणोत्र वि[2] अ. ११. नास्ति वि[1]. १२-१२. त्रुटितम् वि[2] अ[1].

रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः । भद्रा । रुद्राणाम् । मरुताम् । उपऽस्तुतिः ।
गोभिः । स्याम । यशसः । जनेषु । आ । सदा । देवासः । इळया । सचेमहि ॥ ११ ॥

**उद्गीथ०** रण्वः रमणीयः शोभनः संदृष्टौ सन्दर्शने सति पितुमान् अन्नवांश्च क्षयः इव निवास इव भद्रा । एतदुक्तं भवति—यथा सन्दर्शने रमणीयः[१] बहुमृष्टान्नश्च ईश्वरगृहलक्षणनिवासो[२] भद्रो भजनीयः, एवं भद्रा भजनीया सेवनीया श्रोत्रेन्द्रियोपभोगार्हा रुद्राणाम् मरुताम् च अन्येषाञ्च देवानाम् अर्थाय उपस्तुतिः, अस्माभिः कृतेति शेषः । यत एवम् अतः गोभिः, युक्ता इति शेषः, स्याम देवप्रसादाद् भवेमेत्याशास्महे वयम् । यशसः बहुवचनस्य स्थाने व्यत्ययेनेदमेकवचनम् । यशसा यशस्विनश्च जनेषु आ लोकेषु मर्यादया स्याम । किञ्च हे देवासः! इळया हविरन्नेन युष्मान् सदा सचेमहि नित्यं सेवेमहीत्याशास्महे[३] वयम् ॥ ११ ॥

**वेङ्कट०** रमणीयः सन्दर्शने अन्नवान् इव निवासः भवति[४] तेषाम् मरुद्गणः । कल्याणी[५] भवति रुद्रपुत्राणाम् मरुताम् उपस्तुतिः । गोभिः स्याम यशस्विनः जनानां मध्ये । सदा देवाः! अन्नेन च सङ्गच्छेमहि ॥ ११ ॥

यां मे धियं मरुत इन्द्र देवा अददात वरुण मित्र यूयम् ।
तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥ १२ ॥

याम् । मे । धियम् । मरुतः । इन्द्र । देवाः । अददात । वरुण । मित्र । यूयम् ।
ताम् । पीपयत । पयसाऽइव । धेनुम् । कुवित् । गिरः । अधि । रथे । वहाथ ॥ १२ ॥

**उद्गीथ०** याम् धियम् प्रज्ञां स्तुतिविषयाम् मे मह्यम् अददात दत्तवन्तो यूयम् हे मरुतः! इन्द्र! देवाः! वरुण! मित्र!, ताम् धियम् पीपयत वर्धयत यूयम् । किमिव । पयसा इव धेनुम् यथा पयसा क्षीरेण धेनुम् वर्धयति कश्चित् दोग्धा प्रस्नापयन्, एवम् । वर्धयित्वा च कुवित् नामरूपकर्मसम्बन्धाः गिरः स्तुतीः युष्मद्वर्धितमद्बुद्धिजनिताः अधि रथे रथस्योपरि स्थितम्, स्वं-स्वम् आत्मानं प्रतीति शेषः, वहाथ लोडर्थे लेट्[६] । वहथ प्रापयथ यूयम् ॥ १२ ॥

**वेङ्कट०** यत् कर्म मह्यम् हे मरुत्प्रभृतयः! दत्तवन्तः, तत् फलेन आप्याययत पयसा इव धेनुम् । बह्वीश्च अस्मदीयाः स्तुतीः आत्मीयं रथम्[७] प्रापयतेति[८] ॥ १२ ॥

कुविदङ्ग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ ।
नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥ १३ ॥

कुवित् । अङ्ग । प्रति । यथा । चित् । अस्य । नः । सऽजात्यस्य । मरुतः । बुबोधथ ।
नाभा । यत्र । प्रथमम । सम्ऽनसामहे । तत्र । जामिऽत्वम् । अदितिः । दधातु । नः ॥ १३ ॥

---

१. °मणीः मूको. २. °क्षणानिवो मूको. ३. सेवेमेत्या° मूको. ४. °वतु वि[२] अ[१]. ५. °ल्याणे वि[१]. ६. लङ् मूको. ७. नास्ति वि[२]. ८. °पयथेति वि[१].

**उद्गीथ०** कुवित् चित् बह्वपि। किम्। सामर्थ्यात् स्तुतिजातम्। अस्य यजमानस्य नः अस्माकम् ऋत्विजाम् सजात्यस्य समानजातीयस्य सम्बन्धि हे मरुतः! अङ्ग यथा प्रति बुबोधथ क्षिप्रं यथा प्रतिबुध्यध्वे अवगच्छथ शृणुथ[1], तथा शृणुध्वमिति शेषः। एतदुक्तं भवति—अस्य यजमानस्य ब्राह्मणजातीयस्य सम्बन्धिभिः अस्माभिः ऋत्विग्भिः कृताः[2] बह्वीरपि स्तुतीः शृणुतेत्यर्थः। श्रुत्वा च नाभा नाभौ पृथिव्यां नाभिभूतायाम् उत्तरवेद्याम् यत्र प्रथमम् पूर्वम् अन्ययजमानेभ्यः संनसामहे सम्यग् व्याप्नुयामः देवान् स्तुत्या यागेन च, तत्र स्थिताः सन्तः जामित्वम् समानजातीयत्वम् आत्मना सह दत्त यूयम् नः अस्मभ्यम्, अदितिः च दधातु ददातु। सर्वे देवाः! यूयम् अस्मान् तदेव[3] प्रापयतेत्यर्थः॥ १३॥

**वेङ्कट०** बहु अङ्ग मरुतः! प्रति बुध्यध्वम्[4]। सजात्यम् बान्धवम्। यथा अस्य सजात्यस्य अस्मान् विषयभूतान् कुरुथ[5]। नाभ्याः यस्मिन् देशे पृथिव्याः प्रथमम् एव संनसामहे सङ्गच्छेमहि, तत्र एव बान्धवम् मनुष्यैः अस्माकम् अदितिः च करोतु॥ १३॥

ते हि द्यावा॑पृथि॒वी मा॒तरा॑ म॒ही दे॒वी दे॒वाञ्जन्म॑ना य॒ज्ञिये॑ इ॒तः।
उ॒भे बि॑भृत उ॒भयं॒ भरी॑मभिः पु॒रू रेतां॑सि पि॒तृभि॑श्च सिञ्चतः॥ १४॥

ते इति॑। हि। द्यावा॑पृथि॒वी इति॑। मा॒तरा॑। म॒ही इति॑। दे॒वी इति॑। दे॒वान्। जन्म॑ना। य॒ज्ञिये॒ इति॑। इ॒तः।
उ॒भे इति॑। बि॒भृ॒तः। उ॒भय॑म्। भरी॑मऽभिः। पु॒रु। रेतां॑सि। पि॒तृऽभिः॑। च॒। सि॒ञ्च॒तः॥ १४॥

**उद्गीथ०** हि यस्मात् ते द्यावापृथिवी मातरा सर्वस्य मातृभूते मही महत्यौ देवी देव्यौ यज्ञिये यज्ञार्हे सहाऽऽदित्ये[6] देवान् विश्वान् प्रति जन्मना निसर्गेणैव उत्पत्तिकाल एवेत्यर्थः इतः भूते लट्। धारणाय पोषणाय वा गतवत्यौ। तस्मात्[7] कारणाद् एते उभे अपि द्यावापृथिव्यौ बिभृतः धारयतः पुष्णीतः उभयम् देवजनं[8] मर्त्यजनं च। केन बिभृतः। भरीमभिः किरणैः स्वैः-स्वैर्धारणैः[9] पोषणैर्वा[10]। पुरु पुरूणि बहूनि रेतांसि वृष्ट्युदकानि पितृभिः सर्वस्य पातृभिः[11] देवैः सह सिञ्चतः च क्षरतश्च, वृष्टिं जगतः स्थित्यर्थं पातयत इत्यर्थः॥ १४॥

**वेङ्कट०** ते हि द्यावापृथिव्यौ मातरौ महत्यौ देव्यौ देवान् जन्मना एव यज्ञार्हे गच्छतः। उभे बिभृतः उभयम् देवान् मनुष्यांश्च भरणैः[12], पुरूणि चात्मीयानि उदकानि देवैः सङ्गते च सिञ्चतः प्रत्यक्षेण धारयतश्चेति॥ १४॥

वि षा होत्रा॒ विश्व॑मश्नोति॒ वार्यं॒ बृह॒स्पति॑र॒रम॑तिः॒ पनी॑यसी।
ग्रावा॒ यत्र॑ मधु॒षुदु॒च्यते॑ बृ॒हदवी॑वशन्त म॒तिभि॑र्मनी॒षिण॑ः॥ १५॥

वि। सा। होत्रा॑। विश्व॑म्। अ॒श्नो॒ति॒। वार्य॑म्। बृह॒स्पति॑ः। अ॒रम॑तिः। पनी॑यसी।
ग्रावा॑। यत्र॑। म॒धु॒ऽसुत्। उ॒च्यते॑। बृ॒हत्। अवी॑वशन्त। म॒तिऽभिः॑। म॒नी॒षिण॑ः॥ १५॥

---

१. कृणु॰ मूको. २. नास्ति मूको. ३. दैव मूको. ४. बुध्यध्वं वि[२] अ[१]. ५ °रुत वि[२] अ[१].
६. समादित्ये मूको. ७. कस्मात् मूको. ८. देवयजनं मूको. ९. स्वैस्तैर्वा° मूको. १० पुरुषैर्वा मूको.
११. मातृभिः मूको. १२. मरणैः वि[२] अ[२].

**उद्गीथ०** सा होत्रा वाग् अस्मदीया स्तुतिलक्षणा विश्वम् सर्वम् वार्यम् वरणीयं देवजातम् वि अश्नोति गुणग्रहणद्वारेण व्याप्नोति । कीदृशी सा । या बृहस्पतिः बृहतो देवजातस्य वीर्यवर्धनद्वारेण पालयित्री अरमतिः अलंमतिः[1] पर्याप्ता मतिः अस्मदीया यस्याः[2] कर्तृत्वेन सम्बन्धिनी । पर्याप्तया सर्वगुणग्रहणसमर्थया अस्मत्प्रज्ञया कृतेत्यर्थः, पनीयसी पनतिरर्चतिकर्मा । पनितृतरा अन्ययजमानस्तुतितः[3] अतिशयेन स्तोत्री देवानामित्यर्थः व्याप्नुवती[4] च सती । यत्र यस्मिन्[5] ज्योतिष्टोमादौ क्रतौ ग्रावा सोमाभिषवग्रावा मधुषुत् मधुनः सोमस्य अभिषोता उच्यते स्तुत्यः स्तूयत इत्यर्थः । कथम् । बृहत् महत् सुष्ठ्वित्यर्थः[6] । [7]तत्र क्रतौ अवीवशन्त[7] आशिष्यर्थेऽत्र लुङ् । कामयन्ताम् स्तोतुः मतिभिः सामर्थ्यात् प्रसन्नाभिः मनीषिणः मेधाविनो देवाः ॥ १५ ॥

**वेङ्कट०** [8]वि अश्नोति[8] सा वाक् विश्वम् धनम् बृहस्पतिः पर्याप्तस्तुतिः अत्यन्तं देवानां स्तोत्री । यस्याम् होत्रायां सोमसुत् ग्रावा महान् अभिधीयते स्तूयते इत्यर्थः, तं यज्ञं कामयन्ते स्तुतिभिः देवा इति ॥ १५ ॥

एवा कुविस्तुवीरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः ।
उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म ॥ १६ ॥

एव । कुविः । तुविऽरवान् । ऋतऽज्ञाः । द्रविणस्युः । द्रविणसः । चकानः ।
उक्थेभिः । अत्र । मतिऽभिः । च । विप्रः । अपीपयत् । गयः । दिव्यानि । जन्म ॥ १६ ॥

**उद्गीथ०** एव एवम् अनेनोक्तेन प्रकारेण कविः मेधावी तुवीरवान् तुविरववान्[9] बहुस्तुतिरित्यर्थः, ऋतज्ञाः बहुवचनस्य व्यत्ययोऽत्र कार्यः । ऋतज्ञः यज्ञस्य सम्यग्ज्ञाता[10] द्रविणस्युः धनकामः द्रविणसः अन्तर्णीतमत्वर्थमेतत्[11] । द्रविणस्विनः धनवतो देवान् चकानः तेषां स्तुतिं कामयमानः उक्थेभिः उक्थैः शस्त्रैः मतिभिः च मन्यतेरर्चतिकर्मत्वाद् मतयः स्तुतयः[12] । स्तुतिभिश्चान्याभिरपि स्तोत्राद्याभिः विप्रः समानार्थशब्दाभ्यासे भूयांसमर्थं मन्यन्ते । अत्यन्तमेधावीत्यर्थः, अत्र अस्मिन् यज्ञे अपीपयत् वर्धितवान् गयः नाम ऋषिः दिव्यानि दिवि भवानि जन्म जन्मानि देवजातानीत्यर्थः ॥ १६ ॥

**वेङ्कट०** तुवीरवान्[13] इति मत्वर्थीया वृत्तिः । एवम् कविः बहुकामः यज्ञज्ञः[14] द्रविणस्युः धनकामः । तस्यैव विशदवचनम् द्रविणसः चकानः इति । धनं कामयमान इत्यर्थः, उक्थेभिः अत्र स्तुतिभिः च विप्रः वर्धितवान् गयः दिव्यानि जातानि देवानिति ॥ १६ ॥

---

१. अलयतिः मूको. २. यस्य मूको. ३. °स्तुतिनः वि[1]; °स्तुतीतिना वि[2] अ. ४. °वन्ती मूको. ५. तस्मिन् मूको. ६. स्वित्यर्थः वि[1]; सुष्ठ्वीत्यर्थः वि[2] अ. ७-७. अवीशन्त वि[1]; अवीवशन्त तत्र क्रतौ वि[2] अ. ८-८. नास्ति वि[2] अ[1]. ९. तुवीरवान् मूको. १०. °ज्ञानता मूको. ११. अन्तर्हित° वि[1]. १२. नास्ति मूको. १३. वीर्यवान् मूको. १४. यज्ञयज्ञो वि[1].

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

**उद्गीथ०** पूर्ववद् ( ऋ १०,६३,१७ ) योज्या ॥ १७ ॥

[1]इति अष्टमाष्टके द्वितीयाध्याये अष्टमो वर्गः[1] ॥

[ ६५ ]

[1]वसुकर्णो वासुक्र ऋषिः । विश्वे देवा देवता । जगती छन्दः, पञ्चदशी त्रिष्टुप्[1] ।

अग्निरिन्द्रो वरुणो मित्रो अर्यमा वायुः पूषा सरस्वती सजोषसः ।
आदित्या विष्णुर्मरुतः स्वर्बृहत् सोमो रुद्रो अदितिर्ब्रह्मणस्पतिः ॥ १ ॥

अग्निः । इन्द्रः । वरुणः । मित्रः । अर्यमा । वायुः । पूषा । सरस्वती । सऽजोषसः ।
आदित्याः । विष्णुः । मरुतः । स्वः । बृहत् । सोमः । रुद्रः । अदितिः । ब्रह्मणः । पतिः ॥ १ ॥

**उद्गीथ०** उत्तरे द्वे सूक्ते 'अग्निरिन्द्रः', 'देवान् हुवे' इत्येते पञ्चदशर्चके वैश्वदेवे वासुक्रो[2] वसुकर्णो ददर्श । ऋज्वर्थेयमृक्[3] देवतानामनिर्देशार्थत्वात् । सजोषसः समानप्रीतयः समानसेवा वा[4] । स्वः बृहत् द्यौः[5] महतीत्यर्थः । सोमः अत्र चन्द्रमाः ॥ १ ॥

**वेङ्कट०** वसुकर्णो वासुक्रः । अग्न्यादयः सङ्गताः आदित्याः विष्णुः मरुतः द्यौः च बृहती सोमादयश्च अन्तरिक्षम् आपूरयन्तीति ॥ १ ॥

इन्द्राग्नी वृत्रहत्येषु सत्पती मिथो हिन्वाना तन्वा३ समोकसा ।
अन्तरिक्षं मह्या पप्रुरोजसा सोमो घृतश्रीर्महिमानमीरयन् ॥ २ ॥

इन्द्राग्नी इति । वृत्रऽहत्येषु । सत्पती इति सत्ऽपती । मिथः । हिन्वाना । तन्वा । समऽओकसा ।
अन्तरिक्षम् । महि । आ । पप्रुः । ओजसा । सोमः । घृतऽश्रीः । महिमानम् । ईरयन् ॥ २ ॥

**उद्गीथ०** इन्द्राग्नी सत्पती सतां पातारौ वृत्रहत्येषु वृत्रहननेषु[6] शत्रुवधेषु निमित्तभूतेषु मिथः परस्परेण सहितौ हिन्वाना शत्रुवधाय गच्छन्तौ तन्वा शरीरेण स्वयमेवेत्यर्थः, समोकसा सङ्गतनिवासौ अनन्तरितपृथिव्यन्तरिक्षस्थानौ । सोमः च घृतश्रीः उदकलक्ष्मीः उदकसेवनो वा

---

१-१. नास्ति मूको. २. वा वासु° मूको. ३. °र्थेयादृक्° मूको. ४. व मूको. ५. यो मूको. ६. हनने मूको.

उदकाश्रयो वा महिमानम् महान्तम्[1] आत्मानम् ईरयन् सर्वत्र सदा गमयन् वर्तते। य एते यथोक्ता देवाः अन्तरिक्षम् आकाशम् महि महत् आ पप्रुः आपूरयन्ति[2] ओजसा स्वेन बलेन महत्त्वलक्षणेन ॥ २ ॥

**वेङ्कट०** इन्द्राग्नी युद्धेषु सत्पती परस्परम् प्रेरयन्तौ शत्रून् शरीरेण समानस्थानौ। सोमः च उदकं श्रयन्[3] महिमानम् उद्-ईरयन् महत् अन्तरिक्षम् आ पूरयन्ति बलेनेति ॥ २ ॥

तेषां हि मुह्ना मंहतामंनुर्वणां स्तोमाँ इयर्म्यृतज्ञा ऋंतावृधांम् ।
ये अंप्सुवमंर्णुवं चित्रराधसुस्ते नों रासन्तां मुहयें सुमित्र्याः ॥ ३ ॥

तेषांम् । हि । मुह्ना । मुहुताम् । अनुर्वणांम् । स्तोमांन् । इयंर्मि । ऋतुऽज्ञाः । ऋतुऽवृधांम् ।
ये । अप्सुवम् । अर्णुवम् । चित्रऽरांधसः । ते । नुः । रासन्ताम् । मुहयें । सुऽमित्र्याः ॥ ३ ॥

**उद्गीथ०** हि यस्मात् तेषाम् देवानाम् महताम् सर्वप्रकारवृद्धियुक्तानाम् अनर्वणाम् अप्रत्यृतानाम् अन्यं प्रति आश्रितत्वेन, स्वतन्त्राणामित्यर्थः, ऋतावृधाम् यज्ञस्य उदकस्य सत्यस्य वा वर्धयितॄणाम् अर्थाय मह्ना प्रज्ञामहत्त्वेन महत्या स्वया प्रज्ञयेत्यर्थः स्तोमान् स्तुतीः हि यस्माद् इयर्मि प्रेरयामि उच्चारयामि ऋतज्ञाः [4]यज्ञस्य सम्यक् ज्ञाता[4] अहं च वसुकर्णः। ये प्रेरितस्तोमा देवाः चित्रराधसः विचित्रधनाः सुमित्र्याः सुमित्रा एव सुमित्र्याः। शोभनेन मया मित्रेण सुमित्राः। सुमित्रे मयि अनुग्राहकत्वेन भवा वा सुमित्राः, तस्मात् ते[5] देवाः अप्सवम् अप्सो रूपम्। वकारोऽत्र मत्वर्थीयः[6]। रूपवत् शोभनमित्यर्थः। अर्णवम् अरणवत्[7] सर्वोपभोगसाधनान्नसाधनार्थं[8] गमनवत् प्रभूतमित्यर्थः। किम्। सामर्थ्याद् धनम्। नः अस्मभ्यम् रासन्ताम् ददतु। किमर्थम्। महये अस्माकम् उपभोगमहत्त्वाय पूजार्थं वा ॥ ३ ॥

**वेङ्कट०** तेषाम् हि महत्त्वेन महताम् अन्यस्मिन् अप्रत्यृतानाम् स्तोमान् प्रेरयामि यज्ञविद् अहं यज्ञेन वृद्धानाम्। ये रूपवन्तम् मेघम् चित्रधनाः वर्षन्ति, ते अस्मभ्यम् प्रयच्छन्तु जनेषु पूजनार्थं धनं शोभनसख्याः ॥ ३ ॥

स्वंर्णरमुन्तरिंक्षाणि रोचुना द्यावाभूमीं पृथिवीं स्कंम्भुरोजंसा ।
पृक्षाइंव मुहयंन्तः सुरातयों देवाः स्तवंन्ते मनुंषाय सूरयंः ॥ ४ ॥

स्वंःऽनरम् । अुन्तरिंक्षाणि । रोचुना । द्यावाभूमी इतिं । पृथिवीम् । स्कम्भुः । ओजंसा ।
पृक्षाःऽइंव । मुहयंन्तः । सुऽरातयंः । देवाः । स्तवंन्ते । मनुंषाय । सूरयंः ॥ ४ ॥

**उद्गीथ०** स्वर्णरम् स्वःशब्दोऽत्र सर्वपर्यायः। सर्वे नराः यस्मिन् अङ्गपर्यायभावं प्रतिपद्यन्ते स स्वर्णरो यज्ञः तं स्वर्णरम् सर्वमनुष्यसाधनं यज्ञमित्यर्थः, अन्तरिक्षाणि विशेषणत्वाद्

---

१. महत्वम् मूको. २. °यन्ति स मूको. ३. श्रयः वि[२] अ[१]. ४-४. यस्य सम्यक् मूको.
५. हे मूको. ६. °र्थीय मूको. ७. अरणवन्तः मूको. ८. °साधनं अगसाधनासः मूको.

अन्तरिक्षाणि अन्तरिक्षे भवानि रोचना रोचनानि ग्रहनक्षत्रतारकादीनि ज्योतींषि द्यावाभूमी द्यावापृथिव्यौ पृथिवीम् अन्तरिक्षं चेत्यर्थः। स्कम्भुः 'ष्टभि स्कभि प्रतिबन्धे'। स्कम्भितवन्तः प्रतिबद्धवन्तः स्वे-स्वे व्यापारे व्यवस्थापितवन्त इत्यर्थः। केन। ओजसा स्वेन बलेन। किञ्च पृक्षाः इव 'पृक्षः' ( निघ २,७ ) इत्यन्ननाम, अकारो मत्वर्थीयः। अन्नवन्तः ईश्वराः इव केचित् सुरातयः शोभनान्नादिदानाः महयन्तः अन्नादिदानेन ब्राह्मणान् पूजयन्तः स्तवन्ते स्तूयन्ते सर्वैर्जनैः। एवं देवाः स्तूयन्ते सर्वयजमानैः मनुषाय सूरयः सुष्ठु ईरयितार ईप्सितानामर्थानां दातार इत्यर्थः ॥ ४ ॥

**वेङ्कट०** आदित्यम् अन्तरा निवसन्ति तेजांसि द्यावापृथिवी[1] अन्तरिक्षं च धारयन्ति देवाः बलेन[2]। सम्पर्चयन्तः[3] इव दरिद्रेषु धनानि पूजयन्तः सुदानाः देवाः स्तूयन्ते मनुष्याय[4] धनानां प्रेरकाः ॥ ४ ॥

मित्राय शिक्ष वरुणाय दाशुषे या सम्राजा मनसा न प्रयुच्छतः ।
ययोर्धाम धर्मणा रोचते बृहद् ययोरुभे रोदसी नाधसी वृतौ ॥ ५ ॥

मित्राय । शिक्ष । वरुणाय । दाशुषे । या । सम्ऽराजा । मनसा । न । प्रऽयुच्छतः ।
ययोः । धाम । धर्मणा । रोचते । बृहत् । ययोः । उभे इति । रोदसी इति । नाधसी इति । वृतौ ॥

**उद्गीथ०** अत्र यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः। तस्मै मित्राय वरुणाय च दाशुषे उभयविशेषणमेतत्। ईप्सितान् अर्थान् यजमानेभ्यो दत्तवते शिक्ष हवींषि देहि हे यजमान! मदीयकर्मात्मन्! वा, [5]या यौ मित्रावरुणौ[5] सम्राजा सम्यग्दीप्तौ[6] ईश्वरौ वा सर्वस्य मनसा चित्तेन [7]न प्रयुच्छतः 'युच्छ[7] प्रमादे'। प्रमाद्यतः[8] स्वे कर्मकरणे[9] प्रमादवर्जितौ असम्मूढावित्यर्थः, ययोः मित्रावरुणयोः धाम स्थानं मण्डललक्षणं बृहत् महत् धर्मणा जगदुपकारकर्मणा, युक्तं सदिति शेषः, रोचते दीप्यते, ययोः च मित्रावरुणयोः उभे द्वे अपि रोदसी द्यावापृथिव्यौ नाधसी याचमाने प्रसादम् अनुग्रहम् अभयं पानं वा प्रार्थयमाने सती इत्यर्थः, वृतौ मर्यादायां च वर्तेते इति शेषः, व्यवस्थां न लङ्घयत इत्यर्थः। यावीदृशौ मित्रावरुणौ ताभ्यां शिक्षेति सम्बन्धः कार्यः ॥ ५ ॥

**वेङ्कट०** मित्रावरुणाभ्यां प्रयच्छ हविः धनानि प्रयच्छद्भ्याम्, यौ सम्राजौ मनसा अपि न प्रमाद्यतः, ययोः महच्छरीरम् कर्मणा रोचते, ययोः च धनम् द्यावापृथिव्यौ याचमाने वर्तेते इति ॥ ५ ॥

[10]इति अष्टमाष्टके द्वितीयाध्याये नवमो वर्गः[10] ॥

---

१. द्यावाभूमी वि[1]. २. बले वि[1]. ३. संवर्धयन्त वि[2] अ[1]. ४. मनुषाय वि[2] अ[1]. ५-५. ययोः मित्रावरुणयोः मूको. ६. सम्यग्शिष्टौ वि[1]; सम्यग्विष्टौ वि[2] अ. ७-७. नियच्छत। प्रच्छ मूको. ८. प्रमाद्य मूको. ९ कामकरणे मूको. १०-१०. नास्ति मूको.

या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः ।
सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते ॥ ६ ॥

या । गौः । वर्तनिम् । परिऽएति । निःऽकृतम् । पयः । दुहाना । व्रतऽनीः । अवारतः ।
सा । प्रऽब्रुवाणा । वरुणाय । दाशुषे । देवेभ्यः । दाशत् । हविषा । विवस्वते ॥ ६ ॥

**उद्गीथ०** या गौः अस्मदीया वाक् स्तुतिलक्षणा वर्तनिम् देवकर्णमार्गम् देवश्रवणपथमित्यर्थः, पर्येति सर्वतो गच्छति निष्कृतम् पयः दुहाना व्रतनीः अवारतः। लुप्तोपममेतद् वाक्यम्। व्रतनीः इव इति यथा व्रतस्य यागकर्मणः पयोव्रतकर्मणो वा नीः[१] नेत्री हेतुकर्तृत्वेन प्रापयित्री गौः काचित् निष्कृतम् संस्कृतं परिपक्वम् [२]अत्यन्तम् प्रचितम्[२] पयः क्षीरं दुहाना दुह्यमाना अवारतः अर्वाक् स्वाभिमुखं सर्वतो गच्छति, एवं या गौः वर्तनिम् पर्येति, सा स्तुतीः प्रब्रुवाणा प्रकथयन्ती देवगुणान् व्यावर्णयन्ती सती वरुणाय दाशुषे यजमानेभ्यः कामान् दत्तवते देवेभ्यः च अन्येभ्यः विवस्वते च दाशत् ददातु। किम्। सामर्थ्याद् आत्मानम् हविषा सह। अस्मत्स्तुतिः हविश्चास्माकं सर्वकामावाप्तये देवोपभोगयोग्यं[३] भवत्वित्यर्थः ॥ ६ ॥

**वेङ्कट०** या इयं मदीया गौः वासस्थाने परिगच्छति संस्कृतम् पयः दुहाना कर्मणो नेत्री अवारतः अप्रार्थनेनैव, सा मया प्रस्तूयमाना वरुणाय दाशुषे देवेभ्यः च पयः प्रयच्छतु हविषा देवान् परिचरते[४] मह्यं मां रक्षितुमिति ॥ ६ ॥

दिवक्षसो अग्निजिह्वा ऋतावृध ऋतस्य योनिं विमृशन्त आसते ।
द्यां स्कभित्व्य१प आ चक्रुरोजसा यज्ञं जनित्वी तन्वी३ नि मामृजुः ॥ ७ ॥

दिवक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । ऋतस्य । योनिम् । विऽमृशन्तः । आसते ।
द्याम् । स्कभित्वी । अपः । आ । चक्रुः । ओजसा । यज्ञम् । जनित्वी । तन्वि । नि । ममृजुः ॥

**उद्गीथ०** दिवक्षसः द्युनिवासाः दीप्तविमाननिवासाद् दीप्तनिवासा[५] वा अग्निजिह्वाः [६]अग्निना जिह्वास्थानीयेन[६] हविषामत्तार इत्यर्थः, ऋतावृधः ऋतस्य सत्यस्य यज्ञस्य उदकस्य वा वर्धयितारः ऋतस्य सत्यस्य यज्ञस्य उदकस्य वा योनिम् परं कारणं परमात्मानम् विमृशन्तः मनसा पर्यालोचयन्तः सदा ध्यायन्त[७] इत्यर्थः, आसते तिष्ठन्ति। किञ्च द्याम् दिवम् स्कभित्वी स्कम्भित्वा अवष्टभ्य अधिष्ठायेत्यर्थः, अपः वृष्ट्युदकानि कर्म वा लौकिकं वैदिकं च वृष्टिप्रदानद्वारेण अङ्गतः-[८]प्रतिपत्त्या वा[८] आ चक्रुः मर्यादया कुर्वन्ति जनयन्ति ओजसा सर्वबलेन[९]। यज्ञम् च जनित्वी जनयित्वा तन्वि स्वात्मनि नि ममृजुः नियमेन मृजन्ति शोधयन्ति संस्कुर्वन्ति फलप्रदानयोग्यं कुर्वन्तीत्यर्थः ॥ ७ ॥

---

१. नीतिः मूको. २-२. °न्तपचितं मूको. ३. देवोपयोग्यम् अ. ४. प्रयच्छते वि[१]. ५. दीप्ते दीप्त° मूको. ६-६. अग्निस्थानी° वि[१]; अग्निजिह्वास्थानी° वि[२] अ. ७. स्यायन्त मूको. ८-८. °पत्त्याप वि[२] अ; °पत्या अप वि[१]. ९. नास्ति वि[१].

**वेङ्कट०** दिवो वोढारः अग्न्यास्याः यज्ञवृद्धाः यज्ञस्य स्थानं प्रतीक्षमाणाः आसते। त इमे द्याम् स्कभित्वा[1] अपेक्षितानि उदकानि कृण्वन्ति बलेन हविश्च जनयित्वा आत्मशरीरे नि मृजन्ति भक्षयन्ति[2] हविः ॥ ७ ॥

परिक्षिता पितरा पूर्वजावरी ऋतस्य योना क्षयतः समोकसा ।
द्यावापृथिवी वरुणाय सव्रते घृतवत् पयो महिषाय पिन्वतः ॥ ८ ॥

परिऽक्षिता । पितरा । पूर्वजावरी इति पूर्वऽजावरी । ऋतस्य । योना । क्षयतः । सम्ऽओकसा ।
द्यावापृथिवी इति । वरुणाय । सव्रते इति सऽव्रते । घृतऽवत् । पयः । महिषाय । पिन्वतः ॥ ८ ॥

**उद्गीथ०** परिक्षिता [3]सर्वत्र उषिते[3] गते वा पितरा सर्वस्य पितृस्थानीये पूर्वजावरी सर्वस्य पूर्वं-जाते ऋतस्य यज्ञस्य सत्यस्योदकस्य वा योना योनौ स्थाने अपारे परमात्मनि। अथवा 'ऋतम् । योनिः। ऋतस्य योनिः' ( निघ १, १२ ) इत्युदकनामसु पाठाद् ऋतस्य योनौ उदके अण्डावरणे क्षयतः निवसतः आधेयत्वेन तिष्ठतः समोकसा सङ्गतनिवासे संयुक्ताण्डकपाल-लक्षणात्मस्थाने[4] इत्यर्थः, द्यावापृथिवी वरुणाय यजमानाय सव्रते समानकर्माणौ समानम् एकं तुल्यं वा स्थावरजङ्गमाधारलक्षणं कर्म ययोस्ते इत्यर्थः, घृतवत् क्षरणवत् दीप्तिमद् वा पयः वृष्ट्युदकम् महिषाय महते पिन्वतः सिञ्चतः, सर्वयजमानानाम् अर्थाय वृष्टिं दत्त इत्यर्थः ॥ ८ ॥

**वेङ्कट०** परितो निवसन्त्यौ पितृमातृभूते पूर्वजाते[5] यज्ञस्य स्थाने वसतः समाननिवासस्थाने द्यावापृथिव्यौ, वरुणं यष्टुं समानकर्माणौ क्षरणवद्[6] उदकं महते सिञ्चतः[7] ॥ ८ ॥

पर्जन्यावाता वृषभा पुरीषिणेन्द्रवायू वरुणो मित्रो अर्यमा ।
देवाँ आदित्याँ अदितिं हवामहे ये पार्थिवासो दिव्यासो अप्सु ये ॥ ९ ॥

पर्जन्यावाता । वृषभा । पुरीषिणा । इन्द्रवायू इति । वरुणः । मित्रः । अर्यमा ।
देवान् । आदित्यान् । अदितिम् । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽसु । ये ॥ ९ ॥

**उद्गीथ०** पर्जन्यावाता पर्जन्यावातौ वृषभा वर्षितारौ पुरीषिणा उदकवन्तौ। कौ तौ। इन्द्रवायू। वरुणः मित्रः अर्यमा इत्येतान् अन्यांश्च देवान् आदित्यान् अदितेः पुत्रान् अदितिम् च देवमातरम् हवामहे आह्वयामो वयं यागार्थम्। ये देवाः पार्थिवासः पृथिव्यां भवाः दिव्यासः दिवि भवाः, अप्सु 'आपः'[8] ( निघ १,३ ) इत्यन्तरिक्षनाम, तत्र भवाः ये देवाः, तानिति योज्यम् ॥ ९ ॥

**वेङ्कट०** '[9]पर्जन्यवायू वृषभौ उदकवन्तौ[9]' इन्द्रवायू वरुणादिश्च तानिमान् आदित्यान् अदितिम् च

---

१. स्कन्दभित्वा वि[1]. २. नास्ति वि[1]. ३-३. सर्वस्योषिते मूको. ४. °पाले लक्षणकर्मात्म° मूको. ५. नास्ति वि[2] अ[1]. ६. करण्वद् वि[2] अ[1]; क्षमपद् वि[1]. ७. °तं वि[1]; °त वि[2] अ[1]. ८. अपः वि[2] अ. ९-९. पर्जन्य अवा आवृषभादुदवन्तौ वि[2] अ[1].

हवामहे, ये पार्थिवाः ये च देवाः[1] दिव्याः ये चाऽन्तरिक्ष्याः । वायोः पर्जन्येनेन्द्रेण च सहोपादानम् । पूर्वार्धर्चे प्रथमान्तानि पदानि ॥ ९ ॥

**त्वष्टा॑रं वा॒युमृ॑भवो॒ य ओह॑ते॒ दैव्या॒ होता॑रा उ॒षसं॑ स्व॒स्तये॑ ।**
**बृह॒स्पतिं॑ वृत्रखा॒दं सु॒मे॒धस॑मिन्द्रि॒यं सोमं॑ धन॒सा उ॑ ईमहे ॥ १० ॥**

त्वष्टा॑रम् । वा॒युम् । ऋ॒भ॒वः॒ । यः । ओह॑ते । दैव्या॑ । होता॑रौ । उ॒षस॑म् । स्व॒स्तये॑ ।
बृह॒स्पति॑म् । वृ॒त्र॒ऽखा॒दम् । सु॒ऽमे॒धस॑म् । इ॒न्द्रि॒यम् । सोम॑म् । ध॒न॒ऽसाः । ॐ इति॑ । ई॒म॒हे॒ ॥ १० ॥

**उद्गीथ०** त्वष्टारम् आदित्यं च दैव्या होतारा वह्निवायू [2]उषसम् च[2] बृहस्पतिम् च । कीदृशम् । वृत्रखादम् वृत्रस्य असुरस्य मेघस्य वा खादितारं भक्षयितारम् हन्तारमित्यर्थः, सुमेधसम् सुप्रज्ञं च सोमम् च । यः यजमानं च ओहते वहति यज्ञं प्रति प्रापयति यागाय । स चाहं[3] यूयं च हे ऋभवः! मेधाविनः! सर्वे वयम् धनसाः धनस्य सम्भक्तारः सन्तः इन्द्रियम् धनम् ईमहे याचामहे विश्वान् देवान् । उ इति पदपूरणः ॥ १० ॥

**वेङ्कट०** हे मेधाविनः! यः सोमः त्वष्टृप्रभृतीन् आवहति स्वस्तये वृत्राणां खादितारमिन्द्रं च सुप्रज्ञम्, तम् इन्द्रजुष्टम् सोमम् धनं भजमानाः याचामहे ॥ १० ॥

[4]इति अष्टमाष्टके द्वितीयाध्याये दशमो वर्गः[4] ॥

**ब्रह्म॒ गामश्वं॑ ज॒नय॑न्त॒ ओष॑धी॒र्वन॒स्पती॑न् पृथि॒वीं पर्व॑ताँ अ॒पः ।**
**सूर्यं॑ दि॒वि रो॒हय॑न्तः सु॒दान॑व॒ आर्या॑ व्र॒ता वि॑सृ॒जन्तो॒ अधि॒ क्षमि॑ ॥ ११ ॥**

ब्रह्म॑ । गाम् । अश्व॑म् । ज॒नय॑न्तः । ओष॑धीः । व॒न॒स्पती॑न् । पृ॒थि॒वीम् । पर्व॑तान् । अ॒पः ।
सूर्य॑म् । दि॒वि । रो॒हय॑न्तः । सु॒ऽदान॑वः । आर्या॑ । व्र॒ता । वि॒ऽसृ॒जन्तः॑ । अधि॑ । क्षमि॑ ॥ ११ ॥

**उद्गीथ०** ब्रह्म ब्राह्मणम् गाम् च अश्वम् च जनयन्तः वृष्टिप्रदानद्वारेण उत्पादयन्तः ओषधीः च वनस्पतीन् च पृथिवीम् च पर्वतान् च अपः च सूर्यम् च दिवि रोहयन्तः स्थापयन्तः सुदानवः शोभनदाना देवाः आर्या[5] आर्याणि । अर्याः ईश्वराः साधनवन्तः अधिकृन्मनुष्याः, तेषां सम्बन्धीनि आर्याणि ईश्वरसाध्यानि व्रता व्रतानि कर्माणि अग्निहोत्रादीनि विसृजन्तः विविधान्युत्पादयन्तः अधि क्षमि पृथिव्या वेदिलक्षणाया उपरि तिष्ठन्ति[6], कर्माङ्गत्वेनेति शेषः ॥ ११ ॥

**वेङ्कट०** [7]अन्नम् गाम् अश्वम् जनयन्तः[7] ओषधीः वनस्पतीन् च तथा पृथिवीम् पर्वतान् अन्तरिक्षम्, सूर्यम्[8] च दिवि रोहयन्तः सुदानाः[9] कल्याणानि च कर्माणि पृथिव्याम् विसृजन्तः अमी देवाः इति ॥ ११ ॥

---

१. नास्ति वि[2] अ[1]. २-२. °षसश्च वि[1]. ३. चायं वि[1]. ४-४. नास्ति मूको. ५. नास्ति मूको. ६. °न्ती मूको. ७-७. गामन्नं च नयन्तः अ[1]; ग्रामं च नयन्तः वि[2]. ८. नास्ति वि[1]. ९. सुदानां वि[2]; सुदानानि अ[1].

भुज्युमंहसः पिपृथो निरश्विना श्यावं पुत्रं वध्रिमत्या अजिन्वतम् ।
कमद्युवं विमदायोहथुर्युवं विष्णाप्वं विश्वकायाव सृजथः ॥ १२ ॥

भुज्युम् । अंहसः । पिपृथः । निः । अश्विना । श्यावम् । पुत्रम् । वध्रिऽमत्याः । अजिन्वतम् ।
कमऽद्युवम् । विऽमदाय । ऊहथुः । युवम् । विष्णाप्वम् । विश्वकाय । अव । सृजथः ॥ १२ ॥

**उद्गीथ०** भुज्युम् नाम राजानं तुग्रपुत्रं समुद्रे विपन्ननावं सखिभिः परित्यक्तं मुमूर्षुम् अंहसः पापात्, पापकार्यमरणादित्यर्थः, निः पिपृथः समुद्रान्निष्क्रम्य पालितवन्तौ स्थो युवां हे अश्विनौ ! । किञ्च श्यावम् कुष्ठित्वात् श्याववर्णम् पुत्रम् वध्रिमत्याः वध्रिमतीनाम्न्याः स्त्रियाः[१] अजिन्वतम् जिन्वतिः[२] प्रीतिकर्मा । प्रीतवन्तौ स्थो युवाम्, कुष्ठापनयेन सन्तर्पितवन्तौ इत्यर्थः । किञ्च कमद्युवम् कामयितव्यां युवतिं भार्याम् विमदाय ऋषये ऊहथुः ऊढवन्तौ दत्तवन्तौ स्थः युवम् युवाम् विष्णाप्वम् च विश्वकाय विश्वकनाम्ने अव सृजथः दत्तवन्तौ स्थः ॥ १२ ॥

**वेङ्कट०** तौग्रम् भुज्युम् [३]अश्विनौ! उपद्रवात् निः पिपृथः[३] । श्याववर्णं हिरण्यहस्तं नाम पुत्रम् वध्रिमत्याः[४] ददथुः । तथा कामस्य दीपनीं जायाम्[५] विमदाय ऊहथुः युवाम् । तथा विष्णाप्वम् नाम विनष्टं पुत्रम् विश्वकाय आनीय अव सृजथः[६] ॥ १२ ॥

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।
विश्वे देवासः शृणवन् वचांसि मे सरस्वती सह धीभिः पुरंध्या ॥ १३ ॥

पावीरवी । तन्यतुः । एकऽपात् । अजः । दिवः । धर्ता । सिन्धुः । आपः । समुद्रियः ।
विश्वे । देवासः । शृणवन् । वचांसि । मे । सरस्वती । सह । धीभिः । पुरमऽध्या ॥ १३ ॥[७]

**उद्गीथ०** पावीरवी [८]पावीरम् आयुधम्, तद्वान्[८] इन्द्रः पावीरवान्, तस्य स्वभूता वाक् माध्यमिका स्तनयित्नुलक्षणा तन्यतुः तनित्री वाचोऽन्यस्याः सर्वस्याः सार्वलौकिक्याश्च[९] । एकपात् अजः [१०]इति द्विविशेषणविशिष्ट[१०] आदित्यश्च दिवः द्युलोकस्य धर्ता स्वेन उपकारेण धारयिता । सिन्धुः च नदी । आपः च सर्वत्रत्याः, समुद्रियः समुद्रे भवो वरुणश्च विश्वे देवासः शृणवन् शृण्वन्तु वचांसि वचनानि स्तुतिलक्षणानि मे मम स्वभूतानि धीभिः यागकर्मभिः, युक्तानीति शेषः, सरस्वती च सह पुरन्ध्या बहुप्रज्ञया उषसा[११] ॥ १३ ॥

**वेङ्कट०** आयुधवती [१२]शोधयित्री वाक्[१२] माध्यमिका तथा अजः एकपात् दिवः धर्ता [१३]सिन्धुः आपः[१३] अन्तरिक्ष्याः विश्वे देवाः शृण्वन्तु वचांसि मे सरस्वती च सह कर्मभिर्युक्तानि पुरन्ध्या प्रज्ञयेति ॥ १३ ॥

---

१. स्त्रियः मूको. २ जिन्वितिः मूको. ३-३. त्रुटितम् वि[२] अ[१]. ४. यज्ञमित्या वि[१]. ५. छायां वि[२] अ[१]; जायाः वि[१]. ६. °जथुः वि[१]. ७. या. ( १२,३० ) व्याख्यानं द्र. ८-८. °रमोयुधं ददत्वान् मूको. ९. सर्वलौ° मूको. १०-१०. इति द्विविशेषण आदित्यस्य विशिष्ट मूको. ११. उषसाम् मूको. १२-१२. °यित्री वा वाक् वि[१]; गोध यित्री वा वि[२] अ[१]. १३-१३. नास्ति वि[१] अ[१].

विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः ।
रातिषाचो अभिषाचः स्वर्विदः स्व१र्गिरो ब्रह्म सूक्तं जुषेरत ॥ १४ ॥

विश्वे । देवाः । सह । धीभिः । पुरम्ऽध्या । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः ।
रातिऽसाचः । अभिऽसाचः । स्वःऽविदः । स्वः । गिरः । ब्रह्म । सुऽउक्तम् । जुषेरत ॥ १४ ॥

**उद्गीथ०** विश्वे देवाः सह पुरन्ध्या बहुप्रज्ञया उषसा[1] मनोः मनुष्यस्य यजत्राः यष्टव्याः अमृताः मरणवर्जिताः ऋतज्ञाः यज्ञस्य[2] तत्त्वतो ज्ञातारः रातिषाचः ज्ञातयो यजमानानाम् अभिषाचः किङ्कराश्च स्वर्विदः दिव आदित्यस्य सर्वस्य वा ज्ञातारः धीभिः यागकर्मभिः, युक्ता इति शेषः, स्वः सर्वाः गिरः स्तुतीः ब्रह्म हविरन्नम् सूक्तम् चेदम् जुषेरत प्रीयन्तां सेवन्तां वा ॥ १४ ॥

**वेङ्कट०** विश्वे देवाः सह कर्मभिः प्रज्ञानेन च[3] मनुष्यस्य यष्टव्याः[4] अमृताः सत्यज्ञाः हविर्दीयमानं सेवन्तः आभिमुख्येन सेवन्तः सर्वज्ञाः सर्वाः गिरः महच्चान्नम् [5]सूक्तम् सेवन्तामिति[5] ॥ १४ ॥

देवान् वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनाभि प्रतस्थुः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

देवान् । वसिष्ठः । अमृतान् । ववन्दे । ये । विश्वा । भुवना । अभि । प्रऽतस्थुः ।
ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १५ ॥

**उद्गीथ०** ये देवाः विश्वा भुवना सर्वान् लोकान् पृथिव्यादीन् अभि प्रतस्थुः[6] प्रकर्षेण गताः स्वामित्वेन, तान् देवान् अमृतान् मरणवर्जितान् वसिष्ठः वस्तृतमः[7] स्तुतिभिः हविर्भिश्च आच्छादयितृतमः वसिष्ठसदृशो वा वसुकर्णः ववन्दे स्तुतवानहम् । स्तुताश्च[8] सन्तः ते देवाः नः अस्मभ्यम् रासन्ताम् ददतु उरुगायम् महागतिं स्वर्गापवर्गलक्षणम् अद्य अस्मिन्नहनि । परः पादः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । हे देवाः! यूयम् पात रक्षत स्वस्तिभिः अविनाशैः सदा नित्यम् नः अस्मान् ॥ १५ ॥

**वेङ्कट०** देवान् अयं वसिष्ठकुलजः अमृतान् अस्तौषीत्[9], ये विश्वानि[10] भुवनानि अभि प्रतिष्ठन्ति । 'ते नः' इति गतमिति ( ऋ ७,३५,१५ द्र ) ॥ १५ ॥

[11]इति अष्टमाष्टके द्वितीयाध्याये एकादशो वर्गः[11] ॥

---

१. उषसाम् वि[1]. २. ययज्ञस्य मूको. ३. नास्ति वि[1]. ४. °व्यस्य वि[1]. ५-५. सूक्तमिति अ[1]. ६. प्रतितस्थुः वि[2] अ ७. वस्तुतमः वि[1]. ८. स्तुताश्च मूको. ९. अस्तौत् वि[1]. १०. विश्वे विश्वा° अ[1]. ११-११. नास्ति मूको.

[ ६६ ]

[1]वसुकर्णो वासुक्र ऋषिः । विश्वे देवा देवता । जगती छन्दः, पञ्चदशी त्रिष्टुप्[1] ।

देवान् हुवे बृहच्छ्रवसः स्वस्तये ज्योतिष्कृतो अध्वरस्य प्रचेतसः ।
ये वावृधुः प्रतरं विश्ववेदस इन्द्रज्येष्ठासो अमृता ऋतावृधः ॥ १ ॥

देवान् । हुवे । बृहत्ऽश्रवसः । स्वस्तये । ज्योतिःऽकृतः । अध्वरस्य । प्रऽचेतसः ।
ये । ववृधुः । प्रऽतरम् । विश्वऽवेदसः । इन्द्रऽज्येष्ठासः । अमृताः । ऋतऽवृधः ॥ १ ॥

**उद्गीथ०** तान् देवान् हुवे यागार्थम् आह्वयामि । अथवा 'ह्वयति' ( निघ ३,१४ ) इत्यर्चतिकर्मा । हुवे स्तौमीत्यर्थः । कीदृशान् । बृहच्छ्रवसः महाकीर्तीन् महाहविरन्नान् वा ज्योतिष्कृतः दीप्तेः कर्तॄन् अध्वरस्य यज्ञस्य प्रचेतसः प्रकर्षेण ज्ञातॄन् । किमर्थं हुवे । स्वस्तये अविनाशाय । ये देवाः ववृधुः सर्वप्रकारया वृद्ध्या प्रतिदिनं वर्धन्ते[2] प्रतरम् प्रकृष्टतरम् अत्यर्थमित्यर्थः । विश्ववेदसः सर्वज्ञाः सर्वधना वा इन्द्रज्येष्ठासः इन्द्रः अधिपतित्वाद् अतिशयेन प्रशस्यो वृद्धो वा येषां ते इन्द्रज्येष्ठाः अमृताः मरणवर्जिताः ऋतावृधः यज्ञस्य सत्यस्य उदकस्य वा वर्धयितारः ॥ १ ॥

**वेङ्कट०** देवान् हुवे बृहदन्नान्[3] स्वस्तये तेजसः कर्तॄन् यज्ञस्य सुमतीन्, ये[4] वर्धन्ते अत्यन्तम् सर्वधनाः इन्द्रनेतृकाः अमृताः यज्ञेन वृद्धाः ॥ १ ॥

इन्द्रप्रसूता वरुणप्रशिष्टा ये सूर्यस्य ज्योतिषो भागमानशुः ।
मरुद्गणे वृजने मन्म धीमहि माघोने यज्ञं जनयन्त सूरयः ॥ २ ॥

इन्द्रऽप्रसूताः । वरुणऽप्रशिष्टाः । ये । सूर्यस्य । ज्योतिषः । भागम् । आनशुः ।
मरुत्ऽगणे । वृजने । मन्म । धीमहि । माघोने । यज्ञम् । जनयन्त । सूरयः ॥ २ ॥

**उद्गीथ०** इन्द्रप्रसूताः इन्द्रेण अनुज्ञाताः वरुणप्रशिष्टाः वरुणेन च अनुज्ञाताः ये मरुतः सूर्यस्य, उपरि वर्तमानस्येति शेषः, ज्योतिषः ज्योतीरूपस्य दीप्तस्य द्युलोकस्य भागम् एकदेशं[5] सप्तवायुस्कन्धलक्षणम् आनशुः स्वामित्वेन[6] प्राप्ताः । उक्तश्चायमर्थो मन्त्रान्तरेऽपि—'ये नाकस्याधि रोचने दिवि देवास आसते' ( ऋ १,१९,६ ) इति । मरुद्गणे तेषां मरुतां गणे वृजने वृजनवति बलवति शत्रुप्राणानां वा वर्जयितरि मन्म मननीयं स्तुतिजातम् धीमहि कुर्मः ध्यायामः चिन्तयामः कुर्म इत्यर्थः । कस्मात्[7] । यतस्ते माघोने मघोने मघवते हविर्धनेन धनवते[8] यजमानाय यज्ञम् यज्ञम् जनयन्त [9]वृष्टिप्रदानद्वारेण अङ्गत्वप्रतिपत्त्या च[9] जनयन्ति[10] सूरयः मेधाविनः ॥ २ ॥

---

१-१. नास्ति मूको. २. वर्धयन्ते मूको. ३. °न्नात् वि[2] अ[1]. ४. नास्ति वि[2] अ[1]. ५. एकं देशं मूको. ६. स्थातित्वेन वि[2] अ. ७. तस्मात् वि[2] अ. ८. °ते यज्ञम् मूको. ९-९. नास्ति वि[1]. १०. जनयन्त वि[1]; जनयन्तः वि[2] अ.

**वेङ्कट०** इन्द्रेण कार्येषु प्रसूताः वरुणेनानुशिष्टाः ये अमुष्य सूर्यस्य द्योतमानस्य भजनीयम्[1] आनशुः सूर्यमधिष्ठाय वर्तन्ते, तेषां मरुतां गणे शत्रूणां छेदके स्तोत्रम् निदध्मः। मघवतः सम्बन्धिनि मरुद्गणे तन्निमित्तं[2] यज्ञम् जनयन्ति प्राज्ञाः ॥ २ ॥

इन्द्रो वसुभिः परि पातु नो गयमादित्यैर्नो अदितिः शर्म यच्छतु ।
रुद्रो रुद्रेभिर्देवो मृळयाति नस्त्वष्टा नो ग्नाभिः सुविताय जिन्वतु ॥ ३ ॥

इन्द्रः । वसुऽभिः । परि । पातु । नः । गयम् । आदित्यैः । नः । अदितिः । शर्म । यच्छतु ।
रुद्रः । रुद्रेभिः । देवः । मृळयाति । नः । त्वष्टा । नः । ग्नाभिः । सुविताय । जिन्वतु ॥ ३ ॥

**उद्गीथ०** इन्द्रः वसुभिः वृष्टया सर्वस्याऽऽच्छादयितृभिः निवासयितृभिर्वा मरुद्भिः सह परि पातु नः अस्माकम् गयम् यज्ञगृहम्। आदित्यैः सह नः अस्मभ्यम् अदितिः देवमाता शर्म विमानगृहं स्वर्गसुखं वा यच्छतु। रुद्रः देवः रुद्रेभिः रुद्रैः अनुचरैः सह मृळयाति मृडयतु[3] सुखयतु नः अस्मान्। त्वष्टा प्रजापतिः ग्नाभिः देवपत्नीभिः सह नः अस्मान् सुविताय सुगताय स्वर्गगमनाय सूताय वा प्रजार्थमित्यर्थः, जिन्वतु प्रीणयतु तर्पयतु पुष्णात्वित्यर्थः[4] ॥ ३ ॥

**वेङ्कट०** इन्द्रः वसुभिः परि रक्षतु अस्माकम् गृहम्। अदितिः च आदित्यैः अस्मभ्यम् सुखम् प्र-यच्छतु। रुद्रः च मरुद्भिः देवः अस्मान् सुखयतु। [5]त्वष्टा अस्मान्[5] देवपत्नीभिः अभ्युदयाय प्रीणयतु ॥ ३ ॥

अदितिर्द्यावापृथिवी ऋतं महदिन्द्राविष्णू मरुतः स्वर्बृहत् ।
देवाँ आदित्याँ अवसे हवामहे वसून् रुद्रान्त्सवितारं सुदंससम् ॥ ४ ॥

अदितिः । द्यावापृथिवी इति । ऋतम् । महत् । इन्द्राविष्णू इति । मरुतः । स्वः । बृहत् ।
देवान् । आदित्यान् । अवसे । हवामहे । वसून् । रुद्रान् । सवितारम् । सुऽदंससम् ॥ ४ ॥

**उद्गीथ०** अदितिः द्यावापृथिवी च ऋतम् च यज्ञः उदकं सत्यं वा महत् इन्द्राविष्णू मरुतः च स्वः[6] बृहत् सर्वं बृहत् अन्यदपि देवजातम् अस्मान् जिन्वत्वित्यर्थः। देवान् आदित्यान् अवसे इत्यादि अनुवर्त्यम्। अदितिरित्येवमादि देवजातं च देवान् आदित्यांश्च अवसे हविषा तर्पणाय तेषां ममास्माकं वा रक्षणाय हवामहे आह्वयामः वसून् च रुद्रान् च सवितारम् च सुदंससम् सुकर्माणम् ॥ ४ ॥

**वेङ्कट०** ऋतम् अग्निः। स्वः आदित्यः। एतान् देवांश्च आदित्यादीन् रक्षणाय हवामह इति ॥ ४ ॥

सरस्वान् धीभिर्वरुणो धृतव्रतः पूषा विष्णुर्महिमा वायुरश्विना ।
ब्रह्मकृतो अमृता विश्ववेदसः शर्म नो यंसन् त्रिवरूथमंहसः ॥ ५ ॥

---

१. भजम् मूको. २. अत्र नि° वि[2] ३. 'यन्तु मूको. ४. °तीत्यर्थः वि[1]. ५-५. नास्ति वि[1]. ६. नास्ति मूको.

सरस्वान् । धीभिः । वरुणः । धृतऽव्रतः । पूषा । विष्णुः । महिमा । वायुः । अश्विना ।
ब्रह्मऽकृतः । अमृताः । विश्वऽवेदसः । शर्म । नः । यंसन् । त्रिऽवरूथम् । अंहसः ॥ ५ ॥

**उद्गीथ०** सरस्वान् **मध्यस्थानो देवः** धीभिः **प्रज्ञाभिः कर्मभिर्वा, स्वैः विशिष्टैरिति** शेषः, वरुणः च धृतव्रतः **अपरित्यक्तस्वकर्मा** पूषा विष्णुः च महिमा **'महिमवान् महत्त्ववान् वेत्यर्थः'**[1], वायुः च अश्विनौ च ब्रह्मकृतः **ब्रह्मणोऽन्नस्य स्तुतेर्वा हेतुकर्तारः** अमृताः **मरणरहिताः** विश्ववेदसः **बहुधनाः** बहुज्ञाना[2] वा शर्म **विमानगृहं स्वर्गसुखं वा** नः **अस्मभ्यम्** यंसन् **सम्प्रयच्छन्तु**[3]। **कीदृशम्।** त्रिवरूथम् **त्रिभिरश्विवाय्वादित्यैः आदित्यचन्द्रेन्द्रैर्वा**[4] **ब्रह्मविष्णुमहेश्वरैर्वा वरणीयम्**[5]। अंहसः **पापात्, प्रमोच्येति**[6] शेषः ॥ ५ ॥

**वेङ्कट०** सरस्वान् **प्रज्ञाभिर्युक्तः** वरुणः च धृतव्रतः पूषा च [7]विष्णुः च[7] **महत्त्वेन युक्तः** वायुः **अश्विनौ च कर्मकृतः** अमृताः **विश्वधनाः गृहम् अस्मभ्यं प्रयच्छन्तु त्रिच्छदिष्कम् आहन्तारः शत्रूणाम्** ॥ ५ ॥

[8]इति अष्टमाष्टके द्वितीयाध्याये द्वादशो वर्गः[8] ॥

वृषा यज्ञो वृषणः सन्तु यज्ञिया वृषणो देवा वृषणो हविष्कृतः ।
वृषणा द्यावापृथिवी ऋतावरी वृषा पर्जन्यो वृषणो वृषस्तुभः ॥ ६ ॥

वृषा । यज्ञः । वृषणः । सन्तु । यज्ञियाः । वृषणः । देवाः । वृषणः । हविःऽकृतः ।
वृषणा । द्यावापृथिवी इति । ऋतवरी इत्यृतऽवरी । वृषा । पर्जन्यः । वृषणः । वृषऽस्तुभः ॥६॥

**उद्गीथ०** वृषा वर्षिता यज्ञः च, वृषणः वर्षितारः सन्तु भवन्तु यज्ञियाः च **यज्ञसम्पादिनः** ऋत्विग्यजमानाः[9], वृषणः वर्षितारः देवाः च, वृषणः हविष्कृतः च **हविषां कर्तारः अध्वर्यवः उलूखलमुसलादयश्च,** वृषणा द्यावापृथिवी ऋतावरी **वृष्ट्युदकवत्यौ,** वृषा पर्जन्यः च, वृषणः सन्तु वृषस्तुभः च **वृषस्य वर्धितारो यजमानाः माध्यमिका देवगणाः** ॥ ६ ॥

**वेङ्कट०** **वर्षिता कामानाम्** यज्ञः **अस्तु।** वृषणः सन्तु[10] **देवाः** च, तथा[11] वृषणः **स्तोतारः,** वृषणः **हविषां कर्तारः,** वृषणा द्यावापृथिव्यौ **यज्ञवत्यौ**[12], वृषा पर्जन्यः वृषणः वृषस्तुभः **ऋत्विजां स्तुतयः** ॥ ६ ॥

अग्नीषोमा वृषणा वाजसातये पुरुप्रशस्ता वृषणा उप ब्रुवे ।
याविजिरे वृषणो देवयज्यया ता नः शर्म त्रिवरूथं वि यंसतः ॥ ७ ॥

---

१-१. मह्मिावाम हत्वावान्योर्थः वि¹; महिमावाम हत्वान्येत्यर्थः वि² अ. २. बहुप्रज्ञा वि¹ अ. ३. °च्छतु मूको. ४. °चन्द्रैः मूको. ५. °णीयः मूको. ६. प्रमुष्टोच्च्येति वि¹; प्रमुच्यते अ. ७-७. त्रिष्णुत्वेन मूको. ८-८. नास्ति मूको. ९. °मान मूको. १०. सन्तः वि² अ¹. ११. ता वि¹ अ¹. १२. °वन्तौ वि² अ¹.

अ॒ग्नीषो॑मा । वृष॑णा । वाज॑ऽसातये । पु॒रु॒ऽप्र॒श॒स्ता । वृष॑णौ । उप॑ । ब्रु॒वे ।
यौ । ई॒जि॒रे । वृष॑णः । दे॒व॒ऽय॒ज्यया॑ । ता । नः॒ । शर्म॑ । त्रि॒ऽवरू॑थम् । वि । यं॒स॒तः ॥ ७ ॥

**उद्गीथ०** अग्नीषोमा वृषणा वाजसातये पुरुप्रशस्ता बहुस्तोत्रौ[1] वृषणौ वर्षितारौ कामानां च उप ब्रुवे उपगम्य ब्रवीमि स्तुतिभिः स्तौमीत्यर्थः । किंच यौ अग्नीषोमौ ईजिरे इष्टवन्तः[2] वृषणः वर्षितारः यजमानाः देवयज्यया देवार्हेण यागेन, ता तौ अग्नीषोमौ अस्माभिः [3]इष्टौ सन्तौ[3] नः अस्मभ्यम् शर्म त्रिवरूथम् वि यंसतः विशेषेण प्रयच्छतामित्यर्थः ॥ ७ ॥

**वेङ्कट०** अग्नीषोमौ[4] वृषणौ अन्नलाभाय बहुभिः प्रशस्तौ उप स्तौमि । पुनः वृषणौ इति पूरणम् । यौ[5] यजन्ते वृषण.[6] यज्ञेन, तौ नः गृहम् त्रिवरूथम् दत्ताम् ॥ ७ ॥

धृ॒तव्र॑ताः क्ष॒त्रिया॑ यज्ञनि॒ष्कृतो॑ बृहद्दि॒वा अ॑ध्व॒राणा॑मभि॒श्रियः॑ ।
अ॒ग्निहो॑तार ऋ॒त॒सापो॑ अ॒द्रुहो॒ऽपो अ॑सृज॒न्ननु॑ वृत्र॒तूर्ये॑ ॥ ८ ॥

धृ॒त॒ऽव्र॑ताः । क्ष॒त्रिया॑ः । य॒ज्ञ॒नि॒ःऽकृत॑ः । बृ॒ह॒त्ऽदि॒वाः । अ॒ध्व॒राणा॑म् । अ॒भि॒ऽश्रियः॑ ।
अ॒ग्नि॒ऽहो॑तारः । ऋ॒त॒ऽसाप॑ः । अ॒द्रुह॑ः । अ॒पः । अ॒सृ॒ज॒न् । अनु॑ । वृ॒त्र॒ऽतू॑र्ये ॥ ८ ॥

**उद्गीथ०** धृतव्रताः अपरित्यक्तस्वकर्माणः देवाः क्षत्रियाः क्षतत्राणसमर्थाः यज्ञनिष्कृतः यज्ञस्य संस्कर्तारः बृहद्दिवाः महादीप्तयः अध्वराणाम् यज्ञानाम् अभिश्रियः आभिमुख्येन सेवितारः अग्निहोतारः अग्निहोतृकाः[7] अग्न्याह्वातृका वा ऋतसापः यज्ञेनार्चिता[8] उदकेन सर्वस्यार्चयितारो वा अद्रुहः परस्य यजमानानां वाऽद्रोग्धारः अपः वृष्ट्युदकानि असृजन् विसृजन्ति विक्षिपन्ति वर्षन्तीत्यर्थः । कदा । अनु वृत्रतूर्ये [9]वृत्रवधे निवृत्ते[9] पश्चाद् मेघवधानन्तरमित्यर्थः ॥ ८ ॥

**वेङ्कट०** धृतकर्माणः[10] जात्या क्षत्रियाः यज्ञनिष्कृतः निः यज्ञं प्रति निर्गमनं तस्य कर्तारः, महातेजसः यज्ञानाम् सेवितारः अग्निह्वातृकाः सत्यभाजः[11] अद्रोग्धारः उदकानि अनु असृजन् वृत्रवधे ॥८॥

द्यावा॑पृथि॒वी ज॒नय॑न्न॒भि व्र॒ताप॒ ओष॑धीर्व॒निना॑नि य॒ज्ञिया॑ ।
अ॒न्तरि॑क्षं॒ स्व१॒॑रा प॑प्रुरू॒तये॒ वशं॑ दे॒वास॑स्त॒न्वी॒३॒॑ नि मा॑मृजुः ॥ ९ ॥

द्यावा॑पृथि॒वी इति॑ । ज॒न॒य॒न् । अ॒भि । व्र॒ता । आप॑ः । ओष॑धीः । व॒निना॑नि । य॒ज्ञिया॑ ।
अ॒न्तरि॑क्षम् । स्व१॒॑रिति॑ स्वः । आ । प॒प्रुः॒ । ऊ॒तये॑ । वश॑म् । दे॒वास॑ः । त॒न्वि॑ । नि । म॒मृ॒जुः॒ ॥ ९ ॥

**उद्गीथ०** द्यावापृथिवी द्यावापृथिव्यौ जनयन् अभि आभिमुख्येन महता यत्नेन जनयन्ति विश्वे देवाः, व्रता व्रतानि च कर्माणि लौकिकानि वैदिकानि च जनयन्ति, आपः उदकानि[12] च ओषधीः च

---

१. बहुस्तोका वि[1]; बहुस्तोता वि[2] अ. २. तुरु[?] वि[1]. ३-३. इष्टा सन्तो मूको. ४. °षोमा वि[2] अ[1]. ५. तौ वि[1]. ६. वृषणा वि[2] अ[1]. ७. नास्ति मूको. ८. °नार्पिता मूको ९-९. °वधेन वृत्रे मूको. १०. °कर्मणः वि[1]. ११. °भाजां वि[2] अ[1]. १२. कानि मूको.

वनिनानि च वृक्षांश्चेत्यर्थः[1], यज्ञिया यज्ञार्हाण्यन्यानि[2] च भूतानि[3]। केन प्रकारेण जनयन्ति। उच्यते — यतः अन्तरिक्षम् च स्वः दिवः च आ पप्रुः आपूरयन्ति। केन। सामर्थ्याद् वृष्ट्या। ऊतये सतः सर्वस्य तर्पणाय। अतः वृष्ट्या जनयन्ति। जनयित्वा च वशम् कामं जगदनुग्रहेच्छां सर्वोपभोगेच्छां च देवासः विश्वे देवाः तन्वि स्वशरीरे आत्मनि नि ममृजुः निमृष्टवन्तो निश्चयेन शोधितवन्तः संस्तुतवन्तः अवाप्तकामाः संवृत्ता इत्यर्थः ॥ ९ ॥

वेङ्कट० द्यावापृथिव्यौ अभि अजनयन् कर्मणा आपः ओषधीः वृक्षांश्च [4]यज्ञियान्। स्वः[4] अन्तरिक्षम् तेजसा आ पूरयन्ति रक्षणाय। यज्ञञ्च[5] देवाः स्वशरीरे नि मृजन्ति कान्तम् ॥ ९ ॥

धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः ।
आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम् ॥ १० ॥

धर्तारः । दिवः । ऋभवः । सुऽहस्ताः । वातापर्जन्या । महिषस्य । तन्यतोः ।
आपः । ओषधीः । प्र । तिरन्तु । नः । गिरः । भगः । रातिः । वाजिनः । यन्तु । मे । हवम् ॥

उद्गीथ० धर्तारः स्वेनोपकारेण वृष्ट्यादिना[6] वा दिव द्युलोकस्य ऋभवः रश्मयः सौधन्वना वा देवरथकाराः सुहस्ताः शोभनहस्ताः वातापर्जन्या वातापर्जन्यौ च [7]महिषस्य महतः[7] तन्यतोः स्तनितशब्दस्य धारयितारौ धर्त्तारौ आपः च ओषधीः ओषधयः च प्र तिरन्तु प्रापयन्तु प्रार्थितार्थ-प्रदानेन[8] नः अस्माकम् गिरः स्तुतीः। भगः च रातिः 'रा दाने' दातेप्सितार्थानाम् वाजिनः च देवाः च आ यन्तु आगच्छन्तु च शृण्वन्त्वित्यर्थः, मे मम हवम् आह्वानम् ॥ १० ॥

वेङ्कट० धर्तारः द्युलोकस्य ऋभवः शोभनहस्ताः पर्जन्यावातौ च महतः शब्दस्य कर्तारौ भवतः। आपः ओषधयश्च प्र वर्धयन्तु[9] अस्माकम् स्तुतीः[10]। तथा भगः दाता अर्यमा[11] च वाजिनः च आगच्छन्तु मम आहवम्। 'अग्निर्वायुः सूर्यः। ते वै वाजिनः' (तैब्रा १,६,३,९) इति ब्राह्मणम् ॥ १० ॥

[12]इति अष्टमाष्टके द्वितीयाध्याये त्रयोदशो वर्गः[12] ॥

समुद्रः सिन्धू रजो अन्तरिक्षमज एकपात् तनयित्नुरर्णवः ।
अहिर्बुध्न्यः शृणवद्वचांसि मे विश्वे देवास उत सूरयो मम ॥ ११ ॥

समुद्रः । सिन्धुः । रजः । अन्तरिक्षम् । अजः । एकऽपात् । तनयित्नुः । अर्णवः ।
अहिः । बुध्न्यः । शृणवत् । वचांसि । मे । विश्वे । देवासः । उत । सूरयः । मम ॥ ११ ॥

---

१. वृक्षाश्चे° मूको. २. °ण्यन्नानि मूको. ३. भूतेन वि[2] अ. ४-४. यज्ञिया तस्य वि[1]. ५. यज्ञश्च वि[2] अ[1]; °ज्ञं च च वि[1]. ६. दिना वि[1]; दिवा वि[2] अ. ७-७. महतो महिषस्य वि[2] अ. ८. °दाने मूको. ९. °वर्तय° वि[2] अ[1]. १०. °तिः वि[1]. ११. यथा वि[1]. १२-१२. नास्ति मूको.

**उद्गीथ०** समुद्रः च सिन्धुः च रजः लोकश्च पृथिवीद्युलक्षणः अन्तरिक्षम् च अजः एकपात् चादित्यः तनयित्नुः स्तनयित्नुश्च पर्जन्यश्चेत्यर्थः, अर्णवः उदकवान् अहिर्बुध्न्यः अन्तरिक्ष्यः[१] शृणवत् शृणोतु वचांसि स्तुतिवचनानि मे मम सम्बन्धीनि। उत अपि विश्वे देवासः सूरयः च[२] मेधाविनः मम, हवींषि भक्षयन्त्विवति शेषः ॥ ११ ॥

**वेङ्कट०** समुद्रादयो मम वचनम् शृण्वन्तु। समुद्रः स्यन्दमानोदकः सिन्धुः रजः च अन्तरा [३]क्षान्तम् अन्तरिक्षमिति[३] (तु. या २,१०) अजः च देवः एकपात् मेघश्चोदकवान् अहिः च बुध्न्यः देवः अपि च विश्वे देवाः प्राज्ञा इति ॥ ११ ॥

**स्याम॑ वो मन॑वो दे॒ववी॑तये॒ प्राञ्चं॑ नो य॒ज्ञं प्र ण॑यत साधु॒या।**
**आदि॑त्या रुद्रा वस॑वः सुदा॑नव इ॒मा ब्रह्म॑ श॒स्यमा॑नानि जिन्वत ॥ १२ ॥**

स्याम॑। वः॒। मन॑वः। दे॒व॒ऽवी॑तये। प्राञ्च॑म्। नः॒। य॒ज्ञम्। प्र। न॒य॒त॒। सा॒धु॒ऽया।
आदि॑त्याः। रु॒द्राः। वस॑वः। सु॒ऽदा॑नवः। इ॒मा। ब्रह्म॑। श॒स्यमा॑नानि। जि॒न्व॒त॒ ॥ १२ ॥

**उद्गीथ०** स्याम भवेम वयम् वः युष्माकं देवानाम् मनवः[४] मन्तारः स्वरूपतो ज्ञातारः। क[५]। देववीतये देवा [६]वियन्ति गच्छन्ति[६] अङ्गभावाय, भक्षयन्ति हवींषि अस्मिन्निति वा[७] देववीतिर्यज्ञः। तत्र देववीतौ[८] यज्ञे। सप्तम्यर्थे चतुर्थी। किञ्च प्राञ्चम् प्राचीनदिशम् अञ्चितं गतं प्राङ्मुखम् नः अस्माकम् यज्ञम् प्र नयत प्रापयत प्रोत्सर्पयत साधुया साधु शोभनम् सम्यगित्यर्थः। प्रणीय च हे आदित्याः! रुद्राः! वसवः! सुदानवः! इमा इमानि ब्रह्म शस्त्रलक्षणानि ब्रह्माणि अस्माकम्[९] युष्मदर्थम् शस्यमानानि जिन्वत श्रवणेन प्रीणयत शृणुतेत्यर्थः ॥ १२ ॥

**वेङ्कट०** भवेम देवाः! युष्माकम् वयं यज्ञाय। प्राचीनम् अस्माकम् यज्ञम् प्र नयत कल्याणम्। आदित्यादयः! सुदानाः! इमानि स्तोत्राणि शस्यमानानि प्रीणयत[१०] ॥ १२ ॥

**दैव्या॒ होता॑रा प्रथ॒मा पु॒रोहि॑त ऋ॒तस्य॒ पन्था॒मन्वे॑मि साधु॒या।**
**क्षेत्र॑स्य॒ पति॑ं प्रति॑वेशमीमहे॒ विश्वा॑न् दे॒वाँ अ॒मृता॑ँ अप्र॑युच्छतः ॥ १३ ॥**

दैव्या॑। होता॑रा। प्र॒थ॒मा। पु॒रःऽहि॑ता। ऋ॒तस्य॑। पन्था॑म्। अनु॑। ए॒मि॒। सा॒धु॒ऽया।
क्षेत्र॑स्य। पति॑म्। प्रति॑ऽवेशम्। ई॒म॒हे॒। विश्वा॑न्। दे॒वान्। अ॒मृता॑न्। अप्र॑ऽयुच्छतः ॥ १३ ॥

**उद्गीथ०** दैव्या देवेषु भवौ होतारा होतारौ देवानाम् आह्वातारौ प्रथमा मानुषाद्धोतुः[११] पूर्वौ पुरोहिता

---

१. आन्तरिक्ष्यः वि[१]. २. नास्ति वि[२] अ. ३-३. °क्षान्तमन्तमन्तरि° वि[२]; °क्षन्तमन्तरि° अ[१]; आन्तरिक्षान्तमन्तरि° वि[१]. ४. मुनयो मनवः वि[२] अ. ५. कं वि[१]; कः वि[२] अ. ६-६. व्यति गच्छति वि[२] अ; व्यति ग° वि[१]. ७. नास्ति मूको. ८. °वीतये मूको. ९. अस्मान् मूको. १०. °तः वि[१]. ११. °षाद्धेतुः मूको.

देवानां पुरोहितौ अग्निवायू ऋतस्य यज्ञस्य पन्थाम् मनुष्ययानमार्गं[1] साधनसम्पल्लक्षणम् अनु एमि अनुगच्छामि अनुपूर्वं याचामीत्यर्थः[2], साधुया साधु शोभनम्। [3]तथा क्षेत्रस्य पतिम् प्रतिवेशम्, अन्यांश्च[3] अमृतान् मरणवर्जितान् अप्रयुच्छतः अप्रमाद्यतः स्वाधिकारं प्रति प्रमादमकुर्वतः [3]विश्वान् देवान् ईमहे याचामहे[3] ॥ १३ ॥

वेङ्कट० दैव्यौ होतारौ प्रथमौ पुरोहितौ भवतः। यज्ञस्य पन्थानम् अनु गच्छामि साधु। क्षेत्रस्य पतिम् समीपस्थम् याचामहे विश्वान् च देवान् अमृतान् अप्रमाद्यतः ॥ १३ ॥

वसिष्ठासः पितृवद्वाचमक्रत देवाँ ईळाना ऋषिवत् स्वस्तये ।
प्रीता इव ज्ञातयः काममेत्यास्मे देवासोऽव धूनुता वसु ॥ १४ ॥

वसिष्ठासः। पितृऽवत्। वाचम्। अक्रत। देवान्। ईळानाः। ऋषिऽवत्। स्वस्तये।
प्रीताःऽइव। ज्ञातयः। कामम्। आऽइत्य। अस्मे इति। देवासः। अव। धूनुत। वसु ॥१४॥

उद्गीथ० वसिष्ठासः वसिष्ठसदृशा वक्तारो वा स्तुतिभिः हविर्भिश्च आच्छादयितारो देवानां [4]वसुकर्णनामानो मल्लक्षणाः[4] पितृवत् वसुक्रनाममत्पितृतुल्यम् ऋषिवत् गौतमभरद्वाजादिमहर्षितुल्यं च वाचम् स्तुतिलक्षणाम् अक्रत देवार्थं कृतवन्तः देवान् ईळानाः स्तुवन्तः। किमर्थम्। स्वस्तये अविनाशायात्मनः। एतद् ज्ञात्वा प्रीताः इव ज्ञातयः कामम् एत्य यथा प्रीताः परितुष्टाः ज्ञातयः स्वजनाः मित्रभ्रात्रादयः कामं प्रार्थितमर्थम् एत्य प्राप्य लब्ध्वा प्रत्युपकारार्थं धनं प्रयच्छन्ति, एवं स्तुतीः हविर्लक्षणं प्रार्थितमर्थं च प्राप्य परितुष्टाः सन्तो यूयं हे देवासः! अस्मे अस्मभ्यम् अव धूनुत अवकम्पयत दत्तेत्यर्थः, वसु धनम् ॥ १४ ॥

वेङ्कट० वसिष्ठकुलजाताः तद्वत् स्तोत्रम् कुर्वन्ति देवान् स्तुवन्तः ऋषय इव पूर्वे अविनाशाय। प्रीताः इव ज्ञातयः यथाकामम् आगत्य अस्मासु[5] हे देवाः! प्रेरयत धनम् ॥ १४ ॥

देवान् वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनाभि प्रतस्थुः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

देवान्। वसिष्ठः। अमृतान्। ववन्दे। ये। विश्वा। भुवना। अभि। प्रऽतस्थुः।
ते। नः। रासन्ताम्। उरुऽगायम्। अद्य। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ १५ ॥

उद्गीथ० देवान् वसिष्ठः इति व्याख्यातार्थम् ( ऋ १०,६५,१५ द्र. ) ॥ १५ ॥

[6]इति अष्टमाष्टके द्वितीयाध्याये चतुर्दशो वर्गः[6] ॥

---

१. मनुष्यानुमार्गं वि[1]; मनुष्यानमार्गं वि[2] अ. २. याचया° वि[2] अ. ३-३. नास्ति मूको. ४-४. वसुकर्णानां समानलक्षणाः वि[1]; वसुकर्णानां अमानो[मक्षा]णाः वि[2] अ. ५. अथ का° वि[1]. ६-६. नास्ति मूको.

[ ६७ ]

[1]अयास्य आङ्गिरस ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः[1] ।

इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविन्दत् ।
तुरीयं स्विज्जनयद्विश्वजन्योऽयास्य उक्थमिन्द्राय शंसन् ॥ १ ॥

इमाम् । धियम् । सप्तऽशीर्ष्णीम् । पिता । नः । ऋतऽप्रजाताम् । बृहतीम् । अविन्दत् ।
तुरीयम् । स्वित् । जनयत् । विश्वऽजन्यः । अयास्यः । उक्थम् । इन्द्राय । शंसन् ॥ १ ॥

उद्गीथ० उत्तरे सूक्ते द्वादशर्चे 'इमां धियम्', 'उदप्रुतो न वयः' इत्येते बृहस्पतिदेवते अयास्य[2] आङ्गिरसो ददर्श । इमाम् धियम् धीः प्रज्ञा । तज्जन्यां स्तुतिमित्यर्थः । सप्तशीर्ष्णीम् सप्तच्छन्दः-शिरस्काम् पिता नः अस्माकम् ऋतप्रजाताम् यज्ञाय[3] समुत्पन्नाम् बृहतीम् महतीम् अविन्दत् बृहस्पत्यर्थं लब्धवान् प्रदेशान्तरे [4]दृष्टवान् । अनया[4] स्तुत्या सप्तच्छन्दोयुक्तया महत्या मम पिता अङ्गिरा यज्ञे बृहस्पतिं स्तुतवानित्यर्थः[5] । अस्याः स्तुतेः मत्पितृदृष्टायाः तुरीयम् स्वित् चतुर्थं वा न वा चतुर्भागयुक्तं वा कृतं वेत्यर्थः, जनयत् आत्मानं परोक्षीकृत्य ब्रवीति मन्त्रदृक् । पुरुषव्यत्ययो वा कर्तव्यः । अहम् अजनयं जनितवानस्मि दृष्टवानस्मीत्यर्थः, विश्वजन्यः सर्वजनाय हितः अयास्यः अयास्यनामाऽहम् उक्थम् स्तुतिजातम् इन्द्राय शंसन् इन्द्रस्य परमेश्वरस्य बृहस्पतेरर्थाय उच्चारयन्नित्यर्थः ॥ १ ॥

वेङ्कट० अयास्य आङ्गिरसः । इमाम् धात्रीं कर्मणां तनुवं[6] सप्तशिरस्काम् पिता अस्माकम् यज्ञार्थं प्रजाताम् महतीम् लब्धवान्[7] । ध्यातारं[8] कर्मणां बृहस्पतिं पुत्रमलभतेत्यर्थः । 'सप्तास्यस्तुविजातो रवेण' ( तैब्रा २,८,२,७ ) इत्युक्तम् । तुरीयम् नप्तारमपि जनयतु अयम् अयास्यः पाञ्चजन्यः उक्थम् ईश्वराय बृहस्पतये शंसन् इति ॥ १ ॥

ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः ।
विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त ॥ २ ॥

ऋतम् । शंसन्तः । ऋजु । दीध्यानाः । दिवः । पुत्रासः । असुरस्य । वीराः ।
विप्रम् । पदम् । अङ्गिरसः । दधानाः । यज्ञस्य । धाम । प्रथमम् । मनन्त ॥ २ ॥

उद्गीथ० ऋतम् शंसन्तः सदा स्तुवन्तः ऋजु अजिह्मम् अकुटिलम् दीध्यानाः ध्यायन्तः सदा चिन्तयन्तः दिवः दीप्तस्याग्नेः द्युलोकस्य वा असुरस्य प्राणवतः प्रज्ञावतो वा पुत्रासः पुत्राः वीराः विक्रान्ताः विप्रम् मेधाविनं सर्वज्ञम् पदम् स्थानम् अमर्याख्यम्[9] अङ्गिरसः दधानाः मनसा धारयन्तः ध्यायन्त इत्यर्थः, यज्ञस्य धाम स्थानम् प्रथमम् आत्माख्यम् मनन्त ज्ञातवन्तः साक्षात्कृतवन्त इत्यर्थः ॥ २ ॥

---

१-१. नास्ति मूको. २. आयाः मूको. ३. यमज्ञा वि[2] अ[1]; यज्ञ वि[1]. ४. दृष्ट्रेवान्° वि[2] अ; दृष्ट्वा नया वि[2]. ५. कृतवा° वि[1] अ. ६. धनुवं वि[2] अ[1]; तनुवां वि[1]. ७. खण्डवन् वि[1]. ८. धातारं वि[2] अ[1]; ध्यन्तारं वि[1]. ९. अर्याख्यम् मूको.

**वेङ्कट०** सत्यम् वदन्तः कल्याणं ध्यायन्तः दीप्तस्य प्रज्ञावतः अङ्गिरसः पुत्राः वीराः प्रज्ञापकम् स्थानम् अङ्गिरसः कर्मणा धारयन्तः यज्ञस्य धारकं बृहस्पत्याख्यम् प्रथमम् स्तुवन्ति । प्रज्ञापकं [1]ह्येतत् स्थानं[1] यद् बृहस्पतिरिति ॥ २ ॥

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥ ३ ॥

हंसैःऽइव । सखिऽभिः । वावदत्ऽभिः । अश्मन्ऽमयानि । नहना । विऽअस्यन् ।
बृहस्पतिः । अभिऽकनिक्रदत् । गाः । उत । प्र । अस्तौत् । उत् । च । विद्वान् । अगायत् ॥

**उद्गीथ०** तैः[2] अङ्गिरोभिः सखिभिः हंसैः इव वावदद्भिः यथा हंसा वदन्ति अत्यर्थं शब्दमुच्चारयन्ति, एवम् अत्यर्थं स्तुतीः वदद्भिः सहेत्यर्थः, अश्मन्मयानि[3] मेघमयानि पाषाणमयानि वा मेघसम्बन्धीनि वा पाषाणवद् दृढानि वेत्यर्थः, नहना नहनानि मेघस्य सर्वाङ्गसन्धिबन्धनानि व्यस्यन् विक्षिपन् वज्रेण छिन्दन् बृहस्पतिः अभिकनिक्रदत् अभिक्रन्दति उच्चारयति होतृत्वेन[4] गाः वाचः शस्त्रलक्षणाः स्तुतीरित्यर्थः । उत प्र अस्तौत् अपि प्रस्तौति । उत् च विद्वान् अगायत् उद्गायति च विद्वान् सर्वज्ञः ॥ ३ ॥

**वेङ्कट०** हंसैः इव मधुवाग्भिः सखिभिः स्तुवद्भिः अत्यन्तम् असुराणाम् अश्मन्मयानि नहनानि शिथिलयन्[5] सः[6] बृहस्पतिः अभिशब्दयन् पशून् पणिभिरपहृतान् आजिहीर्षुरित्यर्थः, कर्मणि [7]प्रवृत्तो यज्ञे[7] सखिभिः [8]सहासीनः साम[8] गातुमपि च प्र अस्तौत्, उत् अगायत् यः च उद्गाता भूत्वेति ॥३॥

अवो द्वाभ्यां पर एकया गा गुहा तिष्ठन्तीरनृतस्य सेतौ ।
बृहस्पतिस्तमसि ज्योतिरिच्छन्नुदुस्रा आकर्वि हि तिस्र आवः ॥ ४ ॥

अवः । द्वाभ्याम् । परः । एकया । गाः । गुहा । तिष्ठन्तीः । अनृतस्य । सेतौ ।
बृहस्पतिः । तमसि । ज्योतिः । इच्छन् । उत् । उस्राः । आ । अकः । वि । हि । तिस्रः । आवरित्यावः ॥

**उद्गीथ०** द्वाभ्याम् स्तुतिभ्याम् एकया वा स्तुत्या, स्तुत इति शेषः, परः प्रकृष्टः परस्ताद्वा स्थितः सन् अवः अवस्तात् अधस्तात् गाः अपः गुहा गूढे संवृते तिष्ठन्तीः अनृतस्य असत्यस्य अविद्यमानसदृशस्य उत्पन्नप्रध्वंसिनो मायाविनो मेघस्य [9]सेतौ अपाकुर्वन्[9] इत्यर्थः । [10]बृहस्पतिः तस्मिन् तमसि ज्योतिः कर्तुम् इच्छन्[10] वि हिं तिस्रः आवः । हीति पदपूरणः । तिस्रः त्रिसङ्ख्यायुक्ताः[11] बह्वीरित्यर्थः, [12]वि आवः[12] मेघं हत्वा व्युद्घाटयति । विवृत्य च उत्

---

१-१. ह्येत वि[2] अ[1]. २. कैः मूको. ३. ॰यानि यानि वि[2]. ४. हेतिकर्तृ॰ मूको. ५. ॰लन् वि[2] अ[1]. ६. नास्ति वि[1]. ७-७. ॰वृत्तौ यज्ञैः वि[2] अ[1]. ८-८. त्रुटितम् वि[2] अ[1]. ९-९. सेतौ अपां कु॰ वि[1]; सेतोरपाकु॰ वि[2] अ. १०-१०. नास्ति मूको. ११. तिस्रसं॰ मूको. १२-१२. नास्ति वि[1]; वि आपो वि[2] अ.

उस्राः आ अकः । 'उस्रा' ( निघ २,११ ) इति गोनाम । उस्रा गोसदृशीरित्यर्थः, तद्वद्[1] जगदुपकारिणीरित्यर्थः । उत् आ अकः उद्गताः[2] करोति[3] मर्यादया । मेघस्याधःस्थितस्य उपरितने भागे उदकधारा ऊर्ध्वं गच्छन्ति । गत्वा च संस्कारक्षये गुरुत्वाद् अधः पतन्ति[4] वृष्टिभावेन ॥ ४ ॥

वेङ्कट० पणयः गाः आहृत्य त्रिषु स्थानेषु न्यदधुः । तत्र अवस्तात् स्थिताः उस्राः सः[5] द्वाभ्याम् स्तोत्रियाभ्याम् उदाजत् परस्तात् स्थिताः पुनः एकया एव । अथ गुहायाम् तिष्ठन्तीः अनृतस्य तमसः सेतौ बृहस्पतिः तस्मिन् तमसि ज्योतिः कर्तुम् इच्छन् तत्र स्थिताः उस्राः उत् आ अकरोत् इत्थम् अयम् तिस्रः असुराणां द्वारः विवृतवानिति ॥ ४ ॥

विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत् ।
बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥ ५ ॥

विऽभिद्य । पुरम् । शयथा । ईम् । अपाचीम् । निः । त्रीणि । साकम् । उदऽधेः । अकृन्तत् ।
बृहस्पतिः । उषसम् । सूर्यम् । गाम् । अर्कम् । विवेद । स्तनयन्ऽइव । द्यौः ॥ ५ ॥

उद्गीथ० विभिद्य विदार्य वज्रेण पुरम् मेघमूर्तिम् अपाचीम् अधोगामिनीम् शयथा । ईम् इति पदपूरणः । शयनेन सम्मूर्च्छितत्वलक्षणेन[6] संयोज्येति शेषः । त्रीणि जघनोरःशिरांसि[7] उदधेः उदकनिधानस्य उदमेघस्य सम्बन्धीनि साकम् सह युगपत् निः अकृन्तत् निष्कृत्तवान्[8] 'निश्छिन्नवान् निश्छिनत्ति[9]' । [10]निष्कृत्ते च[10] सर्वस्याऽऽच्छादके मेघे विनष्टे बृहस्पतिः उषसम् सूर्यम् च गाम् पृथिवीं च अर्कम् च अर्चनीयग्रहनक्षत्रतारादिजातम् विवेद वेदयति ज्ञापयति प्रकाशयति । किमिव । स्तनयन् इव द्यौः यथा स्तनितशब्दं कुर्वन् द्यौः दीप्तविद्युद्रूपः पर्जन्यः सर्वं प्रकाशयति, एवम् ॥ ५ ॥

वेङ्कट० विभिद्य इमाम् असुरपुरीम् उपशयेन[11] पराङ्मुखीम्[12] निः अकृन्तत् त्रीणि साकम् उदधः वलाद् मेघरूपाद् असुरात् बृहस्पतिः उषसम् सूर्यम् उस्राम् च तानि त्रीणि । सोऽयं मन्त्रम् प्रज्ञापयति यथा स्तनयन् द्यौः शब्दमिति ॥ ५ ॥

इन्द्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण ।
स्वेदाञ्जिभिराशिरमिच्छमानोऽरोदयत् पणिमा गा अमुष्णात् ॥ ६ ॥

इन्द्रः । वलम् । रक्षितारम् । दुघानाम् । करेणऽइव । वि । चकर्त । रवेण ।
स्वेदाञ्जिऽभिः । आऽशिरम् । इच्छमानः । अरोदयत् । पणिम् । आ । गाः । अमुष्णात् ॥ ६ ॥

---

१. तं वि[2] अ; तद् वि[1]. २. उद्गाताः मूको. ३. करोमि नूको. ४. पतति वि[2] अ. ५. नास्ति वि[1]. ६. समुच्छ्रित° वि[2] अ. ७. जघानो° वि[2] अ. ८. °ष्कृतवान् मूको. ९-९. विच्छिन्न वाम् छिनत्ति वि[1]; °वानि.च्छिनत्ति वि[2] अ. १०-१०. निष्कृ च वि[1]; निष्कृष्य वि[2] अ. ११. °पशमनेन वि[2] अ[1]; °पशयनेन वि[1]. १२. °मुखी वि[2,1]; °मुखो अ[1].

**उद्गीथ०** इन्द्रः परमेश्वरो बृहस्पतिः वलम् मेघम् रक्षितारम् परिपालयितारं परिवेष्टयितारम् दुघानाम् सर्वस्य प्रपूरयित्रीणाम् अपाम् करेण इव हस्तेनेव सामर्थ्याद् वज्रेण[1] वा केवलेन चकर्त कृन्तति छिनत्ति वि रवेण हाङ्कारहनहनादिविविधशब्देन[2] । छित्वा च[3] स्वेदाञ्जिभिः स्वेदस्य स्वेदितुः[4] क्षरितुरुदकस्य अञ्जिभिः अभिव्यक्तिभिः उत्पादनैः [5]अथवा क्षरितुरुदकस्य[5] अभिव्यञ्जकैः अङ्गिरोभिः सह आशिरम् सोमम् इच्छमानः कामयमानः अरोदयत् रोदयति अश्रुस्थानीयां वृष्टिं विमोचयति । पणिम् पणिसदृशं[6] मितदायिनं मेघं रोदयित्वा च तस्य आ गाः अपः अमुष्णात् मर्यादया मुष्णाति अपहरति स्वीकृत्य भूमौ क्षिपतीत्यर्थः ॥ ६ ॥

**वेङ्कट०** ईश्वरो बृहस्पतिः अभिनत् वलम् रक्षितारम् गवाम् । करेण इव सायुधेन शब्देनैव वलम् वि चकर्त । स्वेदाञ्जयो मरुतः क्षरदाभरणा[7] इति । तैः सह आशिरम् इच्छमानः पणिम् अरोदयत् आ अमुष्णात् च तं पणिं तेनापहृताः गाः इति ॥ ६ ॥

[8]इति अष्टमाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[8] ॥

स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ७ ॥

सः । ईम् । सत्येभिः । सखिऽभिः । शुचत्ऽभिः । गोऽधायसम् । वि । धनऽसैः । अदर्दरित्यदर्दः ।
ब्रह्मणः । पतिः । वृषऽभिः । वराहैः[9] । घर्मऽस्वेदेभिः । द्रविणम् । वि । आनट् ॥ ७ ॥

**उद्गीथ०** ईम् इति पदपूरणः । सः 'प्रकृतः ब्रह्मणः पतिः' बृहस्पतिः सत्येभिः सत्यैरविसंवादिभिः सखिभिः अङ्गिरोभिः सह शुचद्भिः दीप्यमानैः गोधायसम् गवाम् अपां धातारं मातरं वा मेघम् धनसैः धनस्य नानाजातीयस्य विशिष्टस्य सम्भक्तृभिरित्यर्थः, 'वृषभिः वर्षितृभिः वराहैः वराहारैः वरस्य उदकस्य आहर्तृभिः' घर्मस्वेदेभिः यज्ञं च प्रति चरितृभिः गन्तृभिरित्यर्थः, 'वि अदर्दः व्यदारयत्' । विदार्य च द्रविणम् धनम् उदकाख्यं तत्रत्यम् वि आनट् विविधं प्राप्तवान् ॥ ७ ॥

**वेङ्कट०** सः एनं वलं सत्यैः सखिभिः ज्वलद्भिः धृतपशुम् वि अदारयत् धनस्य सम्भक्तृभिः । ब्रह्मणः पतिः वर्षितृभिः वराहारैः मरुद्भिः क्षरदुदकैः[10] गोधनम्[11] [12]वि आनट् व्याप्नोति[12] ॥ ७ ॥

ते सत्येन मनसा गोपतिं गा इयानास इषणयन्त धीभिः ।
बृहस्पतिर्मिथो अवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ॥ ८ ॥

---

१. वज्रं मूको. २. हाउकार° वि[2]; हाकार° अ. ३. नास्ति वि[1]. ४. स्वेदितुं वि[2] अ.
५-५. एवं रक्षितुरु° वि[1]; °वा रक्षितरु° वि[2] अ. ६. वाणिजं स° वि[2] अ; पणिज स° वि[1]. ७. क्षरणा° वि[1].
८-८. नास्ति मूको. ९. वराहाः=अङ्गिरस इति या. (५,४). १०. °दुदकं वि[1]. ११ °धनैः वि[1].
१२-१२. व्याधनदिति वि[1]; नड्वेति वि[2] अ[2].

ते । स॒त्येन॑ । मन॑सा । गोऽप॑तिम् । गाः । इ॒या॒नास॑ः । इ॒ष॒ण॒य॒न्त॒ । धी॒भिः ।

बृह॒स्पति॑ः । मि॒थःऽअ॑वद्यपेभिः । उत् । उ॒स्रिया॑ः । अ॒सृ॒ज॒त॒ । स्व॒युक्ऽभि॑ः ॥ ८ ॥

**उद्गीथ०** ते प्रकृता अङ्गिरसः सत्येन अविसंवादिना सदा भक्तियुक्तेन मनसा धीभिः च याग-कर्मभिः इयानासः शुद्धोऽप्ययमेतिरत्रोपपूर्वार्थो[1] द्रष्टव्यः । [2]उपगच्छन्तः उपसर्पन्त[2] इत्यर्थः, गोपतिम् गवाम् अपां मेघोदरगतानां स्वामिनं बृहस्पतिम् गाः अपः वृष्टिलक्षणाः इषणयन्त कामितवन्तः प्रार्थितवन्त इत्यर्थः । प्रार्थितश्च सन् बृहस्पतिः मिथोऽवद्यपेभिः [3]परस्परम् अवद्यात् पालयितृभिः[3] वर्षितृभिः [4]स्वयुग्भिः स्वसयुग्वभिः[4] अङ्गिरोभिः सह उस्रियाः गोसदृशीः उपभोग्या अपः मेघोदरगताः उत् असृजत उत्सृष्टवान् उद्गमितवान् मेघं हत्वा ॥ ८ ॥

**वेङ्कट०** ते अव्याजेन मनसा गोपतिम् पशून् पणिभिरपहृतान् अभिगच्छन्तः[5] ऐच्छन् स्तुतिकर्मभिः । बृहस्पतिः [6]च तैः[6] मिथोऽवद्यपेभिः । अवद्या रक्षितव्या येषु परस्परं सङ्गच्छन्ते ते तथोक्ताः । उत् असृजत पशून् स्वयंयुक्तैर्मरुद्भिरिति[7] ॥ ८ ॥

तं व॒र्धय॑न्तो म॒तिभि॑ः शि॒वाभि॑ः सिं॒हमि॑व॒ नान॑दतं स॒धस्थे॑ ।

बृह॒स्पतिं॒ वृष॑णं॒ शूर॑साता॒ भरे॑भरे॒ अनु॑ मदेम जि॒ष्णुम् ॥ ९ ॥

तम् । व॒र्धय॑न्तः । म॒तिऽभि॑ः । शि॒वाभि॑ः । सिं॒हम्ऽइ॑व । नान॑दतम् । स॒धऽस्थे॑ ।

बृह॒स्पति॑म् । वृष॑णम् । शूर॑ऽसातौ । भरे॑ऽभरे । अनु॑ । म॒दे॒म॒ । जि॒ष्णुम् ॥ ९ ॥

**उद्गीथ०** तम् प्रकृतम् उक्तं वक्ष्यमाणगुणम् बृहस्पतिम् वीर्येण वर्धयन्तः वयम् मतिभिः स्तुतिभिः शिवाभिः सुखकरीभिः सिंहम् इव अत्यर्थम् नानदतम् शत्रुविद्रावणार्थं सिंहनादं कुर्वाणमित्यर्थः । वृषणम् वर्षितारं कामानाम् अपां च शस्त्रवृष्टिं च । क तं वर्धयन्तः । शूरसातौ शूराः परस्परं युद्धेन सम्भजन्ते वधाय ददति[8] वा यत्र तस्मिन् भरे-भरे सङ्ग्रामे-सङ्ग्रामे सधस्थे[9] सहस्थाने वेद्याख्ये स्थिताः सन्तो वयम् जिष्णुम् जयशीलम् अनु मदेम अनुतृप्येम तत्तृप्त्यनन्तरं सोमेन सदा तृप्येमेत्याशास्महे इत्यर्थः ॥ ९ ॥

**वेङ्कट०** तम् वर्धयन्तः स्तुतिभिः कल्याणीभिः सिंहम् इव शब्दयन्तम् अन्तरिक्षे बृहस्पतिम् वृषणम् शूरैः सम्भजनीये सङ्ग्रामे अनु-ष्टुमः जिष्णुम् ॥ ९ ॥

य॒दा वाज॒मस॑नद्वि॒श्वरू॑प॒मा द्याम॑रु॑क्ष॒दुत्त॑रा॒णि॒ सद्म॑ ।

बृह॒स्पतिं॒ वृष॑णं व॒र्धय॑न्तो॒ नाना॒ सन्तो॒ बिभ्र॑तो॒ ज्योति॑रा॒सा ॥ १० ॥

---

१. °तिरत्र पूर्वा° वि[1]; °तिरत्रेपपूर्वा° वि[2] अ. २-२. °च्छन्तूपसर्पन्तु मूको. ३-३. परस्पर…तृभिः वि[1]; परस्वेरयितृभिः वि[2]; प्रस्वेरयिभि अ. ४-४. स्वयुग्भिः स्वसयुग्विर्युभिः मूको. ५. अपग° वि[2] अ[1]. ६-६. चक्रैः वि[2] अ[1]. ७. °रित्यर्थः अ[1]. ८. ददाति मूको. ९. नास्ति वि[1].

यदा । वाजम् । असनत् । विश्वऽरूपम् । आ । द्याम् । अरुक्षत् । उत्ऽतराणि । सद्म ।
बृहस्पतिम् । वृषणम् । वर्धयन्तः । नाना । सन्तः । बिभ्रतः । ज्योतिः । आसा ॥ १० ॥

**उद्गीथ०** यदा यस्मिन् यागकाले वाजम् अन्नं हविराख्यम् विश्वरूपम् पुरोडाशसोमधानारूपम्[1] असनत् सनितवान्[2] सम्भक्तवान् भुक्तवान् भवति अस्माकम्[3], द्याम् दिवं च यदा आ अरुक्षत् आरोहति उत्तराणि च सद्म [4]सद्मानि स्थानानि[4], यानि[5] पुराणे प्रोक्तानि — आदित्यलोकाच्चन्द्रलोकं चन्द्रलोकान्नक्षत्रलोकं नक्षत्रलोकाद् बृहस्पतिलोकम् इति। तानि च यदा आरोहति, तदा बृहस्पतिम् वृषणम् वर्षितारं वीर्येण वर्धयन्तः अङ्गिरसः[6], अन्वारोहन्तीति शेषः। कथं वर्धयन्तः अन्वारोहन्ति[7]। उच्यते — नाना सन्तः[8] पृथक् पृथक् भवन्तः एकैकश इत्यर्थः, बिभ्रतः धारयन्तः ज्योतिः गुणानां प्रकाशयितृ स्तुतिजातम् आसा आस्येन, पृथक्-पृथक् स्तुतिभिरित्यर्थः ॥ १० ॥

**वेङ्कट०** यदा नानारूपम् हविः भजते, यदा वा आ रोहति द्याम् उत्तराणि वा स्थानानि, तदानीं तम् बृहस्पतिम् वृषणम् आस्येन[9] वर्धयन्तः भवन्ति, स्तुवन्ति च नाना दिक्षु भवन्तः ज्योतिः धारयन्तः ॥ १० ॥

सत्यामाशिषं कृणुता वयोधै कीरिं चिद्ध्यवथ स्वेभिरेवैः ।
पश्चा मृधो अप भवन्तु विश्वास्तद्रोदसी शृणुतं विश्वमिन्वे ॥ ११ ॥

सत्याम् । आऽशिषम् । कृणुत । वयःऽधै । कीरिम् । चित् । हि । अवथ । स्वेभिः । एवैः ।
पश्चा । मृधः । अप । भवन्तु । विश्वाः । तत् । रोदसी इति । शृणुतम् । विश्वमिन्वे इति विश्वम्ऽइन्वे ॥ ११ ॥

**उद्गीथ०** कृणुत अवथ इति उभयत्रापि पूजनार्थं बहुवचनम्। एकवचनस्य वा स्थाने व्यत्ययेनेदं बहुवचनं बृहस्पतेरेकस्योच्यमानत्वात्। सखिभिरङ्गिरोभिः उपसर्जनीभूतैर्वा स बृहस्पतिरुच्यते। द्वितीये पादे व्याख्याप्रारम्भः, हेतूपादानात्। कीरिम् चित् 'कीरिः' (निघ ३,१६) इति स्तोतृनाम। चिच्छब्दश्चार्थे। तच्छुतेश्च यष्टृशब्दाध्याहारः कार्यः। हिः हेतौ। यस्मात्[10] कीरिं च स्तोतारं च यष्टारं च अवथ सदा रक्षथ तर्पयथ वा यूयम् [11]स्वेभिः एवैः स्वैः अवनैः[11], तस्मात् सत्याम् अवितथाम् सफलामित्यर्थः, आशिषम् अस्मत्प्रार्थनाम् कृणुत कुरुत यूयम्। कथम्। वयोधै। छान्दसत्वात् अत्र विसर्जनीयाभावः। वयः अन्नम्। दधातिरत्र दानार्थः, कप्रत्ययश्चात्र भावे। वयोधैः अस्मभ्यमन्नदानैरित्यर्थः। सफलायां च कृतायाम् आशिषि पश्चा पश्चात् मृधः सङ्ग्रामकारिण्यः[12] अस्मच्छत्रुजातयः[13] विश्वाः सर्वाः अप भवन्तु अस्मदपहताः सन्तु[14] युष्मत्प्रसादात्। तत् चैकं मम वचो यथोक्तं बृहस्पत्यनुज्ञायाः साक्षिभूते! शृणुतम् युवां हे रोदसी! द्यावापृथिव्यौ! विश्वमिन्वे सर्वगते सर्वव्यापिन्यौ वा ॥ ११ ॥

---

१. °धानानुरू° मूको. २. सहित° वि[1]. ३. अस्मान् वि[1]; भस्मान् वि[2] अ. ४-४. सद्मस्थानानि वि[2] अ. ५. यानानि मूको. ६. आङ्गि° मूको. ७. आरो° वि[1]. ८. नास्ति त्रि[1]. ९. आस्ये वि[1]. १०. किं तस्मात् मूको. ११-११. मूको. अयं भागः अनन्तरमन्त्रभाष्ये सन्निविष्टः द्र. १२. °कारिणीः मूको. १३. °जातीः मूको. १४. सन्तः मूको.

**वेङ्कट०** सत्याम् आशिषम् कृणुत अन्नस्याऽऽधानाय[1] हे देवाः! बृहस्पते!, स्तोतारम् हि यूयम् अवथ स्वैः गमनैः। अस्माकं सर्वाः मृधः पश्चात् अप भवन्तु नश्यन्त्वित्यर्थः। तत् इदं वचनं हे द्यावापृथिव्यौ! शृणुतम् विश्वस्य प्रीणयित्र्यौ[2] ॥ ११ ॥

इन्द्रो॑ म॒ह्ना म॑ह॒तो अ॑र्ण॒वस्य॒ वि मू॒र्धान॑मभिनदर्बु॒दस्य॑ ।
अह॒न्नहि॒मरि॑णात् स॒प्त सिन्धू॑न् दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥ १२ ॥

इन्द्रः॑ । म॒ह्ना । म॒ह॒तः । अ॒र्ण॒वस्य॑ । वि । मू॒र्धान॑म् । अ॒भि॒न॒त् । अ॒र्बु॒दस्य॑ ।
अह॑न् । अहि॑म् । अरि॑णात् । स॒प्त । सिन्धू॑न् । दे॒वैः । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । प्र । अ॒व॒त॒म् । नः॒ ॥

**उद्गीथ०** इन्द्रः परमेश्वरो बृहस्पतिः मह्ना वीर्येण महत्त्वेन महता वज्रेण वा महतः अर्णवस्य उदकवतः [3]अर्बुदस्य बहूदकत्वाद् बहुरूपत्वाच्च अर्बुदसङ्ख्यायुक्तस्येत्यर्थः[3], मेघस्य मूर्धानम् शिरः[4] वि अभिनत् विविधं भिन्नवान्। [3]विभिद्य च अहन् हतवान्[3] अहिम्, सप्त सिन्धून् सप्तसङ्ख्याका[5] गङ्गाद्याः प्रधाननदीः सर्पणशीला[6] वा [7]सर्वाः नदीः[7] [8]अरिणात् अगमयत् अस्रावयद्वा[8]। एवंगुणविशिष्टः बृहस्पतिः अस्मान् ईप्सितार्थप्रदानेन सदा रक्षतु इत्याशीष्ट्वसामर्थ्यात् तदादेशेन च सर्वैः देवैः सह हे द्यावापृथिव्यौ! प्र अवतम् प्रकर्षेण रक्षतं युवाम् नः अस्मान् ॥ १२ ॥

**वेङ्कट०** महान्[9] ईश्वरः महत्त्वेन [10]महतः उदकवतः[10] वि अभिनत् मूर्धानम्[11] अर्बुदस्य। अहन् अहिम् इति गतम् ( ऋ १,३१,८; ४,२८,१ द्र. ) ॥ १२ ॥

[8]इति अष्टमाष्टके द्वितीयाध्याये षोडशो वर्गः[8] ॥

## [ ६८ ]

[8]अयास्य आङ्गिरस ऋषिः। बृहस्पतिर्देवता। त्रिष्टुप् छन्दः[8]।

उ॒द॒प्रुतो॒ न वयो॒ रक्ष॑माणा॒ वाव॑दतो अ॒भ्रिय॑स्येव॒ घोषाः॑ ।
गि॒रि॒भ्रजो॒ नोर्मयो॒ मद॑न्तो॒ बृह॒स्पति॑म॒भ्य१॒॑र्का अ॑नावन् ॥ १ ॥

उ॒द॒ऽप्रुतः॑ । न । वयः॑ । रक्ष॑माणाः । वाव॑दतः । अ॒भ्रिय॑स्यऽइव । घोषाः॑ ।
गि॒रि॒ऽभ्रजः॑ । न । ऊ॒र्मयः॑ । मद॑न्तः । बृह॒स्पति॑म् । अ॒भि । अ॒र्काः । अ॒ना॒व॒न् ॥ १ ॥

**उद्गीथ०** उदप्रुतः न यथा उदकाद् उत्तरन्तः वयः पक्षिणः केचित् जलचराः[12] रक्षमाणाः पोषणपक्षपातादिना रक्षन्तः[13] स्वान्यपत्यानि हर्षयन्ति एवं च, वावदतः अत्यर्थं वदतः गर्जतः अभ्रियस्य इव अभ्रे भवस्य मेघस्य यथा घोषाः गर्जितशब्दा वृष्टिकामं जनं हर्षयन्ति। एवं च गिरिभ्रजः न

---

१. °न्नस्य धनाय वि[1]. २. प्रण° मूको. ३-३. मूको. एष भागः पूर्वमन्त्रभाष्ये निविष्टः द्र. ४. अङ्गिरः मूको. ५. °ख्याकान् मूको. ६ तर्पण° मूको. ७-७. सर्वाभिरेवं वि[1] अ ८-८. नास्ति मूको. ९. मा वि[2] अ[1]. १०-१०. °हतः त उ° वि[2] अ[1]. ११. नास्ति मूको. १२. जलधराः मूको. १३. रक्षयन्ति मूको.

ऊर्मयः यथा च गिरिभ्रजो गिरेः मेघादवभ्रश्यमाना वृष्टिभावेन अधः पतन्तः उदकोर्मयः वृष्टिकामं जनं हर्षयन्ति। एवं च मदन्तः हर्षयन्तः बृहस्पतिम् अर्काः अस्मदादिस्तोतॄणां स्तुतिमन्त्राः अभि अनावन् स्वार्थे णिच्। अभिवदन्ति। अथवा अर्कशब्दोऽत्र अन्तर्णीतमत्वर्थो द्रष्टव्यः। अर्किणः स्तुतिमन्त्रवन्तः स्तोतारः अस्मदादयः सदा अभिष्टुवन्ति ॥ १ ॥

**वेङ्कट०** उदकस्योद्गमयितारः कृषीबलाः[1] इव पक्षिणम् पक्वात् सस्यात् रक्षमाणाः वावदतः [2]अभ्रसमूहस्य इव[2] च शब्दाः[3] गिरेः भ्रष्टाः[4] इव च ऊर्मयः शब्दयन्तः बृहस्पतिम् अभि-ष्टुवन्ति स्तोतारः ॥ १ ॥

सं गोभि॑राङ्गिर॒सो नक्ष॑माणो॒ भग॑ इ॒वेद॑र्य॒मणं॑ निनाय।
जने॑ मि॒त्रो न दम्प॑ती अनक्ति॒ बृह॑स्पते वा॒जया॒शूँरि॑वा॒जौ ॥ २ ॥

सम्। गोभिः॑। आ॒ङ्गि॒रसः॑। नक्ष॑माणः। भग॑ःऽइव। इत्। अ॒र्य॒मण॑म्। नि॒ना॒य॒।
जने॑। मि॒त्रः। न। दम्प॑ती॒ इति॒ दम्ऽप॑ती। अ॒न॒क्ति॒। बृह॑स्पते। वा॒जय॑। आ॒शून्ऽइ॑व। आ॒जौ ॥

**उद्गीथ०** गोभिः वाग्भिः स्तुतिलक्षणाभिः आङ्गिरसः[5] अङ्गिरसः पुत्रः अहम् अयास्यः सम् नक्षमाणः उपगच्छन् बृहस्पतिं त्वाम् निनाय नीतवान् अस्मि [6]वेदिं यज्ञं[6] वा प्रतियागम्। किमिव। भगः इव इत् अर्यमणम्। [7]इदिति पदपूरणः। भगनामाऽऽदित्यः यथा अर्यमनामादित्यं सह गच्छन्नयति भागाय† यज्ञं प्रति, एवम्। अथवा यथा भगः स्वाधिकारक्षये मण्डले सङ्क्रामयन् अर्यमणं नयति मण्डलं प्रति, एवम्। एतद् ज्ञात्वा जने मित्रः न ‡लोकेऽतिविश्वासाद्‡ यथा दम्पती भार्याभर्तारौ आत्मनः स्निग्धः अनक्ति ¶उपकारकरणेन तौ उपगच्छति¶, एवम् आवां[7] पत्नीयजमानौ ईप्सितार्थप्रदानेन उपगच्छेति योज्यम् दृष्टान्तसामर्थ्यात्। किञ्च हे बृहस्पते! वाजय प्रेरयास्मान्, स्वर्गं प्रतीति शेषः। किमिव। आशून् इव आजौ यथा शीघ्रान् अश्वान् कश्चित् सङ्ग्रामे प्रेरयति, एवं शीघ्रमस्मान् प्रेरय स्वर्गायेत्यर्थः ॥ २ ॥

**वेङ्कट०** सम् नयति गोभिः सह व्याप्नुवन् बृहस्पतिः भगः इव देवः[8] प्रेरकं स्तुतेः स्तोतारम्। जनपदे मित्रः इव देवो जायापती सङ्गमयति। बृहस्पते! गमय [9]रश्मीन् अश्वान् इव[9] सङ्ग्रामे ॥ २ ॥

सा॒ध्व॒र्या अ॑ति॒थिनी॑रिषि॒राः स्पा॒र्हाः सु॒वर्णा॑ अनव॒द्यरू॑पाः।
बृह॒स्पतिः॒ पर्व॑तेभ्यो वि॒तूर्या॒ निर्गा ऊ॑पे॒ यव॑मिव स्थि॒विभ्यः॑ ॥ ३ ॥

सा॒धु॒ऽअ॒र्याः। अ॒ति॒थिनीः॑। इ॒षि॒राः। स्पा॒र्हाः। सु॒ऽवर्णाः॑। अ॒न॒व॒द्यऽरू॑पाः।
बृह॒स्पतिः॑। पर्व॑तेभ्यः। वि॒ऽतूर्य॑। निः। गाः। ऊ॒पे॒। यव॑म्ऽइव। स्थि॒विऽभ्यः॑ ॥ ३ ॥

**उद्गीथ०** साध्वर्याः साध्वीरीश्वरीश्चेत्यर्थः[10], अतिथिनीः सर्वस्यातिथिभूताः इषिराः अन्नवतीः स्पार्हाः

---

१. कृषब° वि[1]; कृतब° वि[2] अ[1]. २-२ °स्यैव वि[2] अ[1]. ३. °ब्दे वि[1]. ४. द्रष्टाः मूको.
५. नास्ति मूको. ६-६. वेदियेज्ञं वि[1]; वेदियज्ञं वि[2] अ. ७-७. नास्ति वि[2] अ. † यागाय वि[1].
‡-‡ लोकस्ति विश्वा वि[1]. ¶-¶ °णेन...दुपग° वि[1]. ८. देवं वि[2] अ[1]. ९-९. अश्वान् रश्मीनिव अ[1].
१०. साध्वीश्वरीश्चेत्थं वि[1]; साध्वीश्वरीत्य° वि[2] अ.

स्पृहणीयाः सुवर्णाः शोभनवर्णाः शुक्लरूपा इत्यर्थः, अनवद्यरूपाः प्रशस्तरूपाः बृहस्पतिः वितूर्य विविधं हत्वा[1]। किम्। सामर्थ्याद् मेघान्। एभ्यः पर्वतेभ्यः[2] मेघेभ्यः सकाशात् गाः अपो मेघोदरगताः निः ऊपे निर्वपति प्रक्षिपति भूमौ वृष्टिभावेन। किमिव। [3]यवम् इव[3] स्थिविभ्यः यथा यवं कश्चित् कर्षकः स्थिविभ्यः जिह्वास्थानेभ्यो[4] हलसम्बन्धिभ्यः[5] सकाशाद् भूमौ [6]प्रक्षिपति, एवम्[6] ॥ ३ ॥

**वेङ्कट०** साधूनां नेत्रीः अतिथिमतीः एषणीयाः स्पृहणीयाः[7] सुवर्णाः अनवद्यरूपाः बृहस्पतिः मेघेभ्यः निर्गमय्य गाः निः ऊपे देवसमीपं प्रापयति, यथा कुसीदेभ्यो[8] यवम्[9] आदाय निर्वपति ॥ ३ ॥

आप्रुषायन् मधुन ऋतस्य योनिमवक्षिपन्नर्क उल्कामिव द्योः ।
बृहस्पतिरुद्धरन्नश्मनो गा भूम्या उद्नेव वि त्वचं बिभेद ॥ ४ ॥

आऽप्रुषायन् । मधुना । ऋतस्य । योनिम् । अवऽक्षिपन् । अर्कः । उल्काम्ऽइव । द्योः ।
बृहस्पतिः । उद्धरन् । अश्मनः । गाः । भूम्याः । उद्नाऽइव । वि । त्वचम् । बिभेद ॥ ४ ॥

**उद्गीथ०** आप्रुषायन् मधुना [10]आसिञ्चन् माध्यमिकान्[10] देवगणान् मरुदादीन् वृष्ट्युदकेन, स्वयमपि ऋतस्य योनिम् वृष्ट्युदकम् अवक्षिपन् अधः प्रेरयन् अर्कः देवो बृहस्पतिः। कुतः अवक्षिपन्। द्योः दिवः सकाशात् स्वदीप्त्या वा [11]दीप्तात् मेघात्[11]। किमिवावक्षिपन्[12]। उल्काम् इव यथा उल्काम् अधः क्षिपति दीप्ताम्, एवं स्वदीप्त्या विद्युद्दीप्त्या च दीप्तां वृष्टिम् अधः क्षिपन्नित्यर्थः, बृहस्पतिः उद्धरन् ऊर्ध्वं धारयन् गाः अपः मेघोदरगताः अश्मनः मेघस्य त्वचम् अपि वि बिभेद विविधं भिन्नवान् वज्रेण। किमिव। भूम्याः [13]उद्ना इव यथा उद्ना उदकेन[13] निमित्तेन कश्चित् कूपखानकः कूपं खनन् भूम्याः पृथिव्याः त्वक्स्थानीयम् उपरि खनति, एवम् ॥ ४ ॥

**वेङ्कट०** आभिमुख्येन दहन् मादकस्य(?) उदकस्य स्थानं मेघम् अवक्षिपन् अर्चनीयः[14] उल्काम् इव द्युलोकात् बृहस्पतिः उद्धरन् शिलोच्चयान् पणिभिरपहृतान् पशून् भूम्याः त्वचम् गवां शफैः वि बिभेद वृष्ट्युदकेन इव इति ॥ ४ ॥

अप ज्योतिषा तमो अन्तरिक्षादुद्नः शीपालमिव वात आजत् ।
बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात आ चक्र आ गाः ॥ ५ ॥

अप । ज्योतिषा । तमः । अन्तरिक्षात् । उद्नः । शीपालम्ऽइव । वातः । आजत् ।
बृहस्पतिः । अनुऽमृश्य । वलस्य । अभ्रम्ऽइव । वातः । आ । चक्रे । आ । गाः ॥ ५ ॥

---

१. हित्वा वि[1]. २. नास्ति मूको. ३-३ यविव··· वि[2] अ. ४. जीवस्था° मूको. ५ हरव° मूको. ६-६. °क्षिप्येवम् वि[1]; °क्षिप्येवम् वि[2] अ. ७. नास्ति वि[1]; बह वि[2] अ[1]. ८. तुशीलेभ्यः वि[2] अ[1]. ९ यं वि[2] अ[1]. १०-१०. आचेन् माध्यमकान् मूको. ११-११. दीप्तान् मेघान् मूको. १२. °पद् वि[1] अ. १३-१३. उदेन नव यथा उदनो उदकेन वि[2] अ. १४. °यो बृहस्पतिः मूको.

**उद्गीथ०** [1]सः बृहस्पतिः ज्योतिषा सूर्येण अन्तरिक्षात् तमः अप आजत् अपगमयति । किमिव । उद्रः शीपालम् इव वातः यथा वातः उदकात् शैवालम्[1] अपाजत् अपगमयति अपक्षिपति वा, एवम् । किञ्च बृहस्पतिः अनुमृश्य पर्यालोच्य, अस्मिन् मेघे इयदुदकमस्तीति ज्ञात्वेत्यर्थः, वलस्य मेघस्य [2]स्वभूताः गाः[2] अपः आ आ चक्रे एक आकारो मर्यादायाम् अभिविधौ वा, अपरोऽर्वागर्थे । मर्यादया अभिविधिना वा अर्वाक्करोति भूमिं, प्रति वृष्टिभावेन अधः क्षिपतीत्यर्थः । किमिव । अभ्रम् इव वातः यथा अभ्रं वातो मर्यादया अभिविधिना[3] वा अर्वाक्करोति अधः क्षिपति, एवम् ॥ ५ ॥

**वेङ्कट०** अप अजति[4] ज्योतिषा तमः अन्तरिक्षात् यथा उदकाद् वायुः शीपालम् । बृहस्पतिः अनुमृश्य वलस्य अन्तर्गताः गाः आ चक्रे, यथा अन्तरिक्षे स्थितम् अभ्रम् वातः [5]आ करोति[5] ॥ ५ ॥

[6]इति अष्टमाष्टके द्वितीयाध्याये सप्तदशो वर्गः[6] ॥

यदा वलस्य पीयतो जसुं भेद् बृहस्पतिरग्नितपोभिरर्कैः ।
दद्भिर्न जिह्वा परिविष्टमाददाविर्निधीँरकृणोदुस्रियाणाम् ॥ ६ ॥

यदा । वलस्य । पीयतः । जसुम् । भेत् । बृहस्पतिः । अग्नितपःऽभिः । अर्कैः ।
दत्ऽभिः । न । जिह्वा । परिऽविष्टम् । आदत् । आविः । निऽधीन् । अकृणोत् । उस्रियाणाम् ॥

**उद्गीथ०** यदा वलस्य मेघस्य पीयतः[7] हिंसतः प्रतिप्रहरतः जसुम् [8]जसिः ताडने । ताडनसाधनं[8] शरीरमित्यर्थः, भेत् भिनत्ति बृहस्पतिः अग्नितपोभिः अग्निवत् सन्तापयितृभिः अर्कैः वज्रैः करणभूतैः देवैर्वा मरुदादिभिः सह, तदा दद्भिः न जिह्वा परिविष्टम् आदत् यथा दन्तैः जिह्वा परिविष्टं परिप्रवेशितं मुखे प्रक्षिप्तं ग्रसति भक्षयति चूर्णयति, एवं मेघशरीरम् आदत् अत्ति सञ्चूर्णयतीत्यर्थः । सञ्चूर्ण्य च आविः अकृणोत् आविष्करोति प्रकाशीकरोति निधीन् निधिस्थानीयान्युदकानि[9] मेघोदरगतानि उस्रियाणाम् उत्स्राविणीनां गोसदृशीनां वृष्टिलक्षणानाम् अपां कारणत्वेन[10] सम्बन्धीनि ॥ ६ ॥

**वेङ्कट०** यदा वलस्य हिंसतः[11] हिंसकमायुधम् भेत्[12] बृहस्पतिः अग्निना तपद्भी रश्मिभिरर्चनीयैः अपि वा मन्त्रैः, यदा च दन्तैः इव जिह्वा परिविष्टम् भक्षं वलम् अभक्षयत्, तदानीं पणिभिरपहृतानां गवाम् निधीन् आविः [13]अकृणोत् इति[13] ॥ ६ ॥

बृहस्पतिरमत हि त्यदासां नाम स्वरीणां सदने गुहा यत् ।
आण्डेव भित्त्वा शकुनस्य गर्भमुदुस्रियाः पर्वतस्य त्मनाजत् ॥ ७ ॥

---

१-१. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र. २-२. °भूताथा मूको. ३. °विध्या मूको. ४. नास्ति अ[1]. ५-५. नास्ति वि[2]. ६-६. नास्ति मूको. ७ नास्ति मूको. ८-८. जसि ताडने नरं जसिताडने तान्धन° वि[1]. ९ °यानाद्युद° मूको १०. करण° मूको. ११. °हिंसितः वि[1]. १२. अहेत् वि[1] अ. १३-१३. कृणोमीति वि[2] अ.

बृहस्पतिः । अमत । हि । त्यत् । आसाम् । नाम । स्वरीणाम् । सदने । गुहा । यत् ।
आण्डाऽइव । भित्त्वा । शकुनस्य । गर्भम् । उत् । उस्रियाः । पर्वतस्य । त्मना । आजत् ॥७॥

**उद्गीथ०** बृहस्पतिः अमत ज्ञातवान् त्यत् तत् नाम नमनं निर्गमनं बिलम् आसाम् अपां मेघोदरगतानाम् स्वरीणाम् शब्दवतीनाम् सदने गुहा गूढे[1] संवृते मेघबिलप्रदेशे । [2]शकुनस्य पक्षिणः आण्डा इव अण्डजातानीव[2] मेघम् भित्त्वा[3] तस्य पर्वतस्य मेघस्य गर्भम् उस्रियाः गर्भभूता अपः इत्यर्थः, त्मना आत्मना उत् आजत्[4] उन्नमितवान् उत्क्षिप्तवान् ॥ ७ ॥

**वेङ्कट०** बृहस्पतिः ज्ञातवान् हि तद् गवां नामधेयं शब्दायमानानाम्, स्थाने[5] गुहायाम् यत्र[6] गावः स्थिताः । आण्डानि इव भित्त्वा पक्षिणः गर्भम् उत् आजत् पशून् पर्वतस्य अन्तः स्थितान् आत्मनैव ॥ ७ ॥

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य ॥ ८ ॥

अश्ना । अपिऽनद्धम् । मधु । परि । अपश्यत् । मत्स्यम् । न । दीने । उदनि । क्षियन्तम् ।
निः । तत् । जभार । चमसम् । न । वृक्षात् । बृहस्पतिः । विऽरवेण । विऽकृत्य ॥ ८ ॥

**उद्गीथ०** [7]बृहस्पतिः अश्ना अश्मना मेघेन अपिनद्धम् आच्छादितम् मधु अब्लक्षणम् परि अपश्यत् सर्वतो दृष्टवान् । किमिव । मत्स्यम् न[7] [8]यथा कश्चित्[8] मत्स्यघातको मत्स्यम्[8] दीने क्षीणे उदनि उदके क्षियन्तम् निवसन्तं सर्वत्र[9] पश्यति, एवम् । दृष्ट्वा च तत् मेघात् निः जभार निर्हृतवान् निष्कालितवान् । किमिव । चमसम् न वृक्षात् यथा चमसपात्रं वृक्षान्निर्हरति कश्चित् तक्षा, एवम् बृहस्पतिः निर्हृतवान् । केन प्रकारेण । उच्यते । विरवेण विविधेन शाब्देन वज्रेण विकृत्य विविधं छित्त्वा[10] मेघम्[11] ॥ ८ ॥

**वेङ्कट०** शिलया अपिनद्धम् मधु परि अपश्यत् इति गवाभिप्रायम् । मत्स्यम् इव शुष्के[12] उदके निवसन्तम् । दृष्ट्वा च तत्[13] मधु निः जभार चमसम् इव वृक्षात् बृहस्पतिः विविधेन शब्देन [14]वलं छित्त्वा[14] ॥ ८ ॥

सोषामविन्दत् स स्वः सो अग्निं सो अर्केण वि बबाधे तमांसि ।
बृहस्पतिर्गोवपुषो वलस्य निर्मज्जानं न पर्वणो जभार ॥ ९ ॥

---

१. गुहे वि[१,२]; गृहे अ  २-२. नास्ति मूको.  ३. हित्वा मूको.  ४. सृजत् मूको.  ५ स्थानेन वि[२] अ[१].  ६. यदा मूको.  ७-७. स्यश्चित् मूको.  ८. नास्ति मूको.  ९. सर्वत्र सर्वत्र वि[२] अ.  १०. जित्वा मूको.  ११. मेघः मूको.  १२. शुष्कं वि[२] अ[१].  १३. तं मूको.  १४-१४. त्रुटितम् वि[२] अ[१]; वलं जित्वा वि[१].

सः । उषाम् । अविन्दत् । सः । स्वरिति स्वः । सः । अग्निम् । सः । अर्केण । वि । बबाधे । तमांसि । बृहस्पतिः । गोऽवपुषः । वलस्य । निः । मज्जानम् । न । पर्वणः । जभार ॥ ९ ॥

**उद्गीथ०** ज्योतिषाम् आच्छादके 'तस्मिन् वले[1] विकृत्ते सति सः बृहस्पतिः उषाम् उषसं नष्टकल्पां सतीम् अविन्दत् लब्धवान् । [1]सः स्वः सूर्यम् अविन्दत्, सः अग्निम्[1] । सः एव च अर्केण अर्चनीयेन आदित्येन[2] ज्योतिषा [3]वि बबाधे[3] विबाधितवान् तमांसि मेघजनितानि । किञ्च अन्यत् । बृहस्पतिः गोवपुषः[4] 'गोरूपशरीरस्य वलस्य पर्वतात् ता गाः निः जभार बलेन निर्जहार । किमिव । मज्जानम् न पर्वणः, यथा कश्चिद् अस्थनः मज्जानम् अतिक्लेशेन निर्हरति, एवम्[1] ॥ ९ ॥

**वेङ्कट०** बृहस्पतिः उषसम् अविन्दत्, सः आदित्यम्, सः अग्निम् । सः तेजसा विबाधितवान् तमांसि । बृहस्पतिः गोरूपस्य पशुभिः परिवृतस्य वलस्य निः जभार[5] ताः गाः, यथा मज्जानम् अस्थनः निर्हरन्ति ॥ ९ ॥

हिमेव पर्णा मुषिता वनानि बृहस्पतिनाकृपयद्वलो गाः ।
अनानुकृत्यमपुनश्चकार यात् सूर्यामासा मिथ उच्चरातः ॥ १० ॥

हिमाऽइव । पर्णा । मुषिता । वनानि । बृहस्पतिना । अकृपयत् । वलः । गाः । अननुऽकृत्यम् । अपुनरिति । चकार । यात् । सूर्यामासा । मिथः । उत्ऽचरातः ॥ १० ॥

**उद्गीथ०** [6]हिमा इव पर्णा मुषिता[6] यथा हिमेन पद्मिन्यादिपर्णानि[7] अपहृतानि [8]कक्षे पर्जन्यो वर्षन्[8] पुनः प्ररोहयति उदकदानेन, एवम् वनानि उदकानि मेघोदरगतानि वलेन[9] हिमस्थानीयेन अपहृतानि बृहस्पतिना अकृपयत् कल्पितवान् समर्थितवान् बृहस्पत्यादेशात्[10] प्रस्तुतवानित्यर्थः, वलः मेघः गाः उदकानि । एतच्च कर्म अननुकृत्यम् अननुकरणीयम् निर्विशिष्टे[11] सति न पश्चात् करणार्हमित्यर्थः[12], [13]अपुनः पुनः यथा तत् करणीयं न भवति तथा चकार बृहस्पतेरादेशात्[13] । [6]किं तदित्याह — यात् यत् सूर्यामासा सूर्याचन्द्रमसौ मिथः परस्परम् अहोरात्रयोः उच्चरातः उच्चरत इति[6] ॥ १० ॥

**वेङ्कट०** हिमेन इव पुष्करपर्णानि मुषितानि वननीयानि गोधनानि, अथ ता वलेन मुषिताः गाः बृहस्पतिना[14] आगतेन वलः अकृपयत् प्रायच्छदिति । बृहस्पतिः अननुकर्तव्यम्[15] अपुनः[16] कर्तव्यं च तत्कर्म कृतवान् । किं तदित्याह — यत् सूर्याचन्द्रमसौ परस्परम् उच्चरातः अहोरात्रयोः । यात् इति दीर्घश्छान्दसः ॥ १० ॥

---

१-१. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र. २. °दित्यात् मूको. ३-३. विबाधे मूको. ४. गो मूको. ५. जहार वि[2] अ[1]. ६-६. नास्ति मूको. ७. °न्याकादि° वि[2] अ. ८-८. कक्षी पर्जन्यवता मूको. ९. बृहस्पतिना मूको. १०. बृहस्पत्यादिशेषान् मूको. ११. निवि° वि[1]. १२. करणमित्यर्थः वि[2] अ. १३-१३. अपुनो देशाव मूको. १४. नास्ति वि[1]. १५. अनुक वि[1]. १६. पुनः मूको.

अभि श्यावं न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन् ।
रात्र्यां तमो अदधुर्ज्योतिरहन् बृहस्पतिर्भिनदद्रिं विदद्गाः ॥ ११ ॥

अभि । श्यावम् । न । कृशनेभिः । अश्वम् । नक्षत्रेभिः । पितरः । द्याम् । अपिंशन् ।
रात्र्याम् । तमः । अदधुः । ज्योतिः । अहन् । बृहस्पतिः । भिनत् । अद्रिम् । विदत् । गाः ॥ ११ ॥

उद्गीथ० यदेत्यध्याहृत्य चतुर्थः पादः पूर्वं व्याख्यायते। यदा बृहस्पतिः अभिनत् भिन्नवान् वज्रेण अद्रिम् मेघम्, विदत् लब्धवान् च गाः अपो मेघोदरगताः, तदा मेघे विनष्टे श्यावम् न यथा श्याववर्णम् अश्वम् कश्चिद् अश्वमर्दः कृशनेभिः सुवर्णसममण्डनैः अभिमण्डयति एवम्, नक्षत्रेभिः सुवर्णमण्डनस्थानीयैः[1] नक्षत्रैः 'अस्मत्पितरः[2] अङ्गिरसः बृहस्पत्यादेशाद् द्याम् [3]दिवम् अभि अपिंशन्[3] अभिमण्डितवन्त इत्यर्थः। किञ्चान्यत्। रात्र्याम् रात्रौ सर्वतमःकारणभूतायाम् तमः मेघजन्यम् अदधुः निहितवन्तः, ज्योतिः च विद्युज्जनितम् अहन् अहनि सर्वज्योतिषामाधारे अदधुः, वृष्टिलिङ्गानि उपसंहृतवन्त इत्यर्थः ॥ ११ ॥

वेङ्कट० [4]अभि अपिंशन्[4] श्याववर्णम् इव अश्वम् सौवर्णैराभरणैः नक्षत्रैः अङ्गिरसः द्युलोकम्। तत्र रात्र्याम् तमः अदधुः ज्योतिः च अह्नि। बृहस्पतिः अभिनत् शिलोच्चयम् अविन्दत् पशून् यदा[5] ॥ ११ ॥

इदमकर्म नमो अभ्रियाय यः पूर्वीरन्वानोनवीति ।
बृहस्पतिः स हि गोभिः सो अश्वैः स वीरेभिः स नृभिर्नो वयो धात् ॥ १२ ॥

इदम् । अकर्म । नमः । अभ्रियाय । यः । पूर्वीः । अनु । आऽनोनवीति ।
बृहस्पतिः । सः । हि । गोभिः । सः । अश्वैः । सः । वीरेभिः । सः । नृऽभिः । नः । वयः । धात् ॥

उद्गीथ० तस्मै बृहस्पतये इदम् यदुक्तम् अकर्म कृतवन्तः वयम् नमः स्तोत्रं हविरन्नं वा अभ्रियाय अभ्रे मेघे हन्तव्ये हन्तृत्वेन भवाय, निष्कृतेः यः पूर्वीः पूर्वकालीनाः[6] बह्वीः वा स्तोतृमतीः अनु अनुपूर्वम् आनोनवीति आभिमुख्येन मर्यादया वा अत्यर्थं स्तावयत्यात्मानम्[7]। हि यस्मादेवं तस्मात् बृहस्पतिः सः गोभिः सः एव अश्वैः सः एव च वीरेभिः वीरैः पुत्रैः सः एव च नृभिः परिचारकैः मनुष्यैश्च सहितम् नः अस्मभ्यम् वयः अन्नम् धात् ददातु परितुष्टः सन् ॥ १२ ॥

वेङ्कट० इदम् कृतवन्तः स्तोत्रम् अभ्रेषु भवाय अन्तरिक्ष्याय, यः बृहस्पतिः बह्वीर्ऋचः[8] आभिमुख्येन

---

१. सोमवर्णमण्ड° मूको. २. अस्मिन् पितरः मूको. ३-३. दिशमभ्यविशन्न ··· मूको. ४-४. नास्ति वि[2] अ[1]. ५. नास्ति वि[1]. ६. °लीनाख्यो मूको. ७. स्नापय° मूको. ८. °र्ऋचः वि[1].

ब्रवीति। बृहस्पतिः सः हि गोभिः युक्तम्[1] अश्वैः च, तथा [2]सः हि[2] पुत्रैः दासैश्च सह अस्मभ्यम् अन्नम् प्रयच्छत्विति ॥ १२ ॥

[3]इति अष्टमाष्टके द्वितीयाध्याये अष्टादशो वर्गः[3] ॥

[ ६९ ]

[3]सुमित्रो वाध्र्यश्व ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः, आद्ये जगत्यौ[3]।

भद्रा अग्नेर्वध्र्यश्वस्य संदृशो वामी प्रणीतिः सुरणा उपेतयः।
यदीं सुमित्रा विशो अग्र इन्धते घृतेनाहुतो जरते दविद्युतत् ॥ १ ॥

भद्राः। अग्नेः। वध्रिऽअश्वस्य। सम्ऽदृशः। वामी। प्रऽनीतिः। सुऽरणाः। उपऽइतयः।
यत्। ईम्। सुऽमित्राः। विशः। अग्रे। इन्धते। घृतेन। आऽहुतः। जरते। दविद्युतत् ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं 'भद्रा अग्नेः' इति द्वादशर्चम् आग्नेयं वाध्र्यश्वः सुमित्रो ददर्श। भद्राः कल्याण्यः फलप्रदान इत्यर्थः, अग्नेः वध्र्यश्वस्य ऋषेः[4] स्तुत्यत्वेन सम्बन्धिनः, वध्र्यश्वेन ऋषिणा महताऽऽदरेण स्तुतस्येत्यर्थः, संदृशः सन्दर्शनानि। सन्दर्शनमात्रेणैव अग्निः फलं प्रयच्छतीत्यर्थः। वामी वननीया संभजनीया प्रणीतिः प्रणयनम् आराधनं च फलवदित्यर्थः। सुरणाः सुष्ठु रमणीयाः फलवत्य इत्यर्थः, उपेतयः उपगमनानि उर्वन्नानि वेत्यर्थः। यत् यतः सन्दर्शनाराधनोपगमनैः ईप्सितार्थप्रदस्तस्मात् वेद्याम्[5] ईम् एनम् अग्निम् सुमित्राः सुमित्रादयो मत्प्रभृतय इत्यर्थः, विशः यजमानमनुष्याः अग्रे उपरि। कस्य। सामर्थ्याद् उभयसन्ध्ययोः सायंप्रातः सन्ध्याकाल इत्यर्थः, इन्धते सन्दीपयन्ति समिद्भिः। तदा घृतेन आज्येन आहुतः [6]मर्यादया हुतः[6] तर्पित इत्यर्थः, जरते कर्मणि प्रत्ययः कार्यः। जीर्यते गीयते[7] स्तूयत[8] इत्यर्थः, दविद्युतत् अत्यर्थं दीप्यते च हविर्भिः ॥ १ ॥

**वेङ्कट०** सुमित्रो[9] वाध्र्यश्वः। भजनीयाः अग्नेः वध्र्यश्वस्य[10] तद्विषयाः सन्दृष्टयः सन्तु, कल्याणी च प्रणीतिः[11], शोभनरमणाश्च उपगतयः, यदि एनम् सुमित्रनामधेयाः मनुष्याः प्रथमम् इन्धते, घृतेन आहुतः[12] स्तूयते च द्योतमानः ॥ १ ॥

घृतमग्नेर्वध्र्यश्वस्य वर्धनं घृतमन्नं घृतम्वस्य मेदनम्।
घृतेनाहुत उर्विया वि पप्रथे सूर्य इव रोचते सर्पिरासुतिः ॥ २ ॥

घृतम्। अग्नेः। वध्रिऽअश्वस्य। वर्धनम्। घृतम्। अन्नम्। घृतम्। ॐ इति। अस्य। मेदनम्।
घृतेन। आऽहुतः। उर्विया। वि। पप्रथे। सूर्यःऽइव। रोचते। सर्पिःऽआसुतिः ॥ २ ॥

---

१. °युक्तः मूको. २-२. सति मूको. ३-३. नास्ति मूको. ४. नास्ति वि[1]. ५. वेदा वि[1]; भेद्या वि[2] अ. ६. °दमेतस्तत वि[2] अ. ७. नीयते वि[1]. ८. हूयते वि[2] अ. ९. सुमत्रः वि[2] अ[1]; सुमन्त्रः वि[1]. १०. वध्रिय° मूको. ११. नास्ति वि[2] अ[1]. १२. हुतयः वि[2] अ[1].

**उद्गीथ०** घृतम् अग्नेः वध्र्यश्वस्य [1]वध्र्यश्वसम्बन्धिनः अग्नेः दीयमानम् घृतम् वर्धनम् वृद्धिकरं भवतु, घृतम् अन्नम् अदनीयं भवतु, घृतम् उ घृतमेव अस्य अग्नेः मेदनम् पुष्टिकरं भवतु। तेन घृतेन आहुतः[1] आतर्पितः अग्निः उर्विया उरुशब्दादन्तर्हितातिशयार्थात्[2] छान्दस इयादेशः। क्रियाविशेषणं तत्। उरुतरम्[3] विस्तीर्णतरं वि पप्रथे विविधं विस्तीर्यते। सूर्यः इव रोचते दीप्यते च सर्पिरासुतिः घृताशनः घृतरसो वा ॥ २ ॥

**वेङ्कट०** अस्य वध्र्यश्वस्य अग्नेः वर्धनम् [4]घृतम् भवति[4]। घृतम् अन्नम् घृतम् अग्नेः मेदनम्। येनाग्निः पुष्टो भवति तन्मेदनम्। घृतेन आहुतः अत्यन्तम् अग्निः विप्रथितो[5] भवति। सूर्यः इव च[6] रोचते यस्मिन् सर्पिरासूयतेऽग्नाविति ॥ २ ॥

यत् ते मनुर्यदनीकं सुमित्रः समीधे अग्ने तदिदं नवीयः।
स रेवच्छोच स गिरो जुषस्व स वाजं दर्षि स इह श्रवो धाः ॥ ३ ॥

यत्। ते। मनुः। यत्। अनीकम्। सुऽमित्रः। सम्ऽईधे। अग्ने। तत्। इदम्। नवीयः।
सः। रेवत्। शोच। सः। गिरः। जुषस्व। सः। वाजम्। दर्षि। सः। इह। श्रवः। धाः ॥३॥

**उद्गीथ०** ते तव अग्नेः [7]स्वभूतम् यत् अनीकम्[7] ज्योतिः मुखं वा ज्वालालक्षणम् मनुः समीधे सन्दीपितवान् हविर्भिः, यत् च सुमित्रः समीधे, हे अग्ने! तद् इदम् अनीकम् [8]नवीयः नवतरं[8] सद्योजातम्, अहं सुमित्रः पुनरिदानीं हविर्भिः सन्दीपयामि इति शेषः। एतद् ज्ञात्वा यस्त्वमुक्तगुणः सः त्वम् रेवत् शोच अस्मभ्यं दातव्येन धनेन धनवत् शोच[9] धनम् अस्मभ्यं ददद् दीप्यस्वेत्यर्थः। सः एव त्वम् गिरः स्तुतीः अस्मदीयाः जुषस्व सेवस्व शृणु। सः एव त्वम् वाजम् अन्नम् दर्षि विदारय देहीत्यर्थः। सः एव च त्वम्[10] इह अस्मिन् यज्ञे लोके वा वर्तमानेभ्यः अस्मभ्यम् श्रवः यशः धाः देहि ॥ ३ ॥

**वेङ्कट०** यत् त्वदीयम् अनीकम्[10] रश्मिसङ्घम् मनुः समीधे, यत् चायम् सुमित्रः, तत् अग्ने! इदम् नवतरं भवति। सः त्वं धनयुक्तम् प्रज्वल[11], स्तुतीः सवस्व, स्वशत्रुबलम्[12] विदारय। सः मयि[13] अन्नम् धेहि ॥ ३ ॥

यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व।
स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥ ४ ॥

यम्। त्वा। पूर्वम्। ईळितः। वध्रिऽअश्वः। सम्ऽईधे। अग्ने। सः। इदम्। जुषस्व।
सः। नः। स्तिऽपाः। उत। भव। तनूऽपाः। दात्रम्। रक्षस्व। यत्। इदम्। ते। अस्मे इति ॥

---

१-१. नास्ति मूको. २. °दन्तर्णीता° वि[2] अ. ३. नास्ति वि[1]. ४-४. नास्ति वि[1]. ५. °प्रमथि° वि[2] अ[1]. ६. नास्ति वि[1]. ७-७. स्वभूताय आनीतं वि[1]; स्वभूतायानीक वि[2] अ. ८-८. नवत्तः वि[1]; °वीयोन्नवत्ता वि[2] अ. ९. शोचनं शोच मूको. १०. नास्ति मूको. ११. °लत वि[2] अ[1]; °ज्वलयः सा वि[1]. १२. सशत्रु° वि[2] अ[1]. १३. नास्ति वि[2] अ[1].

**उद्गीथ०** यम् त्वा त्वामग्निम् पूर्वम् पूर्वस्मिन्नपि काले ईळितः कर्तरि क्तप्रत्ययो द्रष्टव्यः । ईडितवान्[1] स्तुतवान् वध्र्यश्वः वाध्र्यश्व इत्यर्थः, सुमित्रो नाम महर्षिः समीधे सन्दीपितवांश्च, हे अग्ने! सः त्वम् इदम् हविः स्तोत्रं वा जुषस्व सेवस्व । सः एव च त्वम् नः अस्माकम् स्तिपाः अपां पालयिता भव, उत अपि तनूपाः शरीराणां पालयिता भव, दात्रम् दानं च रक्षस्व रक्ष । तद् धनम्[2] यद् इदम् ते तव स्वभूतम् अस्मे अस्मदर्थम् ॥ ४ ॥

**वेङ्कट०** यम् त्वा पूर्वम् संजातं स्तुतः वध्र्यश्वः समीधे अग्ने!, सः इदम् स्तोत्रं सेवस्व, सः अस्माकम् [3]गृहस्य रक्षकः भव, अपि च अङ्गानाम्, धनम् च रक्षस्व, यत् इदम् दात्रम् तव स्वभूतेषु अस्मासु स्थितमिति[3] ॥ ४ ॥

भवा॑ द्यु॒म्नी वा॑ध्र्यश्वो॒त गो॒पा मा त्वा॑ तारीद॒भिमा॑ति॒र्जना॑नाम् ।
शूर॑इव धृ॒ष्णुश्च्यव॑नः सु॒मि॒त्रः प्र नु वो॑चं॒ वाध्र्य॑श्वस्य॒ नाम॑ ॥ ५ ॥

भव॑ । द्यु॒म्नी । वा॒ध्रि॒ऽअ॒श्व॒ । उ॒त । गो॒पाः । मा । त्वा॒ । ता॒री॒त् । अ॒भिऽमा॑तिः । जना॑नाम् ।
शूरः॑ऽइव । धृ॒ष्णुः । च्यव॑नः । सु॒ऽमि॒त्रः । प्र । नु । वो॒च॒म् । वाध्रि॑ऽअश्वस्य । नाम॑ ॥ ५ ॥

**उद्गीथ०** भव त्वम् द्युम्नी अस्माकं[4] दातव्येन [5]अन्नेन यशसा[5] वा तद्वान् हे अग्ने! वाध्र्यश्व! वध्र्यश्वस्तुत![6], उत गोपाः गोप्ता भव । एतच्च कुर्वन्तं त्वामग्निम् मा तारीत् मा प्रापदित्यर्थः, अभिमातिः अभिभवः[7] जनानाम् सम्बन्धी[8] शत्रुजनजनित इत्यर्थः । न व्यासङ्गेन क्षिप्रमेतत् यथोक्तं कुर्वित्यर्थः । अहमपि प्रत्युपकारार्थम् शूरः इव धृष्णुः यथा शूरः कश्चित् शत्रूणाम् अभिभवनशीलः, एवं यागकर्मणां धृष्णुः धर्षणशीलः अभिभवनशीलः करणशीलः च्यवनः च्यावयिता च स्तोमानां कर्ता च सन्नित्यर्थः, सुमित्रः अहम् नु क्षिप्रम् प्र वोचम् प्रब्रवीमि, प्रकर्षेण च स्तौमीत्यर्थः । वाध्र्यश्वस्य च वध्र्यश्वस्तुतस्य[9] तवाग्नेः नाम नामस्तुत्या च अत्र नामवत एव स्तुतिर्लक्ष्यते । त्वामग्निं स्तौमीत्यर्थः ॥ ५ ॥

**वेङ्कट०** भव अन्नवान् हे वध्र्यश्वकुले जात!, अपि च गोपायिता । मा त्वा हिनस्तु शत्रूणाम् अभिगमनम् । शूरः इव धृष्णुः च्यावकः सुमित्रनामा प्र अवोचम् क्षिप्रम् अस्याग्नेः नाम[10] ॥५॥

सम॒ज्र्या॑ पर्व॒त्या॒३॒ वसू॑नि॒ दासा॑ वृ॒त्राण्यार्या॑ जिगेथ ।
शूर॑ इव धृ॒ष्णुश्च्यव॑नो॒ जना॑नां॒ त्वम॑ग्ने पृत॒ना॒यूँर॒भि ष्या॑ः ॥ ६ ॥

सम् । अ॒ज्र्या॑ । प॒र्व॒त्या॑ । वसू॑नि । दासा॑ । वृ॒त्राणि॑ । आर्या॑ । जि॒गे॒थ॒ ।
शूरः॑ऽइव । धृ॒ष्णुः । च्यव॑नः । जना॑नाम् । त्वम् । अ॒ग्ने॒ । पृ॒त॒ना॒ऽयून् । अ॒भि । स्या॒ः ॥ ६ ॥

---

१. ईळमानः मूको. २. अन्नम् मूको. ३-३. नास्ति वि[2] अ[1]. ४ अस्मान् मूको.
५-५. यशानान्नेन वि[2] अ[1]. ६. वध्यश्व सु उत वि[1]. ७. नास्ति मूको. ८. सम्बन्धि मूको.
९. °श्वसुतस्य मूको. १०. नास्ति वि[2] अ[1].

उद्गीथ० अङ्ग्या शत्रून् प्रति गन्त्र्या पर्वत्या च इष्वा[१] शक्त्या वा वसूनि शत्रुधनानि दासा दासानि उपक्षपयितव्यानि वृत्राणि शत्रुजातानि च आर्या आर्याणि च वधार्थं [२]निर्गमय्य तानि[२] सम् जिगेथ सञ्जितवानसि। न केवलम् अतीत एव काले। किं तर्हि इदानीमपि शूरः इव धृष्णुः अभिभवनशीलः च्यवनः स्वस्थानात् प्रच्यावयिता च शत्रुजनानाम् त्वम् हे अग्ने! पृतनायून् सङ्ग्रामान् कर्तुमिच्छतश्च[३] शत्रून् अभि स्याः अभिभवसि ॥ ६ ॥

वेङ्कट० [४]सम् जिगेथ[४] जनार्हाणि पर्वतभवानि गोवसूनि। तथा[५] दासकृतानार्यकृतांश्च उपद्रवान्। शूरः इव धृष्णुः च्यवनः जनानाम् त्वम् अग्ने! पृतनाकामान् अभि भव ॥ ६ ॥

[६]इति अष्टमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[६] ॥

दी॒र्घत॑न्तुर्बृ॒हदु॑क्षा॒यम॒ग्निः स॒हस्र॑स्तरीः श॒तनी॑थ॒ ऋभ्वा॑ ।
द्यु॒मान् द्यु॒मत्सु॒ नृभि॑र्मृ॒ज्यमा॑नः सुमि॒त्रेषु॑ दीदयो दे॒व॒यत्सु॑ ॥ ७ ॥

दी॒र्घऽत॑न्तुः । बृ॒हत्ऽउ॑क्षा । अ॒यम् । अ॒ग्निः । स॒हस्र॑ऽस्तरीः । श॒तऽनी॑थः । ऋभ्वा॑ ।
द्यु॒ऽमान् । द्यु॒मत्ऽसु॑ । नृऽभिः॑ । मृ॒ज्यमा॑नः । सु॒ऽमि॒त्रेषु॑ । दी॒द॒यः॒ । दे॒व॒यत्ऽसु॑ ॥ ७ ॥

उद्गीथ० दीर्घतन्तुः दीर्घसन्ततिः बृहदुक्षा महतो धनस्य वृष्ट्युदकस्य वा सेक्ता दाता चेत्यर्थः, [७]सः अयम्[७] त्वमग्निः सहस्रस्तरीः [८]स्तृञ् आच्छादने[८] हिंसायाम् वा। बहूनां शत्रूणाम् अस्त्रैः आच्छादयिता हिंसिता वा शतनीथः बहुस्तुतिश्च ऋभ्वा उरुभूतश्च आहवनीयादिना भावेन बहुभूतश्चेत्यर्थः, द्युमान् दीप्तिमांश्च[९] द्युमत्सु दीप्त्याऽभिजनादिदीप्तिमत्सु सुमित्रेषु देवयत्सु देवान् स्तोतुं यष्टुं च कामयमानेषु नृभिः मनुष्यैः ऋत्विगाख्यैः [१०]यजमानमनुष्यैः मृज्यमानः स्तुतिभिः[१०] हविर्भिश्च संस्क्रियमाण इत्यर्थः, दीदयः दीप्यस्व ॥ ७ ॥

वेङ्कट० [११]येन यज्ञं[११] सन्तनोति स तन्तुः। दीर्घतन्तुः बृहदुक्षा च अयम् अग्निः बृहन्[१२] सेचको रश्मिरुक्षा यस्य सः, बह्वाच्छादनः बहुनयनः महान् दीप्तिमान् दीप्तिमतां[१३] मध्ये नृभिः[१४] मृज्यमानः सुमित्रेषु दीप्यस्व देवकामेषु ॥ ७ ॥

त्वे धे॒नुः सु॒दुघा॑ जातवेदोऽस॒श्चते॑व स॒म॒ना स॑ब॒र्धुक् ।
त्वं नृभि॒र्दक्षि॑णावद्भिरग्ने सुमि॒त्रेभि॑रिध्यसे दे॒व॒यद्भिः॑ ॥ ८ ॥

त्वे इति॑ । धे॒नुः । सु॒ऽदुघा॑ । जा॒त॒ऽवे॒दः॒ । अ॒स॒श्चता॑ऽइव । स॒म॒ना । स॒ब॒ःऽधुक् ।
त्वम् । नृऽभिः॑ । दक्षि॑णावत्ऽभिः । अ॒ग्ने॒ । सु॒ऽमि॒त्रेभिः॑ । इ॒ध्य॒से॒ । दे॒व॒यत्ऽभिः॑ ॥ ८ ॥

---

१. इष्ट्वा वि[२] अ. २-२. निर्गमयानि वि[१]; हिगमयानि वि[२] अ. ३. °च्छतः वि[१]. ४-४. नास्ति वि[२] अ[१]. ५. तदा वि[२] अ[१]. ६-६. नास्ति मूको. ७-७. स यं मूको. ८-८. स्तृ छादने वि[१]; स्तृ छान्दने वि[२] अ. ९. °मांश्चेत् वि[२] अ. १०-१०. °मानस्तु° मूको. ११-११. यैर्यज्ञः मूको. १२. नास्ति मूको. १३. °मानां वि[२] अ[१]. १४. निमिष्ण्येन मूको.

**उद्गीथ०** त्वे तव अग्नेः स्वभूता धेनुः सुदुघा सुदोहना हे जातवेदः! असश्चता इव सम्प्रत्यर्थेऽत्र इवशब्दः, इहेव निधेहीति यथा (तु. या ७,३१)। असश्चता अनुपक्षीणा समना समानेन प्राणेन अथवा असश्चता असक्ता, [1]त्वत्तोऽन्यत्र न सजतीत्यर्थः[1], समना[2] समाना तुल्या तवानुरूपेत्यर्थः। अथवा असश्चता इव यथा असक्ते परस्परेण असंश्लिष्टे द्यावापृथिव्यौ यथा समना समाने परस्परेण तुल्ये, एवं तव समाना सबर्धुक् अमृतस्य दोग्ध्री। किञ्च त्वम् नृभिः यजमानमनुष्यैः दक्षिणावद्भिः यथोक्तदक्षिणैः हे अग्ने! सुमित्रेभिः अस्माभिः देवयद्भिः देवान् स्तोतुं यष्टुं चेच्छद्भिः इध्यसे सन्दीप्यसे हविर्भिः ॥ ८ ॥

**वेङ्कट०** त्वयि च काचित् धेनुः अस्ति सुदुघा जातवेदः!। सङ्गवर्जितेन निस्सङ्गं गच्छताऽऽदित्येन सङ्गता अमृतस्य दोग्ध्री[3] दीप्तिः इव। त्वम् नृभिः इति स्पष्टम् ॥ ८ ॥

## दे॒वाश्चि॑त् ते अ॒मृता॑ जातवेदो महि॒मानं॑ वाध्र्यश्व॒ प्र वो॑चन् ।
## यत् सं॒पृच्छं॒ मानु॑षी॒र्विश॒ आय॒न् त्वं नृभि॑रजय॒स्त्वावृ॑धेभिः ॥ ९ ॥

दे॒वाः । चि॒त् । ते॒ । अ॒मृता॑ः । जा॒त॒ऽवे॒दः॒ । म॒हि॒मान॑म् । वा॒ध्रि॒ऽअ॒श्व॒ । प्र । वो॒च॒न् ।
यत् । स॒म्ऽपृच्छ॑म् । मानु॑षीः । विश॑ः । आय॑न् । त्वम् । नृऽभि॑ः । अ॒ज॒यः॒ । त्वाऽवृ॑धेभिः ॥ ९ ॥

**उद्गीथ०** देवाः चित् देवा अपि अमृताः मरणवर्जिताः हे जातवेदः! वाध्र्यश्व! ते तव महिमानम् महत्त्वम् प्र वोचन् प्रकर्षेणोक्तवन्तः 'महत्तदुल्बम्' (ऋ १०,५१,१) इत्यादिसंवादेन सूक्तेन स्तुवन्त इत्यर्थः। कदा। यत् यदा संपृच्छम् सम्प्रश्नं सञ्जल्पं त्वया सह संवादम्, कर्तुमिति शेषः, मानुषीः विशः मनुष्यजातीः[4], प्रतीति शेषः, मनुष्यलोकं प्रतीत्यर्थः, आयन् आगतवन्तो देवाः, तदेति सामर्थ्याद् अध्याहार्यम्। त्वम् तदैव च नृभिः ऋत्विग्यजमानमनुष्यैः त्वावृधेभिः स्तुतिभिः हविर्भिश्च तव वर्धयितृभिः सह अजयः जितवानसि देवशत्रून् असुरान्। तदेतदुक्तम् 'तदद्य वाचः प्रथमं मसीय' (ऋ १०,५३,४) इत्यत्रापि ॥ ९ ॥

**वेङ्कट०** देवाः च तव महिमानम् अमृताः[5] जातवेदः! प्र वोचन्[6], यदा मानुषीः विशः देवैः संपृच्छम्[7] सम्प्रश्नम् आयन्। नेतृभिर्देवैः सहासुरान् अजयः त्वया वर्धितैः[8] ॥ ९ ॥

## पि॒तेव॑ पु॒त्रम॑बिभरु॒पस्थे॒ त्वाम॑ग्ने वध्र्य॒श्वः स॑प॒र्यन् ।
## जु॒षा॒णो अ॑स्य स॒मिधं॑ यविष्ठो॒त पूर्वाँ॑ अव॒नो॒र्व्राध॑तश्चित् ॥ १० ॥

पि॒ताऽइ॑व । पु॒त्रम् । अ॒बि॒भः॒ । उ॒पऽस्थे॑ । त्वाम् । अ॒ग्ने॒ । व॒ध्रि॒ऽअ॒श्वः । स॒प॒र्यन् ।
जु॒षा॒णः । अ॒स्य॒ । स॒म्ऽइध॑म् । य॒वि॒ष्ठ॒ । उ॒त । पूर्वा॑न् । अ॒व॒नोः॒ । व्राध॑तः । चि॒त् ॥ १० ॥

---

१-१. ततोन्यत्र···तीत्यर्थः वि[1]; तत्तोऽन्यत्र···तीत्यर्थः वि[2] अ. २. सममना मूको. ३. नास्ति वि[2] अ[1]; दाघ्री वि[1]. ४. °जातिं वि[2] अ. ५. ऋतां वि[2] अ[1]. ६. अवो° वि[1]. ७. संसंपृच्छः वि[2] अ[1]. ८. वृद्धैः मूको.

**उद्गीथ०** पिता इव यथा पिता पुत्रम् बालकम् उत्सङ्गे[1] बिभर्ति परया प्रीत्या, एवम् अबिभः भृतवान्[2] परया प्रीत्या धारितवान् आहवनीयाद्यात्मना उपस्थे उपस्थाने वेद्याख्ये त्वाम् हे अग्ने! वध्र्यश्वः सपर्यन् स्तुतिभिः हविर्भिश्च परिचरन्, एवम् अहमपि परया प्रीत्या धारयामि त्वाम् आहवनीयाद्यात्मना वेदिस्थाने परिचरन्निति शेषः। एतद् ज्ञात्वा जुषाणः सेवमानः अस्य मम सुमित्रस्य स्वभूताम् समिधम् हे यविष्ठ! युवतम! हविषां स्तुतीनां च मिश्रयितृतम! वा। साकाङ्क्षत्वाद् मदीप्सितार्थप्रदानेन[3] सम्भजस्वेति[4] शेषः। कस्मादेवं ब्रवीमि। यस्मात् उत पूर्वान् अस्मत्तः पूर्वानपि अस्मत्पित्रादीन् अवनोः वनितवानसि सम्भक्तवानसि ईप्सितार्थ-प्रदानेन सेवितवानसीत्यर्थः, व्राधतः चित् 'व्राधत्' (निघ ३,३) इति महन्नाम। महतोऽपि निःस्पृहत्वेश्वरत्वादिगुणोपेतान् अपि सत इत्यर्थः॥ १०॥

**वेङ्कट०** पिता इव पुत्रम् त्वाम् अग्ने! धृतवान् उपस्थे वध्र्यश्वः[5] परिचरन्[6]। सेवमानः वध्र्यश्वस्य[7] समिधम् युवतम! अपि च प्रत्नानपि तस्य[8] शत्रून् वर्धमानान् अवधीः॥ १०॥

## शश्वद॒ग्निर्व॑ध्र्य॒श्वस्य॒ शत्रू॒न् नृभि॑र्जिगाय सु॒तसो॑मवद्भिः।
## सम॑नं चिददहश्चित्रभानो॒ऽव॒ व्राध॑न्तमभिनद्वृ॒धश्चि॑त्॥ ११॥

शश्व॑त्। अ॒ग्निः। व॒ध्रि॒ऽअ॒श्वस्य॑। शत्रू॑न्। नृऽभिः॑। जि॒गा॒य॒। सु॒तसो॑मवत्ऽभिः।
सम॑नम्। चि॒त्। अ॒द॒हः॒। चि॒त्र॒भा॒नो॒ इति॑ चित्रऽभानो। अव॑। व्राध॑न्तम्। अ॒भि॒न॒त्। वृ॒धः। चि॒त्॥ ११॥

**उद्गीथ०** शश्वत् बहून् क्षिप्रं वा भवान् अग्निः वध्र्यश्वस्य शत्रून् नृभिः मनुष्यैः सह जिगाय जितवान्। कीदृशैर्नृभिः। सुतसोमवद्भिः अभिषुतसोमवद्भिः ऋत्विग्यजमानैः सहेत्यर्थः। समनम् चित् अन्ययजमानशत्रुसङ्ग्राममपि अदहः दग्धवानसि त्वं हे चित्रभानो! विचित्रदीप्ते!। व्राधन्तम् महान्तम् अन्यमपि 'रक्षसो ग्रामम् अव अभिनत् सङ्गृह्य' भिन्नवानग्निः। वृधः चित् वीर्यैश्वर्यादिना वृद्धानन्यान् अपि भिन्नवानग्निः॥ ११॥

**वेङ्कट०** सदा अग्निः वध्र्यश्वस्य शत्रून् नृभिः जिगाय सुतसोमैः। मत्वर्थीयः पूरणः। सङ्ग्रामम् अपि अदहः चित्रभानो!। अथ स वध्र्यश्वः[5] अव अभिनत् वर्धमानं शत्रुम् स्वयं वृद्धः। यद्वा व्राधतिर्हिंसाकर्मेति॥ ११॥

## अ॒यम॒ग्निर्व॑ध्र्य॒श्वस्य॑ वृत्र॒हा स॑न॒कात् प्रेद्धो॒ नम॑सोपवा॒क्यः॑।
## स नो॒ अजा॑मीँरु॒त वा॒ विजा॑मीन॒भि ति॑ष्ठ॒ शर्ध॑तो वाध्र्यश्व॥ १२॥

अ॒यम्। अ॒ग्निः। व॒ध्रि॒ऽअ॒श्वस्य॑। वृ॒त्र॒ऽहा। स॒न॒कात्। प्रऽइ॑द्धः। नम॑सा। उ॒प॒ऽवा॒क्यः॑।
सः। नः॒। अजा॑मीन्। उ॒त। वा॒। विऽजा॑मीन्। अ॒भि। ति॒ष्ठ॒। शर्ध॑तः। वा॒ध्रि॒ऽअ॒श्व॒॥ १२॥

---

१. उत्सर्गे वि[1]. २. हतवान् मूको. ३. मादीप्सि° मूको. ४. संभावस्वे° मूको. ५. वध्रियश्वः मूको. ६. 'चरन् सख्यम् मूको. ७. वध्रिय° मूको. ८. नास्ति वि[2] अ[1]. ९-९. राक्षसो ··· ग्रामं भिनत्ति गृह्य वि[1]; राक्षसोग्रा अभिनन् भिनत्ति गृह्य वि[2] अ.

उद्गीथ० यः अयम् अग्निः वध्र्यश्वस्य अर्थाय वृत्रहा शत्रूणां हन्ता सनकात् चिरम् प्रेद्धः प्रकर्षेण सन्दीपितो हविर्भिः अस्माभिः नमसा स्तुत्या उपवाक्यः [१]'उपगम्य वक्तव्यश्चेत्यर्थः'[१]। सः अयं त्वं हे अग्ने! नः अस्मान् अजामीन् 'जाम्यतिरेकनाम, बालिशस्य वा समानजातीयस्य वा। (या ४,२०) अपुनरुक्तस्तुतीन्[२] उत वा अपि वा विजामीन् विद्यमानपुनरुक्तस्तुतीन्[३] विविधपुनरुक्तस्तुतीन्[४] वा। अथवा अजामीन् अविद्यमानबालिशस्तुतीन् उत वा विजामीन् विद्यमानबालिशस्तुतीन् विविधबालिशस्तुतीन् वा। अथवा अजामीन् तत्त्वतोऽन्वितया[५] स्तुत्या अविद्यमानसमानजातीयस्तुतीन् उत वा विजामीन् विद्यमानसमानजातीयस्तुतीन् विविधसमानजातीय-स्तुतीन् वा। सर्वथाऽपि सुष्टुतीन् दुःष्टुतीन् वेत्यर्थः। शर्धतः शर्धितॄन्[६]। 'शृधु उन्दने'[७]। उन्दितॄन् स्तुतिभिर्हविर्भिश्च क्लेदयितॄन् स्तोतॄन् यष्टॄंश्चेत्यर्थः, अभि तिष्ठ ईप्सितमर्थं ददत् प्रतितिष्ठ अस्मदभिमुखो भवेत्यर्थः, हे वाध्र्यश्व! वध्र्यश्वस्तुत![८] ॥ १२ ॥

वेङ्कट० अयम् अग्निः वध्र्यश्वस्य शत्रुहा[९] चिरादारभ्य प्रकर्षेणेद्धो नमस्कारेण सह उपस्तोतव्यः। सः त्वम् अस्माकम् अज्ञातीन्[१०] अपि वा विविधान् ज्ञातीन् अभि तिष्ठ हिंसतः वाध्र्यश्व! इति ॥ १२ ॥

[११]इति अष्टमाष्टके द्वितीयाध्याये विंशो वर्गः[११] ॥

[७०]

[११]सुमित्रो वाध्र्यश्व ऋषिः। आप्रीसूक्तम् (=प्रथमाया इध्मः समिद्धोऽग्निर्वा देवता, द्वितीयस्या नराशंसः, तृतीयस्या इळः, चतुर्थ्या बर्हिः, पञ्चम्या देवीर्द्वारः, षष्ठ्या उषासानक्ता, सप्तम्या दैव्यौ होतारौ प्रचेतसौ, अष्टम्याः तिस्रो देव्यः सरस्वतीळाभारत्यः, नवम्याः त्वष्टा, दशम्या वनस्पतिः, एकादश्याः स्वाहाकृतयः)। त्रिष्टुप् छन्दः[११]।

इमां मे अग्ने समिधं जुषस्वेळस्पदे प्रति हर्या घृताचीम्।
वर्ष्मन् पृथिव्याः सुदिनत्वे अह्नामूर्ध्वो भव सुक्रतो देवयज्या ॥ १ ॥

इमाम्। मे। अग्ने। सम्ऽइधम्। जुषस्व। इळः। पदे। प्रति। हर्य। घृताचीम्।
वर्ष्मन्। पृथिव्याः। सुदिनऽत्वे। अह्नाम्। ऊर्ध्वः। भव। सुक्रतो इति सुऽक्रतो। देवऽयज्या ॥ १ ॥

उद्गीथ० उत्तरं सूक्तम् 'इमां मे अग्ने' इति एकादशर्चम् आप्रीदेवतं वाध्र्यश्वः सुमित्रो ददर्श। इमाम् समिधम् मे मम स्वभूताम् घृताचीम् घृतेन अञ्चितां सङ्गताम् आज्याभ्यक्ताम् हे अग्ने! जुषस्व सेवस्व भक्षयेत्यर्थः, इळः पदे पृथिव्याः अवयवभूते स्थाने उत्तरवेद्याख्ये[१२], स्थित इति शेषः। तदर्थं च [११]प्रति हर्य कामयस्व[११]। वर्ष्मन् वर्ष्मणि वृद्धतरे स्थाने महावेद्याख्ये च पृथिव्याः अवयवभूते, स्थित इति शेषः, सुदिनत्वे शोभनदिनत्वे प्रधानयागदिवस इत्यर्थः,

---

१-१. °गम्योक्तदचे° मूको. २. °क्तस्तुतिम् वि[२] अ. ३. °रुक्तान् स्तुतीः मूको. ४. °स्तुतीः मूको. ५. ततोऽन्वितया मूको. ६. शवितॄन् मूको. ७. उन्दे मूको. ८. °श्वसुत मूको. ९. °त्रुणा वि[१] अ[१]. १०. ज्ञाती° वि[२] अ[२]. ११-११. नास्ति मूको. १२. °रे वे° मूको.

अह्राम् गुणयागदिवसानाम्[1] ऊर्ध्वः भव ज्वलन्नूर्ध्वः तिष्ठ हे सुक्रतो! सुकर्मन्! सुप्रज्ञ! वा देवयज्या देवयज्यायै देवयागार्थम् ॥ १ ॥

**वेङ्कट०** इमाम् मे अग्ने! समिधम् सेवस्व इडायाः पदे उत्तरवेद्याम्। प्रतिकामयस्व स्रुचम्[2]। पृथिव्याः उच्छ्रिते देशे अह्राम् सुदिनत्वाय ऊर्ध्वः भव सुप्रज्ञ! देवयागार्थमिति ॥ १ ॥

आ देवानामग्रयावेह यातु नराशंसो विश्वरूपेभिरश्वैः ।
ऋतस्य पथा नमसा मियेधो देवेभ्यो देवतमः सुषूदत् ॥ २ ॥

आ । देवानाम् । अग्रऽयावा । इह । यातु । नराशंसः । विश्वऽरूपेभिः । अश्वैः ।
ऋतस्य । पथा । नमसा । मियेधः । देवेभ्यः । देवऽतमः । सुसूदत् ॥ २ ॥

**उद्गीथ०** देवानाम् अग्रयावा सर्वार्थेष्वग्रतो याता[3] गन्ता इह यज्ञे आ यातु आगच्छतु नराशंसः यज्ञः अग्निर्वा विश्वरूपेभिः बहुरूपैः अश्वैः ऋतस्य पथा यज्ञस्यागमनमार्गेण नमसा स्तुत्या, स्तूयमान इति शेषः, हविरन्नेन वा उपभोक्तव्यत्वेन हेतुना मियेधः मेध्यो यागार्हः। आगत्य च देवेभ्यः सुषूदत् सुष्ठु सूदतु रक्षतु हवींषि ददातु इत्यर्थः, देवतमः देवस्थितिहेतुत्वाद् अतिशयेन देवः ॥ २ ॥

**वेङ्कट०** आ यातु देवानाम् अग्रगन्ता अस्मिन् यज्ञे नराशंसः नानारूपैः अश्वैः[4] यज्ञस्य पथा हविर्नयनयोग्येन। नमस्कारं कुर्वन्[5] सारभूतेभ्यः देवेभ्यः देवतमः हविः प्रेरयतु ॥ २ ॥

शश्वत्तममीळते दूत्याय हविष्मन्तो मनुष्यासो अग्निम् ।
वहिष्ठैरश्वैः सुवृता रथेना देवान् वक्षि नि षदेह होता ॥ ३ ॥

शश्वत्ऽतमम् । ईळते । दूत्याय । हविष्मन्तः । मनुष्यासः । अग्निम् ।
वहिष्ठैः । अश्वैः । सुऽवृता । रथेन । आ । देवान् । वक्षि । नि । सद । इह । होता ॥ ३ ॥

**उद्गीथ०** शश्वत्तमम् बहुतमम् महानुभावमित्यर्थः, नित्यतमं वा ईळते स्तुवन्ति अभ्यर्थयन्ते वा दूत्याय दूतकर्मणे कर्त्तव्याय देवनिमन्त्रणाह्वानहविर्वहनलक्षणाय हविष्मन्तः उपकल्पितहविष्काः मनुष्यासः ऋत्विग्यजमानाः त्वाम् अग्निम्। एतद् ज्ञात्वा वहिष्ठैः वोढृतमैः अश्वैः सुवृता सुष्ठु 'वर्तित्रा गन्त्रा'[6] रथेन च, गत्वेति शेषः, आ वक्षि आवह देवान्। आहूय च नि सीद निषीद इह वेद्याम् होता सन् ॥ ३ ॥

**वेङ्कट०** अत्यन्तं नित्यम् स्तुवन्ति दूत्याय हविष्मन्तः मनुष्याः अग्निम्। स त्वं वोढृतमैः अश्वैः सुवर्तनेन च रथेन आ वह देवान्, नि-षीद चात्र होता भवन्निति ॥ ३ ॥

---

१. °वसात्रं मूको. २. स्रवं वि[1]. ३. यन्ता मूको. ४. यज्ञैः अ[1]. ५. कुर्व वि[1].
६-६. वर्तिता गन्ता मूको.

वि प्र॑थतां दे॒वजु॑ष्टं तिर॒श्चा दी॒र्घं द्रा॒घ्मा सु॑र॒भि भू॑त्व॒स्मे ।
अहे॑ळता मन॑सा देव ब॒र्हि॒रिन्द्र॑ज्येष्ठाँ उश॒तो य॑क्षि दे॒वान् ॥ ४ ॥

वि । प्र॒थ॒ता॒म् । दे॒वऽजु॑ष्टम् । ति॒र॒श्चा । दी॒र्घम् । द्रा॒घ्मा । सु॒र॒भि । भू॒तु । अ॒स्मे इति॑ ।
अहे॑ळता । मन॑सा । दे॒व । ब॒र्हिः॒ । इन्द्र॑ऽज्येष्ठान् । उ॒श॒तः । य॒क्षि॒ । दे॒वान् ॥ ४ ॥

**उद्गीथ॰** अस्मे अस्माकम् बर्हिः देवजुष्टम् देवसेवितं देवप्रीतं वा वि प्रथताम् विस्तीर्यताम्। कथम्। तिरश्चा तिरश्चीनम्[1]। दीर्घम् च द्राघ्मा दीर्घतरं च सुरभि आज्यगन्धसुगन्धं च भूतु भवतु। उत्तरोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। अहेळता अक्रुध्यता मनसा, युक्तं सदिति शेषः, हे देव! बर्हिः! इन्द्रज्येष्ठान् उशतः यागं कामयमानान् यक्षि यज देवान् ॥ ४ ॥

**वेङ्कट॰** वि प्रथताम् देवैः सेवितम् तिरश्चीनम्, तथा दीर्घम् द्राघिम्ना युक्तम् सुरभि च भवत्वस्मासु सुगन्धं[2] बर्हिः। अक्रुध्यता मनसा हे देव! बर्हिः! इन्द्रप्रधानान्[3] कामयमानान् यज[4] देवान् ॥ ४ ॥

दि॒वो वा॒ सानु॑ स्पृ॒शता॒ वरी॑यः पृथि॒व्या वा॒ मात्र॑या॒ वि श्र॑यध्वम् ।
उ॒श॒तीर्द्वा॑रो महि॒ना म॒हद्भि॑र्दे॒वं रथं॑ रथ॒युर्धा॑रयध्वम् ॥ ५ ॥

दि॒वः । वा॒ । सानु॑ । स्पृ॒शत॑ । वरी॑यः । पृ॒थि॒व्या(?)[5] । वा॒ । मात्र॑या । वि । श्र॒य॒ध्व॒म् ।
उ॒श॒तीः । द्वा॒रः॒ । म॒हि॒ना । म॒हत्ऽभिः॑ । दे॒वम् । रथ॑म् । र॒थ॒ऽयुः । धा॒र॒य॒ध्व॒म् ॥ ५ ॥

**उद्गीथ॰** पृथिव्या वा मात्रया वि श्रयध्वम्, दिवः वा द्युलोकस्य च सानु वरीयः वरतरम्[6] उच्छ्रितत्तरम् इत्यर्थः, स्पृशत यूयम् उच्छ्रितत्वेन। पृथिव्या वा मात्रया[7]। इत्थम्भूतलक्षणे तृतीयैषा। पृथिव्या परिमाणभूतया वोपलक्षिताः[8] सत्यो[9] यूयं विश्रयध्वं विशिष्टा विस्तीर्णा भवतेत्यर्थः। दिवः उच्छ्रयेण उच्छ्रिताः पृथिव्या विस्तारेण विस्तीर्य चानन्तरम् उशतीः स्तुतिं कामयमाना यूयं हे द्वारः! महिना महत्त्वेन महद्भिरस्माभिः, स्तूयमाना इति शेषः, देवम् रथम् रथितारं देवान् प्रति गन्तारं यज्ञम् रथयुः। वचनव्यत्ययः कार्यः। रथयवः रथेच्छा यज्ञकामाः सत्यो यूयम् धारयध्वम् निर्वर्तयतेत्यर्थः ॥ ५ ॥

**वेङ्कट॰** दिवः च समुच्छ्रितं देशम् स्पृशत उरुतरम्। पृथिव्याः च यावती मात्रा तावत्या[10] मात्रया विस्तृता भवत। कामयमानाः हे द्वारः! महिम्ना महद्भिर्देवैः अधिष्ठितम् देवम् रथम् रथकामाः धारयध्वम्। छान्दसो वचनव्यत्ययः ॥ ५ ॥

[11]इति अष्टमाष्टके द्वितीयाध्याये एकविंशो वर्गः[11] ॥

---

१ °रश्चकि वि[2] अ; °श्चति वि[1]. २. °गन्धं हि वि[1]. ३. इन्द्रधना° वि[1]. ४. यज्ञ वि[1]. ५. तु. वैप १,२१००j. ६ पवरतरं मूको. ७. °या वा मूको. ८. नोप° मूको. ९. सन्त्यो मूको. १०. तावता वि[1]. ११-११. नास्ति मूको.

देवी दिवो दुहितरा सुशिल्पे उषासानक्ता सदतां नि योनौ ।
आ वां देवास उशती उशन्त उरौ सीदन्तु सुभगे उपस्थे ॥ ६ ॥

देवी इति । दिवः । दुहितरा । सुशिल्पे इति सुऽशिल्पे । उषसानक्ता । सदताम् । नि । योनौ ।
आ । वाम् । देवासः । उशती इति । उशन्तः । उरौ । सीदन्तु । सुभगे इति सुऽभगे । उपस्थे ॥

**उद्गीथ०** देवी देव्यौ दिवि जायमानत्वात् दिवः दुहितरा दुहितरौ सुशिल्पे सुकर्माणौ उषसानक्ता उषोरात्र्यौ भवत्यौ नि सदताम् निषीदताम् योनौ वेदिस्थाने । निषण्णे सत्यौ[1] वा युवाम् उशती! देवान् कामयमाने! सुभगे! देवासः देवाः उशन्तः प्रतिकामयन्तः उरौ विस्तीर्णे सीदन्तु उपविशन्तु उपस्थे युवयोः समीपस्थाने[2] वेद्याख्ये ॥ ६ ॥

**वेङ्कट०** देवी दिवः दुहितरौ सुरूपे नक्तोषसौ नि-षीदताम् स्थाने[3] । आ सीदन्तु युवयोः देवाः हे[4] कामयमाने! कामयमानाः [5]विस्तीर्णे स्थाने[5] हे सुधने! इति ॥ ६ ॥

ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे ।
पुरोहिताव‍ृत्विजा यज्ञे अस्मिन् विदुष्टरा द्रविणमा यजेथाम् ॥ ७ ॥

ऊर्ध्वः । ग्रावा । बृहत् । अग्निः । सम्ऽइद्धः । प्रिया । धामानि । अदितेः । उपस्थे ।
पुरःऽहितौ । ऋत्विजा । यज्ञे । अस्मिन् । विदुःऽतरा । द्रविणम् । आ । यजेथाम् ॥ ७ ॥

**उद्गीथ०** ऊर्ध्वः उद्यतः सोमाभिषवाय ग्रावा बृहत् महत् सुष्ठित्वत्यर्थः, अग्निः च कर्मार्थम् समिद्धः सन्दीप्तः । किं प्रति समिद्धः । उच्यते — प्रिया प्रियाणि अग्नेरिष्टानि, आहवनीयादिस्थानानि अदितेः वेदिलक्षणायाः पृथिव्याः उपस्थे समीपस्थाने उपरि स्थितानि, प्रतीति शेषः । वेदिस्थेषु आहवनीयादिस्थानेषु प्रियेषु समिद्ध इत्यर्थः । एतद् ज्ञात्वा हे पुरोहितौ (?) देवानां यजमानानां च ऋत्विजा! च दैव्यौ![6] होतारौ! अग्निवायू! यज्ञे अस्मिन्, आगत्येति शेषः, हे विदुष्टरा (?) विद्वत्तरौ (?) स्वस्याधिकारस्य उद्युक्ततया[7] ज्ञातारौ (?) द्रविणम् धनम् आ यजेथाम् मर्यादया दत्तम् अस्मभ्यम् ॥ ७ ॥

**वेङ्कट०** ऊर्ध्वः ग्रावा भवति अभिषवाय, बृहत् अग्निः च समिद्धः, प्रियाणि च धारकाणि यज्ञपुत्राणि अदितेः उपस्थे [8]सन्नानि । तदानीम् पुरोहितौ हे ऋत्विजौ![8] दैव्यौ होतारौ! अस्मिन् यज्ञे प्राज्ञतमौ धनम्[9] आ प्रयच्छतम् ॥ ७ ॥

तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनम् ।
मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्त ॥ ८ ॥

---

१. सन्त्यौ मूको. २. समवस्याने वि² अ. ३. नास्ति वि² अ¹. ४. नास्ति वि¹. ५-५. °र्णस्था° वि¹. ६. देव्या वि¹; देव्यौ वि² अ. ७. उद्यतायाः वि² अ. ८-८. सन्तौ पितरौ वि²; सन्तौ पितरौ अ¹. ९. शनं वि² अ¹; मना वि¹.

तिस्रः । देवीः । बर्हिः । इदम् । वरीयः । आ । सीदत । चकृम । वः । स्योनम् ।
मनुष्वत् । यज्ञम् । सुऽधिता । हवींषि । इळा । देवी । घृतऽपदी । जुषन्त ॥ ८ ॥

**उद्गीथ०** तिस्रः देवीः! **हे तिस्रो देव्यः!** बर्हिः इदम् **वेदिस्तरणलक्षणम्** वरीयः **वरतरम् उरुतरं वा** चकृम **कृतवन्तः वयं प्रस्तारितवन्त इत्यर्थः,** वः **युष्माकम्** स्योनम् **सुखम्, आसनायेति शेषः। एतद् ज्ञात्वा** आ सीदत मनुष्वत् यज्ञम् **आङः यज्ञेन सह सम्बन्धः कार्यः। तच्छ्रुतेश्च तद्योग्यक्रियाशब्दाध्याहारः कार्यः। यज्ञमागत्य सीदत उपविशत। कथम्। मनुष्वत् मनुष्यवत्। उपविश्य च** सुधिता **सुहितानि सुस्थापितानि हविर्धानादिषु** हवींषि इळा **च पृथिवीस्थाना** देवी **दीप्ता भारती च द्युस्थाना** घृतपदी **उदकस्थानाऽन्तरिक्षस्थाना[1] सरस्वती च** जुषन्त **सेवन्ताम् भक्षयन्तु भवत्यः ॥ ८ ॥**

**वेङ्कट०** तिस्रः देव्यः! बर्हिः इदम् **उरुतरम्** आ सीदत। **कृतवन्तः युष्माकम् विस्तीर्णम् इदं मनोरिव** यज्ञम्। **सुहितानि च** हवींषि इळा **सरस्वती भारती च सेवन्ताम्[2] ॥ ८ ॥**

देवं त्वष्टर्यद्ध चारुत्वमानड्यदङ्गिरसामभवः सचाभूः ।
स देवानां पाथ उप प्र विद्वानुशन् यक्षि द्रविणोदः सुरत्नः ॥ ९ ॥

देव । त्वष्टः । यत् । ह । चारुऽत्वम् । आनट् । यत् । अङ्गिरसाम् । अभवः । सचाऽभूः ।
सः । देवानाम् । पाथः । उप । प्र । विद्वान् । उशन् । यक्षि । द्रविणःऽदः । सुऽरत्नः ॥९॥

**उद्गीथ०** हे देव! त्वष्टः! **अग्ने!** यत् **विभक्तेः लुगत्र द्रष्टव्यः।** ह **इति पदपूरणः। यः** चारुत्वम् आनट् **प्राप्तवानसि निसर्गत एव यत् प्रजापतेः सकाशात् लब्धवानसि इत्यर्थः।** यत् **यश्च त्वम्** अङ्गिरसाम् **ऋषीणाम्** अभवः **भूतवानसि** सचाभूः **उत्पत्तिकारणत्वेन सहभविता। उक्तं च** 'अङ्गारेष्वङ्गिराः' **( या ३,१७ ) इति। यश्च त्वम्** सुरत्नः **शोभनधनः।** सः **त्वं** हे द्रविणोदः! **द्रविणसः बलस्य [3]धनस्य वा[3] दातः!** देवानाम् **अर्थाय** पाथः **हविरन्नम्** विद्वान् उप प्र यक्षि **उपगम्य प्रकर्षेण देहि ॥ ९ ॥**

**वेङ्कट०** देव! त्वष्टः! [4]यत् त्वम्[4] चारुत्वम् **प्राप्तवानसि,** यत् **च** अङ्गिरसाम् **अस्माकम्** अभवः **सहभावी[5] सहायः,** सः **त्वम्** देवानाम् **अन्नम् प्रकर्षेण जानन्** उप **यज कामयमानः हे धनस्य दातः![6] सुधनः[7] इति ॥ ९ ॥**

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥ १० ॥

---

१. उदकदाना° मूको. २ °वन्त वि[2] अ[1]. ३-३. °नस्या मूको. ४-४ नास्ति वि[2] अ[1].
५. सहद्भावी वि[2] अ[1]; सभावी वि[1]. ६. दाता वि[1]. ७-७. °नस्त्वम् मूको.

वनस्पते । रशनया । निऽयूय । 'देवानाम् । पाथः । उप । वक्षि । विद्वान्' ।
स्वदाति । देवः । कृणवत् । हवींषि । अवताम् । द्यावापृथिवी इति । हवम् । मे ॥ १० ॥

उद्गीथ० [1]हे वनस्पते ! वनस्पतिविकार ! यूप ! रशनया रज्ज्वा नियूय बद्ध्वा पाथः अन्नम् देवानाम् इन्द्रादीनाम् उप वक्षि उपवह प्रापय[2] विद्वान् अस्मद्भक्ततां सेवाधिकारं वा [3]जानन् अन्नानि कामयमानांश्च[3] देवान् यष्टुम् अस्मद्भक्ततां वा । यतः स्वदाति आस्वादयति परया प्रीत्या भक्षयति सर्वः देवः, कृणवत् कृतवांश्च देवार्थं यजमानः हवींषि । अवताम् गच्छतां च तवानुज्ञया शृणुतां[4] चेत्यर्थः, द्यावापृथिव्यौ हवम् आह्वानम् मे मम स्वभूतम् ॥ १० ॥

वेङ्कट० वनस्पते ! रशनया नियूय बद्ध्वा देवानाम् अन्नम् उप वह विद्वान् । स्वादयति च देवः कृणोति हवींषि वनस्पतिः । अवताम् द्यावापृथिव्यौ[5] च हवम् मे इति ॥ १० ॥

आग्ने वह वरुणमिष्टये न इन्द्रं दिवो मरुतो अन्तरिक्षात् ।
सीदन्तु बर्हिर्विश्व आ यजत्राः स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

आ । अग्ने । वह । वरुणम् । इष्टये । नः । इन्द्रम् । दिवः । मरुतः । अन्तरिक्षात् ।
सीदन्तु । बर्हिः । विश्वे । आ । यजत्राः । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥

उद्गीथ० हे अग्ने ! आ वह वरुणम् इष्टये यागाय नः अस्माकम्, इन्द्रम् च दिवः[6] । तथा मरुतः च अन्तरिक्षात् आवह । आहूताश्च सन्तः आ सीदन्तु आगच्छन्तु बर्हिः वेदिस्तरणं प्रत्युपविष्टाः[7] विश्वे सर्वे यजत्राः यष्टव्याः । आसद्य च स्वाहा स्वाहाकृतयः उत्तमप्रयाजदेवाः[8] अमृताः अमरणधर्माणः मादयन्ताम् हविषा ॥ ११ ॥

वेङ्कट० आ वह अग्ने ! [9]वरुणम् यागाय अस्माकम्[9], इन्द्रम् च दिवः, मरुतः च अन्तरिक्षात् । आ सीदन्तु बर्हिः विश्वे देवाः । स्वाहाकारेण देवाः अमृताः मादयन्ताम् इति ॥ ११ ॥

[10]इति अष्टमाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[10] ॥

## [ ७१ ]

[10]बृहस्पतिराङ्गिरस ऋषिः । ज्ञानं देवता । त्रिष्टुप् छन्दः, नवमी जगती[10] ।

बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥

---

१-१. एष निगमः या॰ ( ६,७ ) द्र. २-२. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र. ३-३. जानन्नन्नान् कामयमानश्च वि[1]; जानन्नाकामयमानश्च वि[2] अ. ४. शृण्वतां मूको. ५. °थिव्या वि[2] अ[1], ६. दिवोभ्यश्च वि[2] अ; दिवो द्यौश्च वि[1]. ७. प्रत्युवेष्टं वि[2] अ. ८. °जदा मूको. ९-९. वरुणायानास्मा° वि[2] अ[1]; वरुणायोग्रायास्मा° वि[1]. १०-१०. नास्ति मूको.

बृह॑स्पते । प्र॒थ॒मम् । वा॒चः । अग्र॑म् । यत् । प्र । ऐर॑त । ना॒म॒ऽधेय॑म् । दधा॑नाः ।
यत् । ए॒षा॒म् । श्रेष्ठ॑म् । यत् । अ॒रि॒प्रम् । आसी॑त् । प्रे॒णा । तत् । ए॒षा॒म् । नि॒ऽहि॑तम् । गुहा॑ । आ॒विः ॥

**उद्गीथ०** उत्तरं सूक्तम् 'बृहस्पते प्रथमम्' इत्येकादशर्चं ज्ञानस्तावकं बृहस्पतिराङ्गिरसो ददर्श। उक्तं च देवतानुक्रमण्याम् 'तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः' ( बृदे ७,१०९ ) इति। बृहस्पतिः[1] शरीरात्मना[2] स्थित्वाऽन्तरात्मानम् आमन्त्रयते मन्त्रदृक्—बृहस्पते! मदीयाऽन्तरात्मन्! प्रथमम् मुख्यं प्रधानम् अर्थज्ञानम् वाचः[3] ऋग्यजुःसामादिलक्षणाया अर्थज्ञानशून्यायाः सकाशात्। यच्च अग्रम् अग्रशब्दोऽत्र आदिवचनः। आदिभूतं च [4]वाचः प्रवृत्तौ[4] निमित्तभूतं चेत्यर्थः। यत् च प्र ऐरत प्रेरयन्ति शब्दोच्चारणकाले येन सहोच्चारयन्ति ब्राह्मणादयः पुरुषाः शब्दार्थ-ज्ञानयोः नित्यसम्बन्धत्वात् नामधेयम् ऋग्यजुस्सामादिलक्षणं नाम दधानाः स्वमुखे मनसि वा धारयन्तः, उच्चारयन्त इत्यर्थः। यत् च एषाम् नाम्नां सकाशात् श्रेष्ठम् अतिशयेन प्रशस्यम्। यत् च अरिप्रम् आसीत् अपापं सदा भवति पापापनोदमित्यर्थः[5]। उक्तं च भगवता वासुदेवेन—'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' ( गी ४,३८ ) इति। प्रेणा प्रेम्णाऽतिप्रियत्वेन हेतुना तत् कार्यकारणस्वरूपज्ञानम् एषाम् नाम्नां सम्बन्धिनि गुहा गूढे संवृते मध्यदेशे निहितम् अभिधेयत्वेन अवस्थापितम्, कारणात्मना आविः प्रकाशितं भवतु इति शेषः। उक्तविशेषणविशिष्टं कार्यकारणविषयं[6] सम्यग्ज्ञानं तवोत्पद्यताम् इत्यर्थः ॥ १ ॥

**वेङ्कट०** 'बृहस्पतिर्ज्ञानं तुष्टाव' ( ऋअ २,१०,७१ )। हे बृहस्पते! प्रथमम् वाचः अग्रम् यत् अमी प्रेरितवन्तः नामधेयम् पदार्थेषु निदधानाः बालाः। तेषां हि वचनं वाचः अग्रं भवति, यां ते यावज्जीवं वदिष्यन्ति[7] तततातेत्यादिकमित्युक्तम्[8]। तथा एषाम् इदानीम् यत् श्रेष्ठम् यत् च अपापं वेदार्थज्ञानम् आसीत्, प्रेम्णा तत् ज्ञानम् एषाम् गुहायाम् निहितम् आविर्-भवति सरस्वती अभ्यासे प्रेम्णा स्वार्थं प्रकाशयतीति। बृहस्पतिर्बालान् विदितवेदार्थान् दृष्ट्वा विस्मयते इति ॥ १ ॥

सक्तु॑मिव॒ तित॑उना पु॒नन्तो॒ यत्र॒ धीरा॒ मन॑सा॒ वाच॒मक्र॑त ।
अत्रा॒ सखा॑यः स॒ख्यानि॑ जानते भ॒द्रैषां॑ ल॒क्ष्मीर्निहि॒ताधि॑ वा॒चि ॥ २ ॥

सक्तु॑म्ऽइव । तित॑उना । पु॒नन्तः॑ । यत्र॑ । धीराः॑ । मन॑सा । वाच॑म् । अक्र॑त ।
अत्र॑ । सखा॑यः । स॒ख्यानि॑ । जा॒न॒ते॒ । भ॒द्रा । ए॒षा॒म् । ल॒क्ष्मीः । नि॒ऽहि॑ता । अधि॑ । वा॒चि ॥२॥

**उद्गीथ०** सक्तुम् इव यथा सक्तुं सतुषम् तितउना परिपवनेन चालनकेन पुनन्तः शोधयन्तः केचित् निस्तुषं ससारं[10] कुर्वन्ति, एवम् यत्र समाजे यज्ञे वा धीराः प्रज्ञावन्तः पण्डिताः मनसा शास्त्रसंस्कृतया बुद्ध्या चालनकस्थानीयया ऋग्यजुस्सामादिलक्षणाम् अर्थापरिज्ञानतुषप्रच्छन्नां[11]

---

१. °स्पते मूको. २. शरीरमात्मना मूको. ३. नास्ति मूको. ४-४. वाचः आवृत्तौ वि[1]; वायो वृ वृप्त्तौ वि[2] अ. ५. पापनोद° मूको. ६. कार्यकरण° मूको. ७. वदन्ति अ[1]. ८. तच्च तताते° अ.[1] ९. एष निगमः या. (४,१०) द्र. १०. संसा° वि[2] अ. ११. °तुषापरिच्छा° वि[1]; °तुषाप° वि[2] अ.

सतुषसक्तुस्थानीयाम् वाचम् व्याख्यानकाले शोधयन्तः अर्थापरिज्ञानतुषम् अपनयन्तः अकृत अकृषत कुर्वन्ति । किम् । सामर्थ्याद् वागर्थज्ञानं ससारसक्तुस्थानीयम् । अत्र तत्र समाजे यज्ञे वा सखायः समानख्यानाः तुल्यदर्शनाः समानशास्त्रपरिनिष्ठितज्ञाना यच्छास्त्रं व्याख्यायते तस्यैव शास्त्रस्य अर्थतः सम्यग् ज्ञातार इत्यर्थः, सख्यानि जानते सखिषु समानख्यानेषु तुल्यदर्शनेषु व्याख्यातृषु भवानि ज्ञानानि जानन्ति, यतः भद्रा कल्याणी[१] एषाम् लक्ष्मीः श्रीः कार्यकारण-स्वरूपपरिज्ञानलक्षणा[२] निहिता स्थापिता अधि उपरि वाचि वाचः ॥ २ ॥

वेङ्कट० सक्तुम् इव दुर्धावं शूर्पेण पुनन्तः यत्र धीमन्त मनसा प्रज्ञायुक्तेन वाचम् अक्षतम्[३] आविष्कुर्वन्ति प्रकृतितः प्रत्ययतश्च । अत्र काले वाचा बद्धसख्याः तस्या वाचः सख्यानि जानन्ति वाक्प्रयुक्तान् अभ्युदयान् लभन्ते । कल्याणी च लक्ष्मीः एषाम् वाचि निहिता, यां पश्यामोऽर्थज्ञानां[४] वाचीति ॥ २ ॥

यज्ञेन॑ वा॒चः प॑द॒वीय॑माय॒न् ताम॒न्व॑विन्द॒न्नृषि॑षु॒ प्रवि॑ष्टाम् ।
ताम॒भृत्या॒ व्य॑दधुः पुरु॒त्रा तां स॒प्त रे॒भा अ॒भि सं न॑वन्ते ॥ ३ ॥

य॒ज्ञेन॑ । वा॒चः । प॒द॒ऽवीय॑म् । आ॒य॒न् । ताम् । अनु॑ । अ॒वि॒न्द॒न् । ऋषि॑षु । प्रऽवि॑ष्टाम् ।
ताम् । आ॒ऽभृत्य॑ । वि । अ॒द॒धुः । पु॒रु॒ऽत्रा । ताम । स॒प्त । रे॒भाः । अ॒भि । सम् । न॒व॒न्ते॒ ॥३॥

उद्गीथ० यज्ञेन हेतुना ज्ञानार्थया[५] वाचा ऋग्यजुस्सामादिलक्षणया यज्ञः कर्त्तव्यः इत्यनेन कारणेनेत्यर्थः, वाचः ऋग्यजुस्सामादिलक्षणायाः अर्थापरिज्ञानेनोत्कृष्टकल्पायाः[६] पदवीयम् पदगतिम् आयन् अनुगतवन्तो मनुष्या अधिकृताः । अनुगम्य च ताम् वाचम् ऋषिभिः विज्ञातार्थाम् अनु अविन्दन् अन्वेषमाणा लब्धवन्तः ऋषिषु मन्त्रद्रष्टृषु वसिष्ठादिषु प्रविष्टाम् अवस्थितामित्यर्थः । लब्ध्वा च ऋषयः तदर्थं श्रुत्वा ताम् विज्ञातार्थां वाचम् आभृत्य आहृत्य वि अदधुः निहितवन्तः पुरुत्रा बहुषु यज्ञेषु । ताम् वाचं विज्ञातार्थाम् सप्त कर्मानुष्ठानाय यज्ञे सदा सर्पणशीलाः[७] रेभाः[८] स्तोतारः यजमानादयः अभि सम् नवन्ते आभिमुख्येन संस्तुवन्ति तया[९] विज्ञातार्थया कर्म कुर्वन्तीत्यर्थः । एवं च [१०]विज्ञातार्थाया वाचः[१०] स्तुतिद्वारेण विज्ञानमेव स्तूयते ॥ ३ ॥

वेङ्कट० यज्ञम् कुर्वाणाः धीराः वाचः पदवीयम् आयन् । पदेन यातव्यः पन्थाः पदवीयः । मार्गम् अन्वायन् । ताम् च अनु अविन्दन् ऋषिषु प्रविष्टाम् । ताम् आभृत्य[११] बहुषु देशेषु वि अदधुः अध्यापयामासुः सर्वान्मनुष्यान् । ताम् सप्त छन्दांसि अभि सम् गच्छन्ति । रेभाः पक्षिणः । पक्षिरूपाणि[१२] हि छन्दांसि इति ॥ ३ ॥

---

१. कल्याणा मूको. २, कार्यकरण° मूको. ३. या. (४,१०) स्कन्दभाष्यं द्र. ४. °ज्ञानं वि'. ५. °र्थाया मूको. ६. °रिज्ञानोत्कृष्ट° मूको. ७. तर्पणशीला मूको. ८. भो मूको. ९ या मूको. १०-१०. °तार्थया वि'; °तार्थ वा वि' अ ११. आहृत्य वि'. १२ °रूपाः वि'.

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४ ॥

उत । त्वः । पश्यन् । न । ददर्श । वाचम् । उत । त्वः । शृण्वन् । न । शृणोति । एनाम् ।
उतो इति । त्वस्मै । तन्वम् । वि । सस्रे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ ४ ॥

**उद्गीथ०** उत त्वः अप्येकः अविज्ञातवागर्थः पश्यन् मनसा पर्यालोचयन्नपीत्यर्थः, न ददर्श दर्शनफलाभावाद् न पश्यति वाचम् ऋग्यजुस्सामादिलक्षणाम् । उत त्वः अप्येकः अविज्ञातवागर्थ एव तु शृण्वन् सुमुखेनोच्चार्यमाणां वाचं शृण्वन्नपि श्रवणफलाभावात् न शृणोति एनाम् वाचम् । उतो त्वस्मै अप्येकस्मै विज्ञातवागर्थाय तन्वम् शरीरं सबाह्याभ्यन्तरम्[1] वि सस्रे सर्तेः गत्यर्थस्य अन्तर्णीतण्यर्थस्येदं[2] रूपम् । विगमयति उद्घटयति विदर्शयति प्रकाशयति वा । कथम् । जाया इव पत्ये उशती सुवासाः यथा जाया भार्या उशती सम्भोगम् अपत्यं[3] भर्तारं च कामयमाना सुवासाः शोभनवासाः ऋतुकाले [4]चतुर्थेऽहनि निर्णिक्तवस्त्रा सती सम्भोगकाले[4] भर्त्रे स्वशरीरं सबाह्याभ्यन्तरं दर्शयति, एवम् । एवम् अर्थज्ञप्रशंसाद्वारेण अर्थज्ञानं प्रशस्यते ॥ ४ ॥

**वेङ्कट०** यास्कः ( १, १९ ) — 'अप्येकः पश्यन् न पश्यति वाचम् । अपि च शृण्वन् न शृणोत्येनाम् । इत्यविद्वांसमाहार्धम् । अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याह अनया वाचा उपमोत्तमया वाचा । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु यथा स एनां पश्यति स शृणोति । इत्यर्थज्ञप्रशंसा' इति ॥ ४ ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥

उत । त्वम् । सख्ये । स्थिरऽपीतम् । आहुः । न । एनम् । हिन्वन्ति । अपि । वाजिनेषु ।
अधेन्वा । चरति । मायया । एषः । वाचम् । शुश्रुऽवान् । अफलाम् । अपुष्पाम् ॥ ५ ॥

**उद्गीथ०** उत त्वम् अप्येकं विज्ञातवागभिधेयार्थम् सख्ये वाचा सह सखिभावे स्थिरपीतम् आहुः । यो यत् पिबति स तत् प्राप्नोति इति वा अनेन[5] प्राप्तिर्लक्ष्यते । दृढप्राप्तं वदन्ति ऋषयो ब्राह्मणा वा विद्वांसः । यो वागभिधेयमर्थं जानाति स वाचं निर्ब्रवीति[6] । तेन 'यां यां देवतां निराह, तस्यास्तस्याः ताद्भाव्यमनुभवति' ( या १३,१३ ) इत्यागमाद् वाचस्ताद्भाव्यमप्ययं[7] प्राप्नोतीत्येवमाहुरित्यर्थः । अथवा वागभिधेयदेवैस्सह सख्ये स्थिरपीतमाहुः वागभिधेयार्थज्ञम् । अथवा वाक्सख्ये वाचा क्रियमाणे सखिकर्मणि विद्वत्सखिसङ्कथनलक्षणे स्थिरपीतं स्थिरज्ञानं परिनिष्ठितविद्यमाहुः प्रशंसन्ति विद्वांसः । अथवा अप्येकं वाक्सख्ये वाचः ऋग्यजुस्सामादि-

---

१ यबाह्या° वि°; ···बाह्या° वि[2] अ. २. °न्तार्हितण्य° वि[1]. ३. अप्यपत्यं वि[1]. ४-४. नास्ति वि[1].
५. अनेना मूको. ६. निब्रवीति मूको. ७. °भाव्यमपत्यं मूको.

लक्षणायाः सम्बन्धिनि सखिकर्मणि समानख्यानैः समानदर्शनैः तुल्यज्ञानैः व्याख्यातृभिः क्रियमाणे व्याख्यानकर्मणि स्थिरपीतं सुगृहीतज्ञानमाहुः प्रशंसन्ति विद्वांसः, नेतरं ग्रन्थमात्राध्येतारं चतुर्वेदिनमपि। अथवा अप्येकं देवसख्ये सखिकर्मणि सखिभिः[1] [2]समानख्यानैः ऋत्विग्यजमानैः[2] क्रियमाणे यज्ञकर्मणि स्थिरज्ञानम् आपत्स्वपि प्रायश्चित्तनिमित्तासु अमूढम् नित्यनैमित्तिककर्मणि विधिज्ञं[3] वागर्थज्ञं प्रशंसन्ति नेतरं ग्रन्थमात्राध्यायिनं चतुर्वेदमपि। न अपि न च एनम् वागर्थज्ञम् हिन्वन्ति 'हि गतौ'। अनुगच्छन्ति प्राप्नुवन्ति अतिशेरते वाजिनेषु वाग् इना ईश्वरा अभिधानत्वेन येषामर्थानाम् अभिधेयानां[4] तेऽर्था वाजिनाः तेषु वाजिनेषु, वाजिनेषु वाग्ज्ञेयेषु[5] अर्थेषु। एवमियं ज्ञानप्रशंसा। परार्धेऽज्ञाननिन्दा[6]। अधेन्वा अधेनुस्थानीयया कामानाम् अदोग्ध्र्या वाचा मायया मायामय्या अर्थपरिज्ञानरहितत्वाद् वाक्प्रतिरूपया सह उपलक्षितो वा चरति प्रवर्तते [7]पठनगर्वात्। एषः[7] वाचम् शुश्रुवान् उपाध्यायेन[8] निगद्यमानाम्[9] श्रुत्वा चाधीतवानित्यर्थः। कीदृशीम्। अफलाम् फलरहिताम् अपुष्पाम् पुष्परहितां च। किं तत् वाचः फलं पुष्पं च। अर्थो वाचः फलं पुष्पं च। अर्थज्ञानरहिताम् इत्यर्थः। अथवा याज्ञदैवते पुष्पफले उच्येते। दैवताध्यात्मे वा। यथा हि पूर्वं पुष्पं भवति पश्चात् फलम्, एवम् याज्ञं पूर्वं ज्ञायते पश्चाद् दैवतम्, दैवतं[10] वा पूर्वं ज्ञायते पश्चाद् अध्यात्मम्। यथा च पुष्पफले हेतुहेतुमद्भूते एवं याज्ञदैवते देवताध्यात्मे वा हेतुहेतुमद्भूते[11]। अतस्ते[12] अत्र पुष्पफले उच्येते। तद्रहितामित्यर्थः। अथवा पुष्पफलस्थानीयदृष्टादृष्टफलरहिताम्। अथवा नञ् ईषदर्थे। ग्रन्थाध्ययनधारणमात्रेण जनितेषद्दृष्टादृष्टफलां वा इत्यर्थः॥ ५॥

वेङ्कट० अपि एकम् वाक्सख्ये स्थिरपीतम् आहुः। यस्य स्थिरं [13]हृदये पीतं[13] मधु स स्थिरपीतः, न च एनम् हिन्वन्ति विज्ञातार्थम् वाग्ज्ञेयेषु बलवत्स्वपि अर्थेष्विति यास्कः (तु. या १,२०)। यद्वा सारभूतेषु निरूपणीयेष्वर्थेषु नैनं बहिष्कुर्वन्ति। अधेन्वा चरति मायया एषः यथा वन्ध्या पीना गौः किमियं द्रोणदुघेति मायामुत्पादयन्ती चरति, एवं पाठं प्रब्रुवाणश्चरति। यथा वा [14]वन्ध्यो वृक्षोऽनृतौ[14] संहननोपेतः पुष्प्यतीति फलतीति च बुद्धिमुत्पादयंस्तिष्ठति, तथा च चरतीत्याह — वाचम् शुश्रुवान् अफलाम् अपुष्पाम् इति। अर्थं वाचः पुष्पफलमाह॥ ५॥

[15]इति अष्टमाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[15]॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्॥ ६॥

---

१. नास्ति वि[1]. २. °ख्यात्यृत्वि° वि[1]; °नसख्या ऋत्वि° वि[2] अ. ३. विविक्तं वि[1]; विविज्ञं वि[2] अ. ४. नास्ति वि[1]. ५. वा ज्ञायेषु वि[2] अ; वाजायेषु वि[3]. ६. परार्थज्ञान° मूको. ७-७. पवने ग° वि[3]; पठनगर्वात् ···वि[2] अ. ८. उवाध्या वि[2] अ; उवाध्योयो° वि[3]. ९. निगदाना वि[2] अ. १०. नास्ति मूको. ११. °ते भूते वि[1]. १२. आत° मूको. १३-१३. °दयपी° वि[1]. १४-१४. °न्ध्योनृ° वि[1] अ[1]. १५-१५ नास्ति मूको.

यः । ति॒त्याज॑ । स॒चि॒ऽविद॑म् । सखा॑यम् । न । तस्य॑ । वा॒चि । अपि॑ । भा॒गः । अ॒स्ति॒ ।
यत् । ई॒म् । शृ॒णोति॑ । अल॑कम् । शृ॒णोति॒ । न॒हि । प्र॒ऽवेद॑ । सु॒ऽकृ॒तस्य॑ । पन्था॑म् ॥ ६ ॥

**उद्गीथ०** यः[1] ग्रन्थमात्राध्यायी सः तित्याज परित्यजति वाचः अर्थम् गुरुमुखान्न शृणोतीत्यर्थः । कीदृशं वागर्थम् । सचिविदम् 'षच सेवायाम्' । [2]सचिः सेवा, तया[2] सच्या [3]गुरुसेवया वेदितव्यं[3] ज्ञातव्यम्[4], पुनःपुनःश्रवणलक्षणया वा सेवया ज्ञातव्यम् सखायम् वाचः[5] सखिभूतम् साहचर्यात्, तस्य ग्रन्थमात्राध्यायिनः अविज्ञातवागभिधेयार्थस्य वाचि ऋग्यजुस्सामादिलक्षणायां महता यत्नेन अधीतायां धारितायां च सत्यामपि भागः अपि[6] न अस्ति फलांशोऽपि न विद्यते । यत् यदपि ईम् एनां स्वमुखेन परमुखेन वोच्चार्यमाणाम् शृणोति तदपि अलकम् कुत्सितं वाऽपर्याप्तम् अलीकं वा शृणोति मायामयत्वात् तस्या अविज्ञातार्थाया[7] वाचः । न हि न च प्रवेद प्रजानाति सुकृतस्य पुण्यस्य कर्मणः पन्थाम् पन्थानम् मार्गं स्वर्गादिगतिं वा ॥ ६ ॥

**वेङ्कट०** यः परित्यजति सखिविदम् सखायम् वेदम्, न तस्य सर्वस्याम् अपि वाचि लौकिक्यां[8] भजनीयः कश्चिदर्थः अस्ति । यत् अयम् वेदव्यतिरिक्तम् शृणोति तद् अलीकम् शृणोति । नहि प्रवेत्ति तेन सुकृतस्य पन्थानमिति । 'तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके' ( तैआ २, १५,१ ) इत्यादिकमध्वर्युभ्यः श्रोतव्यमिति ॥ ६ ॥

अ॒क्ष॒ण्वन्तः॒ कर्ण॑वन्तः॒ सखा॑यो मनोज॒वेष्व॑स॑मा बभूवुः ।
आ॒द॒घ्नास॑ उपक॒क्षास॑ उ त्वे ह्र॒दा इ॑व॒ स्नात्वा॑ उ त्वे॑ ददृश्रे ॥ ७ ॥

अ॒क्ष॒ण्ऽवन्त॑ः । कर्ण॑ऽवन्तः । सखा॑यः । म॒नः॒ऽज॒वेषु॑ । अस॑माः । ब॒भू॒वुः॒ ।
आ॒द॒घ्नास॑ः । उ॒प॒ऽक॒क्षास॑ः । ऊँ॒ इति॑ । त्वे॒ । ह्र॒दाःऽइ॑व । स्नात्वा॑ः । ऊँ॒ इति॑ । त्वे॒ । द॒दृ॒श्रे॒ ॥७॥

**उद्गीथ०** अक्षण्वन्तः अक्षिमन्तः कर्णवन्तः सखायः समानख्यानाश्च सन्तः तुल्येषु बाह्येषु इन्द्रियवर्गेषु सत्सु तुल्येषु च वेदार्थव्याकरणादिज्ञानेषु च सत्सु इत्यर्थः, मनोजवेषु मनोगम्येषु सूक्ष्मेष्वर्थेषु असमाः अतुल्याः बभूवुः भवन्ति मनुष्याः । किमिव । ह्रदाः इव यथा ह्रदाः आदघ्नासः स्यशब्दलोपोऽत्र द्रष्टव्यः । आस्यदघ्ना मुखप्रमाणाः उपकक्षासः कक्षसमीपपरिमाणाश्च त्वे एके मध्यमाधमोदकाः असमाः भवन्ति, एवम् एके मनुष्याः मध्यमाधमप्रज्ञाः असमा भवन्ति । यथा च स्नात्वाः स्नानार्हाः अक्षोभ्योदका उत्तमा ह्रदाः त्वे ददृश्रे दृश्यन्ते, एवम् एके महाप्रज्ञाः अक्षोभ्यज्ञाना भवन्ति । तस्मात् अक्षोभ्यज्ञानार्थं महता यत्नेन वागर्थौ ज्ञातव्य इति ज्ञानं स्तूयते ॥ ७ ॥

**वेङ्कट०** अक्षण्वन्तः अक्षिमन्तः[10] कर्णवन्तः लौकिकेषु च कार्येषु समानख्याना अपि सन्तो मनुष्याः

---

१. यो यो मूको.   २-२. सचि सेवताथा वि[2] अ; सचिः सेवायाम् वि[1].   ३-३. °वयाज्ञ विदितव्यं मूको.   ४. ज्ञा व्यम् वि[1]; ज्ञाप्यं वि[2] अ.   ५. वाचा वि[1].   ६. नास्ति वि[1].   ७. अपि ज्ञातायां वि[1].   ८. °किक्यां न मूको.   ९. या. ( १,९ ) व्याख्यानं द्र.   १०. अक्षीणन्तः वि[1]; °वन्तः वि[2] अ[1].

मनोवेगेषु असमाः भवन्ति। तत्र केचिद् आस्यदघ्नाः [1]'ह्रदाः इव[1]' दृश्यन्ते इति मध्यमप्रज्ञानाह। अथ पर उपकक्षासः कक्षदघ्ना ह्रदा इव दृश्यन्त इत्यल्पप्रज्ञानाह। ह्रदा इव स्नानार्हाः हस्तिदघ्ना अक्षोभ्याः [2]अपरे इत्युत्तरप्रज्ञानाह[2] ॥ ७ ॥

हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥ ८ ॥

हृदा। तष्टेषु। मनसः। जवेषु। यत्। ब्राह्मणाः। सम्ऽयजन्ते। सखायः।
अत्र। अह। त्वम्। वि। जहुः। वेद्याभिः। ओहऽब्रह्माणः। वि। चरन्ति। ऊँ इति। त्वे ॥८॥

**उद्गीथ०** हृदा हृदयेन बुद्ध्या तष्टेषु तनूकृतेषु संस्कृतेषु निश्चितेषु सत्सु इत्यर्थः। केषु[3]। उच्यते[4] — मनसः जवेषु स्वेन मनसा ऊहापोहाभ्यां येऽर्थाः सम्यक् ऊह्यन्ते श्रूयन्ते गम्यन्ते नोपदेशमात्रेण तेषु सूक्ष्मेष्वर्थेषु, तद्गम्यानर्थान् स्वयं मनसालोच्य बुद्ध्या परिच्छिद्येत्यर्थः। यत् यत्र समाजे[5] यदा वा काले ब्राह्मणाः संयजन्ते सङ्गच्छन्ति सखायः समानख्याना ऋत्विजः अन्ये च शास्त्रार्थज्ञाः। अत्र समाजे[6] काले वा त्वम् एकं मन्दप्रज्ञं ऊहापोहासमर्थम् वि जहुः विविधं त्यजन्ति वेद्याभिः बाहुलकात् 'स्नानीयं चूर्णम्' इत्यादिवत् करणेऽत्र यत्[7] प्रत्ययः। सप्तम्यर्थे च तृतीया। वेद्यते ज्ञायते तत्त्वं याभिस्ताः वेद्याः प्रश्नप्रतिवचनप्रवृत्तयः, तासु नैनं किञ्चित् पृच्छन्ति नाप्यस्मै प्रतिब्रुवन्तीत्यर्थः। के। ये ओहब्रह्माणः ओहम् ऊह्यमाना ब्रह्म परा विद्या यैस्ते, ऊहापोहसमर्था इत्यर्थः। उ त्वे उशब्द एवार्थे। त्वशब्द एकार्थे। त एवैकेऽत्र वि चरन्ति विविधं चरन्ति प्रवर्तन्ते परस्परं पृच्छन्ति प्रतिब्रुवन्ति चेत्यर्थः। एवम् अत्राविद्वन्निन्दया विद्वत्स्तुत्या च ज्ञानं प्रशस्यते ॥ ८ ॥

**वेङ्कट०** हृदा तष्टेषु बुद्धिमतां हृदयेन[8] परिकल्पितेषु मनसः गन्तव्येषु वेदार्थेषु[9] गुणदोषनिरूपणाः[10] यदा ब्राह्मणाः सङ्गच्छन्ते समानख्यानाः, अस्मिन् सङ्घे कञ्चनाज्ञं परित्यजन्ति वेदितव्येभ्यो वेदार्थेभ्यः। अथान्ये[11] ओहब्रह्माणः ऊह्यमानं येषां ब्रह्म ते यथाकामम् वि चरन्ति ॥ ८ ॥

इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९ ॥

इमे। ये। न। अर्वाक्। न। परः। चरन्ति। न। ब्राह्मणासः। न। सुतेऽकरासः।
ते। एते। वाचम्। अभिऽपद्य। पापया। सिरीः। तन्त्रम्। तन्वते। अप्रऽजज्ञयः ॥ ९ ॥

---

१-१. नास्ति वि[2] अ[1]. २-२. °परे ··· त्युत्त° मूको. ३ के मूको. ४ उच्यन्ते वि[2]. ५. °जौ मूको. ६. °न्न मूको. ७. त्रल वि[1]; नास्ति वि[2] अ. ८. °दये वि[2] अ[1]. ९. नास्ति वि[1]. १०. गुणरूपनिरूपणाय वि[2] अ[1]. ११. अथान्यम् मूको.

**उद्गीथ०** इमे ये य इमे मनुष्याः अर्वाक् अर्वाग्ज्ञानं देवताज्ञानं वा न चरन्ति नावगच्छन्ति न प्रबुध्यन्ते, परः परं वाऽऽत्मज्ञानम् न चरन्ति नावगच्छन्ति, न ब्राह्मणासः नापि ब्राह्मणाः समर्थाः गुरुमुखाज्ज्ञात्वाऽपि प्रतिवचनाऽक्षमा इत्यर्थः, न सुतेकरासः नाप्यभिषुते सति सोमे कर्मणां कर्तारः, ते एते यथोक्ताः सर्वप्रकारा अपि वाचम् अभिज्ञातार्थाम् अभिपद्य वेदाध्ययनमेव श्रेयस्करं को वा वेदार्थं विजानाति इत्येवं मन्यमाना इत्यर्थः, तया वाचा ऋगर्थज्ञानरहितया पापया पापफलहेतुभूतया अफलम् तन्त्रम् अतिदुर्बलम् असारम् उत्पन्नप्रध्वंसि च तन्वते विस्तारयन्ति जनयन्तीत्यर्थः अप्रजज्ञयः अप्रज्ञातारः वागर्थस्य। किमिव तन्त्रं तन्वते। उच्यते — सिरीः लुप्तोपममेतत् पदम्। सिरीः ऊर्णनाभिः कौलकः अतिदुर्बलम् असारम् उत्पन्नप्रध्वंसि च तन्त्रं यथा[१] तनोति, एवम्। तस्मात् शोभनानन्तफलप्रेप्सुभिः वेदार्थो वेदितव्यः ॥ ९ ॥

**वेङ्कट०** इमे ये अविद्वांसः न अर्वाक् अस्मिन् लोके ब्राह्मणैः सह चरन्ति, न अपि परस्ताद् देवैः, ते न ब्राह्मणाः भवन्ति न 'चर्त्विजः। सुते कुर्वन्तीति[२] सुतेकरा ऋत्विजः। ते एते अज्ञा.[३] लौकिकीम् वाचम् अभिपद्य तया पापया वाचा युक्ताः सीरिणो भूत्वा कृषिं[४] कुर्वन्ति अविद्वांसः। मत्वर्थीय ईकारः ॥ ९ ॥

सर्वे॑ नन्दन्ति य॒शसाग॑तेन सभासा॒हेन॒ सख्या॑ सखा॑यः।
कि॒ल्बि॒ष॒स्पृत् पि॑तु॒षणि॒र्ह्ये॑षा॒मरं॑ हि॒तो भव॑ति॒ वाजि॑नाय ॥ १० ॥

सर्वे॑। न॒न्द॒न्ति॒। य॒शसा॑। आऽग॑तेन। स॒भा॒ऽस॒हेन॑। सख्या॑। सखा॑यः।
कि॒ल्बि॒ष॒ऽस्पृत्। पि॒तु॒ऽसनिः॑। हि। ए॒षा॒म्। अर॑म्। हि॒तः। भव॑ति। वाजि॑नाय ॥ १० ॥

**उद्गीथ०** सर्वे नन्दन्ति सुखिनो भवन्ति यशसा यशोनिमित्तेन वेदार्थविज्ञानेन आगतेन जातेन। कीदृशेन। सभासाहेन विद्वत्सभाया हेतुकर्तृत्वेन अभिभवित्रा। सख्या[५] सहचारित्वाद् विद्वत्सखिभूतेन वा सखायः समानख्याना ऋत्विजः। हि यस्माच्च एषाम् ऋत्विजाम् किल्बिषस्पृत् कर्मवैगुण्यजनितपापस्य आत्मनि विनाशयिताऽस्य ज्ञानबलेन निर्बीजीकर्ता ब्रह्मा पितुषणिः अन्नस्य सम्भक्ता विविधमुपभोक्ता[६] वा अरम् अलं पर्याप्तम् हितः च भवति वाजिनाय ऋत्विजाम् उपदेष्टव्याय वाग्ज्ञेयार्थाय[७]। यस्माच्चैषाम् ऋत्विजां वागभिधेयस्यार्थ य सम्यगुपदेष्टा भवति ब्रह्मा तस्माच्च कारणात् सर्वे नन्दन्ति ऋत्विजः इत्यर्थः। ऋत्विग्यजमानैः ब्रह्मणा च विशेषेण वागर्थौ ज्ञातव्य इति वाक्यार्थः। एवं ह विज्ञानं स्तूयते ॥ १० ॥

**वेङ्कट०** सर्वे सभ्याः नन्दन्ति यशस्विना आगतेन सभां सोढुं[८] शक्नुवता सख्या सखायः। सः हि एषाम् किल्विषस्पृत् भवति यः स्वस्माद् 'अन्यः पुरुषो' भवति। यः श्रेष्ठतामश्नुते स किल्बिषं भवति ( तु. ऐब्रा १,१३ ), तं यो बाधते स हि[९] किल्बिषस्पृत्। अन्नदाता पितुषणिः इति।

---

१. नास्ति मूको.  २-२. ॰जः सुकुर्वन्ति सुते कु॰ मूको.  ३. नास्ति वि[२] अ[१]; जां वि[१].
४. नास्ति वि[२] अ[१].  ५. नास्ति मूको.  ६. नास्ति वि[१].  ७. वाज्ञेया॰ मूको.  ८. वोढुं मूको.
९-९. अन्यपु॰ वि अ[१].

'अन्नं वै पितु दक्षिणा वै पितु तामेनेन सनोत्यन्नसनिमेवैनं तत्करोति' ( ऐब्रा १,१३ ) इत्यादि ब्राह्मणम्[1] ॥ १० ॥

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥ ११ ॥

ऋचाम् । त्वः । पोषम् । आस्ते । पुपुष्वान् । गायत्रम् । त्वः । गायति । शक्वरीषु ।
ब्रह्मा । त्वः । वदति । जातऽविद्याम् । यज्ञस्य । मात्राम् । वि । मिमीते । ऊँ इति । त्वः ॥११॥

**उद्गीथ०** ऋचाम् पोषम् पुष्टिं कर्मणि सम्यक् प्रयोगं कुर्वाणः आस्ते तिष्ठति यज्ञे[2] त्वः एकः[3] पुपुष्वान् पोष्टा वागर्थस्य सम्यग् ज्ञाता होतेत्यर्थः । गायत्रम् साम त्वः एकः विदितवेदार्थः उद्गाता गायति शक्वरीषु ऋक्षु । ब्रह्मा नाम सर्वविद्यः त्वः एक ऋत्विक् वदति कथयति जातविद्याम् जातस्य उत्पन्नस्य प्रायश्चित्तस्य विद्यां निष्कृत्यर्थाम् इतिकर्तव्यताम् इत्यर्थः । यज्ञस्य मात्राम् निर्मात्रीं निष्पादयित्रीम् अभिषवग्रहणहवनादिकां क्रियाम् वि मिमीते निर्मिमीते निर्वर्तयति उ त्वः । उशब्द एवार्थे । एक एव विदितवेदार्थोऽध्वर्युः । एवमत्र ज्ञात्वा कर्तव्यमिति स्तूयते[4] ॥ ११ ॥

इति वनवासीविनिर्गताचार्योद्गीथस्य कृतावृग्वेदभाष्येऽष्टपञ्चाशोऽध्यायः समाप्तः ॥

**वेङ्कट०** ऋचाम् एकः होता[5] पोषम् पुपुष्वान् बह्वीः ऋचः शंसन् आस्ते । गायत्रम् साम एक उद्गाता गायति शक्वरीषु । 'शक्वर्य ऋचः' इति यास्कः ( १,८ ) । ब्रह्मा भूत्वा एकः वदति जातेजाते[4] कर्तव्ये वेदयित्रीं वाचम् । यज्ञस्य मात्राम् शरीरं निर्मिमीते एकः अध्वर्युरिति ॥ ११ ॥

[6]इति अष्टमाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[6] ॥

अध्यायमष्टपञ्चाशं व्याख्यदार्येषु कश्चन ।
दक्षिणापथमाश्रित्य वर्तमानेषु माधवः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके द्वितीयोऽध्यायः

— * —

इति ऋग्वेदे सभाष्ये अष्टमाष्टके द्वितीयोऽध्यायः ॥



१. °णम् इत्यर्थः अ[1]. २. °ज्ञे ति मूको. ३. नास्ति मूको. ४. श्रूयते वि[2] अ. ५. नास्ति वि[1]. ६-६ नास्ति मूको.

अथ तृतीयोऽध्यायः ।

वेङ्कट०

'देवानां नु वयं जाना' व्याचिख्यासति माधवः ।
अपरैरपि वेदार्थो वक्तव्य इति दर्शयन् ॥ १ ॥

तत्र केचन मन्यन्ते[1] समस्तश्रुत्यदर्शनात् ।
[2]गूढत्वान्मतिमान्द्याच्च नार्थो वाच्योऽपरैरिति[2] ॥ २ ॥

[3]विस्तृतः शाट्यायनके ताण्डकार्थस्य निर्णयः ।
तथा शतपथेनान्या यजुश्शाखाः प्रपञ्चिता †[3] ॥ ३ ॥

अध्यवस्यन्ति मन्त्रार्थान् एवं मन्त्रान्तरैरपि ।
शाखास्वन्यासु पठितैर्विस्पष्टार्थैर्मनीषिणः ॥ ४ ॥

आश्विनार्भवसूक्तानाम् आश्विनैरार्भवैस्तथा[4] ।
स्थितेर्देशान्तरे कुर्म इतिहासविनिर्णयम् ॥ ५ ॥

गूढाः पदार्थवाक्यार्थाः सृण्येवे( व[5] इ )त्यादिके तथा ।
तस्मान्नाल्पश्रुतैर्मन्दैः[6] कार्यो वेदार्थनिर्णयः ॥ ६ ॥

तथा च[7] याज्ञिका विप्राः कल्पैरेवार्थनिर्णयम् ।
कुर्वन्ति न त्वपेक्षन्ते मन्त्रं वा ब्राह्मणानि वा ॥ ७ ॥

अत्र ब्रूमः कल्पकाराः सर्वा जानन्ति न[8] श्रुतीः ।
तदापस्तम्बवचनाद् अस्माभिरवसीयते ॥ ८ ॥

अत्रापस्तम्बः—'ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः[9] पाठाः प्रयोगादनुमीयन्ते' इति ।

उत्सन्नेष्वपि[10] पाठेषु[11] स्मार्ताः धर्माः प्रयोगतः ।
इदानीमनुमीयन्ते ननु श्रौतास्तथाविधाः ॥ ९ ॥

[12]अदृष्टसर्वशाखाश्च[12] कुर्वन्त्यर्थविनिर्णयम् ।
कल्पसूत्रकृतः सर्वे स्वदृष्टाभिरिति स्थितिः ॥ १० ॥

कश्यपार्षाणि सूक्तानि सहस्रं शौनकोऽब्रवीत् ।
त्रैष्टुभान्येकभूयांसि 'जातवेदस('से)'[13] इत्यतः ॥ ११ ॥

---

१. मुह्यन्ते वि[२] अ[१]. २-२. °न्मतिधार्चेनार्थोपरै° वि[१]; °मान्द्यौधनार्थों° वि[२] अ[१]. ३-३. विस्तृताः शाखाः प्रपञ्चिताः वि[१]. † नास्ति वि[२] अ[१]. ४. अश्वि° वि[१]. ५. ऋ १०,१०६,६. ६. °स्मान्नल्पश्रुतीर्म° वि[१]. ७. नास्ति मूको. ८. नः वि[२] अ[१]. ९. °मुत्पन्नाः वि[२] अ[१]. १०. उत्पन्ने' वि[२] अ[१]. ११. चार्थेषु वि[२] अ[१]. १२-१२ °दृष्टाः सर्व° वि[२] अ[१]. १३. ऋ १,९९,१.

आत्मना चाप्यदृष्टानि कथं[1] तत्राश्वलायनः ।
निश्चित्योवाच वेदार्थं कथं वा शौनकादयः ॥ १२ ॥

यत्र[2] गूढार्थता तत्र तेषामप्यविनिर्णयः[3] ।
ब्रह्मविद्यां[4] वदन्तीति [5]श्रुतिस्तत्र निदर्शनम्[5] ॥ १३ ॥

वदन्ति बहुधा तत्र स्याच्छब्दो विशयो यदि ।
न्यायांश्च परिगृह्णन्ति विरुद्धानितरेतरान्[6] ॥ १४ ॥

अवदानं स्विष्टकृतो[7] नाज्याज्जैमिनिरिच्छति[8] ।
बोधायनस्त्वाज्यादपि सकृद् ग्रहणमिच्छति ॥ १५ ॥

अङ्गोपाङ्गविदा तस्माद् यथाशक्त्यर्थनिर्णयः ।
कार्यो वेदस्य रक्षार्थम् इति वृद्धेभ्य आगमः ॥ १६ ॥

प्रयोगवृत्तिभिः शक्यः कार्यार्थस्य विनिर्णयः ।
[9]नैतावता विनिर्णेयः[9] कल्पार्थौ भवतोऽपि च ॥ १७ ॥

परिषद् यस्य वचने न दोषमधिगच्छति ।
तमबुद्धिं कथं ब्रूमः प्रब्रवीति स एव नः ॥ १८ ॥

निर्णयः कल्पसूत्राणां श्रुतिस्मृत्योस्तथैव च ।
इतिहासपुराणानां परिषद्येव तिष्ठति ॥ १९ ॥ इति ।

## [ ७२ ]

[10]लौक्यो बृहस्पतिः, बृहस्पतिराङ्गिरसो वा, दाक्षायणी अदितिर्वा ऋषिः ।
देवा देवता । अनुष्टुप् छन्दः[10] ।

दे॒वानां॒ नु व॒यं जाना॒ प्र वो॑चाम वि॒प॒न्यया॑ ।
उ॒क्थेषु॑ श॒स्यमा॑नेषु॒ यः पश्या॒दुत्त॑रे यु॒गे ॥ १ ॥

दे॒वाना॑म् । नु । व॒यम् । जाना॑ । प्र । वो॒चा॒म॒ । वि॒प॒न्यया॑ ।
उ॒क्थेषु॑ । श॒स्यमा॑नेषु । यः । पश्या॑त् । उत्ऽत॑रे । यु॒गे ॥ १ ॥

---

१. नास्ति वि[1]. २. यत्र वि[2]. ३. °मप्यपिनिर्ण° वि[2] अ[1]. ४. ब्रह्मवाद्यं वि[1]; ब्रह्मावाद्यं वि[2] अ[1]. ५-५. सुतनि° वि[1]. ६. °तर वि[2] अ[1]. ७. शिष्ट° वि[2] अ[1]. ८. जैमिनिः वि[2] अ[1]. ९-९. नास्ति वि[2] अ[1]. १०-१०. नास्ति मूको.

**उद्गीथ०** उत्तरं सूक्तम् 'देवानां नु वयम्' इति नवर्चं देवदेवत्यं दाक्षायणी [१]अदितिर्बृहस्पतिर्वा ददर्श[१]। देवानाम् सम्बन्धीनि जाना जानानि जन्मानि प्रादुर्भावान् नु क्षिप्रम् प्र वोचाम वयम् प्रब्रवाम। केन। विपन्यया प्रज्ञया धियेत्यभिप्रायः[२]। उक्थेषु शस्त्रादिषु स्तुतिमन्त्रेष्वित्यर्थः, शस्यमानेषु देवतास्तुतित्वेन उच्चार्यमाणेषु इत्यर्थः, तद्गतानि देवजन्मानि यः पश्यात्। पुरुषवचनव्यत्ययः[३] कार्यः। लिङ् चाऽत्र[४] भविष्यति कालेऽपि। ये[५] वय द्रक्ष्यामः उत्तरे युगे आगामिनि काले इत्यर्थः। ते वयं देवानां जन्मानि प्रब्रूम इति योज्यम् ॥ १ ॥

**वेङ्कट०** अदितिर्दाक्षायणी यथाऽऽदित्यान् अजनयत् तत् स्वयं ब्रवीति—देवानाम् वयम् क्षिप्रम् आदित्यानां जन्मानि प्र वोचाम विस्पष्टया वाचा। अथैकवदाह। यः देवगणः पूर्वस्मिन् युगे जातम् उक्थेषु शस्यमानेषु स्तोतारं पश्यति उत्तरे युगे जातम् ॥ १ ॥

ब्रह्म॑ण॒स्पति॑रे॒ता सं क॒र्मार॑इवाधमत्। दे॒वानां॒ पू॒र्व्ये यु॒गेऽस॑तः॒ सद॑जायत ॥२॥

ब्रह्म॑णः। पतिः॑। ए॒ता। सम्। क॒र्मारः॑ऽइव। अ॒ध॒म॒त्।
दे॒वाना॑म्। पू॒र्व्ये। यु॒गे। अस॑तः। सत्। अ॒जा॒य॒त ॥ २ ॥

**उद्गीथ०** केनैतानि देवजातानि जनितानीति चेत्, उच्यते— ब्रह्मणः पतिः ब्रह्मणः परिवृढस्य परिवृद्धस्य अभिधानाभिधेयलक्षणस्य जगतः पतिः स्वामी कारणात्मा एता एतानि देवजातानि[६] आध्मायमानधातुस्थानीयानि[७] आकरस्थानीये अव्यक्ते स्थितानि सम् अधमत् सम्यगेकीभावेन वा ध्मातवान् सम्पादितवानित्यर्थः। किमिव। कर्मारः इव यथा कर्मारः लोहकारः धातून् आकरे धमति, एवं धमतीव। तस्मिन् ब्रह्मणस्पतौ कारणात्मनि सति देवानाम् जन्माङ्गत्वेन सम्बन्धिनि[८] पूर्व्ये पूर्वस्मिन् युगे काले सृष्टिकाले इत्यर्थः, असतः अनुपलभ्यमानत्वात् असत्सदृशात् अव्यक्ताख्यात् सत् व्यक्तं महापुरुषो हिरण्यगर्भाख्यः यः परत्र उत्तानपादिति वक्ष्यमाणः अजायत जातः ॥ २ ॥

**वेङ्कट०** ब्रह्मणः पतिः अन्नस्य पतिः इयमदितिः एतानि देवानां जन्मानि तिरोहितानि सम् धमति, यथा कर्मारो भस्त्रया अग्निमुपधमति। देवानाम् कारणभूतम् सत् प्रत्ने युगे असतः ब्रह्मणः अजायत ॥ २ ॥ अस्योत्तरा भूयसे निर्वचनाय।

दे॒वानां॑ यु॒गे प्र॑थ॒मेऽस॑तः॒ सद॑जायत। तदाशा॒ अन्व॑जायन्त॒ तदु॑त्ता॒नप॑द॒स्परि॑ ॥३॥

दे॒वाना॑म्। यु॒गे। प्र॒थ॒मे। अस॑तः। सत्। अ॒जा॒य॒त।
तत्। आशाः॑। अनु॑। अ॒जा॒य॒न्त॒। तत्। उ॒त्तान॑ऽपदः। परि॑ ॥ ३ ॥

**उद्गीथ०** इदानीम् उक्तमन्त्रमनूद्य ततोऽबादितत्त्वोत्पत्तिरुच्यते—तच्छब्दश्रुतेरत्र यच्छब्दोऽध्याहार्यः। यत् पुरुषाख्यतत्त्वम्[९] देवानाम् जन्माङ्गत्वेन सम्बन्धिनि युगे काले सृष्टिकाले इत्यर्थः,

---

१-१. °तिर्वा बृहस्पतिर्ददर्श मूको. २. त्वया धिये° मूको. ३. °षव्यत्ययः मूको. ४. वाक्ष मूको. ५. नास्ति मूको. ६. दिविजा° मूको. ७. दध्मयमा° मूको. ८. °बन्धीनि मूको. ९. °षाख्यं तत्त्वं वि[१] अ.

असतः अव्यक्तात् सत्[1] व्यक्तं पुरुषाख्यम् अजायत जातम् । तत् अनु पश्चात् आशाः सर्वव्यापा[2] बुद्धितन्मात्रजातयः अजायन्त जाताः । [3]तत् ताश्च[3] जायमानाः सतश्च[4] उत्तानपदः प्रजापतेः हिरण्यगर्भस्य, तत्कृतत्वात् ॥ ३ ॥

वेङ्कट० [5]देवानाम् कारणभूतम् सत् प्रथमे युगे असतः अजायत । ततः सतः[5] दिशः[6] अनु अजायन्त, तत एव उत्तानपदः वृक्षाः ॥ ३ ॥

भूर्ज॑ज्ञ उ॒त्ता॒नप॑दो भु॒व आशा॑ अजायन्त ।
अदि॑ते॒र्दक्षो॑ अजायत॒ द॒क्षाद्वदि॑तिः॒ परि॑ ॥ ४ ॥

भूः । ज॒ज्ञे । उ॒त्ता॒नऽप॑दः । भु॒वः । आशा॑ः । अ॒जा॒य॒न्त॒ ।
अदि॑तेः । दक्षः॑ । अ॒जा॒य॒त॒ । दक्षा॑त् । ऊँ॒ इति॑ । अदि॑तिः । परि॑ ॥ ४ ॥

उद्गीथ० अनन्तरं च आसु विप्रत्युत्पत्तिक्रमेण [7]भूः उत्तानपदः सकाशाद् जज्ञे जाता । भुवः सकाशाच्च आशाः अजायन्त जाताः । तथा[7] अदितेः देवमातुः सकाशात् दक्षः आदित्यः अजायत जातः । दक्षात् उ[8] अदितिः परि उकारश्चाऽर्थे । दक्षाच्च प्रजापतेः परि सकाशादित्यर्थः, अदितिरजायत ॥ ४ ॥

वेङ्कट० तत्र भूः अजनयद् वृक्षान् । भुवः लोकात् आशाः अजायन्त । अथ अदितेः दक्षः आदित्यः अजायत । पुनश्च तस्मादादित्यात् सा अदितिः अजायत ॥ ४ ॥

अदि॑ति॒र्ह्यज॑निष्ट॒ दक्ष॒ या दु॑हि॒ता तव॑ । तां दे॒वा अन्व॑जायन्त भ॒द्रा अ॒मृत॑बन्धवः ॥ ५ ॥

अदि॑तिः । हि । अज॑निष्ट । दक्ष॑ । या । दु॒हि॒ता । तव॑ ।
ताम् । दे॒वाः । अनु॑ । अ॒जा॒य॒न्त॒ । भ॒द्राः । अ॒मृत॑ऽबन्धवः ॥ ५ ॥

उद्गीथ० हि इति पदपूरणः । हे दक्ष! प्रजापते! या तव दुहिता अदितिः त्वत्तः अजनिष्ट जाता, ताम् अनु तज्जन्मानन्तरम् देवाः अजायन्त । तस्या एव सकाशाद् जाता भद्राः कल्याणाः शोभनाः अमृतबन्धवः अमृतत्वबन्धनाः अमृतोपजीविनः अमरणधर्माणश्चेत्यर्थः ॥ ५ ॥

वेङ्कट० अदितिः हि पुत्रान् अजनयत् आदित्यान् । दक्ष! या तव दुहिता अभूत्, ताम् [9]अदितिम् देवाः आदित्याः अनु अजायन्त भजनीयाः अमरणबन्धनाः![9] ॥ ५ ॥

"इति अष्टमाष्टके तृतीयाध्याये प्रथमो वर्गः" ॥

यद्दे॑वा अ॒दः स॑लि॒ले सुसं॑रब्धा॒ अति॑ष्ठत ।
अत्रा॑ वो॒ नृत्य॑तामिव ती॒व्रो रे॒णुरपा॑यत ॥ ६ ॥

---

१. नास्ति मूको. २. °प्यो वि[2] अ; °प्यः वि[1]. ३-३. तत्राश्च वि[1]; तत्राश्वश्च वि[2] अ. ४. सघश्च मूको. ५-५. नास्ति वि[1] अ[2]. ६. दिवोश्वः वि[2]. ७-७. नास्ति मूको. ८. उत् वि[2]. ९-९. अदितिः (°तिं वि[1]) देवान् आदित्यान् अन्वजायन्त मूको.

यत् । देवाः । अदः । सलिले । सुऽसंरब्धाः । अतिष्ठत ।
अत्र । वः । नृत्यताम्ऽइव । तीव्रः । रेणुः । अप । आयत ॥ ६ ॥

**उद्गीथ०** यत यदा इत्यर्थः, अतिष्ठत स्थितवन्तो यूयम् अत्र अमुष्मिन् सृष्टिकाले [1]हे देवाः! आदित्याः! अदः अमुष्मिन् सलिले सुसंरब्धाः सुष्ठु संलब्धात्मानः[1] प्रजासृष्टौ, वः युष्माकं सुष्ठु संलब्धात्मनां[2] सतां पादाभिघातानां समत्वेन सम्बन्धी तीव्रः वेगवान् रेणुः धूलिशब्दपर्यायवाची पार्थिवो धातुः अप आयत अपगतः युष्मत्पादतः[3] समुत्थित[4] इत्यर्थः। केषामिव। नृत्यताम् इव यथा नृत्यतां केषांचित् पादतस्तीव्रो[5] रेणुरुत्तिष्ठति, एवम्। देवा अपि प्रजासर्गे आदरेण व्याप्रियन्त इत्यर्थः ॥ ६ ॥

**वेङ्कट०** द्वाभ्यामादित्यान् स्तौति। यदा हे देवाः! अमुष्मिन् सलिले यूयं सुष्ठु लब्धात्मानः स्थितवन्तः, अस्मिन् सलिले नृत्यताम् इव देवेभ्यः तीव्रः रेणुः अप अगच्छत् इति सूर्याभिप्रायम्[6] ॥ ६ ॥

यद्देवा यतयो यथा भुवनान्यपिन्वत ।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥ ७ ॥

यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत ।
अत्र । समुद्रे । आ । गूळ्हम् । आ । सूर्यम् । अजभर्तन ॥ ७ ॥

**उद्गीथ०** यत् यदा देवाः, यतयः प्रयतमाना लौकिकवैदिककर्मसु प्रवर्तमानाः पुरुषाः यथा[7] दृष्टादृष्टफलं जनयन्ति, एवम् भुवनानि भूतानि प्रजाः[8] अपिन्वत सिक्तवन्तः चरितवन्तः जनितवन्तः स्थः यूयमित्यर्थः। अत्र अस्मिन् भूतसर्गकाले[9] समुद्रे उदके आ गूळ्हम् आवृतम् सूर्यम् आ अजभर्तन आजभर्त समुद्रादाहृतवन्तः यूयम् उत्तारितवन्तः स्थेत्यर्थः ॥ ७ ॥

**वेङ्कट०** यत् देवाः, मेघा इव उदकैः, स्वतेजोभिः पूरयथ लोकान्, अत्र समुद्रे गूढम् सूर्यम् सलिलाद् आ-हृतवन्तः प्रातरिति[8] ॥ ७ ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवाँ उप प्रैत् सप्तभिः परा मार्ताण्डमास्यत् ॥ ८ ॥

अष्टौ । पुत्रासः । अदितेः । ये । जाताः । तन्वः । परि ।
देवान् । उप । प्र । ऐत् । सप्तऽभिः । परा । मार्ताण्डम् । आस्यत् ॥ ८ ॥

**उद्गीथ०** अदितेः देवमातुः अष्टौ पुत्रासः पुत्राः ये जाताः उत्पन्नाः तन्वः परि अदितिशरीरस्योपरि, सहोदरा इत्यर्थः, तेषां मध्ये सप्तभिः पुत्रैः गृहीतैः[10] देवान् इन्द्रादीन् अदितिः उप प्र ऐत्

---

१-१. नास्ति वि[2] अ. २. संलब्धवतां वि[1]; संरब्धानां वि[2] अ. ३. °पादगतः वि[1,2]; नास्ति अ. ४. समर्थित मूको. ५. °स्ती° मूको. ६. °प्रायम् इति मूको. ७. नास्ति मूको. ८. नास्ति वि[1]. ९. °सर्गे काले मूको. १०. आहितैः वि[1].

प्रकर्षेणोपगतवती, 'धात्रादीन् इन्द्रादिषु' देवेषु निक्षिप्तवतीत्यर्थः। मार्ताण्डम् नाम पुत्रम् परा आस्यत् पराक्षिप्तवती। त्रयाणां लोकानां तापाय पृथङ् निरूपितवतीत्यर्थः ॥ ८ ॥

**वेङ्कट०** अष्टौ 'पुत्राः अदितेः' भवन्ति, अदितेः ये जाताः शरीरात्। तेषु सप्तभिः देवान् उप अगच्छत्। अथाष्टमम् मार्ताण्डम् परा आस्यत् आदित्यम् ॥ ८ ॥ अस्योत्तरा भूयसे निर्वचनायेति।

सप्तभिः पुत्रैरदितिरुप प्रैत् पूर्व्यं युगम्।
प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत् ॥ ९ ॥

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यम्। युगम्।
प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्ताण्डम्। आ। अभरत् ॥ ९ ॥

**उद्गीथ०** सप्तभिः पुत्रैः धात्रादिभिः सह, मार्ताण्डं गृहीत्वेति शेषः। अदितिः उप प्र ऐत् प्रकर्षेण उपगतवती प्रजानां सर्गार्थं स्थित्यर्थं च पूर्व्यम् युगम् पूर्वकालम्, सृष्टिकाले स्थितिकाले चेत्यर्थः। प्रजायै षष्ठ्यर्थे चतुर्थी। प्रजायाः मृत्यवे मरणाय प्रलयार्थमित्यर्थः, त्वशब्दपर्यायोऽत्र[3] त्वच्छब्दः। त्वत् एकम् मार्ताण्डम् नाम सूर्यम् पुनः आ अभरत् पश्चादाहृतवती सृष्टिस्थित्यनन्तरं प्रजोपसंहाराय निरूपितवतीत्यर्थः ॥ ९ ॥

**वेङ्कट०** सप्तभिः पुत्रैः सह अदितिः उप प्र ऐत् पूर्व्यम् युगम्। अथाष्टमं विवस्वन्तं प्रजननाय[4] मरणाय च तम् पुनः मार्ताण्डम् आ-हृतवती। मृताद् व्यृद्धादण्डाज्जातो मार्ताण्डः। 'तस्यै व्यृद्धमाण्डमजायत' ( तै ६,५,६,१ ) इत्यादिकमध्वर्युब्राह्मणमिति ॥ ९ ॥

[5]इति अष्टमाष्टके तृतीयाध्याये द्वितीयो वर्गः[5] ॥

[ ७३ ]

[6]गौरिवीतिः शाक्त्यः ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[6] ॥

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ १ ॥

जनिष्ठाः। उग्रः। सहसे। तुराय। मन्द्रः। ओजिष्ठः। बहुलऽअभिमानः।
अवर्धन्। इन्द्रम्। मरुतः। चित्। अत्र। माता। यत्। वीरम्। दधनत्। धनिष्ठा ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं 'जनिष्ठा उग्रः' इति एकादशर्चं शक्तिपुत्रो गौरिवीतिर्ददर्श। 'मातेत्यादेर्व्याख्यायाः[6] प्रारम्भः क्रियते अर्थस्य सुखप्रतिपत्त्यर्थम्। यदित्यत्र लिङ्गव्यत्ययो[7] वा कार्यः,

---

१-१. धातेन्द्रदीन् मूको. २-२. पुत्रास्तव वि[2] अ[1]. ३. त्वच्छब्द° मूको. ४. प्रजनाय वि[1] अ[1]. ५-५. नास्ति मूको. ६-६. इ…देव्याल्याः प्रा° वि[2]; …देव्या° वि[1] अ. ७. यो मूको.

'सुपां सुलुक्' ( पा ७,१,३९ ) इति अमो वा लुग् द्रष्टव्यः । यत् यं[1] त्वाम् इन्द्रम् वीरम् विक्रान्तम् माता देवमाता अदितिः दधनत् गर्भभूतम्[2] उदरे धारितवती धनिष्ठा धात्रितमा[3] अतिशयेन धात्री महता यत्नेन धारयन्ती सतीत्यर्थः । यश्च त्वं मात्रा कियन्तमपि कालम् उदरे धारितः सन् जनिष्ठाः जातोऽसि अदितेः सकाशाद् उत्पन्नोऽसि । किमर्थम्, कीदृशो वा । सहसे देवानां बलार्थम् तुराय शत्रूणां हिंसनाय च शत्रुवधाय त्वरणाय वा[4] उग्रः क्रूरः शत्रूणाम् उपरि अप्रसह्यो वा शत्रुभिः मन्द्रः च सदा स्तुत्यः मोदमानो हर्षणो वा ओजिष्ठः अतिशयेन ओजस्वी बलवांश्चेत्यर्थः, बहुलाभिमानः बहुगर्वश्च । तं त्वाम् इन्द्रम् अवर्धन् वीर्यैश्वर्यादिभिः सदा वर्धयन्ति स्तुवन्तः सन्तः मरुतः चित् चार्थेऽत्र चिच्छब्दः । मरुतश्च विश्वे देवाश्च ऋषयश्चेत्यर्थः । अत्र अस्मिन् असुरैः सह सङ्ग्रामे त्रैलोक्ये वा । अथवा 'मरुतः' ( निघ ३,१८ ) इति ऋत्विङ्नाम, ऋत्विजश्च यजमानाश्च अत्र यज्ञे स्तुतिभिः हविर्भिश्च तं त्वामिन्द्रं सर्वप्रकारया स्तुत्या वर्धयन्तीत्यर्थः ॥ १ ॥

**वेङ्कट०** गौरिवीतिः । अजायथाः उद्गूर्णः बलाय शत्रूणां तादृग्बलं हर्तुं[5] स्तुत्यः [6]बलवत्तरः भूयिष्ठाभिमानः[6] । अवर्धयन् इन्द्रम् मरुतः अपि अस्मिन् काले, माता यदा[7] वीरम् इन्द्रम् अधारयत् अत्यन्तं धारयित्री ॥ १ ॥

द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इन्द्रम् ।
अभीवृतेव ता महापदेन ध्वान्तात् प्रपित्वादुदरन्त गर्भाः ॥ २ ॥

द्रुहः । निऽसत्ता । पृशनी । चित् । एवैः । पुरु । शंसेन । ववृधुः । ते । इन्द्रम् ।
अभिवृताऽइव । ता । महाऽपदेन । ध्वान्तात् । प्रऽपित्वात् । उत् । अरन्त । गर्भाः ॥ २ ॥

**उद्गीथ०** द्रुहः द्रोग्धारः देवानां जिघांसितारः असुराः[8] इन्द्रं योद्धुं सदा निषत्ता निषण्णा उपस्थिताः[9], [10]भवन्तीति शेषः[10] । पृशनी चित् पृशनी प्रकृतिः । चिच्छब्दोऽप्यर्थे । जगतः प्रकृतिरपि स्थितिपिपालयिषया[11] इन्द्रस्योपरि पक्षपातेन च कारणेन एवैः अवनैः नानारक्षणैः इन्द्रं रक्षितुं सदा निषत्ता निषण्णा उपस्थिता, [12]भवति इति शेषः[12] । किञ्च पुरु तृतीयार्थेऽत्र द्रष्टव्यः । पुरुणा शंसेन बह्व्या स्तुत्या, स्तुता इति शेषः, ववृधुः वर्धयन्ति [13]वीर्येण इन्द्रम् ते मरुतः सहर्षया[13] माहात्म्यमुच्यते । अभिवृता इव ता यथा अभिवृतानि परिवृतानि परिवेष्टितानि महापदेन महापृथिवीस्थानीयेन उपमानसामर्थ्याच्च उत्सृष्टेनान्धकूपेन[14] यान्युदकानि तानि यथा ध्वान्तात् तमोरूपात् तस्मात् अन्धकूपात्[15] प्रपित्वात्[16] प्राप्तात् खनित्रैः लब्धात्[17] खातादित्यर्थः, उद्गच्छन्ति, एवं महापदे महान्तरिक्षस्थाने मेघेन[18] परिवृतात्[19] परिवेष्टितात् ध्वान्तात् तमोरूपात्

१. यत् मूको. २. गर्भम् वि[1]. ३. धातृतया मूको. ४ च वि[2] अ ५ कर्तुं मूको. ६-६. त्रुटितम् वि[2] अ[1]. ७. सदा वि[2] अ[1]. ८. सुरा वि[2] अ. ९. उपरिस्थिता वि[2]. १०-१०. °न्ती-त्यर्थः वि[2] अ. ११. °तिविचाल° वि[2] अ. १२-१२. भवन्तीति मूको. १३-१३. °णेन्द्रं न सहर्षया वि[1]; °णेन्द्रेण सह ··· वि[2] अ. १४. °ष्टेनान्धःकूपेन मूको. १५. अन्धरूपात् मूको. १६. °पित्वां मूको. १७. लब्ध्वा मूको. १८. मोघेन मूको. १९. नास्ति वि[2] अ.

तस्मात् मेघात् प्रपित्वात् प्राप्तात् इन्द्रस्य वज्रेण लब्धात् उत् अरन्त उद्गच्छन्ति गर्भाः गर्भभूता आपः ॥ २ ॥

**वेङ्कट०** द्रोग्धुरिन्द्रस्य निषण्णाऽऽसीत् सेना मरुद्भिः सह । तदानीम् बहुना स्तोत्रेण अवर्धयन्[1] मरुतः इन्द्रम् [2]वृत्रं जिघांसन्तम्[2] । अथ व्रजेन महता परिवृतानि इव गवादीनि, महान्धकारभूतात्[3] वृत्राद् गर्भभूता अपः उत् अगच्छन्निति ॥ २ ॥

ऋष्वा ते पादा प्र यज्जिगास्यवर्धन् वाजा उत ये चिदत्र ।
त्वमिन्द्र सालावृकान्त्सहस्रमासन् दधिषे अश्विना ववृत्याः ॥ ३ ॥

ऋष्वा । ते । पादा । प्र । यत् । जिगासि । अवर्धन् । वाजाः । उत । ये । चित् । अत्र ।
त्वम् । इन्द्र । सालावृकान् । सहस्रम् । आसन् । दधिषे । अश्विना । आ । ववृत्याः ॥ ३ ॥

**उद्गीथ०** ऋष्वा ऋष्वौ महान्तौ ते तव इन्द्रस्य पादा पादौ यत् तृतीयाद्विवचनस्य लुक् । याभ्याम् प्र जिगासि प्रकर्षेण गच्छसि शत्रुवधाय । किञ्च अवर्धन् सदा वर्धयन्ति त्वाम् इन्द्रं वीर्येण शरीरेण प्रज्ञया च वाजाः उत बर्हिणान्यपि(?) । ये चित् येऽपि स्तोमाः अत्र अस्मिन् यज्ञे तेऽपि त्वामेवेन्द्रं सदा वर्धयन्ति । किञ्च त्वम् हे इन्द्र! सालावृकान् मर्कटाद्याकारान् अनेकरूपान् मायाविनः राक्षसान् सहस्रम् बहूनित्यर्थः, [4]आसन् आस्ये दधिषे धारयसि । तथा अश्विना अश्विनावपि आ ववृत्याः आवर्तयेः[4] ॥ ३ ॥

**वेङ्कट०** महान्तौ ते पादौ । प्र गच्छसि यदा, तदानीं त्वाम् अवर्धयन् ऋभवः, उत ये हि अत्र देवाः । स त्वम् इन्द्र! सहस्रम् सालावृकान् आस्ये करोषि । स त्वम् इदानीम् अश्विनौ च तव सहायाय आ वर्तयेः इति ॥ ३ ॥

समना तूर्णिरुप यासि यज्ञमा नासत्या सख्याय वक्षि ।
वसाव्यामिन्द्र धारयः सहस्राश्विना शूर ददतुर्मघानि ॥ ४ ॥

समना । तूर्णिः । उप । यासि । यज्ञम् । आ । नासत्या । सख्याय । वक्षि ।
वसाव्याम् । इन्द्र । धारयः । सहस्रा । अश्विना । शूर । ददतुः । मघानि ॥ ४ ॥

**उद्गीथ०** समना समानया तुल्यया भवद्गुणानुरूपया, स्तुत्या स्तूयमान इति शेषः, तूर्णिः क्षिप्रम् उप यासि उपगच्छसि यज्ञम् । उपगच्छंश्च नासत्या अश्विनौ सख्याय सखिभावाय सखिकर्मणे वा यज्ञम् प्रति सहगमनलक्षणाय यज्ञाङ्गभावलक्षणाय[5] वा आ वक्षि आवहसि[6] । किञ्च वसाव्याम् वसुसमूहं धनसंघातं हे इन्द्र! धारयः रथे धारयसि यजमानाय दातुम् ।

---

१. वर्धय° वि[2] अ[1]. २-२. नास्ति वि[1]. ३. भूता वि[2] अ[1]. ४-४. मूको. नास्ति । पूर्तिः सायणानुसारिणी द्र. ५. नास्ति वि[1]. ६. आवहन् मूको.

किञ्च हे शूर! तव सखायौ अश्विनौ च यज्ञमुपगम्य यजमानाय ददतुः दत्तवन्तौ सहस्रा सहस्राणि [1]बहूनि मघानि धनानि[1] ॥ ४ ॥

वेङ्कट० सङ्ग्रामे त्वरमाणः उप गच्छसि यज्ञम्। आ वह च नासत्यौ सख्याय। वसुसमूहं[2] च[3] बहुसङ्ख्यम्[4] अस्मासु धेहि। अश्विनौ च तवानुचरौ शूर![5] प्रयच्छतः धनानि ॥ ४ ॥

मन्दमान ऋतादधि प्रजायै सखिभिरिन्द्र इषिरेभिरर्थम्।
आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत् तमांसि ॥ ५ ॥

मन्दमानः। ऋतात्। अधि। प्रऽजायै। सखिऽभिः। इन्द्रः। इषिरेभिः। अर्थम्।
आ। आभिः। हि। मायाः। उप। दस्युम्। आ। अगात्। मिहः। प्र। तम्राः। अवपत्। तमांसि ॥

उद्गीथ० मन्दमानः स्तूयमानः इन्द्रः[6] ऋतात् अधि ऋतादिति षष्ठ्यर्थे पञ्चमी। यज्ञस्योपरि यज्ञ इत्यर्थः। प्रजायै प्रजार्थम् अर्थम्[7] वृष्टिलक्षणम् इषिरेभिः एषितृभिः प्रार्थयितृभिः सखिभिः समानख्यानैः[8] स्तोतृभिः प्रजास्थित्यर्थं[9] वृष्टिं प्रार्थयमानैः स्तोतृभिः यज्ञे स्तूयमान इन्द्र इत्येतदुक्तं भवति साकाङ्क्षत्वाद् वाक्यस्य। ततः किम्। उच्यते—आ आभिः आकारः अवपत् इत्यनेन सह सम्बन्धयितव्यः। हि इति पदपूरणः। मायाः इति तृतीयार्थे प्रथमा। आभिः एताभिः मायाभिः दस्युम् उपक्षपयितव्यं मेघम् उप आ अगात् उपागतवान्। स्वाभिः प्रज्ञाभिः विशिष्टाभिः युक्तः सन् उपक्षपयितव्यस्य मेघस्य समीपम् आभिमुख्येन गतवान् हन्तुम्। एवमर्थं गत्वा च तं मेघं हत्वा मिहः 'मिह सेचने'। पृथिवीसेक्त्रीः वृष्टिलक्षणा अपः तम्राः 'तमु काङ्क्षायाम्'[7]। अभिकाङ्क्षिताः स्तोतृभिः प्रजास्थित्यर्थं प्रार्थिता इत्यर्थः, प्र अवपत् प्रकर्षेण मर्यादया उप्तवान् [10]भूमौ प्रक्षिप्तवान्[10] तमांसि क्षुत्पिपासाजनितानि प्रजानां मूर्च्छामरणलक्षणानि अन्धकाराणि, अपनेतुमिति शेषः ॥ ५ ॥

वेङ्कट० माद्यन् यज्ञात् प्रजायै यजमानाय मरुद्भिः [11]इन्द्रः गमनशीलैः[11] अर्थम् प्रयच्छति[12]। सः आभिः प्रज्ञाभिः दस्योः मायाः उप आ अगच्छत् तम् दस्युम् निर्मायं कर्तुम्[1]। स दस्युर्वृष्टीः प्र अवपत् ग्लापयित्रीः, तमांसि च। तास्तस्य मायाः ॥ ५ ॥

[13]इति अष्टमाष्टके तृतीयाध्याये तृतीयो वर्गः[13] ॥

सनामाना चिद् ध्वसयो न्यस्मा अवाहन्निन्द्र उषसो यथानः।
ऋष्वैरगच्छः सखिभिर्निकामैः साकं प्रतिष्ठा हृद्या जघन्थ ॥ ६ ॥

सऽनामाना। चित्। ध्वसयः। नि। अस्मै। अव। अहन्। इन्द्रः। उषसः। यथा। अनः।
ऋष्वैः। अगच्छः। सखिऽभिः। निऽकामैः। साकम्। प्रतिऽस्था। हृद्या। जघन्थ ॥ ६ ॥

---

१-१. बहुधनानि मूको. २. च सुस° वि[2] अ[1]. ३. चेति अ[1]. ४. °सख्यं वि[2] अ[1]. ५. शूरौ वि[2] अ[1]. ६. °न्द्रस्त्वम् मूको. ७. नास्ति मूको. ८. सख्यमानैः मूको. ९. प्रजास्थित्यर्थः मूको. १०-१०. नास्ति वि[1]. ११-११. इन्द्रगमनशीलम् वि[2] अ[1]. १२. °च्छसि मूको. १३-१३. नास्ति मूको.

**उद्गीथ०** सनामाना चित् समाननामानौ अश्विनौ अपि, किमुत अन्यं देवमित्यर्थः । [1]सर्वान् ध्वसयः[1] नि अस्मै नियमेन ध्वसयसि गमयसि प्रेषयसीत्यर्थः, अस्य स्तोतृजनस्य शत्रुजनस्य उपकर्तुम् अपकर्तुं वेति शेषः । किञ्च अवस्थित इति शेषः, अहन् हतवान् भवान् इन्द्रः अनः शकटसदृशं मेघमित्यर्थः । किमिव । उषसः यथा[2] यथा माध्यमिका ( तु. या ११,४७; १२,५ ) वाचो मेघमात्मनोऽधस्तात् स्थितं[3] प्रजानामुपकर्तुं घ्नन्ति, एवम् । [4]किञ्च ऋष्वैः सखिभिः मरुदादिभिः निकामैः प्रभूतैः साकम् सह अगच्छः गच्छसि शत्रुवधाय । गत्वा च प्रतिष्ठा प्रतिष्ठानानि युद्धाय प्रत्यवस्थातॄणि हृद्या हृद्यानि हृदयस्य प्रियाणि रूपवीर्यशौर्यादिगुणयुक्तानि च शत्रुबलानि जघन्थ सदा हंसि[4] ॥ ६ ॥

**वेङ्कट०** अमुं वृत्रं हन्तुम् इन्द्रः[5] सनामानौ अश्विनौ[6] नि अगमयत् । अथ तम् अव अहन्, यथा उषसः शकटम् अवाहन् । दर्शनीयैः सखिभिः अगच्छः नितरां कमनीयैः साकम् । आगत्य[2] च वृत्रस्य प्रतिष्ठानानि पुराणि हृद्यानि जघन्थ ॥ ६ ॥

त्वं जघन्थ नमुचिं मखस्युं दासं कृण्वान ऋषये विमायम् ।
त्वं चकर्थ मनवे स्योनान् पथो देवत्राञ्जसेव यानान् ॥ ७ ॥

त्वम् । जघन्थ । नमुचिम् । मखस्युम् । दासम् । कृण्वानः । ऋषये । विऽमायम् ।
त्वम् । चकर्थ । मनवे । स्योनान् । पथः । देवऽत्रा । अञ्जसाऽइव । यानान् ॥ ७ ॥

**उद्गीथ०** [7]हे इन्द्र ! त्वम् जघन्थ[7] [8]हतवानसि नमुचिम् नामासुरम् मखस्युम्[8] मखं यज्ञं महान्तं वा अर्थम्[2] इच्छन्तम् दासम् उपक्षपयितव्यमप्यसुरम् कृण्वानः हिंसन् विमायम् विविधवञ्चनाप्रज्ञम् । किमर्थम् हतवानसि । ऋषये ऋष्यर्थम् ऋष्यादिप्रजासंरक्षणार्थमित्यर्थः । त्वम् चकर्थ कृतवानसि मनवे मनुनाम्नो राज्ञोऽर्थाय स्योनान् सुखान् सुखगमनानित्यर्थः, पथः स्वर्गमार्गान् देवत्रा देवान् प्रति, गन्तुमिति शेषः । किमिव । अञ्जसा इव यानान् यथा कश्चिद् देशज्ञः अदेशज्ञस्यार्थाय अञ्जसा ऋजून्[8] प्रगुणान् यानान् ग्रामनगरादेः मार्गानुपदिष्टान्[9] करोति, एवम् ॥७॥

**वेङ्कट०** त्वम् जघन्थ नमुचिम् नाम त्वदीयं धनमिच्छन्तम् असुरम् कुर्वन् ऋषये विगतमायम् । त्वम् कृतवानसि मनवे सुखतरान् मार्गान् देवेषु अञ्जसा इव गच्छतः[10] ॥ ७ ॥

त्वमेतानि पप्रिषे वि नामेशान इन्द्र दधिषे गभस्तौ ।
अनु त्वा देवाः शवसा मदन्त्युपरिबुध्नान् वनिनश्चकर्थ ॥ ८ ॥

त्वम् । एतानि । पप्रिषे । वि । नाम । ईशानः । इन्द्र । दधिषे । गभस्तौ ।
अनु । त्वा । देवाः । शवसा । मदन्ति । उपरिऽबुध्नान् । वनिनः । चकर्थ ॥ ८ ॥

---

१ १. सध्वसयः वि[1]; सध्वसयः वि[2] अ. २. नास्ति मूको. ३. स्थिरं वि[2] अ. ४-४. नास्ति वि[2] अ. ५. हन्तुं वि[1]. ६. समानौ अ° वि[2] अ[1]. ७-७. नास्ति मूको. ८. ऋञ्जन् मूको. ९. °पदेशान् मूको. १०. गच्छति वि[1]; गच्छत वि[2] अ[1].

**उद्गीथ०** त्वम् एतानि पप्रिषे पालयसि वि नाम विविधानि नामानि नमयन्ति भूतानीत्यर्थः। किञ्च यस्त्वम् ईशानः सर्वस्य जगतः स्वामी, स त्वं हे इन्द्र! दधिषे धारयसि। किम्। सामर्थ्याद् वज्रम्। गभस्तौ हस्ते। किञ्च त्वा त्वामिन्द्रम् अनु मदन्ति सोमेन तृप्यन्तम् अनु तृप्यन्ति देवाः मरुदादयः। केन निमित्तेन तृप्यन्ति। शवसा निमित्तेन शत्रुबलाय योग्यबलार्थमित्यर्थः[१]। किञ्च उपरिबुध्नान् ऊर्ध्वबुध्नान् स्वर्गे निबद्धान् अवस्थितान् देवान् इत्यर्थः, वनिनः वनितॄन् सतः सम्भक्तॄन् संसेवितॄन् चकर्थ कृतवानसि निर्गत एव ॥ ८ ॥

**वेङ्कट०** त्वम् एतानि उदकानि वि पूरयसि। ईश्वरस्त्वम् इन्द्र! करोषि धनं हस्ते। देवाः[२] त्वाम् शवसा[२] अनु-ष्टुवन्ति। स त्वम् उदकवतो रश्मीन् उपरिबुध्नान् चकर्थ इति ॥ ८ ॥

चक्रं यद॑स्याप्स्वा निष॑त्तमुतो तद॑स्मै मध्विच्च॑च्छद्यात्।
पृथि॒व्यामति॑षितं यदूधः पयो गोष्वद॑धा ओष॑धीषु ॥ ९ ॥

चक्रम्। यत्। अस्य। अप्ऽसु। आ। निऽस॑त्तम्। उतो इति॑। तत्। अस्मै। मधु॑। इत्। चच्छद्यात्।
पृथिव्याम्। अति॑ऽसितम्। यत्। ऊध॑ः। पय॑ः। गोषु॑। अद॑धाः। ओष॑धीषु ॥ ९ ॥

**उद्गीथ०** अस्य तवेन्द्रस्य यत् चक्रम् चक्राद्यायुधम् इत्यर्थः, अप्सु लब्धव्यत्वेन निमित्तभूतासु आ निषत्तम् उतो मर्यादया [३]मेघे निषण्णमपि[३] अनुप्रविष्टं चेत्यर्थः, तत् चक्राद्यायुधम् अस्मै तुभ्यमिन्द्राय मधु उदकं मेघोदरगतम् इत् चच्छद्यात् इदित्येवार्थे। चच्छद्यादिति कान्तिकर्मा। कामयत एव, दातुमिति शेषः। तवायुधचेष्टितं निष्फलं न भवति। तदन्तर्गतमुदकम् अवश्यं[४] तुभ्यं ददाति तवायुधम् इत्यर्थः। दत्तं च सत् तदुदकं त्वम् पृथिव्याम् अदधाः दधासि। पर्यायेण ओषधीषु ओषध्यादिस्थावरेषु च दधासि। यत् च अतिषितम् अतिशुद्धम् पयः पयोरूपम् उदकम् [५]ऊधः, प्रतीति शेषः, ऊधःप्रदेश इत्यर्थः[५], गोषु धारयसि त्वम् ॥ ९ ॥

**वेङ्कट०** आयुधम् [६]यत् अस्य[६] इन्द्रस्य[७] अन्तरिक्षे[८] निषण्णम् अपि तत् आयुधम् अस्मै इन्द्राय मधु उदकं वशं नयति। पृथिव्याम् अभिलषितं विमुक्तम् यत् ऊधसो मेघात्, तदुदकम् गोषु ओषधिषु च अदधाः इति ॥ ९ ॥

अश्वा॑दियायेति यद्वदन्त्योज॑सो जातमुत म॑न्य एनम्।
मन्योरि॑याय हर्म्ये॑षु तस्थौ यत॑ः प्रजज्ञ इन्द्रो॑ अस्य वेद ॥ १० ॥

अश्वा॑त्। इयाय। इति॑। यत्। वद॑न्ति। [९]ओज॑सः। जातम्। उत। मन्ये। एनम्[९]।
मन्योः। इयाय। हर्म्ये॑षु। तस्थौ। यत॑ः। प्रऽजज्ञे। इन्द्र॑ः। अस्य। वेद ॥ १० ॥

**उद्गीथ०** अश्वादियायेति यद् वदन्तीत्यादि कारणधर्माणां कार्ये दर्शनाद् अश्व-बल-क्रोधादिभ्यः

१. योग्यं बला° मूको. २. नास्ति मूको. ३-३. मेघेनिष° मूको. ४. अपश्यन् मूको.
५-५. ऊधः प्रदेशेष्वित्यर्थः वि[२] अ. ६-६. नास्ति वि[२] अ[१]. ७. नास्ति वि[१]. ८. नास्ति वि[२] अ[१].
९-९ निगमोऽयं या (८,२) द्र.

तद्धर्मोपेतत्वाद् इन्द्रो जात इति। अत इन्द्रस्य गुणानाम् आनन्त्याद् अमुतो [1]जात इत्यवधारयितुम्[1] अशक्यत्वाद्[2] यतः कुतश्चित् जात इति। स एव इन्द्रोऽस्य स्वस्य जन्मनस्तत्त्वं जानाति नान्य इत्यादीति समस्तार्थः। अश्वस्य धर्मो वेगवत्ता। तामिन्द्रे दृष्ट्वा वेगवतः अश्वात् अयम् इन्द्रः [3]इयाय एतिः[3] अत्र शुद्धोपि उत्पूर्वार्थो[4] द्रष्टव्यः। उदियाय उद्गत उत्पन्नो जात इति एवम् यद् वदन्ति यदिति छान्दसत्वात् 'सुपां सुलुक्' ( पा ७, १,३९ ) इति अमो लोपः, लिङ्गस्य व्यत्ययो वा। यमिन्द्रं वदन्ति दर्शयन्ति तत्त्वदर्शिनो मुनयः, तमिन्द्रम् ओजसः जातम् उत बलादप्युत्पन्नम् अहम् मन्ये वितर्कयामि महतो बलराशेरप्यस्मिन्निन्द्रे दर्शनात्। मन्योः वा शत्रुविषयात् क्रोधात् उद्गत उत्पन्नो जात इत्येवं शत्रुविषयस्य महतः क्रोधस्यापि तत्र इन्द्रे दर्शनात्। हर्म्येषु च यज्ञगृहेषु कर्माङ्गत्वेन नित्यम् तस्थौ निर्भयः तिष्ठति। शत्रुगृहेषु हत्वा नित्यं निर्भयः तिष्ठति। त्रिभुवनगृहेषु वा स्वामित्वेन तिष्ठति। अनयोपपत्त्या ततो वा जात इन्द्रः। किं बहुना। इन्द्रस्य जन्मनः कारणत्वेन सर्वगुणोपेतत्वात् सर्वस्माज्जात इत्युपपत्तिमाश्रित्योक्तम्—यतः कुतश्चित् कारणात् प्रजज्ञे प्रकर्षेण तत्त्वतो जातः इन्द्रः, स[5] एव अस्य स्वस्य जन्मनः [6]कारणम् एवम्[6] तत्त्वतो जानाति, नान्यः। अयमत्र वाक्यार्थः ॥ १० ॥

वेङ्कट० इन्द्रस्य गुणान् दृष्ट्वा केचित् एतम् अश्वात जातम् वदन्ति। तमेवाहम् ओजसः जातम् मन्ये। अथवा पुनरयं क्रोधात् इयाय, युद्धेषु च तिष्ठति। सोऽयम् इन्द्रः अश्वादोजसः मन्योः अन्यस्मात् वा उपादानात् यतः जातः स्वयमेव तद् जानाति ॥ १० ॥

वयः॑ सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः ।
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒॑स्मान् नि॒धये॑व ब॒द्धान् ॥ ११ ॥

वयः॑ । सु॒ऽप॒र्णाः । उप॑ । से॒दुः॒ । इन्द्र॑म् । प्रि॒यऽमे॑धाः । ऋष॑यः । नाध॑मानाः ।
अप॑ । ध्वा॒न्तम् । ऊ॒र्णु॒हि । पू॒र्धि । चक्षुः॑ । मु॒मु॒ग्धि । अ॒स्मान् । नि॒धया॑ऽइव । ब॒द्धान् ॥ ११ ॥[7]

उद्गीथ० वयः[8] पक्षिसदृशाः[9] निरालम्बने अन्तरिक्षे सदा गन्तारो वा सुपर्णाः सुपतनाः [10]शोभनगमनाः आदित्या इत्यर्थः[10], उप सेदुः उपसीदन्ति उपगच्छन्ति इन्द्रम् प्रियमेधाः प्रिययज्ञाः ऋषयः सर्वार्थानां द्रष्टारः लोकपालत्वात् कृताकृतस्य प्रत्यवेक्षितारः नाधमानाः याचमानाः। किम्। उच्यते—अप ऊर्णुहि अपच्छादय अपवारय वा रज्जुरूपो भूत्वा अस्मान् व्याकर्षन्[11] हेतुकर्तृत्वेन अपनयेत्यर्थः। किम्। ध्वान्तम् तमः रात्रिकृतम्। तमोऽपनयनद्वारेण च यदेतल्लोकस्य चक्षुः असम्पूर्णं बाह्येन ज्योतिषा अनुगृहीतत्वाद् घटपटादिवस्तुदर्शनायासमर्थं तमसा हृतमिव[12] तत्[9] पूर्धि पूरय[13] देहीत्यर्थः। तदर्थम् मुमुग्धि मुञ्च अस्मान् उद्गमनाय प्रेरयेत्यर्थः। किमिव। निधया इव बद्धान् यथा निधया पाश्यया[14] पाशसमूहेन बद्धान् पक्षिणः कश्चित् उद्गमनाय मुञ्चति, एवम्। वायोश्च त्वदधीनत्वात्। अथवा अभेदवचनाद् 'वायुर्वेन्द्रो वान्तरिक्षस्थानः' ( या ७,५ ) इति वायुरूप

---

१-१. जात्यवधा° मूको. २. °क्यत्वा मूको. ३-३. इत्यायेति मूको. ४. °र्वार्थे वि[2] अ. ५. अत वि[1]. ६-६. °ण एवेदं वि[1] अ. ७. या. ( ४,३ ) व्याख्यानं द्र. ८ अथवा वयः मूको. ९. नास्ति मूको. १०-१०. °ना इत्यर्थः वि[2] अ. ११. व्यक° मूको. १२. हत° अ. १३. °यन् वि[2] अ. १४. °श्या मूको.

एव त्वम् । अथवा सर्वैश्वर्यत्वात् तव इन्द्रस्य सर्वात्मभाविनः वायुना रज्जुभूतेन सवितुर्मण्डलं सदा आकृष्यत इति । जगद्धेतोः लोकानुग्रहार्थं वायुरज्जुभिः आकर्षेत्यर्थः ॥ ११ ॥

वेङ्कट० पक्षिणः सुपतनाः उप सेदुः इन्द्रम् प्रिययज्ञाः ऋषयः याचमानाः मेधाम् । अप ऊर्णुहि अन्धकारम्, पूरय च तेजः, मुमुग्धि च अस्मान् तन्तिना इव अज्ञानेन 'बद्धान् इति' ॥ ११ ॥

[1]इति अष्टमाष्टके तृतीयाध्याये चतुर्थो वर्गः[1] ॥

## [ ७४ ]

[2]गौरिवीतिः शाक्त्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[2] ।

वसूनां वा चर्कृष इयक्षन् धिया वा यज्ञैर्वा रोदस्योः ।
अर्वन्तो वा ये रयिमन्तः सातौ वनुं वा ये सुश्रुणं सुश्रुतो धुः ॥ १ ॥

वसूनाम् । वा । चर्कृषे । इयक्षन् । धिया । वा । यज्ञैः । वा । रोदस्योः ।
अर्वन्तः । वा । ये । रयिऽमन्तः । सातौ । वनुम् । वा । ये । सुऽश्रुणम् । सुऽश्रुतः । धुरिति धुः ॥

उद्गीथ० उत्तरं सूक्तम् 'वसूनां वा' इति षडृचम् ऐन्द्रं शाक्त्यो गौरिवीतिर्ददर्श।

अत्रेतिहासमाचक्षते ब्राह्मणपरिपठितं[3] ( तु. ऐब्रा ३, २१-२२ ) विद्वांसः — इन्द्रः किमिव निष्केवल्यं शस्त्रम् असाधारणं ममास्तु इत्यब्रवीत् देवान्[4] । ते तमूचुः — अस्माकमपि अत्र[5] भागोऽस्तु इति । स तं भागं नानुज्ञातवान् । तत्रैवं सति ते देवा इन्द्रस्य भार्यां प्रियां प्रासहं नामाब्रुवन्[6] — अस्माकं भागे[7] निष्केवल्ये भावयेन्द्रमिति । साऽब्रवीत् — रात्राविन्द्रमुक्त्वा प्रातर्वः प्रतिवक्ष्यामीति । सा त्वेवं प्रतिज्ञाय सूक्तस्याद्याभिः[8] ऋग्भिः पञ्चभिः इन्द्रं रात्रावुक्त्वा अन्त्यया देवान् प्रातः प्रत्युवाचेति । वसूनाम् वा वाशब्दोऽत्र चार्थे । वसूनां च, चशब्दश्रुतिसामर्थ्यात्, अन्येषां च देवानामिति शेषः, चर्कृषे अत्यर्थं सदा करोषि त्वम् । किम् । सामर्थ्यात्, स्तुतिभागं हविर्भागं वेति शेषः । इयक्षन् यष्टुमिच्छन् देवान् पूजयितुमिच्छन् । केन । धिया वा धीः प्रज्ञा । तज्जन्यत्वाद् अत्र तच्छब्देन स्तुतिरुच्यते, 'इमां ते धियं प्रभरे महो महीम्' ( ऋ १,१०२,१ ) इति यथा । स्तुत्या च यज्ञैः वा यज्ञैश्च रोदस्योः द्यावापृथिव्योर्मध्ये, तव भृत्यत्वेन वर्तमानानामिति शेषः। ये वस्वादयो देवाः अर्वन्तः वा अरणवन्तश्च[9] अनुगमनाः रयिमन्तः च धनवन्त ईश्वरा इत्यर्थः, सातौ यजमानानाम् ईप्सितार्थप्रदाने[10] च, प्रवृत्ता[11] इति शेषः, वनुम् वा वननीयं वा वस्वादयः सुश्रुणम् सुष्ठु श्रवणीयम् सुश्रुतः सुष्ठु च श्रोतारः धुः धारयन्ति, स्वकर्णेषु शृण्वन्तीत्यर्थः । तेषां वस्वादिदेवानां स्तुतिभागं हविर्भागं च सदा त्वं करोषीति सम्बन्धः कार्यः ॥ १ ॥

वेङ्कट० धनान्युद्दिश्य वा आकृष्यते वसूनि दातुमिच्छन् कर्मार्थम् वा । युद्धादिकं कर्म । यज्ञार्थम् वा

१-१. नास्ति वि[2] अ[1]; बबद्धानिति वि[1]. २-२. नास्ति मूको. ३. °णपठि° वि[1]. ४ देवाः वि[1]; एवा वि[2] अ. ५. नास्ति मूको. ६. नाम ब्रवन् मूको. ७. भोगे मूको. ८. सूक्तस्य यस्य (यत वि[2] अ) सूक्त° मूको. ९. अणु° वि[2] अ; अण° वि[1]. १०. °नेन मूको. ११ °त्त वि[2] अ.

दिवि च पृथिव्यां च देवमनुष्यैः। गच्छन्तः वा ये धनवन्तो भवन्ति, युद्धे हिंसाम् वा ये सुश्रवणां [1]प्रसिद्धां सुश्रवसः[1] कुर्वन्ति, तैश्चाकृष्यत इति ॥ १ ॥

हवं एषामसुरो नक्षत द्यां श्रवस्यता मनसा निंसत क्षाम् ।
चक्षाणा यत्र सुविताय देवा द्यौर्न वारेभिः कृणवन्त स्वैः ॥ २ ॥

हवः । एषाम् । असुरः । नक्षत । द्याम् । श्रवस्यता । मनसा । निंसत । क्षाम् ।
चक्षाणाः । यत्र । सुविताय । देवाः । द्यौः । न । वारेभिः । कृणवन्त । स्वैः ॥ २ ॥

उद्गीथ० हवः शब्दः त्वच्छत्रुभिः सह युद्धकाले हाल्कारः हनहनादिघोष[2] इत्यर्थः, एषाम् देवानां स्वभूतः। कीदृशः हवः। असुरः प्राणवान् महानित्यर्थः। नक्षत व्याप्नोति द्याम् दिवम्। किञ्च श्रवस्यता श्रवोऽन्नं हविराख्यं यशो वा स्तुतिलक्षणम् इच्छता मनसा, युक्ता इति शेषः, निंसत 'निसि चुम्बने'। चुम्बन्ति उपजीवन्ति देवाः क्षाम्[3] क्ष्माम् पृथिवीम्। उक्तं च श्रुतौ— 'इतःप्रदानं देवा उप जीवन्ति ××× अमुतःप्रदानं मनुष्याः' (तै ३,२,९,७) इति। कदा। उच्यते— यत्र यस्मिन् देवासुरसङ्ग्रामकाले[4] चक्षाणाः असुरान् हन्तव्यत्वेन पश्यन्तः देवाः सुविताय तव इन्द्रस्य सुविताय सुगताय निर्व्यासङ्गेन त्रैलोक्याधिपत्यप्राप्तये इत्यर्थः, द्यौः न द्यौरिव यथा द्यौः वरणीया, एवम् वारेभिः वरणीयैः स्वैः आत्मीयैः सामर्थ्याद् बलैः शारीरैः सेनालक्षणैश्च कृणवन्त हिंसन्ति तवेन्द्रस्य शत्रून्। तदा हव एषाम् असुरः नक्षत द्यां श्रवस्यता मनसा [5]निंसत क्षाम्[5] इति योज्यम् ॥ २ ॥

वेङ्कट० आह्वानशब्दः एषाम् इन्द्रस्य प्रेरकः द्युलोके नक्षत। अथ अन्नमिच्छता मनसा प्राप्तवन्तः पृथिवीम्[6] अङ्गिरसः। यत्र पणिभिर्गाः[7] निहिताः पश्यन्तः देवाः आत्मनोऽभ्युदयार्थम् आदित्य इव स्वैः वरणीयैस्तेजोभिः प्रकाशम् अकुर्वन्। गवां प्रदानाय अन्धकारम् अपनेतुमिति ॥ २ ॥

इयमेषाममृतानां गीः सर्वताता ये कृपणन्त रत्नम् ।
धियं च यज्ञं च साधन्तस्ते नो धान्तु वसव्य१मसामि ॥३॥

इयम् । एषाम् । अमृतानाम् । गीः । सर्वऽताता । ये । कृपणन्त । रत्नम् ।
धियम् । च । यज्ञम् । च । साधन्तः । ते । नः । धान्तु । वसव्यम् । असामि ॥ ३ ॥

उद्गीथ० एवमवस्थिते सति यथोक्ते वस्तुनि त्वत्कार्यप्रवृत्तानाम्[8] एषाम् अमृतानाम् देवानाम् अर्थाय इयम् विराट्छन्दोयुक्तयाज्यालक्षणा ब्राह्मणेन प्रदर्शिता[9] गीः स्तुतिः निष्केवल्यशस्त्रमध्यगता[10], दीयतां त्वया भाग इति शेषः, सर्वताता सर्वतातौ सङ्ग्रामकाले सर्वशत्रुसमूहे ये देवाः कृपणन्त स्तुवन्ति रत्नम् रमणीयं भवन्तमिन्द्रं नीलादिरत्नसदृशं वा। धियम् च यज्ञम् च साधन्तः

---

१-१. 'सिद्धश्रव वि[1]; 'द्धां सुश्रदसं वि[2] अ[1]. २. हननादि° वि[1]. ३. नास्ति मूको. ४. °मे काले मूको. ५-५. निंतक्षकाम् वि[2] अ; निंक्षतां वि[1]. ६. पितरः वि[1]. ७. वणिग्भिः मूको. ८. °र्थप्रयुक्तानाम् वि[2] अ. ९. प्राशिता वि[2] अ; प्रकाशिता वि[1]. १०. °मध्यगता मूको.

अङ्गभावापत्त्या निष्पादयन्तः ते अपि देवाः नः अस्मभ्यम् धान्तु वसव्यम् निष्केवल्यशस्त्रादिस्तुतिधनसमूहम्[1] असामि ॥ ३ ॥

वेङ्कट० इयम् एषाम् देवानाम् गीः यज्ञे ये प्रयच्छन्ति धनम् अपि वा याच्यन्ते। कर्म लौकिकम् यज्ञम् च साधयन्तः ते अस्मभ्यम् प्रयच्छन्तु [2]वसुसमूहम् असाधारणम्[2] ॥ ३ ॥

आ तत् त॑ इन्द्रायव॑ः पनन्ताभि य ऊ॒र्वं गोम॑न्तं॒ तितृ॑त्सान् ।
स॒कृत्स्वं१॒ ये पु॑रुपु॒त्रां म॒हीं स॒हस्र॑धारां बृह॒तीं दुदु॑क्षन् ॥ ४ ॥

आ । तत् । ते॒ । इ॒न्द्र॒ । आ॒यव॑ः । प॒न॒न्त॒ । अ॒भि । ये । ऊ॒र्वम् । गोऽम॑न्तम् । तितृ॑त्सान् ।
स॒कृत्ऽस्व॑म् । ये । पु॒रु॒ऽपु॒त्राम् । म॒हीम् । स॒हस्र॑ऽधाराम् । बृ॒ह॒तीम् । दुधु॑क्षन् ॥ ४ ॥

उद्गीथ० हे इन्द्र! तत् ते तव, स्वभूतम् इति शेषः, आयवः आयवो मनुष्याकारा देवाः आ पनन्त आभिमुख्येन मर्यादया वा स्तुवन्ति, ये देवाः ऊर्वम् मेघसङ्घातम् गोमन्तम् उदकवन्तम् अभि तितृत्सान् अभिहिंसन्ति त्वदादेशेन सर्वदा घ्नन्ति, किञ्च सकृत्स्वम् सदा कामानां प्रसवित्रीं त्रैलोक्यधेनुम् ये देवाः पुरुपुत्राम् बहुप्रजाम् महीम् महतीम् सहस्रधाराम् बहुभोगक्षीरधाराम् बृहतीम् महतीं नित्याम् अनपायिनीमित्यर्थः, दुदुक्षन् दुधुक्षन् [3]त्वदर्थं सर्वकामक्षीरं[3] दुहन्ति त्वच्छत्रुजयद्वारेणेत्यर्थः ॥ ४ ॥

वेङ्कट० आ पनन्त तव इन्द्र! आयवः मनुष्या अङ्गिरसः, ये गोमन्तम् सङ्घम् ऐच्छन् अभितर्दितुम् असुरैरपहृतमिति[4]। तत् इति तत्रस्थम् असुरवधं[5] निर्दिशति। सकृत्प्रजाताम् ये बहुपुत्राम्। ओषधिवनस्पतयो बहवः पुत्राः। सहस्रधाराम् बहूनां कामानां उत्पादयित्रीं विस्तृतां महतीम् दिवम् दुदुक्षन्। 'सकृद्ध द्यौरजायत' (ऋ ६,४८,२२) इत्युक्तम् ॥ ४ ॥

शची॑व॒ इन्द्र॒मव॑से कृणुध्व॒मना॑नतं द॒मय॑न्तं पृत॒न्यून् ।
ऋ॒भु॒क्षणं॑ म॒घवा॑नं सुवृ॒क्तिं भ॒र्ता यो वज्रं॒ नर्यं॑ पुरु॒क्षुः ॥ ५ ॥

शची॑ऽवः । इन्द्र॑म् । अव॑से । कृ॒णु॒ध्व॒म् । अना॑नतम् । द॒मय॑न्तम् । पृ॒त॒न्यून् ।
ऋ॒भु॒क्षण॑म् । म॒घऽवा॑नम् । सु॒ऽवृ॒क्तिम् । भर्ता॑ । यः । वज्र॑म् । नर्य॑म् । पु॒रु॒ऽक्षुः ॥ ५ ॥

उद्गीथ० शचीवः इति व्यत्ययेनेदमेकवचनं बहुवचनस्य स्थाने। हे शचीवन्तः! प्रज्ञावन्तः! शत्रुवधादिस्वाधिकारयुक्तकर्मवन्तो देवाः! इन्द्रम् अवसे रक्षणाय [6]'निष्केवल्यस्य शस्त्रस्य' असाधारणीकरणेन[7] त्रैलोक्यपालनार्थमित्यर्थः, कृणुध्वम् कुरुत यूयम्। कीदृशम्। अनानतम् शत्रून् प्रति अप्रणतम् दमयन्तम् उपशमयन्तम् पृतन्यून् पृतनां सङ्ग्रामं कर्तुमिच्छतः शत्रून् ऋभुक्षणम् महान्तम् मघवानम् धनवन्तम् सुवृक्तिम् सुष्ठु दोषैर्वर्जितस्तुतिकम्, भर्ता

१. °वल्यं शस्त्रादि° मूको. २-२. °हसाधा° वि'. ३-३. °र्थसर्व° मूको. ४. °हतमिति वि[2] अ[1]. ५. 'सुरं वि[1]. ६-६. °ल्यविदारह्रितस्य वि[1]; °ल्यविरारह्रितस्य° वि[2] अ. ७. °धारणक° मूको.

धारयिता च यः इन्द्रः वज्रम्। कीदृशम्। नर्यम् नृभ्यो हितम्। पुरुक्षुः बहुनिवासश्च बहुनीतिर्वा। तमिन्द्रम् अवसे कृणुध्वम् इति योज्यम् ॥ ५ ॥

**वेङ्कट०** प्रज्ञावन्तो यूयम् इन्द्रम् रक्षणाय कृणुध्वम्, यो न अन्यम् आनमति दमयति च पृतनाकामान्, महान्तम् धनवन्तम् सुष्टुतिम्, बिभर्ति यः वज्रम् नृहितम्[1] बहुशब्दः[2] ॥ ५ ॥

यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः ।
अचेति प्रासहस्पतिस्तुविष्मान् यदीमुश्मसि कर्तवे करत् तत् ॥ ६ ॥

यत् । ववान । पुरुऽतमम् । पुराषाट् । आ । वृत्रऽहा । इन्द्रः । नामानि । अप्राः ।
अचेति । प्रऽसहः । पतिः । तुविष्मान् । यत् । ईम् । उश्मसि । कर्तवे । करत् । तत् ॥ ६ ॥

**उद्गीथ०** यत् निष्केवल्यशस्त्रम् पुरुतमम् बहुतमम् समस्तम् इत्यर्थः, ववान याचितवान् पुराषाट् पूर्वमभिभविता शत्रूणाम् वृत्रहा वृत्रस्य हन्ता इन्द्रः तस्य निष्केवल्यस्य शस्त्रस्य अवयवभूतत्रयस्त्रिंशदक्षरविराट्छन्दोयुक्तया[3] याज्यया युष्माकं त्रयस्त्रिंशतां देवानां सम्बन्धीनि त्रयस्त्रिंशतं नामानि आ अप्राः प्रत्येकम् एकैकेन अक्षरेण पूरयति[4] तस्या एकैकमक्षरं प्रत्येकं युष्मभ्यं प्रयच्छतीत्यर्थः[5]। यतः अचेति रात्रौ मया विज्ञापितो युष्मदर्थं भागं देहि इति प्रासहः पतिः प्रकर्षेण सोढ्याः[6] सम्भोगकाले अभिभवन्त्या[7] मम प्रासहनाम्न्याः[8] भर्ता इन्द्रः तुविष्मान् अननुगुण इत्यर्थः, यत् ईम् निश्चितार्थोऽत्र ईंशब्दः करत् इत्यनेन च सम्बध्यते। यत् निष्केवल्यशस्त्रभागवस्तु उश्मसि कामयामहे वयम् कर्तवे स्वीकर्तुम्, तत् करत् निश्चयेन करोति इन्द्रः, नाऽत्र संशयः कार्य इत्यर्थः ॥ ६ ॥

**वेङ्कट०** यत् हिनस्ति बहूनां ग्लपयितारं वृत्रं पुराणामभिभविता[9], आ पूरयति इन्द्रः वृत्रहा उदकानि। सोऽयम् अभिभविता[10] बहुधनश्च प्रज्ञातः पतिः। यत् वयम् एनम् कामयामहे [11]कर्तुम् करोति अयम्[11] तत् इति। 'सैतदेव प्रत्यपद्यत यद्वावान पुरुतमम्' ( ऐब्रा ३, २२ ) इत्यादिकं ब्राह्मणम्। 'सर्वे नन्दन्ति यशसाऽऽगतेन' ( ऐब्रा १,१३ ) [12]इत्यादिकं च समानमिति[12] ॥ ६ ॥

[13]इति अष्टमाष्टके तृतीयाध्याये पञ्चमो वर्गः[13] ॥

## [ ७५ ]

[13]सिन्धुक्षित् प्रैयमेध ऋषिः। नद्यो देवता। जगती छन्दः[13]।

प्र सु व आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।
प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिन्धुरोजसा ॥ १ ॥

---

१. निहितं मूको. २. °शब्दं मूको. ३. °भूता त्रय° मूको. ४. °यन्ती मूको. ५. °च्छन्ती° मूको. ६. सोढ्याः मूको. ७ °वत्या मूको. ८. प्रासहनाम्नः मूको. ९. भि··· वि[2]; °भिभवितार अ[1]. १०. °भवितानि वि[2]. ११-११. नास्ति अ[1]. १२-१२. नास्ति वि[2] अ[1], १३-१३. नास्ति मूको.

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् । कारुः । वोचाति । सदने । विवस्वतः ।
प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणाम् । अति । सिन्धुः । ओजसा ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं 'प्र सु वः' इति नवर्चं नदीस्थानाम् अपां स्तावकं सिन्धुक्षित् प्रियमेधपुत्रः[1] ददर्श । [2]आपः ! वः[2] युष्माकम् महिमानम् महत्त्वम् उत्तमम् उत्कृष्टम् कारुः स्तोता सिन्धुक्षिन्नामा मदुपलक्षितः प्र सु वोचाति सुष्ठु प्रब्रवीति व्यावर्णयतीत्यर्थः, सदने स्थाने वेद्याख्ये विवस्वतः यजमानस्य स्वभूते, स्थित इति शेषः । प्रतिज्ञायेदानीं व्यावर्णयति महत्त्वम्— सप्तसप्त नद्यः समुदिताः सत्यः त्रेधा त्रिधा प्राचीं प्रतीचीं दक्षिणां च दिशम् प्र चक्रमुः प्रक्रान्तवत्यः[3] प्रतिबद्धवत्यः[4] याः, तासाम् प्र सृत्वरीणाम् प्रसर्पिणीनाम्[5] प्रसर्पणशीलानां नदीनां मध्ये अति अभिपूजितः सिन्धुः ओजसा बलेन अनेकधा[6] भूमिं विदार्य प्रवर्तते ॥ १ ॥

**वेङ्कट०** सिन्धुक्षित् प्रैयमेधः । हे आपः! युष्माकम् सुष्ठु प्र ब्रवीति महिमानम् उत्तमम् स्तोता यजमानस्य गृहे । ता इमा नद्यः सप्तसप्त भूत्वा प्रतिक्रमन्ते[7] त्रेधा हि[8] पृथिव्याम् अन्तरिक्षे दिवि च सप्तसप्त भवन्तीत्यर्थः । सरणशीलानामासां नदीनां 'मध्ये बलेन' यत्राहं सिन्धुक्षित् निवसामीति ॥ १ ॥

प्र तेऽरदद्वरुणो यातवे पथः सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम् ।
भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥ २ ॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् । वाजान् । अभि । अद्रवः । त्वम् ।
भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥२॥

**उद्गीथ०** हे सिन्धो! ते तव यातवे यातुं समुद्रं प्रति गन्तुम् पथः मार्गान् प्र अरदत्[10] प्रादरत् प्रदलितवान् प्रखातवान् वृष्टिप्रदानद्वारेण विदारितवान् वरुणः उत्तमो मध्यमो वा । कदा[11] प्रारदत्— उच्यते । हे सिन्धो! यत् यदा वाजान् सस्यलक्षणानि अन्नानि अभि प्रति अद्रवः द्रुतवान् निष्पादनार्थं कुल्यात्मना गतवान् त्वम् । कुत्र च । भूम्याः अधि उपरि प्रवता प्रवणेन निम्नेन प्रदेशेन यासि गच्छसि त्वम् सानुना समुच्छ्रितेन उदकेन च । कदा । यत् यदा एषाम् त्वदुभयतोनिवासिनाम् जगताम् जङ्गमानां सामर्थ्यात्[12] स्थावराणां च अग्रम् वर्षकालात् प्रथमम् ग्रीष्मकाल इत्यर्थः, इरज्यसि तेषां जीवितस्य त्वदधीनत्वाद् ईशिषे । तदेति योज्यम् ॥ २ ॥

**वेङ्कट०** प्राचीनम् हि अलिखत् तव गमनाय वरुणः मार्गान्[13] सिन्धो!, यत्र त्वम् अन्नानि प्रति अभि-द्रवसि,

---

१. प्रैय° मूको. २-२. वः आपः वि[1]; वः आपो वो वि[2] अ. ३. चक्रान्त° मूको. ४. °बन्धव° वि[1]. ५. °र्पिणाम् वि[2] अ; °त्रिणाम् वि[1]. ६. नास्ति अ; वाने° वि[1,2]. ७. प्रहिक्रम° वि[2] अ[1]. ८ नास्ति वि[1] अ[1]; वि वि[1]. ९-९. नास्ति त्रि[2] अ[1]. १०. अदेरन् मूको. ११. जान् कदा मूको. १२. सामर्थ्यं मूको. १३. °र्गांत् वि[2] अ[1].

भूम्याः अधि त्वम् प्रवता सानुना उच्छ्रितेन देशेन[1] यासि, येन समुच्छ्रितेन देशेन[2] गच्छन्ती सर्वेषां जङ्गमानाम् अग्रम् प्रत्यक्षम् ईश्वरा भवसीति ॥ २ ॥

**दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना ।**
**अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥ ३ ॥**

दिवि । स्वनः । यतते । भूम्या । उपरि । अनन्तम् । शुष्मम् । उत् । इयर्ति । भानुना ।
अभ्रात्ऽइव । प्र । स्तनयन्ति । वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥ ३ ॥

**उद्गीथ०** दिवि द्युलोके, आत्मानं कर्तुमिति शेषः, स्वनः सिन्धोः ऊर्मिध्वनिः यतते प्रयतते दिवं व्याप्नोतीत्यर्थः । कदा । उच्यते — यदा भूम्या उपरि भूम्येति षष्ठ्या आकार आदेशः । भूम्या उपरि अनन्तम् अपरिमितम् शुष्मम् ऊर्मिणं बलम् उत् इयर्ति उद्गमयति सिन्धुः भानुना स्वदीप्त्या, युक्तमिति शेषः । किञ्च अभ्रात् इव यथा अभ्राद् मेघाद् आगच्छन्त्यः वृष्टयः प्र स्तनयन्ति प्रकर्षेण शब्दं कुर्वन्ति, एवम् यत् यदा एति समुद्रं प्रति गच्छति, तदा[3] प्रस्तनयति । किमिव । वृषभः न यथा वृषभः प्रतिवृषभं प्रति युद्धाय गच्छन् रोरुवत् अत्यर्थं रौति, एवं वा अत्यर्थं शब्दं करोति ॥ ३ ॥

**वेङ्कट०** भूमेः उपरि दिवि शब्दः गच्छति स्वयम् अपर्यन्तम् वेगम् प्रेरयति[4] भासमानेनोर्मिणा । यथा अभ्रात् वृष्टयः प्र स्तनयन्ति, तथा शब्दाः प्रादुर्भवन्ति । सिन्धुः [5]यत् आगच्छति[5], वृषभः इव शब्दं करोति[6] ॥ ३ ॥

**अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः ।**
**राजेव युध्वा नयसि त्वमित् सिचौ यदासामग्रं प्रवतामिनक्षसि ॥ ४ ॥**

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः । वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ।
राजाऽइव । युध्वा । नयसि । त्वम् । इत् । सिचौ । यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥

**उद्गीथ०** हे सिन्धो ! त्वा त्वाम् वाश्राः वाशनशीलाः शब्दकारिण्यः नद्यः अभि अर्षन्ति स्नेहेनाभिगच्छन्ति पयसा इव उदकेन, आप्याययितुम् इति शेषः । किमिव । शिशुम् इत् न मातरः इदिति पदपूरणः । शिशुम् न यथा शिशुं बालकं वत्समातरो धेनवो वाशनशीलाः स्नेहेन अभिगच्छन्ति पयसा क्षीरेण आप्याययितुम्, एवम् । किञ्च राजा इव यथा राजा कश्चित् सङ्ग्रामे शत्रुभिः सह युध्वा प्रहृत्य तान् जित्वा तदीयानि धनानि स्वीकृत्य च नयति स्थानं प्रति, एवं सर्वनदीनाम् आत्मना सह सङ्गतानाम् उदकानि स्वीकृत्य नयसि त्वम् इत् त्वमेव प्रापयसि । क्व । सिचौ सेक्तरि अपां त्वरितरि समुद्रे । कदा नयसि । उच्यते — यत् यदा आसाम् नदीनां च त्वया सह सङ्गतानाम् प्रवताम् प्रवणवतीनां निम्नगामिनीनां[7] सम्बन्धि अग्रम् श्रेष्ठम् उदकम् इनक्षसि व्याप्नोषि[1] ॥ ४ ॥

---

१. नास्ति वि[1]. २ नास्ति मूको. ३. यदा वि[2] अ. ४. °यन्ति वि[2] अ[1]. ५-५. यथाग° वि[2] अ[1]. ६. नास्ति वि[2] अ[1]. ७. °मिनां मूको.

**वेङ्कट०** अभि गच्छन्ति त्वा सिन्धो! पुत्रम् इव मातरः वाश्राः[1] इतरा नद्यः, पयसा युक्ताः इव च वत्सम् धेनवः। राजा इव युद्धकृत् सेनाः त्वम् सिच्यमानौ तटौ ताः[2] नयसि, यदा त्वम् आसाम् त्वया सह प्रगच्छन्तीनाम्[3] अग्रम् इक्षनसि सर्वासामग्रे गच्छसीति ॥ ४ ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया ॥ ५ ॥

इमम्। मे। गङ्गे। यमुने। सरस्वति। शुतुद्रि। स्तोमम्। सचत। परुष्णि। आ।
असिक्न्या। मरुत्ऽवृधे। वितस्तया। आर्जीकीये। शृणुहि। आ। सुऽसोमया ॥ ५ ॥[4]

**उद्गीथ०** इमम् मे इमं स्वभूतम् स्तोमम् स्तवम् गङ्गे! यमुने! सरस्वति! शुतुद्रि! परुष्णि! आ सचत आभिमुख्येन मर्यादया वा सेवध्वं यूयम्, शृणुतेत्यर्थः। असिक्न्या सह वितस्तया च सह हे मरुद्वृधे! वृष्टिद्वारेण मरुद्वर्धिते! आर्जीकीये! त्वमपि शृणुहि आभिमुख्येन शृणु सुषोमया च सह ॥ ५ ॥

**वेङ्कट०** हे प्रधानभूताः सप्त नद्यः! गुणभूताभिस्तिसृभिः[5] मदीयम् स्तोत्रम् सेवध्वम् श्रृणुत चेति। तत्रासिक्नी मरुद्वृधाया अवयवभूता, वितस्ता सुषोमा च आर्जीकीयायाः ॥ ५ ॥

[6]इति अष्टमाष्टके तृतीयाध्याये षष्ठो वर्गः[6] ॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥ ६ ॥

तृष्टऽअमया। प्रथमम्। यातवे। सऽजूः। सुऽसर्त्वा। रसया। श्वेत्या। त्या।
त्वम्। सिन्धो इति। कुभया। गोऽमतीम्। क्रुमुम्। मेहत्न्वा। सऽरथम्। याभिः। ईयसे ॥ ६ ॥

**उद्गीथ०** तृष्टामया [7]तृष्टामा नाम नदी तया सह[7] प्रथमम् पूर्वम् यातवे यातुम् अस्मद्यज्ञं प्रति गन्तुम् सजूः समानप्रीतिः, भवेति शेषः, सुसर्त्वा[8] च नद्या शोभनगन्त्र्या सह, रसया च नद्या सह, श्वेत्या त्या श्वेत्या च अन्ययाऽपि नद्या च सह त्वम् हे सिन्धो! कुभया च नद्या च सह, गोमतीम् [9]क्रुमुम् इत्युभयत्र[9] तृतीयास्थाने व्यत्ययेनेयं[10] द्वितीया। गोमत्या च नद्या सह, क्रुम्वा[11] च नद्या सह, मेहत्न्वा च नद्या सह, अन्याभिश्च याभिः नदीभिः सरथम् समानेन रथेन ईयसे गच्छसि यज्ञान् प्रति। ताभिश्च नदीभिः सह अस्मद्यज्ञं प्रथमं गन्तुं समानप्रीतिर्भवेति योज्यम्। एतदुक्तं भवति — एताभिर्नदीभिः यथोपदिष्टाभिः सह समानप्रीतिर्भूत्वा समानेन रथेन अस्मद्यज्ञं प्रति प्रथमम् आगच्छेति ॥ ६ ॥

---

१. याः···वि[2] अ[1].  २. तत वि[2] अ[1].  ३. प्रयच्छतीनाम् त्रि[2] अ[1].  ४. या. (९,२६) व्याख्यानं द्र.  ५. °भिस्त्रिभिरिति वि[2] अ[1].  ६-६. नास्ति मूको.  ७-७. तृष्टानाम नदीनां मूको.  ८. सुसंतर्त्वा मूको.  ९-९. °मुं मेत्युभ° मूको.  १०. °नेदं मूको.  ११. ऋद्धा कुमवा वि[1]; ऋद्धा क्रुमया वि[2] अ.

**वेङ्कट०** त्वम् हे सिन्धो![1] गोमतीम् नदीं प्रति यदा[2] त्वं पर्वतादवरूढा, प्रथमम्[3] तृष्टामया नद्या सङ्गताऽऽसीः। अथ क्रमेणान्याभिः पञ्चभिः, याभिः त्वम् सरथम् गच्छसीति। क्रमणकर्मा क्रमिः[4] ॥ ६ ॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि ।
अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥ ७ ॥

ऋजीती । एनी । रुशती । महिऽत्वा । परि । ज्रयांसि । भरते । रजांसि ।
अदब्धा । सिन्धुः । अपसाम् । अपःऽतमा । अश्वा । न । चित्रा । वपुषीऽइव । दर्शता ॥ ७ ॥

**उद्गीथ०** ऋजीती नाम नदी, एनी च नाम नदी, रुशती च नाम नदी महित्वा महत्त्वेन, युक्तेति शेषः, परि भरते उभयतः पूरणेन[5] सर्वतो धारयति एकैकमाहरति वा, समुद्रं प्रतिपादयतीत्यर्थः। किम्। ज्रयांसि वेगेन[6] गन्तृणि रजांसि उदकानि अदब्धा अहिंसिता महत्त्वादिगुणैरनभिभूता सिन्धुः अपसाम् अपस्तमा उभयमेतदन्तर्णीतमत्वर्थम्[7]। अपसां अपस्वतीनां स्वाधिकारकर्मवतीनां नदीनां मध्ये अपस्तमा अपस्वितमा अतिशयेन स्वाधिकारकर्मवती[8] अश्वा न चित्रा अश्वेव चायनीया शीघ्रगामित्वात् पूजनीया दर्शनीया वा, किञ्च वपुषी इव दर्शता यथा वपुषी रूपवती काचित् स्त्री दर्शता दर्शनीया, एवं च दर्शनीया ॥ ७ ॥

**वेङ्कट०** ऋजुगामिनी श्वेतवर्णा दीप्यमाना महत्त्वेन वेगवन्ति उदकानि परितो हरति अहिंसिता सिन्धुः इयम् अत्यन्तं[9] वेगवती वेगवतीभ्यः बडवा इव चित्रा, वपुष्मती इव युवतिः दर्शनीया ॥ ७ ॥

स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम् ॥ ८ ॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता । वाजिनीऽवती ।
ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

**उद्गीथ०** स्वश्वा शोभनाश्वा सिन्धुः सुरथा शोभनरथा च सुवासाः शोभनवस्त्रा च हिरण्ययी हिरण्मयी सुकृता विधात्रा अतिशोभना कृता निर्मिता वाजिनीवती अन्नवती[10] च अथवा[11] वाजिनी हविरन्नवती यागक्रिया तया तद्वती ऊर्णावती उदकेन सर्वस्य आच्छादनवती च युवतिः यौवनान्विता च सीलमावती शैलवती च उत अपि सुभगा शोभनधना सर्वजनप्रिया वा अधि वस्ते उपरिभावेनैश्वर्येण आच्छादयति[12] मधुवृधम् उदकस्य च वर्धयितारं समुद्रं प्रति ॥ ८ ॥

**वेङ्कट०** स्वश्वा शोभनरथा शोभनवस्त्रा हिरण्मयैराभरणैरलङ्कृता सुष्ठुकृता अन्नवती ऊर्णावती सिन्धुः।

---

१. नास्ति वि[2] अ[1]. २. यथा वि[1]. ३. नास्ति वि[1]. ४. क्रमुः वि[1]. ५. °णे मूको. ६. °गेन न मूको. ७. °न्तर्हित° वि[1]; °न्तर्नीत° वि[2] अ. ८. °रधिकर्म° मूको. ९. इव अ° वि[1]. १०. नास्ति मूको. ११. अथ मूको. १२. °आच्छद° वि[2] अ.

सिन्धुदेशे[1] हि सन्त्यूर्णाः[2] यासां रोमभिः कम्बलकरणम्। युवतिः सीलमावती सीराणि ययौषध्या रज्जुभूतया बध्यन्ते तामोषधिं[3] सीलमां मन्यन्ते। तद्वती आच्छादयति मधुवृधम् निर्गुण्ड्यादिकम्[4] ओषधिजातमिति ॥ ८ ॥

सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ९ ॥

[5]सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम्[5] । तेन । वाजम् । सनिषत् । अस्मिन् । आजौ ।
महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥ ९ ॥

उद्गीथ० सुखम् सुखयानम् रथम्[6] स्वरथम्[7] युयुजे युक्तवान् शत्रून् प्रति गमनाय सिन्धुः[8] सिन्धुर्नाम नदीविशेषः[8]। अश्विनम् अश्ववन्तम्। 'अश्वविशिष्टं रथं' सिन्धुर्नदी युक्तवतीत्यर्थः। युक्त्वा च तेन रथेन गत्वा शत्रून् जित्वा तदीयम् वाजम् अन्नादिधनम् सनिषत् सम्भक्तवान् स्वीकृतवानित्यर्थः, अस्मिन् आजौ सङ्ग्रामे। हि यस्मादेवम्, तस्मात् कारणात् अस्य सिन्धोः सम्बन्धी महान् महिमा महन्महत्त्वम् पनस्यते संस्तूयते स्तोतृभिः अदब्धस्य अहिंसितस्य शत्रुभिः स्वयशसः [10]स्ववशयशसः, वशलोपोऽत्र[10] कर्तव्यः, विरप्शिनः विरमणशीलस्य महतो वा ॥ ९ ॥

वेङ्कट० सुद्वारम् रथम् युयुजे सिन्धुः अश्ववन्तम्। तेन[11] रथेन अन्नम् प्रयच्छतु अस्मिन् सङ्ग्रामे। महान् हि अस्य रथस्य महिमा स्तूयते शत्रुभिरहिंसितस्य स्वभूतकीर्तेः महत इति ॥ ९ ॥

[12]इति अष्टमाष्टके तृतीयाध्याये सप्तमो वर्गः[12] ॥

[ ७६ ]

[12]सर्प ऐरावतो जरत्कर्ण ऋषिः। ग्रावाणो देवता। जगती छन्दः[12]।

आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन ।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा ॥ १ ॥

आ । वः । ऋञ्जसे । ऊर्जाम् । विऽउष्टिषु । इन्द्रम् । मरुतः । रोदसी इति । अनक्तन ।
उभे इति । यथा । नः । अहनी इति । सचाऽभुवा । सदःऽसदः । वरिवस्यातः । उत्ऽभिदा ॥१॥

उद्गीथ० उत्तरं सूक्तम् अष्टर्चम् अभिषवग्रावदेवतम् ऐरावतः सर्प ऋषिर्ददर्श। वः युष्मान् सोमाभिषवग्राव्णः आ ऋञ्जसे व्यत्ययेनाऽयम् उत्तमस्य स्थाने मध्यमः। आऋञ्जे[13] आराधयामि, स्तुत्येति शेषः। कस्मिन् काले। उच्यते—ऊर्जाम् व्युष्टिषु ऊर्जाम् इति

---

१. देशे मूको. २. सत्यू° वि[1] अ[1]. ३. तामूषां मूको. ४. निर्गुणितादि° मूको. ५-५. निगमोऽयं या. (७,७) द्र. ६ नास्ति मूको. ७. सुरथं वि[2] अ. ८. नदीति शेषः मूको. ९-९. विशिष्टरये मूको. १०-१०. स्ववलोपोऽत्र मूको. ११, तौ वि[1]. १२-१२. नास्ति मूको. १३. आ ऋञ्जसे मूको.

अन्तर्णीतमत्वर्थमेतत्[1]। ऊर्ग्वतीनां हविरन्नवतीनां बलवतीनां वा उषसाम् व्युष्टिषु व्युच्छनवेलासु तमोविवासनकालेषु[2], उषःकाल इत्यर्थः। आराध्यमानाश्च यूयम् इन्द्रम् मरुतः रोदसी द्यावापृथिवी च अनक्तन सततं हेतुकर्तृत्वेन सोमं पाययतेत्यर्थः, अथवा यज्ञाङ्गभावाय व्यञ्जयत गमयत वा। किञ्च उभे अहनी राज्यहनी सचाभुवा सहभुवौ सहभूते सती यथा नः अस्माकं स्वभूतं कालभेदेन भिन्नम् सदःसदः देवानां[3] सहस्थानं वेदिमध्यगतम्, प्रत्यागत्येति शेषः, वरिवस्यातः 'वरिवः' ( निघ २,१० ) इति धननाम। 'सुप आत्मनः क्यच्' ( पा ३,१,८ )। वरिवो धनं सोमलक्षणम्[4] [5]इच्छतः अस्माकम्[5] देवेभ्यो दातुं पातुञ्च तथा कुरुतेति शेषः। कथम्। उद्भिदा सोमस्य उद्भेदनेन विदारणेन कुरुतेत्यर्थः ॥ १ ॥

**वेङ्कट०** जरत्कर्णः सर्प ऋषिः। आ प्रसाधयामि युष्मान् सारभूतानाम् उषसाम् व्युष्टिषु। हे ग्रावाणः! इन्द्रादीन् सोमेन अनक्तन। यथाऽस्मान् सहभूते अहोरात्रे गृहेगृहे परिचरतः उद्भेदकेन धनेन, तथा यूयम् [6]तान् सोमेन मृक्षयतेति[6] ॥ १ ॥

तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि ।
विदद्धय१र्यो अभिभूति पौंस्यं महो राये चित् तरुते यदर्वतः ॥ २ ॥

तत् । ऊँ इति । श्रेष्ठम् । सवनम् । सुनोतन । अत्यः । न । हस्तऽयतः । अद्रिः । सोतरि ।
विदत् । हि । अर्यः । अभिऽभूति । पौंस्यम् । महः । राये । चित् । तरुते । यत् । अर्वतः ॥

**उद्गीथ०** [7]तत् श्रेष्ठम् सवनम् सुनोतन[7]। कस्मादेवं ब्रवीमि। हि यस्मात् अद्रिः ग्रावसमूहो भवान् सोतरि सोमस्य अभिषोतरि अध्वर्यौ, स्थितमिति शेषः, विदत् वेत्ति जानाति अर्यः स्तुतीनाम् अभिषवणकर्मणां च करणे[8] स्वामी अभिभूति परं [9]सोमस्याभिभवितृ संस्कर्तृ[9] पौंस्यम् बलं संस्करणसामर्थ्यम्। किमिव वेत्ति भवान् अद्रिसमूहः। अत्यः न हस्तयतः हस्तम् आरोहणार्थम् आत्मन उपरि कुर्वन् हस्तयन् [10]अश्ववारः, तस्य[10] अभिभूति आत्मनः अभिभवितृ पौंस्यम् बलम् आरोहणसामर्थ्यं [7]यथा अश्वः[7] वेत्ति जानाति, एवम्। एतदुक्तं भवति — यतः अध्वर्यो सोमसंस्करणसामर्थ्यं जानीथ यूयम्, अतः तस्मादपि सकाशात् सु स्तुतं सोमं कुरुतेति। किञ्च महः राये चित् तरुते यत् अर्वतः चिदित्यत्रोपमार्थे। यत् अर्वतः अश्वस्य योग्यमशनम्[11] तदर्थं चित् तरुते। यथा त्वरयत्यश्वः[12], एवं भवानिन्द्रः महो राये महाधनस्य सोमलक्षणस्य अभिषवाय त्वरतामित्यर्थः ॥ २ ॥

**वेङ्कट०** तम् श्रेष्ठम् सोमम् सुनोतन। अश्वः इव हस्ताभ्यां प्रगृहीतः सोतरि ग्रावा भवति। लभते हि ग्राव्णां[13] प्रेरकः देवेभ्यः अभिभावुकम् बलम्[14], महते च धनाय तरुते[15] वितनोति युगपद् गच्छतोऽश्वान् ॥ २ ॥

---

१. अन्तर्हितम° वि१. २. °वासनाका° मूको. ३. देवा मूको. ४. सामल° मूको. ५-५. इच्छताकं मूको. ६-६. तथा तव सोमेन्मुक्षयतेति मूको. ७-७. नास्ति मूको. ८. करेण मूको. ९-९. सोमाभिभवित्री सस्कर्तु मूको. १०-१०. अश्ववारस्य मूको. ११-११. योग्याशनम मूको. १२. त्वरत्यश्वः वि१,२. १३. ग्राव्णाः वि२ अ१. १४. खलं वि१. १५. कुरुते मूको.

तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥ ३ ॥

तत् । इत् । हि । अस्य । सवनम् । विवेः । अपः । यथा । पुरा । मनवे । गातुम् । अश्रेत् ।
गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्निजि । प्र । ईम् । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ ३ ॥

**उद्गीथ०** तत् इत् तदेव हि यस्मात् अस्य सोमस्य सवनम् अभिषवणं कुट्टनम् विवेः विशेषेण वेत्सि जानासि त्वं हे ग्राव्णां[1] समूह! अपः कर्म च अभिषवशब्देन देवतादिलक्षणम्, अत एतदुभयम्, अस्माकं कुर्विति शेषः। किञ्च यथा येन प्रकारेण[2] पुरा पूर्वस्मिन् काले मनवे मनो राज्ञोऽर्थाय गातुम् देवान् प्रति गन्तारं सोमम् अश्रेत श्रितवान् अभिषवार्थम् अभिगतवान् ग्रावसमूहः, एवम् अस्माकमपि सोमम् अभिषोतुम् आश्रयत्विति शेषः। किञ्च गोअर्णसि गावोऽर्णव इव समुद्रोदकमिव प्रभूता यस्य तस्मिन् बहुगवादिधनानाम्[3] ईश्वर इत्यर्थः, त्वाष्ट्रे त्वष्टृपुत्रे अग्निनाग्नि अश्वनिर्णिजि अश्वरूपे अश्वाकृतियुक्ते यजमाने अध्वरेषु यज्ञेषु वर्तमानान् अध्वरान् अहिंसितान् रक्षोभिः अविहतान्[4] सोमान् प्र ईम् अशिश्रयुः ईम् इत्युपमार्थे। यथा प्रकर्षेण आश्रितवन्तः अभिषवाय उपगतवन्तो भवन्तः ग्रावाणः, एवम् अस्मद्यज्ञे वर्तमानान् सोमान् अभिषवाय प्रकर्षेण आश्रयन्त्वित्यर्थः ॥ ३ ॥

**वेङ्कट०** तम् इत् खलु अस्य अद्रेः[5] सवनम् [6]अभिषवम् अस्मदीयम्[6] अपः कर्म यज्ञं व्याप्नोतु, यथा पुरा मनवे राज्ञे गमनम् अश्रेत् आजगाम। गोरूपे[7] अपहृतैः गोभिः परिवृते त्वष्टुः पुत्रे अश्वरूपे[8] च सति गवाश्वैरपहृतैः परीतं विश्वरूपं दृष्ट्वा प्र अशिश्रयुः एतान् ग्राव्णः रक्षोभिरन्वितं[9] देवानां यज्ञेषु त्वाष्ट्रं जेतुम् ॥ ३ ॥

अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ४ ॥

अप । हत । रक्षसः । भङ्गुरऽवतः । स्कभायत । निःऽऋतिम् । सेधत । अमतिम् ।
आ । नः । रयिम् । सर्वऽवीरम् । सुनोतन । देवऽअव्यम् । भरत । श्लोकम् । अद्रयः ॥ ४ ॥

**उद्गीथ०** अप हत अपगमयत अभिषवेण महता भीषयन्तः यूयं अस्मद्यज्ञात् रक्षसः राक्षसान् भङ्गुरावतः भञ्जनशीलान्[10] नित्यं[11] भञ्जनशीलसेनावतो[12] वा, स्कभायत प्रतिबध्नीत निर्ऋतिम् मृत्युदेवताम्, सेधत अपगमयत अमतिम् अविद्यमानमतिमित्यर्थः, नः अस्माकम् रयिम् धनं सोमलक्षणम् सर्ववीरम् सर्वैः वीरैः ऋत्विगादिभिः उपेतम् आ सुनोतन आभिमुख्येन मर्यादया वा अभिषुणुत, किञ्च देवाव्यम् देवान् प्रति गन्तारम् भरत हरत प्रतिपादयत श्लोकम् अभिषवशब्दं हे अद्रयः! अभिषवग्रावाणः! ॥ ४ ॥

---

१. ग्रावा वा मूको. २. उपकारेण मूको. ३. °धनम् मूको. ४ अभिहतान् मूको. ५. अद्रे वि'. ६-६. षवमपीयम् मूको. ७. गौवृत्र ते वि'; गोवृतैः अ'. ८. विश्व' मूको. ९. °भिरन्वित्रम् मूको. १०. °शीला मूको. ११. नित्यः वि'. १२. °वन्तो मूको.

**वेङ्कट०** अप हत राक्षसान् भञ्जकेन कर्मणा तद्वतः, स्कभायत निर्ऋतिम् यथा निर्ऋतिः[1] नेह गच्छति, नि-षेधत च अमतिम् दुर्मतिम् रक्षसाम्, आ सुनोतन अस्माकम् रयिम् च सर्व-पुत्रम्, देवप्रीणनम् शब्दम् च भरत अद्रयः ! ॥ ४ ॥

दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥ ५ ॥

दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् । आश्वपःऽतरेभ्यः ।
वायोः । चित् । आ । सोमरभःऽतरेभ्यः । अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥ ५ ॥

**उद्गीथ०** दिवः चित् दिवोऽपि सकाशात् वः युष्मभ्यं ग्रावभ्यः अमवत्तरेभ्यः आत्मवत्तरेभ्यः अतिशयेन आत्मवद्भ्यः जितेन्द्रियेभ्यः व्यवस्थितेभ्य इत्यर्थः, विभ्वना चित् तृतीयैषा पञ्चम्यर्थे । विभोरपि सकाशात् आश्वपस्तरेभ्यः अतिशयेन क्षिप्रकारिभ्य इत्यर्थः, वायोः चित् वायोरपि सकाशात् सोमरभस्तरेभ्यः सोमाभिषवाय वेगवत्तरेभ्यः, अग्नेः चित् अग्नेरपि सकाशात् पितुकृत्तरेभ्यः सोमलक्षणस्यान्नस्य अतिशयेन कर्तृभ्यः आ अर्च आभिमुख्येन महताऽऽदरेण स्तुतिम् उच्चारयेत्यर्थः ॥ ५ ॥

**वेङ्कट०** आदित्याद् अपि अतिशयेन यूयम् बलवद्भ्यः, सौधन्वनात्[2] विभ्वना अपि शीघ्रकर्मभ्यः, वायोः अपि अत्यन्तं सोमाभिषवार्थे वेगेन युक्तेभ्यः । वायोरपि ग्रावाणो वेगवन्तो भवन्ति । तथा अग्नेः अपि अत्यन्तम् अन्नकृद्भ्यः स्तुतिम् कुरुत[3] ॥ ५ ॥

[4]इति अष्टमाष्टके तृतीयाध्याये अष्टमो वर्गः[4] ॥

भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरः ॥ ६ ॥

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा । दिविता । दिवित्मता ।
नरः । यत्र । दुहते । काम्यम् । मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥ ६ ॥

**उद्गीथ०** भुरन्तु भरन्तु[5] भरणद्वारेण सम्पादयन्तु[6] कुर्वन्तु इत्यर्थः, नः अस्माकम् यशसः कीर्तेः, निमित्तभूतस्येति शेषः, सोतु अभिषवणं कुट्टनम् अन्धसः अन्नस्य सोमाख्यस्य ग्रावाणः वाचा स्तुतिलक्षणया, स्तूयमाना इति शेषः । कीदृश्या । दिविता दीप्त्या आत्मनो विस्तारयित्र्या महत्येत्यर्थः, दिवित्मता दीप्तिमत्या, शोभनया चेत्यर्थः । क सोमाभिषवं कुर्वन्तु स्तुत्या सर्वगुणोपेतया स्तूयमानाः । उच्यते — नरः मनुष्या ऋत्विगाख्याः यत्र यस्मिन् वेदिस्थाने स्थिताः सन्तः दुहते प्रपूरयन्ति काम्यम् कमनीयम् मधु सोमाख्यम् आघोषयन्तः मर्यादया अभिषवणशब्दं कुर्वन्तः अभितः सर्वतः मिथस्तुरः परस्परेण सहकर्म कर्तुं त्वरिता इत्यर्थः ॥ ६ ॥

---

१. निर्ऋति वि[1]. २. सधन्वनात् वि[1]. ३. कुर्वतः मूको. ४-४ नास्ति मूको. ५. नास्ति मूको. ६. पन्तु वि[1]; वन्तु वि[2] अ.

**वेङ्कट०** भरध्वम् अस्मभ्यम् । उकारश्छान्दसः । यशस्विनः ग्रावाणः सुतम् सोमस्य रसम् । ग्रावाणः[1] स्तुतिवाचा दिवित्मता दीप्तिमत्या[2] दिवितायां[3] चास्मान् कुर्वन्तु । दिविता दीप्तिमत्ता । नेतार ऋत्विजः यत्र दुहते कमनीयम् सोमम् अभिषवणवेलायाम् आभिमुख्येन शब्दं कुर्वन्तः परस्परं त्वरमाणाः ॥ ६ ॥

सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् । गोऽइषः । दुहन्ति । ते ।
दुहन्ति । ऊधः । उपऽसेचनाय । कम् । नरः । हव्या । न । मर्जयन्ते । आसऽभिः ॥ ७ ॥

**उद्गीथ०** सुन्वन्ति अभिषुण्वन्ति ये सोमम् रथिरासः रथवन्तो हविर्धानशकटसमीपस्थिता इत्यर्थः, ते अद्रयः ग्रावाणः अस्य सोमस्य रसम् निः दुहन्ति निश्शेषं[4] दुहन्ति प्रपूरयन्ति ऊधः प्रक्षारयन्ति गविषः गोः वाचः स्तुतिलक्षणायाः इषः एषितारः कामयमानाः । किञ्च दुहन्ति सोमेन प्रपूरयन्ति ऊधः ऊधस्थानीयं दशापवित्रम् उपसेचनाय प्रक्षरणाय । किञ्च कम् सुखं सुखकरम् सोममित्यर्थः, मर्जयन्ते शोधयन्ति संस्कुर्वन्ति आसभिः आस्यैः । किमिव । नरः हव्या न यथा नरो मनुष्याः ऋत्विग्यजमानाः हव्या हवींषि हस्तैः संस्कुर्वन्ति, एवम् ॥ ७ ॥

**वेङ्कट०** सुन्वन्ति सोमस्य रसम्[5] रंहणवन्तः ग्रावाणः स्तुतिवाचमिच्छन्तः । दुहन्ति सोमम् अग्नेः उपसेचनाय । नेतारो ग्रावाणः हवींषि[6] चाऽभिषुतान् सोमान् [7]प्रथममेव स्वास्यैः मर्जयन्ते[7] ॥ ७ ॥

एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥ ८ ॥

एते । नरः । सुऽअपसः । अभूतन । ये । इन्द्राय । सुनुथ । सोमम । अद्रयः ।
वामम्ऽवामम् । वः । दिव्याय । धाम्ने । वसुऽवसु । वः । पार्थिवाय । सुन्वते ॥ ८ ॥

**उद्गीथ०** एते यूयं हे नरः ! स्वकर्मसु नर्तितारः अद्रयः ! ग्रावाणः ! विक्षेप्तारः ! पुंलिङ्गशब्दयोगान्नरनामानः ! वा स्वपसः शोभनकर्माणः अभूतन भूताः संवृत्ताः शोभनमभिषवकर्म निर्वर्तितवन्तः स्थेत्यर्थः, ये यूयम् इन्द्राय इन्द्रार्थं सदा सर्वयज्ञेषु सुनुथ सोमम् हे अद्रयः ! ग्रावाणः ! । अथ इदानीम् वामंवामम् वननीयंवननीयम् वः युष्माकं देवत्वेन[8] सम्बन्धि दिव्याय धाम्ने उभयत्राऽपि द्वितीयार्थे चतुर्थी । दिव्यं दिवि भवं धाम स्थानं चन्द्रेन्द्ररुद्रलोकादिकम्[9] नानारूपं दत्तेति शेषः । वसुवसु धनम् च दृष्टलक्षणम् वः युष्माकं देवत्वेन सम्बन्धि पार्थिवाय पृथिव्यां भवाय सुन्वते यजमानाय मह्यम् दत्तेति शेषः ॥ ८ ॥

**वेङ्कट०** एते यूयं हे नेतारः सुकर्माणः भवत, ये इन्द्राय सोमम् सुनुथ अद्रयः ! । कल्याणंकल्याणमेव यूयं

---

१. ग्राव मूको. २. नास्ति वि[1]. ३. दीपितायां मूको. ४. निरुषं मूको. ५. रथं वि[2] अ[1]. ६. °वींषि वा वि[2] अ[1]. ७-७. °ममे स्वस्य मार्जे° वि[1]. ८. दोत्वेन मूको. ९. °दिककर्म मूको.

दिवि भवाय धाम्ने कुरुत। धनंधनमेव च यूयम् पार्थिवाय सुन्वते यजमानाय कुरुतेति ॥ ८॥

[1]इति अष्टमाष्टके तृतीयाध्याये नवमो वर्गः[1] ॥

[ ७७ ]

[1]स्यूमरश्मिर्भार्गव ऋषिः। मरुतो देवता। त्रिष्टुप् छन्दः पञ्चमी जगती[1]।

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मन्तो न यज्ञा विजानुषः ।
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥ १ ॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मन्तः । न । यज्ञाः । विऽजानुषः ।
सुऽमारुतम् । न । ब्रह्माणम् । अर्हसे । गणम् । अस्तोषि । एषाम् । न । शोभसे ॥ १ ॥

**उद्गीथ०** उत्तरे द्वे सूक्ते 'अभ्रप्रुषो न' 'विप्रासो न' इति च अष्टर्चे मारुते भार्गवः स्यूमरश्मिः ददर्श। अभ्रप्रुषः न अभ्राणां मेघानां सम्बन्धिन्यः प्रुषो विप्रुषो वृष्टिबिन्दवो[2] यथा भूमिं प्रुषन्ति सिञ्चन्ति, एवं त्वं हे मम कर्मात्मन्! वाचा स्तुतिलक्षणया प्रुष सिञ्च युगपत् स्तुहीत्यर्थः, वसु अन्तर्हितमत्वर्थमेतत्[3] पदम्। वसुमन्तं धनवन्तम् ईश्वरमित्यर्थः। किञ्च हविष्मन्तः न यथा हविरादिसाधनसम्पन्नाः यज्ञाः विजानुषः विविधस्य जगतो जनयितारः, एवं विजानुषं विविधस्य जगतो जनयितारम् सुमारुतम् शोभनमरुद्गणम्। किञ्च न ब्रह्माणम् अर्हसे पुरस्तादुपचारोऽपि अत्र सामर्थ्याद् उपमार्थे नकारः। ब्रह्माणं न यथा ब्रह्माणं[4] प्रजापत्याख्यम्[5] अर्हसे पूजयसि त्वं हे मम कर्मात्मन्!, एवं पूजय हविर्भिः। एवमुक्तोऽपि स त्वं यदि एषाम् मरुताम् गणम् अस्तोषि न स्तोषिता (?) हविर्भिः, ततः न शोभसे इह परत्र च दृष्टादृष्टफलप्राप्तिलक्षणया शोभया[6] न युज्यसे इत्यर्थः ॥ १ ॥

**वेङ्कट०** स्यूमरश्मिः भार्गवः। मेघात्पतत उदकबिन्दून् इव वाचा 'प्रीता मरुतः सिञ्चन्ति' वसु यजमानान्। तथा हविष्मन्तः इव यज्ञाः जगतो विजनयितारो भवन्ति। तेषाम् एषाम् मरुतां शोभनम् महान्तम् गणम् इतः पूर्वम् न अहम् अस्तोषि अर्हणार्थम्, नापि तेषां शोभनार्थमिति तुष्टूषे वचनमितः पूर्वं नास्तौषमिति[7] ॥ १ ॥

श्रिये मर्यासो अञ्जीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।
दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥ २ ॥

श्रिये । मर्यासः । अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः । अति । क्षपः ।
दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । ववृधुः ॥ २ ॥

---

१-१. नास्ति मूको. २. वृष्टिशो मूको. ३. अन्तर्नीत° वि[2] अ. ४. ब्राह्म° वि[2] अ. ५. प्राजा° मूको. ६. नास्ति मूको. ७. °स्तोष° वि[2] अ[1].

**उद्गीथ०** श्रिये सर्वसस्यनिष्पत्तिलक्षणश्रियोऽर्थम्[1] मर्यासः मनुष्याकारा मरुतः अञ्जीन् वृष्ट्याभ्यक्तॄन्[2] अकृण्वत[3] यथाकालं कुर्वन्ति। अथवा यज्वनां विभूत्यर्थं यज्ञान् प्रति गतिं कुर्वन्ति, अथवा श्रिये आत्मनः शोभालक्षणश्रियोऽर्थम्[4] अञ्जीन् रूपाभिव्यक्तिकरान् अलङ्करणविशेषान् स्वाङ्गेषु सदा कुर्वन्तीत्यर्थः। किञ्च सुमारुतम् न शोभनमरुद्गणं यथा पूर्वीः चिरन्तनाः अनादिकालप्रवृत्ताः क्षपः अपो वृष्टिलक्षणाः अति 'अति सु इत्यभिपूजितार्थे' (या १,३)। वशवर्तित्वेन अभिपूजयन्ति, एवं सर्वाः प्रजाः अभिपूजयन्ति शोभनं मरुतां गणम्। किञ्च दिवः द्युलोकस्य पुत्रासः पुत्रभूताः तदाश्रयत्वात्, पुराणा[5] वा शत्रुभयत्रातारः ये मरुतः एताः प्रजाः न येतिरे न यातयन्ति न दुःखयन्ति स्थितिनिमित्तवृष्टिप्रदानेन न क्लेशयन्ति, प्रजानां सुखार्थं वृष्टिं प्रयच्छन्तीत्यर्थः। किञ्च आदित्यासः अदितेः पुत्राः ते मरुतः अक्राः न वावृधुः यथा अतिमहार्घस्य पण्यस्य क्रेतारः ऐश्वर्येण वर्धन्ते, एवं सर्वप्रकारया वृद्ध्या वावृधुः सदा वर्धन्ते मरुतः ॥ २ ॥

**वेङ्कट०** शोभनार्थम् मरुतः [6]अञ्जकान्याभरणानि कुर्वन्ति शोभनानां[6] मरुतां[7] गणं बह्व्योऽपि क्षपयित्र्यः सेनाः न अति क्रामन्ति। ते इमे दिवः पुत्राः च एताः न निर्गच्छन्ति। अदितेः पुत्रः ते शत्रूणामाक्रमणशीलाः न वर्धन्ते। यस्मादेतानहं न स्तौमीति ॥ २ ॥

प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः ।
पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥ ३ ॥

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिच्रे । अभ्रात् । न । सूर्यः ।
पाजस्वन्तः । न । वीराः । पनस्यवः । रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

**उद्गीथ०** ये मरुतः दिवः सकाशात् पृथिव्याः न पृथिव्याः च सकाशात् बर्हणा परिवृद्धेन त्मना [8]आत्मना आत्मीयेन[8] शरीरेण प्र रिरिच्रे व्यतिरिच्यन्त इव महाकाया इत्यर्थः। किञ्च अभ्रात् न सूर्यः यथा मेघात् आदित्यो व्यतिरिच्यते, एवं सर्वस्मात् व्यतिरिच्यन्ते मरुतो महत्त्वेन। किञ्च पाजस्वन्तः[9] न पाजः[10] अन्नं बलं वा। यथा अन्नवन्तः बलवन्तो वर्धितारः वीराः पुत्राः शूरा वा पनस्यवः स्तुत्याः, एवं मरुतः सर्वस्य स्तुत्याः। किञ्च रिशादसः न यथा रिशतां हिंसतां शत्रूणां हिंसितारः पार्ष्णिप्रहारैः शिरश्छेदादिना प्रकारेण भूमौ क्षेप्तारः। अथवा रेशयदारिणः रेशयदासिनो देवाः (तु. या ६,१४) मर्याः मनुष्याः अभिद्यवः अभिगतदीप्तयो भवन्ति, एवं मरुतः प्राप्तयशोदीप्तय इत्यर्थः ॥ ३ ॥

**वेङ्कट०** दिवः च पृथिव्याः च ये महत्त्वेन आत्मना प्र रिरिच्रे[11] अतिरिक्ता अभवन् शरीरेण

१. °श्रियर्थम् वि[1]; °श्रियार्थम् वि[2] अ. २. °भ्यक्तोन् वि[1] अ; °भ्यक्तीन् वि[2]. ३. रकृण्यत वि[1]; कृण्वत वि[2] अ. ४. °श्रियर्थम् मूको. ५. पुराणे मूको. ६-६. त्रुटितम् वि[2] अ; आ भवति वि[1]. ७. °रुतां शरणं मूको. ८-८. °त्मवात्मेन मूको. ९. वाज° मूको. १०. वाजम् मूको. ११. रिरिचे मूको.

अभ्रात् इव सूर्यः[1]। प्रथमो नकारः समुच्चयार्थीयः। ते बलवन्तः इव वीराः स्तुतिकामाः भवन्ति। रिशतामसितारः इव मनुष्याः अभिगतदीप्तयश्च भवन्तीति ॥ ३ ॥

युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति ।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आ गत ॥ ४ ॥

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न । मही । श्रथर्यति ।
विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् । सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥ ४ ॥

**उद्गीथ०** यागार्थम् अनागतेषु[2] मरुत्सु तेषु उपालम्भनवचनमेतत्। युष्माकम् मरुतां स्थानत्वेन[3] सम्बन्धिनि बुध्ने अन्तरिक्षे अपाम् वृष्टिलक्षणानाम् यामनि याने गमनमार्गे न विथुर्यति विथुरं विह्वलम् आत्मानं नेच्छति, कर्तुमिति शेषः, आगच्छन्ती सती न विह्वलीभवतीत्यर्थः। न च श्रथर्यति श्रथं श्लथवन्तम् आत्मानं कर्तुं न इच्छति न च श्लथीभवति न च शीर्यत इत्यर्थः, मही महती। का सा। सामर्थ्याद् युष्मत्सेना संहतिर्वा। यत एवम् अतः विश्वप्सुः सर्वरूपः सर्वसाधनसम्पन्न इत्यर्थः, यज्ञः अयम् अस्मदीयः वः युष्माकम् अर्थाय, अस्माभिः कृत इति शेषः। एतज्ज्ञात्वा अर्वाक् अस्मदभिमुखम् सु [4]आ गत[4] सुष्ठु आगत शीघ्रम् आगच्छतेत्यर्थः। किमिव। प्रयस्वन्तः न सत्राचः यथा योग्याशनलक्षणान्नवन्तः सत्राचः सदागामिनः अश्वाः योग्याशनार्थं शीघ्रम् आगच्छन्ति, एवं हविरन्नार्थं शीघ्रमागच्छतेत्यर्थः ॥ ४ ॥

**वेङ्कट०** युष्माकम् सङ्घाते प्रवृद्धानाम् अपाम् इव गमने न इयं पृथिवी विथुर्यति न विश्लथयति[5] न व्यथते न च शीर्णा भवति। वेगवन्तो यूयं न एनां बाधध्वे[6] इति। विश्वरूपः अयम् यज्ञः अभिमुखं युष्माकं गच्छति[7]। ते यूयम् अन्नवन्तः इव परिवेष्टारः सूदाः बहुत्वमञ्चन्तः आ गच्छत गणशः आगच्छतेति ॥ ४ ॥

यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मन्तो न भासा व्युष्टिषु ।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥ ५ ॥

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न । भासा । विऽउष्टिषु ।
श्येनासः । न । स्वऽयशसः । रिशादसः । प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥

**उद्गीथ०** हे मरुतः! यूयम् धूर्षु[8] यागधूर्षु नियुक्ताः सन्तः, प्रयुजः न 'रथधूर्षु प्रबद्धा अश्वा यथा' रश्मिभिः प्रग्रहैः आकृष्यन्ते[10], स्तुतिभिः आकृष्यध्व एवम्। किञ्च ज्योतिष्मन्तः न यथा दीप्तिमन्तः रविरश्मयः भासा स्वदीप्त्या दीप्यन्ते व्युष्टिषु तमोविवासनकालेषु[11], एवं यूयं स्वदीप्त्या, सन्दीप्यध्व इति शेषः। किञ्च श्येनासः न यथा श्येनाः सुपर्णाः सोमाहरणादिकर्मणा स्वयशसः स्ववीर्योपात्तकीर्त्तयः रिशादसः हिंसतः प्रतिहिंसितारश्च, एवं यूयं वृत्रवधादिकर्मणा स्ववीर्योपात्तकीर्त्तयः हिंसतः प्रतिहिंसितार-

१. वस्नम् वि[2] अ[1]. २. आवृतेषु मूको. ३. नेषु वि[2] अ; ⋯नेषु वि[1]. ४-४. अनर्थतः वि[2]; अर्थतः अ. ५. °श्लथति वि[1]. ६. °धस्व वि[2] अ[1]. ७. °च्छन्ति मूको. ८. नास्ति मूको. ९-९. नास्ति मूको. १०. °ष्यते मूको. ११. तमोवास° मूको.

श्चेत्यर्थः । किञ्च प्रवासः न यथा विप्रकृष्टदेशनिवासः प्रवासिनां क्लेशपाशैः बन्धिता भार्यापुत्रादिवियोगाग्निना सर्वदा दग्धा, एवं यूयम्[1] प्रसितासः क्तप्रत्ययोऽत्र कर्तरि द्रष्टव्यः। प्रसिताः प्रसितारः शत्रूणां नागपाशैः आशापाशैर्वा बन्धितारः परिप्रुषः 'प्रुष दाहे'। भार्यापुत्रादिवियोगाग्निना सर्वतो दग्धारः[2] चेत्यर्थः ॥ ५ ॥

**वेङ्कट०** यूयम् रथधूर्षु रश्मिभिः अश्वा इव परिप्रुषः परितो गन्तारः। तथा ज्योतिष्मन्तः इव आदित्यादयः[3] तेजसा उषस्सूदितासु। श्येनाः इव च स्वकीर्तयः रिशतामसितारः। प्रवासिनः इव पथिकाः प्रसिद्धयानाः[4] परितो गन्तार इति ॥ ५ ॥

[5]इति अष्टमाष्टके तृतीयाध्याये दशमो वर्गः[5] ॥

प्र यद्वह॑ध्वे मरुतः परा॒कात् यू॒यं म॒हः सं॒वर॑णस्य॒ वस्वः॑ ।
वि॒दा॒नासो॑ वसवो॒ राध्य॑स्या॒राच्चि॒द् द्वेषः॑ सनु॒तर्यु॑योत ॥ ६ ॥

प्र । यत् । वह॑ध्वे । म॒रु॒तः॒ । प॒रा॒कात् । यू॒यम् । म॒हः । स॒म्ऽवर॑णस्य । वस्वः॑ ।
वि॒दा॒नासः॑ । व॒स॒वः॒ । राध्य॑स्य । आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः । यु॒यो॒त ॥ ६ ॥

**उद्गीथ०** हे मरुतः! यूयम् यत् यदा प्र वहध्वे प्रवहथ प्राप्नुथ अस्मान् प्रत्यागच्छथ पराकात् दूरात् दिवः सकाशाद् इत्यर्थः, महः महतः संवरणस्य संवरणीयस्य प्रार्थनीयस्य वा वस्वः वसुनो धनस्य दृष्टादृष्टफललक्षणस्य, दानायेति शेषः। तदा विदानासः जानन्तः यूयं हे वसवः! भक्तानाम् ईप्सितार्थैः आच्छादयितारः! राध्यस्य स्तुतिभिः हविर्भिश्च अस्माभिः युष्मदाराधनस्य, स्वरूपमिति शेषः, आरात् चित् दूरादपि, दूरम् इति शेषः, द्वेषः अस्मद्द्वेष्टॄन् [5]सनुतः अन्तर्हितान्[5] अज्ञातचरितानित्यर्थः[6], युयोत अपनयतेत्यर्थः ॥ ६ ॥

**वेङ्कट०** प्र गच्छत यूयम् हे मरुतः! यदा दूरात् तदानीं[7] महत् संवरणीयम् वसु प्रयच्छन्तः हे वासयितारः! संराधनीयम् दूर एव अस्माकं द्वेष्टॄन् अन्तर्हितान् पृथक् कुरुत ॥ ६ ॥

य उ॒दृचि॑ य॒ज्ञे अ॑ध्वरे॒ष्ठा म॒रुद्भ्यो॒ न मानु॑षो॒ ददा॑शत् ।
रे॒वत् स वयो॑ दधते सु॒वीरं॒ स दे॒वाना॒मपि॑ गोपी॒थे अ॑स्तु ॥ ७ ॥

यः । उ॒त्ऽऋ॒चि । य॒ज्ञे । अ॒ध्व॒रे॒ऽस्थाः । म॒रु॒त्ऽभ्यः॑ । न । मानु॑षः । ददा॑शत् ।
रे॒वत् । सः । वयः॑ । द॒ध॒ते॒ । सु॒ऽवीर॑म् । सः । दे॒वाना॑म् । अपि॑ । गो॒ऽपी॒थे । अ॒स्तु॒ ॥ ७ ॥

**उद्गीथ०** यः मानुषः मनुष्यः उदृचि परिसमाप्ते यज्ञे अध्वरेष्ठाः पुनः[8] यज्ञे स्थाता सन् अव्यवच्छिन्नयज्ञसन्तानः[9] सन्नित्यर्थः, मरुद्भ्यः न उपरिष्टादुपचारत्वाद् उपमार्थीयो नकारः। 'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः'[10] (या ७,३१) इति पदपूरणः। मरुद्भ्यः ददाशत् ददाति हवींषि। रेवत्

---

१. यः वि[1]; यं वि[2] अ. २. दग्धाः मूको. ३. °दित्यादिवः वि[1]. ४. प्रबन्धनायाः वि[1] अ[1]. ५-५. नास्ति मूको. ६. °ज्ञानच° मूको. ७. °दाभि यूयं वि[1]; °त्तधाभि यूयं अ[1]. ८. पुनः ··· वि[2]. ९. अयज्ञे व्यव° वि[2]. १०. योगः मूको.

धनवत् सः मनुष्यः वयः अन्नम् सुवीरम् शोभनपुत्रसहितं च दधते धारयति आत्मनि स्वे मरुत्प्रसादात् स्वीकरोतीत्यर्थः। सः एव मनुष्यः देवानाम् स्वभूते गोपीथे अपि सोमपानेऽपि अस्तु। लोडत्र लडर्थे। अस्ति पातृत्वेन[1] भवति। देहपातोत्तरकालं देवो भूत्वा सोमं च पास्यति, देवश्च भविष्यति इत्यर्थः॥ ७॥

**वेङ्कट०** यः संस्थिते यज्ञे अध्वरे स्थितः मरुद्भ्यः च हविः मनुष्यः प्रयच्छति। समुच्चयार्थीयो नकारः। धनयुक्तम् सः अन्नम् धारयति सुपुत्रम्। एवं सति सः अयं मरुद्गणोऽन्येषाम् देवानाम् [2]सोमपाने अपि[2] भवत्विति॥ ७॥

ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः।
ते नोऽवन्तु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः॥ ८॥

ते। हि। यज्ञेषु। यज्ञियासः। ऊमाः। आदित्येन। नाम्ना। शम्ऽभविष्ठाः।
ते। नः। अवन्तु। रथऽतूः। मनीषाम्। महः। च। यामन्। अध्वरे। चकानाः॥ ८॥

**उद्गीथ०** ते मरुतः हि यस्मात् यज्ञेषु निर्धारणे सप्तम्येषा। यष्टव्यानां मध्ये यज्ञियासः यज्ञार्हाः यज्ञसम्पादिनो वा ऊमाः अवितारः स्वभक्तजनस्य आदित्येन नाम्ना, युक्ता इति शेषः, अदितिपुत्रा इत्यनया चाऽऽख्यया समाख्याता इत्यर्थः, शम्भविष्ठाः भक्तजनस्य शं भवन्तीति शंभवा देवाः, तेषां मध्ये अतिशयेन शम्भवाश्च, ईप्सितार्थप्रदानेन सुखकराश्चेत्यर्थः। तस्मात्[3] उक्तगुणयोगकारणात् ते मरुतः नः अस्मान् ईप्सितार्थप्रदानेन अवन्तु रक्षन्तु रथतूः बहुवचनस्य स्थाने व्यत्ययेनेदमेकवचनम्। रथतुरः रथेन गत्वा शत्रूणां हिंसितारः मनीषाम् स्तुतिम् अस्मदीयाम् महः च[4] महच्च[5] यामन् प्रथमैकवचने परतः छान्दसत्वात् नलोपाभावः। याति देवान् प्रतीति याम हविः, तच्च अध्वरे अस्मदीये यज्ञे चकानाः कामयमानाः॥ ८॥

**वेङ्कट०** ते यज्ञेषु यष्टव्याः अवितार[6] आदित्याख्येन नाम्ना अत्यन्तं सुखस्य भावयितारः। ते अस्मान्[7] [8]अवन्तु रथस्य प्रेरकाः[8] स्तुतिम्[9] महः च हविः अध्वरे कामयमानाः गमने॥ ८॥

[10]इति अष्टमाष्टके तृतीयाध्याये एकादशो वर्गः[10]॥

[ ७८ ]

[10]स्यूमरश्मिर्भार्गव ऋषिः। मरुतो देवता। त्रिष्टुप् छन्दः, द्वितीयापञ्चमीषष्ठीसप्तम्यो जगत्यः[10]।

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो३ न यज्ञैः स्वप्नसः।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः॥ १॥

---

१. पात्र° वि[1]. २-२. सोमपाः वि[1]. ३. कस्मा° वि[1]. ४. नास्ति वि[2] अ[1]. ५. °हश्च मूको. ६. आदिता° अ[1]; आधिता° वि[1]. ७. °स्माकं वि[2] अ[1]; °स्माकां वि[1]. ८-८. नास्ति वि[1]. ९. स्तुतिः वि[2] अ[1]; तुतिं वि[1]. १०-१०. नास्ति मूको.

विप्रा॑सः । न । मन्म॑ऽभिः । सु॒ऽआ॒ध्य॑ः । दे॒व॒ऽअ॒व्य॑ः । न । य॒ज्ञैः । सु॒ऽअप्न॑सः ।
राजा॑नः । न । चि॒त्राः । सु॒ऽसं॒दृश॑ः । क्षि॒ती॒नाम् । न । मर्याः॑ । अ॒रे॒पस॑ः ॥ १ ॥

**उद्गीथ०** विप्रासः न मेधाविन इव यथा मेधाविनः स्तोतारः वसिष्ठादय ऋषयः मन्मभिः मननीयैः स्तोमैः आत्मकर्तृकैः सदा युक्ताः स्वाध्यः च शोभना आधीः[1] चिन्तनं येषां ते स्वाध्यः 'भूतानाम् उपकर्तव्यम्' इत्येवं शोभनध्यानयुक्ताश्चेत्यर्थः, एवं मरुतो मेधाभिः स्तोतृकर्तृकाभिः सदा युक्ताः। किञ्च देवाव्यः न देवान् अवन्ति तर्पयन्ति हविर्भिरिति देवाव्यो यजमानाः, ते यथा यज्ञैः स्वप्नसः शोभनकर्माणः, एवं ये मरुतः। किञ्च राजानः न यथा राजानः चित्राः नानामण्डनमण्डितत्वाच्चायनीया वा पूजनीया वा चेत्यर्थः, सुसंदृशः सुष्ठु सन्दर्शनीयाश्च, एवं मरुतः चित्राः मण्डिताः पूजनीयाः सुष्ठु दर्शनीयाश्च। किञ्च क्षितीनाम् न निवासानामिव यथा स्वनिवासानामुपरि मर्याः मनुष्याः अरेपसः अरेपाः अपापाः, एवं मरुतोऽपापाः ॥ १ ॥

**वेङ्कट०** ब्राह्मणाः इव स्तुतिभिः स्वाध्यः, देवानां तर्पयितारः इव यज्ञैः[2] सुकर्माणः, राजानः इव चित्रवर्णाः सुसंदर्शनाः[3], निवासानां स्वामिनो मनुष्याः इव अरेपसः मरुतो विराजन्तीति ॥ १ ॥

> अ॒ग्निर्न ये भ्राज॑सा रु॒क्मव॑क्षसो॒ वाता॑सो॒ न स्व॒युज॑ः स॒द्यऊ॑तयः ।
> प्र॒ज्ञा॒तारो॒ न ज्येष्ठाः॑ सुनी॒तय॑ः सु॒शर्मा॑णो॒ न सोमा॑ ऋ॒तं य॒ते ॥ २ ॥

अ॒ग्निः । न । ये । भ्राज॑सा । रु॒क्मऽव॑क्षसः । वाता॑सः । न । स्व॒ऽयुज॑ः । स॒द्यःऽऊ॑तयः ।
प्र॒ऽज्ञा॒तार॑ः । न । ज्येष्ठाः॑ । सु॒ऽनी॒तय॑ः । सु॒ऽशर्मा॑णः । न । सोमा॑ः । ऋ॒तम् । य॒ते ॥ २ ॥

**उद्गीथ०** अग्निः न यथा अग्निः भ्राजसा[4] दीप्त्या रुक्मवक्षाः[5], एवम् ये मरुतः भ्राजसा दीप्त्या रुक्मवक्षसः रोचिष्णवः। अथवा अग्निरिव मरुतः ये दीप्त्या युक्ता रुक्माख्याभरणोरस्काः, वातासः न वायव इव च ये मरुतः स्वयुजः आत्मनैवाऽऽत्मनः सर्वकार्येषु नियोक्तारः स्वतन्त्रा इत्यर्थः, सद्यऊतयः क्षिप्रगतयश्च, प्रज्ञातारः न यथा च प्रज्ञातारः ज्येष्ठाः अतिशयेन वृद्धाश्च पुरुषाः सुनीतयो भवन्ति, एवं ये मरुतः सुनीतयः भवन्ति, ते मरुतः सुशर्माणः सुसुखाः। किमिव। सोमाः न सोमा इव। कस्मै सुसुखाः। ऋतम् यते यज्ञं कर्तुं गच्छते कुर्वत इत्यर्थः ॥ २ ॥

**वेङ्कट०** अग्निः इव ये दीप्त्या रुक्मालङ्कारकृतवक्षसः, प्रत्यक्षवाता इव च स्वयं युज्यमानाः सद्योगमनाः, प्रज्ञातारः इव श्रेष्ठाः सुनयनाः, सुसुखाः इव च सोमाः यूयं यज्ञं गच्छते यजमानाय ॥ २ ॥

> वाता॑सो॒ न ये धुन॑यो जिग॒त्नवो॑ऽग्नी॒नां न जि॒ह्वा वि॑रो॒किण॑ः ।
> वर्म॑ण्वन्तो॒ न यो॒धाः शिमी॑वन्तः पितॄ॒णां न शंसाः॑ सु॒रा॒तय॑ः ॥ ३ ॥

---

१. आधीः आध्यः मूको. २. यज्ञे वि[2] अ[1]. ३. सुसंदृशाना मूको. ४. °जसो वि[1]; °जस्यो य वि[2] अ[1]. ५. °क्षसः मूको.

वातासः । न । ये । धुनयः । जिगत्नवः । अग्नीनाम् । न । जिह्वाः । विऽरोकिणः ।
वर्मण्ऽवन्तः । न । योधाः । शिमीऽवन्तः । पितॄणाम् । न । शंसाः । सुऽरातयः ॥ ३ ॥

**उद्गीथ०** वातासः न वाता इव ये मरुतः धुनयः कम्पयितारः सर्वस्य जिगत्नवः गन्तारश्च सर्वत्र, अग्नीनाम् न यथा अग्नीनाम् जिह्वाः ज्वालालक्षणाः विरोकिणः विरोचनशीलाः, एवं ये मरुतो विरोचनशीलाः, वर्मण्वन्तः न यथा वर्मण्वन्तः सन्नद्धकवचाः योधाः योद्धारः शिमीवन्तः शत्रुवधकर्मवन्तः, एवं ये मरुतः, ते सुरातयः शोभनदानाः। किमिव । पितॄणाम् न शंसाः यथा अस्मत्पितॄणां स्तुतयः शोभनदानाः, एवम् ॥ ३ ॥

**वेङ्कट०** वाताः इव ये कम्पयितारः गन्तारः, अग्नीनाम् इव च ज्वालाः विरोचनशीलाः, कवचवन्तः इव योधाः कर्मवन्तः, जनकानाम् इव वाचः सुदानाः ॥ ३ ॥

रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥ ४ ॥

रथानाम् । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः ।
वरेऽयवः । न । मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कम् । न । सुऽस्तुभः ॥ ४ ॥

**उद्गीथ०** रथानाम् न यथा रथानाम् अराः सनाभयः समाननहनाः समानबन्धना एकेन नाभिकाष्ठेन एकेन प्रतिकाष्ठेन बद्धाः, एवम् ये मरुतः समानबन्धनाः एकपितृकाश्चेत्यर्थः। किञ्च जिगीवांसः न यथा शत्रून् जितवन्तः केचित् राजानः शूराः अभिद्यवः अभिगतैश्वर्यदीप्तयश्च भवन्ति, एवं ये मरुतः। किञ्च वरेयवः न यथा कन्याया वरयितारः मर्याः मनुष्याः केचित् घृतप्रुषः घृतस्योदकस्य सेक्तारः भवन्ति, एवं ये मरुतः वृष्ट्युदकसेक्तारः, ते मरुतः अभिस्वर्तारः 'स्वृ शब्दोपतापयोः'। युद्धार्थं शत्रूणाम् अभिशब्दयितारः। किमिव। अर्कम् न यथा अर्कं देवम् सुष्टुभः सुष्टुतयः स्तोतारः स्तुतिभिः अभिष्टुवन्ति, एवम् ॥ ४ ॥

**वेङ्कट०** रथचक्राणाम् इव अराः ये सनाभयः[1] भवन्ति, जयशीलाः इव शूराः अभिगतदीप्तयः, वृतं वरं परस्मै प्रदातुमिच्छन्तः इव मनुष्याः उदकेन सिञ्चन्तः। उदकपूर्वाणि[2] हि भवन्ति दानानि। अर्कम् स्तोत्रम् अभिस्वर्तारः वन्दिनः इव सुशब्दाः ॥ ४ ॥

अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ॥ ५ ॥

अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः ।
आपः । न । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अङ्गिरसः । न । सामऽभिः ॥५॥

**उद्गीथ०** अश्वासः न अश्वा इव ये मरुतः ज्येष्ठासः अतिशयेन प्रशस्याः आशवः शीघ्राश्च। किञ्च

---

१. नाभयः वि[1]. २. °पूर्णानि वि[2] अ[1].

दिधिषवः न रथ्यः सुदानवः नशब्दः रथ्यःशब्दाद्[1] उत्तरो द्रष्टव्यः। रथ्यो न यथा रथस्य वोढारः अश्वाः दिधिषवः धारयितारः रथस्य सुदानवः शोभनयोग्याशनदानाश्च, एवं ये मरुतः सर्वस्य स्थावरजङ्गमस्य वृष्टिद्वारेण धारयितारः शोभनहविर्दानाश्च शोभनधनदाना वा। किञ्च आपः न यथा आपः वृष्टिलक्षणाः निम्नैः अन्तरिक्षप्रदेशैः उदभिः उदकैः नद्यादिगतैः निमित्तभूतैः मेघं प्रति [2]गच्छन्ति, एवम्[2] जिगत्नवः गन्तारस्ते मरुतः। तथा[3] विश्वरूपाः अङ्गिरसः न [2]सामभिः नानारूपास्ते मरुतः[2] अङ्गिरस इव सामगाः ॥ ५ ॥

**वेङ्कट०** अश्वाः इव ये प्रशस्यतमाः शीघ्रगमनाः[4], धारका इव च[5] धनानाम् रथ्यः सुदानाः, आपः इव च प्रवणैरुदकैः सह गच्छन्तः, नानारूपाः सामानि गायन्तः अङ्गिरसः इव स्वनैः ॥ ५ ॥

[2]इति अष्टमाष्टके तृतीयाध्याये द्वादशो वर्गः[2] ॥

**ग्रावा॑णो॒ न सू॒रय॒: सिन्धु॑मातर आदर्दि॒रासो॒ अद्र॑यो॒ न वि॒श्वहा॑ ।**
**शि॒शू॒ला न क्री॒ळय॑: सु॒मात॑रो महाग्रा॒मो न याम॑न्नु॒त त्वि॒षा ॥ ६ ॥**

ग्रावा॑णः । न । सू॒रय॑: । सिन्धु॑ऽमातरः । आ॒ऽद॒र्दि॒रास॑: । अद्र॑यः । न । वि॒श्वहा॑ ।
शि॒शू॒ला॑: । न । क्री॒ळय॑: । सु॒ऽमा॒तर॑: । म॒हा॒ऽग्रा॒मः । न । याम॑न् । उ॒त । त्वि॒षा ॥ ६ ॥

**उद्गीथ०** ग्रावाणः न सोमाभिषवणपाषाणाः इव मरुतः सूरयः सूरिः स्तोता। कृत्प्रत्ययोऽत्र कर्मणि द्रष्टव्यः। स्तुत्या इत्यर्थः। सिन्धुमातरः स्यन्दनस्य सोमस्य निर्मातारश्च वृष्ट्यादिद्वारेण। अथवा सूरिशब्दोऽत्र मेधाविवचनः मेधाविनः एव[6] स्तोतारो भवन्तीति। एवं च योजना कार्या—यथा ग्रावाणः सिन्धुमातरः, एवं च सूरयो मेधाविनो मरुतः सिन्धुमातर इति। किञ्च आदर्दिरासः शत्रूणाम् आदरयितारः मरुतः विश्वहा सर्वदा। किमिव। अद्रयः न वज्रा इव। किञ्च शिशूलाः न यथा शिशुमत्यः शिशूनामादाच्यो गृहीतबालकाः सुमातरः शोभनमातरः स्नेहवत्यः शिशुभिः सह क्रीडनशीलाः, एवं मरुतः क्रीळयः क्रीडनशीलाः मित्रत्वात्[7]। किञ्च महाग्रामः न यथा महानग्निसंघातः यामन् यामनि देवान् प्रति यातरि गन्तरि यज्ञे दीप्त्या युक्तः, एवं मरुतः उत त्विषा दीप्त्याऽपि, युक्ता इति शेषः ॥ ६ ॥

**वेङ्कट०** ग्रावाणः इव अभिषवप्रवृत्ताः शब्दयन्तः सूरयः नदीमातृकाः। अद्भ्यो हि मरुत उत्पद्यन्ते। आदरणशीलाः आयुधानि इव सर्वदा[8]। शिशवः इव क्रीडनशीलाः सुमातृका इत्युक्तम्। महासङ्घः इव गमनेऽपि दीप्त्या ॥ ६ ॥

**उ॒षसां॒ न के॒तवो॑ऽध्व॒र॒श्रिय॑: शुभं॒यवो॒ नाञ्जि॒भिर्व्य॑श्वितन् ।**
**सिन्ध॑वो॒ न य॒यियो॒ भ्राज॑दृष्टयः परा॒वतो॒ न योज॑नानि ममिरे ॥ ७ ॥**

उ॒षसा॑म् । न । के॒तव॑: । अ॒ध्व॒र॒ऽश्रिय॑: । शु॒भ॒म्ऽयव॑: । न । अ॒ञ्जिऽभि॑: । वि । अ॒श्वि॒त॒न् ।
सिन्ध॑वः । न । य॒यिय॑: । भ्राज॑त्ऽऋष्टयः । प॒रा॒ऽवत॑: । न । योज॑नानि । म॒मि॒रे ॥ ७ ॥

---

१. रथ्यश० मूको. २-२. नास्ति मूको. ३. नास्ति मूको. ४. शीघ्रा वि[1]. ५. नास्ति वि[1]. ६. एवं मूको. ७. निमित्तत्वाव् मूको. ८. 'वंशा वि[2] अ[1].

**उद्गीथ०** उषसाम् न यथा उषसाम् केतवः प्रज्ञाः अध्वरश्रियः यज्ञानां सेवित्र्यः, एवं मरुतः[1] यज्ञानां सेवितारः। किञ्च शुभंयवः न 'शुभम्' (निघ १,१२) इत्युदकनाम। यथा [2]उदककामाः जलाशयान् प्रति गच्छन्ति, एवं मरुतः अञ्जिभिः वि अश्वितन्[2] विविधं विशेषेण वा गच्छन्ति यज्ञान् प्रति। किंच सिन्धवः न यथा सिन्धुनामानो[3] नदीविशेषाः ययियः समुद्रं प्रति यानशीलाः, एवं मरुतः ययियः [4]यज्ञं प्रति यानशीलाः[4]। किञ्च भ्राजदृष्टयः दीप्तायुधा दीप्तालंकारा वा। किञ्च परावतः न 'परावतः' (निघ ३,२६) इति दूरनाम। दूरगामिनश्चात्र दूरशब्देनोच्यन्ते। यथा परावतः दूरगामिनः केचित् लेखभार्यादयः गन्तव्यस्याध्वनः योजनानि मिन्वन्ति सदा निवृत्त्यर्थम्, एवं मरुतः यज्ञाध्वनः योजनानि मिन्वन्ति[5] सदा निवृत्त्यर्थम्। हविरादानार्थं[6] यज्ञान् प्रति सदा गच्छन्तीति ॥ ७ ॥

**वेङ्कट०** उषसाम् इव रश्मयः यज्ञस्य सेवितारः। कल्याणकामाः इव वरादयः आभरणैः दीप्यन्ते। सिन्धवः इव गमनशीलाः दीप्यमानायुधा बडबा इव अध्वनः[7] परिच्छिन्दन्ति ॥ ७ ॥

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन् मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ॥ ८ ॥

सुऽभागान् । नः । देवाः । कृणुत । सुऽरत्नान् । अस्मान् । स्तोतॄन् । मरुतः । वृवृधानाः ।
अधि । स्तोत्रस्य । सख्यस्य । गात । सनात् । हि । वः । रत्नऽधेयानि । सन्ति ॥ ८ ॥

**उद्गीथ०** तृतीये पादे व्याख्याप्रारम्भः क्रियते अर्थस्य सुखप्रतिपत्त्यर्थम्। अधि स्तोत्रस्य सख्यस्य गात द्वितीयार्थे षष्ठी। अधि गात अधिगच्छत शृणुतेत्यर्थः, स्तोत्रम् अस्मदीयं सख्यं सखिकर्मभूतं सखिभिः अस्माभिः कृतमित्यर्थः। श्रुत्वा च वावृधानाः सन्तः सुभागान् शोभनस्वर्गविभागान्[8] स्वर्गभाज इत्यर्थः, सुरत्नान् सुधनान् नः अस्मान् स्तोतॄन् कृणुत कुरुत यूयं हे देवाः! मरुतः!। कस्मादेवं[9] ब्रूमः। हि यस्मात् सनात् चिरन्तनाद् निसर्गत एव प्रवृत्तानीत्यर्थः, वः युष्माकं मरुताम् रत्नधेयानि रमणीयदृष्टादृष्टफलदानानि सन्ति विद्यन्ते देवत्वेन, अत एवं ब्रूमः ॥ ८ ॥

**वेङ्कट०** सुधनान् अस्मान् देवाः! कृणुत, सुरत्नान् च अस्मान् मरुतः[10]! वर्धमानाः। अधि गच्छत स्तोत्रस्यार्थं[11] सख्यार्थं च। चिरादेवारभ्य वः रत्नदानानि[12] सन्ति इति ॥ ८ ॥

[13]इति अष्टमाष्टके तृतीयाध्याये त्रयोदशो वर्गः[13] ॥

[ ७९ ]

[13]सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वाजम्भरो वा ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[13]।

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ १ ॥

---

१. मरुतां वि[1] अ; मरुमतां वि[2]. २-२. °कामाः स्वन्तर्गति मूको. ३. °नामा मूको. ४-४. यज्ञप्रायनशीलाः मूको. ५. मन्वन्ति मूको. ६. °रदाना° वि[1,2]; नास्ति अ. ७. °ध्वानः वि[1]. ८. °विभान् मूको. ९. तस्मा° वि[2] अ. १०. °रुतो वा वि[2] अ[1]. ११. °त्रार्थं वि[1]. १२. °दारासि वि[1]. १३-१३. नास्ति मूको.

अपश्यम् । अस्य । महतः । महिऽत्वम् । अमर्त्यस्य । मर्त्यासु । विक्षु ।
नाना । हनू इति । विभृते इति विऽभृते । सम् । भरेते इति । [1]असिन्वती इति । बप्सती इति । भूरि । अत्तः[1] ॥

**उद्गीथ०** उत्तरे सूक्ते 'अपश्यमस्य', 'अग्निः सप्तिम्' इत्येते सप्तर्चे आग्नेये अग्निर्वैश्वानरो वा, सौचीको वा, अग्निरेव वा, सप्तिर्वाजम्भरो वा ददर्श। अपश्यम् अहं दृष्टवानस्मि अस्य अग्नेः महतः महित्वम् माहात्म्यम् अमर्त्यस्य अमरणधर्मणः मर्त्यासु मरणधर्मसु विक्षु मनुष्यजातिषु, वर्तमानस्येति शेषः। ततोऽमर्त्य उच्यते। नाना नानाभूते पृथग्भूते हनू ज्वालाख्ये[2] विभृते विहृते दूरं नीते च सत्यावित्यर्थः[3], सम् भरेते संहरेते एकीभवत इत्यर्थः। किञ्च असिन्वती असङ्खादन्त्यौ चेत्यर्थः, बप्सती भक्षयन्त्यौ भूरि बहु हविर्जातम् अत्तः भक्षयतः ॥ १ ॥

**वेङ्कट०** अग्निः सौचीकः, अग्निर्वा वैश्वानरः, सप्तिर्वा वाजम्भरः। अपश्यम् अस्य अग्नेः महतः दावभूतस्य महित्वम् अमर्त्यस्य मर्त्यासु विक्षु [4]वैश्वानररूपेण वर्तमानस्य[4]। नाना विभृते पृथग्भूते[5] हनू सम्-भरतः दन्तैः। असङ्खादन्त्यौ भक्षयन्त्यौ भूरि काष्ठम् अरण्यस्थं भक्षयतः इत्यरण्यस्थं काष्ठम् उपभतो ज्वालया परिवेष्टयन्तमाह ॥ १ ॥

गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ।
अत्राण्यस्मै पड्भिः सं भरन्त्युत्तानहस्ता नमसाधि विक्षु ॥ २ ॥

गुहा । शिरः । निऽहितम् । ऋधक् । अक्षी इति । असिन्वन् । अत्ति । जिह्वया । वनानि ।
अत्राणि । अस्मै । पट्ऽभिः । सम् । भरन्ति । उत्तानऽहस्ताः । नमसा । अधि । विक्षु ॥ २ ॥

**उद्गीथ०** गुहा गुहायां गूढे संवृते आहवनीयकुण्डे शिरः आहवनीयलक्षणम् अस्य अग्नेः स्वभूतम् निहितम् अवस्थापितं सर्वयजमानैः कर्मार्थम्। ऋधक् अक्षी, अक्षी अक्षिणी च अस्याग्नेः स्वभूते गार्हपत्यान्वाहार्यपचनलक्षणे स्वकुण्डयोः गूढयोः निहिते कर्मार्थं सर्वयजमानैः इति योज्यम् अत्रापि पूर्ववत्। किञ्च एवमुक्तेन प्रकारेण निहितशिरोऽक्षः सन् असिन्वन् असङ्खादन् उच्चैरचर्वयन् अत्ति भक्षयति जिह्वया ज्वालाख्यया वनानि काष्ठानि समिदादीनि। किञ्च अत्राणि सोमपात्राणि ग्रहचमसादीनि अस्मै अस्याग्नेः अर्थाय पड्भिः सोमपानैः, युक्तानीति शेषः, स्पाशनैर्वा[6] ( तु. या ५, ३ ) स्तुतिवर्धनैर्वा[7] युक्तानीत्यर्थः, सम् भरन्ति संहरन्ति प्रापयन्ति आहवनीयं प्रति होतुं यजमानाः। कीदृशाः। उत्तानहस्ताः उत्क्षिप्तहस्ताः कृताञ्जलिपुटा इत्यर्थः। नमसा सवनीयपुरोडाशाद्यन्नेन स्तुत्या वा सह अधि विक्षु आधिपत्येन मनुष्येषु [8]वर्तमान-स्वाम्या इत्यर्थः[8] ॥ २ ॥

**वेङ्कट०** गुहायाम् शिरः निहितम् मनुष्योदरेषु [9]वर्तते अग्नेः[9]। [10]अस्य अक्षिणी[10] पृथक् निहिते चन्द्रसूर्यौ।

---

१-१. निगमोऽयं या. ( ६,४ ) द्र. २. ज्वालाख्ये मूको. ३. सतीत्यर्थः मूको. ४-४. नास्ति वि[2] अ[1]; वैश्वानरवर्तमानस्य वि[1]. ५. तस्यते वि[2] अ[1]. ६. स्पार्श° वि[1,2]. ७. स्तुतिर्व° वि[1] अ. ८-८. °स्वाम्येत्यर्थः मूको. ९-९. वर्तनेन वि[1,2]; वर्तमानेन अ[1]. १०-१०. ते मूको.

सोऽयं दन्तैः असिन्वन् अत्ति जिह्वया काष्ठानि दावभूतः । अस्मै हवींषि पादैरभिगत्य[1] ऋत्विजः सम् भरन्ति पात्रधारणार्थम् उत्तानहस्ताः नमस्कारेण सह यज्ञे मनुष्येषु वर्तमानायेति ॥ २ ॥

प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ ३ ॥

प्र । मातुः । प्रऽतरम् । गुह्यम् । इच्छन् । कुमारः । न । वीरुधः । सर्पत् । उर्वीः ।
[2]ससम् । न । पक्वम् । अविदत् । शुचन्तम्[2] । रिरिह्वांसम् । रिपः । उपऽस्थे । अन्तरिति ॥३॥

उद्गीथ० स्वस्य मातुः प्रतरम् प्रकृष्टतरम् गुह्यम् गूहनीयं [3]संवरणार्हं स्तनप्रदेशं[3] स्तन्यं पातुम् इच्छन् कुमारः न यथा कुमारः प्र सर्पत् उपसर्पति, एवं दावरूपः[4] अग्निः कुमारस्थानीयः पृथिव्यवयवनिर्झरादिगुह्यप्रदेशस्थाः वीरुधः ओषधीर्दग्धुम् इच्छन् उपसर्पति उर्वीः[5] । तत्र निर्झरादिप्रदेशे ओषधीर्दग्धुम् उपसृप्तम् ससम् न पक्वम्[6] यथैकदा अनित्यदर्शनत्वात् स्वपनशीलम् अष्टौ मासान्[7] निर्व्यापारं[8] माध्यमिकं ज्योतिः विद्युदाख्यं पक्वं सत्[9] वर्षास्वभिव्यक्तं सत् अन्तरिक्षस्य मध्ये विद्योतमानं सदित्यर्थः, अविदत् सर्वो जनो वेत्ति चक्षुषा जानाति पश्यतीत्यर्थः, तथा शुचन्तम् दीप्यमानं दावरूपमग्निम् रिरिह्वांसम् ओषधीरास्वादयन्तं च सर्वो जनः पश्यति । क्व । उच्यते — रिपः उपस्थे रिपः[8] पृथिव्यवयवभूतस्य उपस्थे षष्ठ्यर्थे सप्तमीयम् । उपस्थस्य । उपगम्य[10] ओषधयो[11] वनस्पत्यादयश्च यत्र निर्झरादिप्रदेशे[12] तिष्ठन्ति[13] स उपस्थः[14] । निर्झरादिप्रदेशस्य अन्तः मध्ये ॥ ३ ॥

वेङ्कट० प्र सर्पति पृथिव्याः अत्यन्तम् गुह्यम् वीरुधः मूलम् उर्वीः वीरुधः । सोऽयम् अन्नम् इव पक्वम् विन्दति[15] शुष्कं वृक्षम् पृथिव्याः उपस्थे अन्तः रिरिह्वांसम् आस्वादयन्तं मूलैः पृथिवीम् ॥ ३ ॥

तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति ।
नाहं देवस्य मर्त्यश्चिकेताग्निरङ्ग विचेताः स प्रचेताः ॥ ४ ॥

तत् । वाम् । ऋतम् । रोदसी इति । प्र । ब्रवीमि । जायमानः । मातरा । गर्भः । अत्ति ।
न । अहम् । देवस्य । मर्त्यः । चिकेत । अग्निः । अङ्ग । विऽचेताः । सः । प्रऽचेताः ॥ ४ ॥

उद्गीथ० रोदसी! द्यावापृथिव्यौ! वाम् युवाम् अहम् प्र ब्रवीमि कथयामि तत् सामर्थ्यम् अग्नेस्सम्बन्धि । कीदृशम् । ऋतम् सत्यम् अविसंवादि । तदुच्यते — जायमानः अरणीभ्याम् उत्पद्यमानः[16] गर्भः [17]तद्गर्भभूतो यः[17] मातरा स्वमातृभूते अरणी अत्ति भक्षयति दहतीत्यर्थः । किञ्च 'नाहं देवस्य' इत्यादि । न चिकेत अहम् मर्त्यः तत्त्वतो न जानामि अहं मनुष्यः देवस्य अग्नेः, स्वरूपम्

१. वन्दैर° वि[1] अ[1]; °रभिगम्य वि[1]. २-२. या. (५,३) व्याख्यानं द्र. ३-३. तवहरणहस्तनप्र° मूको. ४. °रूपम् मूको. ५. °र्वीः तद्वानग्निः मूको. ६. यस्वम् मूको. ७. मासा मूको. ८. निव्या° मूको. ९. सं मूको. १०. °गम्या मूको. ११. ओषधीः मूको. १२. °राः प्र° मूको. १३. तिष्ठति मूको. १४. नास्ति मूको. १५. °न्दन्ति वि[2] अ[1]. १६. उत्पा° वि[2] अ. १७-१७. तत्संभूतोः वि[1]; °भूतयोः वि[2] अ.

इति शेषः। कस्तर्हि जानाति। उच्यते—अग्निः अङ्ग विचेताः अग्निरेव क्षिप्रं स्वरूपस्य विज्ञाता, स्वरूपं जानातीत्यर्थः। कस्मात्। यतः सः अग्नि. प्रचेताः प्रकृष्टज्ञानः सर्वज्ञ इत्यर्थः ॥ ४ ॥

**वेङ्कट०** तत् वाम् सत्यम् हे द्यावापृथिव्यौ! प्र ब्रवीमि—जायमानः एव कश्चित् पुत्रः मातरौ भक्षयतीति काष्ठयोर्जायमानं दावाग्निमाह। न अहम् देवस्य[1] मर्त्यः जानामि वैश्वानरमित्थं बहुधा निविष्टम्। सोऽयम् अग्निः अङ्ग विविधज्ञानः, सः प्रकृष्टज्ञानश्च[2] ॥ ४ ॥

**यो अ॑स्मा अन्नं॑ तृ॒ष्वा॒३॒॑दधा॒त्याज्यै॑र्घृ॒तैर्जु॒होति॒ पुष्य॑ति ।**
**तस्मै॑ स॒हस्र॑म॒क्षभि॒र्वि च॒क्षेऽग्ने॑ वि॒श्वत॑ः प्र॒त्यङ्ङ॑सि॒ त्वम् ॥ ५ ॥**

यः । अ॒स्मै॒ । अन्न॑म् । तृ॒षु । आ॒ऽदधा॑ति । आज्यै॑ः । घृ॒तैः । जु॒होति॑ । पुष्य॑ति ।
तस्मै॑ । स॒हस्र॑म् । अ॒क्षऽभि॑ः । वि । च॒क्षे॒ । अग्ने॑ । वि॒श्वत॑ः । प्र॒त्यङ् । अ॒सि॒ । त्वम् ॥ ५ ॥

**उद्गीथ०** यः यजमानमनुष्यः अस्मै तुभ्यम् अग्नये अन्नम् हविराख्यम् तृषु क्षिप्रं सततम् यथाकालमित्यर्थः, आ दधाति मर्यादया विविधं वा ददाति, आज्यैः इष्टिपशुकर्माङ्गभूतैः घृतैः च सोमयागाङ्गभूतैः जुहोति च, एनमग्निम् पुष्यति पुष्णाति. च[3] स्तुतिभिः, तस्मै यजमानाय, फलं दातुमिति शेषः, सहस्रम् अक्षभिः सहस्रेण अक्षिभिरित्यर्थः, वि चक्षे विविधं पश्यसि पर्यालोचयसि, मनसा महताऽऽदरेण दृष्टादृष्टफलं दातुं प्रयतसे त्वमित्यर्थः[4]। कस्माद्[5] एवमुच्यसे। यतः हे अग्ने! विश्वतः विश्वान् सर्वान् यजमानमनुष्यान् प्रति[6] प्रत्यङ् प्रत्यञ्चिता[7] अनुग्रहबुद्ध्या प्रतिपत्ता असि भवसि त्वम् ॥ ५ ॥

**वेङ्कट०** यः अस्मै[8] अन्नम् क्षिप्रम् आ दधाति आज्यैः विलीनैः अविलीनैश्च घृतैः जुहोति, पुष्णाति चैनं काष्ठैः, तम् सहस्रैः तेजोभिः अग्निः वि पश्यति। सः त्वम् अग्ने! दीप्तः[9] सर्वतः [10]प्रत्यङ् असि[10] छायावर्जितः ॥ ५ ॥

**किं दे॒वेषु॒ त्यज॒ एन॑श्चकर्थाग्ने॑ पृ॒च्छामि॒ नु त्वाम॑विद्वान् ।**
**अक्री॑ळ॒न् क्रीळ॒न् हरि॒रत्त॑वे॒ऽद॒न् वि प॑र्व॒शश्च॑कर्त॒ गामि॑वा॒सिः ॥ ६ ॥**

किम् । दे॒वेषु॑ । त्यज॑ः । एन॑ः । च॒कर्थ॑ । अग्ने॑ । पृ॒च्छामि॑ । नु । त्वाम् । अवि॑द्वान् ।
अक्री॑ळन् । क्रीळ॑न् । हरि॑ः । अत्त॑वे । अ॒दन् । वि । प॒र्व॒ऽशः । च॒क॒र्त॒ । गाम्ऽइ॑व । अ॒सिः ॥ ६ ॥

**उद्गीथ०** [11]सौचीकोऽग्नीनामन्यतमः, तदभिप्रायेण[12] अयं प्रश्नः, देवयागार्थं चिरादागतस्य अग्नेः उपालम्भनाभिप्रायेण[12] वा। किम् किमर्थम् देवेषु त्यजः क्रोधम् एनः एनोनिमित्तं पापनिमित्तं[13] चकर्थ कृतवानसि

---

१. देव वि[२] अ[१]. २. °ष्टकामश्च वि[२]. ३. नास्ति मूको. ४. इत्थमि° मूको. ५. तस्माद् मूको. ६. नास्ति त्रि[२]. ७. त्यञ्चिता वि[२]; त्रुटितम् वि[२] अ. ८. °स्मान् वि[२] अ[१]. ९. °प्तं वि[२] अ[१]; दीप्त वि[१]. १०-१०. नास्ति वि[२] अ[१]; प्रत्याद्भवसि वि[१]. ११-११. °ग्नीनामभि° मूको. १२. °म्भाभि° वि[१]. १३. °त्तं कथं मूको.

त्वम्, येन कारणेन देवानां हविर्वहनं परित्यज्य नष्टवानसीत्यभिप्रायः। हे[1] अग्ने! एतदहम् त्वाम् पृच्छामि नु क्षिप्रम् महता आदरेणेत्यर्थः, अविद्वान् अजानन् अशाठ्येनेत्यर्थः। कस्मादेवं पृच्छामि। यस्मात् अक्रीळन् विषयेन्द्रियक्रीडनवर्जितः जितेन्द्रियः सन्नित्यर्थः, क्रीळन् देवयागकर्मणि क्रीडन् परया प्रीत्या देवयागकर्माणि कुर्वंश्च सन्नित्यर्थः, हरिः[2] हविर्हरणशीलश्च [3]सन् देवान् प्रति हविःप्रापणशीलश्च[3] सन्नित्यर्थः, अत्तवे अत्तुं देवानां भक्षार्थम् अदन् भक्षयन् देवपितृमनुष्यभोजी च सन्नित्यर्थः। वि चकर्त विकृत्तवानहं विच्छिन्नवानस्म्यहं सोमम्। कथम्। पर्वशः पर्वणि-पर्वणि। किमिव। गाम् इव असिः यथा [4]गवादिपशून् अस्याद्यायुधं[4] छिनत्ति, एवम्। यतः सोमाभिषवं देवार्थं कृतवान् अस्मि, अतः कारणात् एवं पृच्छामीत्यर्थः॥ ६॥

**वेङ्कट०** किमर्थम् त्वम् देवेषु पापम् क्रोधम् चकर्थ अग्ने! पृच्छामि क्षिप्रम् अहम् त्वाम् अजानन्निति खाण्डवं दहन्तमग्निं पृच्छामि। सोऽयम् अग्निः अगच्छन् गच्छंश्च हरितवर्णः[5] अत्तव्यम् अदन् काष्ठानि पर्वशः वि कृन्तति गाम् इव असिः॥ ६॥

विषू॑चो॒ अश्वा॑न् युयुजे व॒ने॒जा ऋजी॑तिभी र॒श॒नाभि॑र्गृभी॒तान् ।
च॒क्ष॒दे मि॒त्रो वसु॑भिः सु॒जा॑तः॒ समा॑नृधे॒ पर्व॑भिर्वावृधा॒नः ॥ ७ ॥

विषू॑चः। अश्वा॑न्। यु॒यु॒जे॒। व॒ने॒ऽजाः। ऋजी॑तिऽभिः। र॒श॒नाभि॑ः। गृ॒भी॒तान्।
च॒क्ष॒दे॒। मि॒त्रः। वसु॑ऽभिः। सु॒ऽजा॑तः। सम्। आ॒नृ॒धे॒। पर्व॑ऽभिः। व॒वृ॒धा॒नः॥ ७॥

**उद्गीथ०** विषूचः विविधगमनान् अश्वान् रोहिदाख्यान् युयुजे स्वरथे सदा नियुङ्क्ते वनेजाः वनं काष्ठम् उदकं मेघोदरगतं तत्र पार्थिवविद्युदात्मना जायते इति वनेजाः अग्निः उदककाष्ठजन्मा ऋजीतिभिः ऋजुगमयित्रीभिः रशनाभिः प्रग्रहरज्जुभिः गृभीतान् गृहीतान्। युक्त्वाऽश्वान् रथे तेन अश्वयुक्तेन रथेन गत्वा चक्षदे चदिर्हिंसार्थः। हिनस्ति देवशत्रून् असुरादीन् मित्रः भक्तजनस्निग्धः अग्निः। अथवा मित्रः आदित्यः, तत्सदृशोऽग्निः। वसुभिः देवैः सुजातः सुपुष्टः शोभनजन्मा वा अग्निः। हिंसित्वा च शत्रून् सम् आनृधे सर्वप्रकारया वृद्ध्या संवर्धते पर्वभिः पर्वादियागकालेष्वित्यर्थः, वावृधानः स्तुतिभिः हविर्भिश्च सर्वयजमानैः[6] वर्ध्यमान[7] इत्यर्थः॥ ७॥

**वेङ्कट०** विष्वगञ्चनान् अश्वान् युङ्क्ते अरण्ये प्रादुर्भूतः ऋज्वीभिः रशनाभिः सङ्गृहीतान्। शकलीकरोति मित्रभूतः वसुभिः रश्मिभिः सुजातः, समृद्धश्च भवति काष्ठपर्वणि[8] वर्धमानः॥ ७॥

[9]इति अष्टमाष्टके तृतीयाध्याये चतुर्दशो वर्गः[9]॥

[ ८० ]

[1]सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वाजम्भरो वा ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[1]।

अ॒ग्निः सप्तिं॑ वाजं॒भरं॑ ददात्य॒ग्निर्वी॒रं श्रुत्यं॑ कर्म॒निःष्ठाम् ।
अ॒ग्नी रोद॑सी॒ वि च॑रत् सम॒ञ्जन्न॒ग्निर्नारीं॑ वी॒रकु॑क्षिं॒ पुरं॑धिम् ॥ १ ॥

---

१. अहं वि[1,2]; मह अ. २. नास्ति मूको. ३-३. नास्ति वि[1]. ४-४. °दिवश्यातस्याद्य(युधान् वि[2] अ; °दिपश्वानस्या° वि[1]. ५. हरिवर्णः मूको. ६. सर्व चाजाय° वि[1]; सर्वै चाजमानैः वि[2] अ. ७. मथ्यमान मूको. ८. काष्ठा सर्वभिः वि[1]. ९-९. नास्ति मूको.

अग्निः । सप्तिम् । वाजम्ऽभरम् । ददाति । अग्निः । वीरम् । श्रुत्यम् । कर्मनिःऽस्थाम् ।
अग्निः । रोदसी इति । वि । चरत् । सम्ऽअञ्जन् । अग्निः । नारीम् । वीरऽकुक्षिम् । पुरम्ऽधिम् ॥

**उद्गीथ०** अग्निः सप्तिम् अश्वम् । कीदृशम् । वाजंभरम् बलस्य धारयितारं बलवन्तमित्यर्थः । ददाति भक्तजनाय । अग्निः एव वीरम् पुत्रं च ददाति । कीदृशम् । श्रुत्यम् श्रवणीयं कीर्तिमन्तमित्यर्थः, कर्मनिःष्ठाम् कर्मणि कर्तव्ये कर्तृत्वेन नियमेन स्थातारम् विहितानुष्ठायिनमित्यर्थः । अग्निः एव नारीम् स्त्रियं च भार्यार्थं ददाति । कीदृशीम् । वीरकुक्षिम् पुत्रजननीमित्यर्थः, पुरन्धिम् च बहुप्रज्ञां बहुकर्माणं वा । किञ्च अग्निः रोदसी द्यावापृथिव्यौ वि चरत् हविर्वहनदेवाह्वानाद्यर्थं सदा प्रवर्तत इत्यर्थः, समञ्जन् प्रकाशयन्नित्यर्थः, देवैः सङ्गच्छमानो वा ॥१॥

**वेङ्कट०** अग्निः अश्वम् अन्नस्याहर्तारम् प्रयच्छति, [1]अग्निः पुत्रम् पितुर्व्यपदेशकम् यज्ञनिष्ठम् । अग्निः द्यावापृथिव्यौ वि चरति† कामैः समञ्जन् । अग्निः नारीम् वीरप्रसावककुक्षिम् पुरन्धिम् च करोति । पुरन्धिर्बहुधिर्बहुप्रज्ञेति[1] ॥ १ ॥

अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आ विवेश ।
अग्निरेकं चोदयत् समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥

अग्नेः । अप्नसः । सम्ऽइत् । अस्तु । भद्रा । अग्निः । मही इति । रोदसी इति । आ । विवेश ।
अग्निः । एकम् । चोदयत् । समत्ऽसु । अग्निः । वृत्राणि । दयते । पुरूणि ॥ २ ॥

**उद्गीथ०** अग्नेः अप्नसः हविर्वहनदेवाह्वानादिकर्मवतः समित् अस्तु भवतु भद्रा भजनीया यथोक्तलक्षणयुक्तत्वात् सम्भजनीया । अग्निः मही महत्यौ रोदसी द्यावापृथिव्यौ आ विवेश आविशति [2]सह ते[2] व्याप्नोति इत्यर्थः । अग्निः एकम् अपि मनुष्यम् अनुग्राह्यं शौर्यवीर्यविज्ञानादिवर्धनेन अनुगृह्णन्[3] चोदयत् चोदयति शत्रुजये प्रेरयति समत्सु सङ्ग्रामेषु । प्रचोद्य च अग्निः तस्य सहायो भूत्वा वृत्राणि शत्रुजनान् दयते हिनस्ति पुरूणि बहूनि ॥ २ ॥

**वेङ्कट०** अग्नेः [4]कर्मवतः समित् अस्तु भद्रा । अग्निः[4] महत्यौ द्यावापृथिव्यौ आ विवेश । अग्निः असहायमपि चोदयति सङ्ग्रामेषु अग्निः शत्रून् हन्ति बहून् ॥ २ ॥

अग्निर्ह त्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम् ।
अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजयासृजत् सम् ॥ ३ ॥

अग्निः । ह । त्यम् । जरतः । कर्णम् । आव । अग्निः । अत्ऽभ्यः । निः । अदहत् । जरूथम् ।
अग्निः । अत्रिम् । घर्मे । उरुष्यत् । अन्तः । अग्निः । नृऽमेधम् । प्रऽजया । असृजत् । सम् ।३।

**उद्गीथ०** अग्निः ह अग्निरेव [5]त्यम् तम् कर्णम् जरत्कर्णम् ऋषिम्[5] जरतः जरातः जरायाः[6] सकाशात् आव

---

१-१. १०,७९,६ द्र. वि[२] अ[१]. † °रन्ति मूको. २-२. महते मूको. ३. अनुगृह्णात् मूको.
४-४. ऋ १०,७९,६ द्र. वि[२] अ[१]. ५-५. अत्यन्तं कर्मसुषिरम् मूको. ६. जरातं मूको.

रक्षितवान् । अग्निः सौचीकाख्यः अद्भ्यः, उत्तीर्येति शेषः, निः अदहत् निर्दग्धवान् जरूथम्[1] जरायु उल्बम् येनावेष्टितः[2] सन्नपः प्रविष्टवानग्निः तदित्यर्थः । अग्निः अत्रिम् ऋषिम् घर्मे घर्मस्य यज्ञस्य अन्तः मध्ये अर्धकृते यज्ञ इत्यर्थः, उरुष्यत् असुरराक्षसेभ्यः रक्षितवान् । अग्निः नृमेधम् ऋषिम् प्रजया सम् असृजत् संसृष्टवान् संयोजितवान् ॥ ३ ॥

वेङ्कट० अग्निः खलु तम् जरत्कर्णम् नाम ऋषिं ररक्ष । तथा अग्निः अद्भयः [3]निः अदहत् जरूथम्[3] नाम राक्षसम् । अग्निः अत्रिम् ऋबीसे अवस्थितं ररक्ष । अग्निः सम् असृजत् पुत्रेण नृमेधम् ऋषिम् ॥ ३ ॥

अग्निर्दाद् द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥ ४ ॥

अग्निः । दात् । द्रविणम् । वीरऽपेशाः । अग्निः । ऋषिम् । यः । सहस्रा । सनोति ।
अग्निः । दिवि । हव्यम् । आ । ततान । अग्नेः । धामानि । विऽभृता । पुरुऽत्रा ॥ ४ ॥

उद्गीथ० अग्निः दात् अग्निः ददाति द्रविणम् धनं भक्तजनेभ्यः । कीदृशोऽग्निः । वीरपेशाः वीररूपः शूराकारः, शूर इत्यर्थः । अग्निः यः[4] ऋषिम् भृग्वादिकम् सहस्रा ईप्सितकामसहस्रैः सनोति सम्भजते, सः अग्निः दिवि द्युलोके देवार्थम् हव्यम् हविः आ ततान तनोति विस्तारयति देवेभ्यो ददातीत्यर्थः । अग्नेः धामानि स्थानानि विमानलक्षणानि आहवनीयकुण्डलक्षणानि च विभृता[1] विभृतानि विधारितानि विविधं कल्पितानि इत्यर्थः, पुरुत्रा[1] पुरुषु बहुलोकेषु पृथिव्यादिपु यज्ञेषु च ॥ ४ ॥

वेङ्कट० अग्निः ददाति धनम् प्रेरकज्वालारूपः । अग्निः ऋषिम् पुत्रं प्रयच्छति, यः सहस्राणि गवां तत्क्षणे[5] भजते । अग्निः द्युलोके[6] हुतं हविः आ तनोति । अग्नेः शरीराणि विभृतानि[7] बहुषु स्थानेषु ॥ ४ ॥

अग्निमुक्थैर्ऋषयो वि ह्वयन्तेऽग्निं नरो यामनि बाधितासः ।
अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ ५ ॥

अग्निम् । उक्थैः । ऋषयः । वि । ह्वयन्ते । अग्निम् । नरः । यामनि । बाधितासः ।
अग्निम । वयः । अन्तरिक्षे । पतन्तः । अग्निः । सहस्रा । परि । याति । गोनाम् ॥ ५ ॥

उद्गीथ० अग्निम् उक्थैः शस्त्रादिभिः स्तुतिभिरित्यर्थः, ऋषयः भृग्वादयः वि ह्वयन्ते विविधमाह्वयन्ति कर्मार्थम् । अग्निम् नरः मनुष्या अपि शस्त्रादिभिः स्तुतिभिः विविधमाह्वयन्ति । क्व । उच्यते — यामनि यज्ञे । बाधितासः जरामरणैः बाधिताः पीडिताः । अग्निम् एव वयः पक्षिणः सुपर्णादयः अन्तरिक्षे आकाशे पतन्तः गच्छन्तः सन्तो विविधमाह्वयन्ति आकाश-

---

१. नास्ति मूको. २. °वेष्टियातः मूको. ३-३. त्रुटितम् वि[2] अ[1]. ४. यम् मूको. ५. भक्षणे वि[2] अ[1]. ६. लोके वि[2] अ[1]. ७. उच्छ्रितानि वि[2].

गमनसामर्थ्याऽऽधानार्थम् । किञ्च अग्निः सहस्रा सहस्राणि गोनाम् गवां सम्बन्धीनि परि याति सर्वतः प्राप्नोति प्रापयति वा स्तोतॄन् ॥ ५ ॥

**वेङ्कट०** अग्निम् शस्त्रैः ऋषयः नानाविधम् ह्वयन्ते । अग्निम् मनुष्याः युद्धे बाधिताः । यातिर्वधकर्मसु पठितः । अग्निम् पक्षिणः अन्तरिक्षे पतन्तः पश्यन्ति रात्रिषु । 'तस्मादिमां वयांसि नक्तं नाध्यासते' ( तै ५,६,४,४ ) इति ब्राह्मणम् । यद्वा दावभूतमग्निम् अभिपतन्ति इति । अग्निः सहस्राणि गवाम् परि गच्छति रक्षणार्थम्[1] ॥ ५ ॥

अ॒ग्निं विश॑ ईळते॒ मानु॑षी॒र्या अ॒ग्निं मनु॑षो॒ नहु॑षो॒ वि जा॒ताः ।
अ॒ग्निर्गान्ध॑र्वीं प॒थ्या॑मृ॒तस्या॒ग्नेर्गव्यू॑तिर्घृ॒त आ निष॑त्ता ॥ ६ ॥

अ॒ग्निम् । विशः॑ । ई॒ळ॒ते॒ । मानु॑षीः । याः । अ॒ग्निम् । मनु॑षः । नहु॑षः । वि । जा॒ताः ।
अ॒ग्निः । गान्ध॑र्वीम् । प॒थ्या॑म् । ऋ॒तस्य॑ । अ॒ग्नेः । गव्यू॑तिः । घृ॒ते । आ । निऽस॑त्ता ॥ ६ ॥

**उद्गीथ०** अग्निम् विशः मनुष्यजातयः ईळते स्तुवन्ति सदा सर्वत्र मानुषीः याः मनुष्य इत्यनेन पर्यायशब्देन वाच्याः याः ता इत्यर्थः । अग्निम् मनुषः मनुष्याः नहुषः इत्यनेन पर्यायशब्देन [2]युक्ताः वि जाताः जनितवन्तश्च[2] कर्मार्थम् । अग्निः गान्धर्वीम् वाचं स्तुतिलक्षणाम् पथ्याम् यज्ञपथे भवां कर्ममार्गवर्तिनीम् ऋतस्य सत्यस्य अविसंवादिनः स्तोतुः स्वभूताम्[3], शृणोतीति शेषः । किञ्च अग्नेः स्वभूता गव्यूतिः आहुतिः घृते आज्ये[4] आ आभिमुख्येन मर्यादया वा निषत्ता तन्मयत्वेन अवस्थिता[5] घृतमयीत्यर्थः[6] ॥ ६ ॥

**वेङ्कट०** अग्निम् प्रजाः स्तुवन्ति याः मनुषो जाताः । अग्निम् एव मनुष्याः नहुषः राज्ञः जाताः विविधं स्तुवन्ति । अग्निः वाचम् यज्ञस्य पथ्याम् यज्ञमार्गे जातां शृणोति । 'गान्धर्वी' (निघ १,११) इति वाङ्नामसु पठ्यते[7] । अग्नेः मार्गः घृते[8] 'सर्वतः निषण्णो भवति'[9] ॥ ६ ॥

अ॒ग्नये॒ ब्रह्म॑ ऋ॒भव॑स्ततक्षुर॒ग्निं म॒हाम॑वोचामा सुवृ॒क्तिम् ।
अग्ने॒ प्राव॑ जरि॒तारं॑ यवि॒ष्ठाग्ने॒ महि॒ द्रवि॑ण॒मा य॑जस्व ॥ ७ ॥

अ॒ग्नये॑ । ब्रह्म॑ । ऋ॒भवः॑ । त॒त॒क्षुः॒ । अ॒ग्निम् । म॒हाम् । अ॒वो॒चा॒म॒ । सु॒ऽवृ॒क्तिम् ।
अग्ने॑ । प्र । अ॒व॒ । ज॒रि॒तार॑म् । य॒वि॒ष्ठ॒ । अग्ने॑ । महि॑ । द्रवि॑णम् । आ । य॒ज॒स्व॒ ॥ ७ ॥

**उद्गीथ०** अग्नये अग्न्यर्थम् ब्रह्म स्तुतिलक्षणम् ऋभवः मेधाविनोऽस्मल्लक्षणाः ततक्षुः कृतवन्तः । अग्नेरर्थाय स्तुतिं मेधाविनः[10] स्तोतारो मनसा पर्यालोचितवन्त इत्यर्थः । पर्यालोच्य च अग्निम् महान्तम् अवोचाम स्तुत्योक्तवन्तो[11] वयम्, स्तुतवन्त इत्यर्थः, सुवृक्तिम्[12] स्तुतिम् । तज्ज्ञात्वा हे अग्ने! प्र अव प्रकर्षेण रक्ष सर्वतः जरितारम् तव स्तोतारम्[13] यविष्ठ! युवतम! । किञ्च

---

१. रक्षणा वि[1]. २-२. युक्तज° मूको. ३. °तानां मूको. ४. आज्येषु मूको. ५. वावस्थिता वि[2] अ. ६. °मयीमित्यर्थः मूको. ७. पठति वि[2] अ[1]. ८. त्रुटितम् वि[2] अ[1]. ९-९. नास्ति मूको. १०. नो यायं वि[1]; नो वोयं वि[2] अ. ११. स्तुत्युक्त° मूको. १२. °क्तिकामे मूको. १३. °तारो मूको.

हे अग्ने! महि महत् द्रविणम् धनं दृष्टादृष्टफललक्षणम् आ यजस्व आभिमुख्येन मर्यादया वा देहि मह्यं तव स्तोत्रे इत्यर्थः ॥ ७ ॥

**वेङ्कट०** अग्नये स्तोत्रम् मेधाविनः अकुर्वन्। वयं च अग्निम् महान्तं प्रति अवोचाम स्तुतिम्। अग्ने! रक्ष स्तोतारम् युवतम!। अग्ने! महद् धनम् आ प्रयच्छेति[1] ॥ ७ ॥

[2]इति अष्टमाष्टके तृतीयाध्याये पञ्चदशो वर्गः[2] ॥

[ ८१ ]

[2]विश्वकर्मा भौवन ऋषिः। विश्वकर्मा देवता। त्रिष्टुप् छन्दः, द्वितीया विराड्रूपा[2]।

**य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः।**
**स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥ १ ॥**

[3]यः। इमा। विश्वा। भुवनानि। जुह्वत्[3]। ऋषिः। होता। नि। असीदत्। पिता। नः।
सः। आऽशिषा। द्रविणम्। इच्छमानः। प्रथमऽच्छत्। अवरान्। आ। विवेश ॥ १ ॥

**उद्गीथ०** उत्तरे सूक्ते 'य इमा विश्वा', 'चक्षुषः पिता' इति सप्तर्चे विश्वकर्मदेवते विश्वकर्मा भौवनो ददर्श। यः विश्वकर्मा प्रजापतिः हिरण्यगर्भाख्यः आदिशरीरः इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि जुह्वत् परस्मिन्नात्मनि प्रक्षिपन् उपसंहारकाले उपसंहरन्नित्यर्थः, ऋषिः उत्पत्तिस्थितिप्रलयकालानाम्[4] द्रष्टा परमात्मा होता अग्नौ प्रलयकाले सर्वभूतहविर्होमस्य कर्ता नि असीदत् निषण्णवान् परमात्मनि स्वयमपि विशीर्णवान् प्रलीनवानित्यर्थः, पिता जनयिता नः अस्माकं सर्वभूतानाम्। एवमुक्तेन प्रकारेण सर्वभूतानि आत्मानं च परमात्मनि स्वाधिकारे प्रलयं नीत्वा ततोऽनन्तरं सृष्टिकाले प्राप्ते सः एव[5] प्रजापतिः हिरण्यगर्भो विश्वकर्माख्यः आशिषा आशीः शरीरेन्द्रियविषयाणां[6] सुखसाधनानामविभागेन अवस्थितानां विभागकरणेच्छा, तया हेतुभूतया सृष्टेः स्रष्टुमिच्छयेत्यर्थः, अथवा आशिषा मनसा प्रार्थनया, अथवा भोगाभिमुखत्वस्येच्छया द्रविणम् धनं शब्दादिविषयजनितं सुखलक्षणम् इच्छमानः अनुभवितुमिच्छन् प्रथमच्छत्[7] प्रथमम् अन्यस्मात् विज्ञानात्मनः [8]पूर्वं छत्[8] लिङ्गशरीरेण च आत्मनः छादयिता आद्यं शरीरम् अवरान् अस्मात् अर्वाग्वर्त्तिनः प्राणिनः आ विवेश जीवभावेन आविष्टवान्, तदीयशरीरविधारणार्थं[9] तदीयसुखसारानुभवार्थं च तान् सृष्ट्वा अनुप्रविष्टवानित्यर्थः। पूर्वार्धेन प्रलयम् उक्त्वा उत्तरेण सृष्टिरुक्ता[10] वक्रोक्त्या ॥ १ ॥

**वेङ्कट०** अत्र वाजसनेयकम्—'ब्रह्म वै स्वयंभु तपोऽतप्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा' ( माश १३,७,१,१ ) इत्यादि। 'विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार [11]स आत्मानमप्यन्ततो जुहवाञ्चकार। तदभिवादिन्येषर्ग्भवति'[11] (या १०,२६)। विश्वकर्मा भौवन ऋषिः। यः इमानि विश्वानि भुवनानि अग्नौ

---

१. °च्छति मूको. २-२. नास्ति मूको. ३-३. निगमोऽयं या. ( १०,२६ ) द्र. ४. °लयकानां मूको. ५. एव प्राप्ते मूको. ६. °यादीनां वि[1]. ७. नास्ति मूको. ८-८. पूर्ववत् मूको. ९ °रणः वि[1]; शरीरविधारणं वि[2] अ. १०. सक्त्वा मूको. ११-११. भवति वि[1] अ[1].

जुह्वत् ऋषिः होता स्वयं चाग्नौ नि असीदत् अस्माकम् पिता[१], सः अयं सूक्तवाकादिना शिष्टादेशेषु धनम् इच्छमानः प्रथमम् आच्छादयिता आत्मना महता सर्वं जगत् प्रथमं छादयन् अपरान् आ विवेश घृतमिव पयः[२] ॥ १ ॥

किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥

किम् । स्वित् । आसीत् । अधिऽस्थानम् । आऽरम्भणम् । कतमत् । स्वित् । कथा । आसीत् ।
यतः । भूमिम् । जनयन् । विश्वऽकर्मा । वि । द्याम् । और्णोत् । महिना । विश्वऽचक्षाः ॥२॥

**उद्गीथ०** इदानीं तस्याः सृष्टेः स्रष्टुः[३] विश्वकर्मणः आधारोपादानाद्युपायं पृच्छन्ति ऋषयः । किम् स्वित् आसीत् स्विदिति वितर्कार्थो निपातः । किं पुनः तद् वस्तु आसीत् अभूत् अधिष्ठानम् आधारः सृष्टिं सृजतः प्रजापतेः । कस्मिन् पुनराधारे अवस्थितः सन् विश्वकर्मा भूतानि सृष्टवानित्यर्थः । कथा आसीत् कथा कथं केन वा अभ्युपायेन भूतानां सर्गः आसीत् । परमात्मभावेन[४] विशिष्टानि भूतानि शरीरादिभावेन केन प्रकारेण संश्लेषितानीत्यर्थः[५] । यतः भूमिम् जनयन् यत इत्यनेन प्रक्रान्तम् आधारोपादानोपायत्रयं[६] प्रतिनिर्दिष्टं द्रष्टव्यं सामर्थ्यात् । यतो यस्मिन् आधारे स्थित इत्यर्थः, यतो येन च उपादानेनेत्यर्थः, यतो येन च भूतसर्गोपायेन[७] इत्यर्थः, भूमिं पृथिवीं जनयन् उत्पादयन् विश्वकर्मा प्रजापतिः द्याम् दिवम् वि और्णोत् ऊर्णोतिराच्छादनार्थः सन् [८]अत्र व्युपसर्गसंसर्गात्[८] विपरीतमर्थं ब्रवीति । व्यौर्णोत् व्यूर्णुतवान् [९]विवृतवान् व्याच्छादितवानित्यर्थः[९], महिना महत्तया[१०] विश्वचक्षाः सर्वस्य द्रष्टा सर्वज्ञ इत्यर्थः ॥२॥

**वेङ्कट०** अस्य अधिष्ठानम् किम् स्वित् आसीत् यत्रावस्थितो जगदयं सृजति । कतमत् वा अस्य आरम्भणम् । कथं क[११] सः आसीत्, यतः भूमिम् जनयन् विश्वकर्मा वि और्णोत् महत्त्वेन दिवम् सर्वस्य द्रष्टा ॥ २ ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥

विश्वतःऽचक्षुः । उत । विश्वतःऽमुखः । विश्वतःऽबाहुः । उत । विश्वतःऽपात् ।
सम् । बाहुऽभ्याम् । धमति । सम् । पतत्रैः । द्यावाभूमी इति । जनयन् । देवः । एकः ॥ ३ ॥

**उद्गीथ०** अस्य प्रश्नस्य उत्तरं प्रतिवचनम् । विश्वतश्चक्षुः चक्षुर्ग्रहणस्य प्रदर्शनार्थत्वात् सर्वत्र विद्यमानचक्षुरादिबुद्धीन्द्रियान्तःकरण[१२] इत्यर्थः, उत विश्वतोमुखः अपि सर्वत्र विद्यमानमुख इत्यर्थः, विश्वतोबाहुः सर्वत्र विद्यमानहस्तश्चेत्यर्थः, उत विश्वतस्पात् अपि सर्वत्र विद्यमानचरण[१]

---

१. नास्ति मूको. २. °यः इति अ[१]. ३. सृष्टिः मूको. ४. °माण्डभा° वि[२] अ. ५. °तानि त्यो वि[२] अ; तानीत्य वि[१]. ६. °दानोवात्रयत्रयं मूको. ७. °र्गोपादानेन वि[१]. ८-८. °त्रापि उप° वि[२] अ. ९-९. वृतवानाच्छादि° मूको. १०. हता मूको. ११. का वि[१]; ला वि[२] अ[१]. १२. °क्षुरादिरबुद्धी° मूको.

[१]इत्यर्थः। एवं सर्वत्र[१] विद्यमानपायूपस्थादिको द्रष्टव्यः। यत एवं सर्वगतः सर्वज्ञश्च सर्वशक्त्युपेतश्च विश्वकर्मा अत आत्माधिष्ठान आत्मारम्भणश्च सर्वोपायज्ञश्च[२] सम् बाहुभ्याम् धमति संधमतिर्गत्यर्थः अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। स्वहस्ताभ्यां सर्वगताभ्यां सर्वशक्त्युपेताभ्यां च सर्वोपायज्ञश्च सन्[३] भूतानि सन्धमति सङ्गमयति उत्पादयतीत्यर्थः। सम् पतत्रैः सङ्गमयति पादैश्च सर्वात्मना सर्वशक्त्या सर्वोपायैश्च सृजतीत्यर्थः, द्यावाभूमी जनयन् सृज्यमानभूताधारत्वात् पूर्वं द्यावापृथिव्यावुत्पादयन् [४]देवः देवनादिना[४] युक्तः एकः अद्वितीयः ॥ ३ ॥

**वेङ्कट०** स एवंविधो देवः सर्वतः[५] स्वस्मिंस्त्रैलोक्यमुत्पादयतीत्यर्थः। बाहुभ्याम् पादैश्च सम्-प्रेरयति द्यावापृथिव्यौ[६] जनयन् सोऽसहायः देवः[७] ॥ ३ ॥

किं स्वि॒द्वनं॒ क उ॒ स वृ॒क्ष आ॑स॒ यतो॒ द्यावा॑पृथि॒वी नि॑ष्टत॒क्षुः ।
मनी॑षिणो॒ मन॑सा पृ॒च्छतेदु॑ तद्य॒द॒ध्यति॑ष्ठ॒द्भुव॑नानि धा॒रय॑न् ॥ ४ ॥

किम् । स्वि॒त् । वन॑म् । कः । ऊँ इति॑ । सः । वृ॒क्षः । आ॒स॒ । यतः॑ । द्यावा॑पृथि॒वी इति॑ ।
निः॒ऽत॒त॒क्षुः । मनी॑षिणः । मन॑सा । पृ॒च्छत॑ । इत् । ऊँ इति॑ । तत् । यत् । अ॒धि॒ऽअति॑ष्ठत् । भुव॑नानि । धा॒रय॑न् ।

**उद्गीथ०** पुनरपि यथा कश्चित्तक्षा वनं गत्वा तदवयवभूतं वृक्षं [८]छित्त्वा देवताप्रतिमागृहभित्त्यादिकं[८] वस्तु कुर्यात्, एवमाधाराधेयभावमापद्यमानेभ्यः[९] अधिष्ठानत्वेन ॥ ४ ॥

**वेङ्कट०** किम् स्वित् अरण्यम् कः च सः[१०] वृक्षः आस, यतः वृक्षाद् द्यावापृथिव्यौ निष्कृतवन्तो देवाः[११]। हे मनीषिणः! मनसा जिज्ञासुना पृच्छत एव तत्, यत् अधिष्ठानम् अधितिष्ठति भुवनानि धारयन् इति पूर्वस्यामृच्युक्तं ब्रह्म मनुष्यान् श्रद्धापयति। 'ब्रह्म वनम् ब्रह्म स वृक्ष आसीत्' ( तैब्रा २,८,९,६ ) इति चाधीतमध्वर्युभिः ॥ ४ ॥

या ते॒ धामा॑नि पर॒माणि॒ याव॒मा या म॑ध्य॒मा वि॑श्वकर्मन्नु॒तेमा ।
शिक्षा॒ सखि॑भ्यो ह॒विषि॑ स्वधावः स्व॒यं य॑जस्व त॒न्वं॑ वृधा॒नः ॥ ५ ॥

या । ते॒ । धामा॑नि । प॒र॒माणि॑ । या । अ॒व॒मा । या । म॒ध्य॒मा । वि॒श्व॒ऽक॒र्म॒न् । उ॒त । इ॒मा ।
शिक्ष॑ । सखि॑ऽभ्यः । ह॒विषि॑ । स्व॒धा॒ऽव॒ः । स्व॒यम् । य॒ज॒स्व॒ । त॒न्व॑म् । वृ॒धा॒नः ॥ ५ ॥

**वेङ्कट०** यानि ते शरीराणि परमाणि, यानि च अवमानि, यानि मध्यमानि विश्वकर्मन्! अपि च यानि इमानि परितो दृश्यमानानि, तानि सर्वाणि सखिभ्यः[१२] हविषि[१३] बलवन्! प्रयच्छ। स्वयम् एव आत्मीयं शरीरम् यजस्व वर्धमान इति भौवनो विश्वकर्मा जगतः स्रष्टारं विश्वकर्माणं स्तौति ॥ ५ ॥

---

१-१. नास्ति मूको. २. °यश्च मूको. ३. सं मूको. ४-४. देवादिना···वि[१]; दवादिनां वि[२] अ. ५. नास्ति वि[१] अ[१]; सर्वगः वि[१]. ६. द्यावाभूम्या वि[२] अ[१]. ७. वेदः वि[२] अ[१]. ८-८. छिदेवता···त्यादिकं वि[१]; छिदेवता···वि[२] अ[१]. ९. °वमाराधेयावमाप° मूको. १०. नास्ति वि[२] अ[१]. ११. द्यावा वि[२] अ[१]. १२. सखि वि[२] अ[१]. १३. °वींषि वि[१]; नास्ति वि[२] अ[१].

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६ ॥

विश्वऽकर्मन् । हविषा । ववृधानः । स्वयम् । यजस्व । पृथिवीम् । उत । द्याम् ।
मुह्यन्तु । अन्ये । अभितः । जनासः । इह । अस्माकम् । मघऽवा । सूरिः । अस्तु ॥ ६ ॥[1]

**उद्गीथ०** पृथिवीम् उत द्याम् पृथिवीं दिवञ्चात्मसात् कुर्वित्यर्थः। किञ्च मुह्यन्तु त्वदिच्छया[2] विविक्ता भवन्तु अभितः उभयतः [3]स्तुतियज्ञेभ्यः ये त्वां यष्टुं[3] स्तोतुं च न समाज्ञासिषुरित्यर्थः, अन्ये जनासः अस्मत्तोऽन्ये अस्मत्सपत्ना मनुष्याः। किञ्च इह त्वद्यागकर्मणि अविच्छिन्नसन्ताने अस्माकम् स्वभूतः अन्तरात्मा यजमानो वा मघवा हविर्दानवान् सूरिः अस्तु नित्यं तव स्तोता भवतु त्वत्प्रसादादित्यर्थः।

अथवा विश्वकर्माणं सृष्ट्युपसंहाराभिमुखं स्तोता ब्रवीति। हे विश्वकर्मन्! हविषा सर्वभूतात्मकेन वावृधानः वर्धमानः स्वयम् यजस्व आत्मना सङ्गतान् कुरु आत्मन्युपसंहरेत्यर्थः। पृथिवीमुत द्याम् पृथिवीं दिवञ्च आत्मसङ्गते[4] कुरु त्वम् आत्मन्युपसंहरेत्यर्थः[5]। [6]न अत्र अस्माकम् उभाभ्याम् उपयोगोऽस्ति[6]। किं तर्हि। ब्रूमः—प्रागुपसंहारात् मुह्यन्तु विविक्ता भवन्तु अभितः सर्वतः सर्वप्रमाणैः सर्वप्रकारञ्च त्वा मा ज्ञासिपुरित्यर्थः, अन्ये जनासः अस्मत्सपत्नजनाः। किञ्च इह सृष्टौ त्वद्यागकर्मणि वर्तमानानाम् अस्माकम् अन्तरात्मा मघवा हविर्धनेन धनवान् सूरिः तव स्तोता अस्तु भवतु। किम्। सामर्थ्यात् तव प्रज्ञातेत्युभयम् ॥ ६ ॥

**वेङ्कट०** विश्वकर्मन्! हविषा वर्धमानः स्वयम् एव स्वशरीरभूताम् पृथिवीम् यजस्व, अपि च दिवम्। मुह्यन्तु अन्ये अभितः जनाः। इह अस्माकम् धनवान् प्राज्ञो विश्वकर्मा भवतु ॥ ६ ॥

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥ ७ ॥

वाचः । पतिम् । विश्वऽकर्माणम् । ऊतये । मनःऽजुवम् । वाजे । अद्य । हुवेम ।
सः । नः । विश्वानि । हवनानि । जोषत् । विश्वऽशम्भूः । अवसे । साधुऽकर्मा ॥ ७ ॥

**उद्गीथ०** वाचः पतिम् स्तुतिवाचः स्वामिनम्, अथवा ऋग्यजुःसामलक्षणाया वाचः पालयितारं वेदाधारमित्यर्थः, विश्वकर्माणम् सर्वस्य कर्तारं हिरण्यगर्भम् ऊतये अवनाय[7] हविषा तर्पणाय वा[7] मनोजुवम् मनोगम्यं योगिनां [8]मनोगतिं वा[8] सर्वमतमित्यर्थः, वाजे हविरन्ने दातव्यत्वेन निमित्तभूतेन तृप्त्यर्थं हविर्दातुमित्यर्थः, अद्य यागाऽहनि हुवेम आह्वयामः। अस्माभिः आहूयमानश्च सः नः अस्माकम् विश्वानि सर्वाणि सर्वप्रकाराणि हवनानि आह्वानानि जोषत् जुषतु मनसा प्रीयतां सेवतां वा, परया प्रीत्या शृणोत्वित्यर्थः। किमर्थम्। अवसे अस्मद्यज्ञं प्रत्यागमनाय। विश्वशम्भूः सर्वयजमानानां सुखस्य भावयिता साधुकर्मा शोभनकर्मा ॥ ७ ॥

---

१. या. ( १०,२७ ) व्याख्यानं द्र. २. तदि° मूको. ३-३. स्तुति ··· यष्टुं वि[2] अ; स्तुतिः ··· त्वां यष्टुं वि[2]. ४. नास्ति मूको. ५. °पसंसर मूको. ६-६. नात्रास्याकं ··· मूको. ७ पानाय वि[2] अ. ८-८. °तिवों वि[2] अ.

**वेङ्कट०** वाचः पतिम् विश्वस्य कर्तारम्[1] रक्षणाय मनोवेगम् सङ्ग्रामे वयम् अद्य आह्वयामः । [2]सः अस्माकम्[2] विश्वानि ह्वानानि[3] सेवताम् सर्वजनस्य सुखस्योत्पादकः रक्षणाय [4]साधुकर्मा इति[4] ॥७॥

[5]इति अष्टमाष्टके तृतीयाध्याये षोडशो वर्गः[5] ॥

## [ ८२ ]

[1]विश्वकर्मा भौवन ऋषिः । विश्वकर्मा देवता । त्रिष्टुप् छन्दः[1] ।

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदन्ता अददृहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम् ॥ १ ॥

चक्षुषः । पिता । मनसा । हि । धीरः । घृतम् । एने इति । अजनत् । नम्नमाने इति ।
यदा । इत् । अन्ताः । अददृहन्त । पूर्वे । आत् । इत् । द्यावापृथिवी इति । अप्रथेताम् ॥ १ ॥

**उद्गीथ०** चक्षुषः पिता यदा चक्षुरादीनाम् इन्द्रियाणाम् पिता जनकः विश्वकर्मा मनसा हि धीरः अन्तःकरणेन च धीरः धीमान् प्रज्ञावान् परिदृष्टकारीत्यर्थः, घृतम् उदकम्[6] सर्वस्य स्थितिभूतम्[7] एने द्यावापृथिव्यौ प्रति[8] अजनत् अजनयत् जनितवान् । कीदृश्यौ प्रति जनितवान् । उच्यते— नम्नमाने नमेर्धातोः शानचि श्लुः[9] शपः स्थाने । नममाने सम्भोगैकत्वात्[10] परस्परेण प्रह्वीभवन्त्यौ परस्परोपकारकरणात् अन्योन्यानुगते इत्यर्थः । यदा इत् यदा च अन्ताः पृथिव्यादिलोकानां पर्यन्ताः अददृहन्त दृढीभूताः विश्वकर्मणा प्रतिष्ठिताः कृता इत्यर्थः, पूर्वे अनादिकालप्रवृत्ता आधेयात् पूर्वोत्पन्ना वा । आत् इत् तदैव द्यावापृथिव्यौ अप्रथेताम् स्वेनस्वेन भूतधारणसम्भवनादिकार्येण विस्तीर्णे स्वकार्यकरणसमर्थे जाते इत्यर्थः ॥ १ ॥

**वेङ्कट०** तेजस उत्पादकः मनसा हि धृष्टः[11] प्रथमम् उदकं द्यावापृथिव्यौ च तस्मिन् उदक इतस्ततश्चलन्त्यौ अजनयत् । अथ यदा द्यावापृथिव्योः पर्यन्ताः प्रत्ना अभवन् दृढा दृंहिता [12]विश्वकर्मणा, अनन्तरमेव[12] द्यावापृथिव्यौ यथाकामम् आ पर्यन्तात् अप्रथेताम् ॥ १ ॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ॥ २ ॥

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता । विऽधाता । परमा । उत । सम्ऽदृक् ।
तेषाम् । इष्टानि । सम् । इषा । मदन्ति । यत्र । सप्तऽऋषीन् । परः । एकम् । आहुः ॥२॥[13]

**उद्गीथ०** विश्वकर्मा विमनाः विमना[14] लोके दीनमना उच्यते, तच्च विश्वकर्मणि दीनमनस्त्वं न सम्भवतीति

---

१. कर्ता वि[2] अ[1]. २-२. सोमस्सोस्मा° वि[2] अ[1]. ३. स्थानानि वि[2] अ[1]. ४-४. °र्मे च अ[1]. ५-५. नास्ति मूको. ६. °कस्य मूको. ७. स्थितिम् मूको. ८. यदा वि[2] अ. ९. श्नप्रत्ययः मूको. १०. संकल्प मूको. ११. सृष्टं वि[2] अ[1]. १२-१२. °णोन्तरमेव वि[2] अ[1]. १३. या. (१०,२६) व्याख्यातेयमृग् द्र. १४. प्र मूको.

विमनाः विभूतमनाः व्याप्तमनाः सर्वगतान्तःकरणः सर्वज्ञ इत्यर्थः, आत् अपि च विहायाः [1]'महान् सर्वगत[1]' इत्यर्थः, धाता कर्ता चेत्यर्थः, विधाता विश्वकर्तेत्यर्थः[2], परमा उत संदृक् परमश्च सन्द्रष्टा कृताकृतस्य प्रत्यवेक्षितेत्यर्थः, तेषाम् भूतानाम् इष्टानि प्रियाणि सामर्थ्याद् उदकानि विश्वकर्मणा वृष्टिरूपेण भूमौ कृतानि[3] रश्मिभिः आकृष्टानि सम् मदन्ति इषा[4] सर्वस्य अन्नहेतुना आदित्यस्यान्नभूतेन वा आदित्यमण्डले पूर्वस्थितेनोदकेन सह सम्मदन्ति सम्मोदन्ते एकीभूय हृष्यन्तीत्यर्थः। क। उच्यते — यत्र यस्मिन् आदित्यमण्डले सप्तऋषीन् ऋषिर्दर्शनात्। प्रथमाऽर्थे वाऽत्र द्वितीया। सप्तसङ्ख्याकाः सर्पणशीला वा सर्वार्थानां द्रष्टारः रश्मयः स्थिताः, परः च उत्तरपुरुषो मण्डलस्य अधिष्ठाता स्थितः, तत्रेत्यर्थः। तच्चैतत् सर्वम् उदकं मण्डलं रश्मीन् [5]अधिष्ठातारं च[5] विश्वकर्माणमेव एकम् आहुः वदन्ति तत्त्वविदः तस्य सर्वात्मकत्वात्॥ २॥

वेङ्कट० विश्वकर्मा व्याप्तमनाः अपि च महान् धाता[6] विधाता च अपि च परमाणामपि सन्द्रष्टा तेषाम् अभिमतानि स्थानानि[7] अन्नेन सम्-मोदन्ते, यस्मिन्[8] यज्ञे सप्तऋषीन् परस्तात् एकम् आहुः। विश्वकर्मणोऽधिष्ठानाद् वृक्षादिव शाखाः प्रादुर्भूताः सप्तर्षय इति वदन्ति तेषां यजमानानामिति[9] ॥२॥

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या॥ ३॥

यः। नः। पिता। जनिता। यः। विऽधाता। धामानि। वेद। भुवनानि। विश्वा।
यः। देवानाम्। नामऽधाः। एकः। एव। तम्। समऽप्रश्नम्। भुवना। यन्ति। अन्या॥३॥

उद्गीथ० यः विश्वकर्मा नः अस्माकं सर्वभूतानाम् पिता सर्वतः पाता जनिता जनयिता च, यः विधाता च स्थितेः कर्ता चेत्यर्थः, धामानि स्थानानि नामानि[10] जन्मानि वा वेद भुवनानि विश्वा भूतानि सर्वाणि स्वरूपतो जानाति। यः देवानाम् देवादिभूतानाम् अनन्ता-नामपि[11] सतामित्यर्थः, [12]नामधाः नाम्नां[12] धाता कर्ता चेत्यर्थः, एकः एव सन्, तम् विश्वकर्माणम् संप्रश्नम् स्वरूपजिज्ञासार्थं सम्प्रच्छनीयं दुर्ज्ञानस्वरूपत्वाद् महता आदरेण ज्ञानस्य स्वरूपमित्यर्थः, यन्ति गच्छन्ति उत्पत्तिस्थितिप्रलयापवर्गकालेषु प्राप्नुवन्ति भुवना अन्या भूतानि अन्यानि॥ ३॥

वेङ्कट० यः नः पिता जनयिता, यः च विधाता विधायकः अङ्गोपाङ्गानाम् स्थानानि वेत्ति, भूतानि च विश्वानि तेषु स्थितानि। यः सर्वेषामेव देवानाम् अग्निर्वायुरित्यादीनां[13] नाम्नां[14] धाता[15], स एक एव। तम् देवम् अन्यानि भूतानि [16]संप्रश्नम् यन्ति[16] पृच्छन्तीति[17] ॥ ३॥

---

१-१. होत्सर्व॰ मूको. २. श्वकर्ते॰ वि[2] अ; श्चकर्ते॰ वि[1]. ३. क्रीता मूको. ४. उषा मूको. ५-५. ॰रश्च मूको. ६. ॰ता च वि[2] अ[1]. ७. नास्ति वि[1]. ८. अस्मिन् वि[2] अ[1]. ९. इति अ[1]. १०. नास्ति वि[2]. ११. अन्नान्ता॰ वि[1]; नान्ता॰ वि[1]; अन्नाना॰ अ. १२-१२. नामधाम्नां च नाम्ना वि[1]; नामधाम्नाश्वनाम्ना वि[2]; नामधाम्ना अ. १३. व्युरित्यादित्यादित्यानां वि[1]. १४. नाम्ना मूको. १५. नास्ति मूको. १६-१६. नास्ति वि[2] अ[1]. १७. प्रयच्छन्ती॰ वि[2] अ[1]; पृच्छन्ती॰ वि[1].

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना ।
असूर्ते । सूर्ते । रजसि । निऽसत्ते । ये । भूतानि । समऽअकृण्वन् । इमानि ॥ ४ ॥

**उद्गीथ०** ते विश्वकर्मणः स्वभूता आ अयजन्त मर्यादया ददति[1] द्रविणम् वृष्टयुदकं धनं कर्मफललक्षणं वा सम् अस्मै सम्यग् अस्मै लोकाय यजमानाय वा ऋषयः सर्वार्थानां द्रष्टारः प्राणाः[2] विश्वसृजः पूर्वे प्रथमजाः। किमिव ददति। उच्यते—जरितारः न भूना यथा देवानां स्तोतारः भृग्वादियजमानाः भूना भूम्ना बहुत्वेन[3] स्वेन माहात्म्येन सम्यगस्मै लोकायाहुतिद्वारेण वृष्टयुदकं ददति, स्वात्मने वा कर्मफलं ददति[1], एवं ये। कीदृशा विश्वसृजो विश्वकर्मणः प्राणाः। उच्यते—असूर्ते असूपपदाद् ईर्तेः क्तप्रत्यये परतः उत्वम्, असर्वनामत्वेऽपि[4] जसः शीभावो गुणश्च। असूर्ते असुसमीरिता[5] असुना प्राणेन परमसूक्ष्मेण वायुना हिरण्यगर्भेण विश्वकर्माख्येन प्रेरिताः सूर्ते सुष्ठु प्रेरिते विस्तीर्णे रजसि लोके अन्तरिक्षाख्ये निषत्ते निषण्णे अवस्थिताः ये विश्वसृजो विश्वकर्मणः प्राणाः भूतानि इमानि समकृण्वन् सम्यगेकीभूता वा कृतवन्तः सृष्टवन्त इत्यर्थः। ते[6] आयजन्तेति पश्चाद्योज्यम्[7] ॥ ४ ॥

**वेङ्कट०** ते सम्-आ-प्रयच्छन्ति हविर्भूतं धनम् विश्वकर्मणे ऋषयः पूर्वे स्तोतारश्चान्ये महत्त्वेन युक्ताः। ये ऋषयः सरणवर्जिते विस्तृते लोके निषण्णे निश्चलमवस्थिते वर्तमानाः इमानि भूतानि समकृण्वन् ससृजुः[8] ॥ ४ ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ॥ ५ ॥

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः । यत् । अस्ति ।
कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । समऽअपश्यन्त । विश्वे ॥ ५ ॥

**उद्गीथ०** दिवा पृथिव्या देवेभिः असुरैः इत्यादि सर्वत्र पञ्चम्यर्थे तृतीया। यदित्यत्र च लिङ्गव्यत्ययः कार्यः परशब्दसामानाधिकरण्यात्[9]। परः प्रकृष्टः[10] सर्वस्य कारणत्वात् प्रधानभूतो दिवः सकाशात्, परः एव एना पृथिव्या अस्याः[11] अपि सकाशात्, परः देवेभ्योऽसुरेभ्यश्च[12] यत् अस्ति यो विद्यते[13] सर्वस्य[14] कारणत्वेन, तम् कम् प्रजापतिं विश्वकर्माणम् गर्भम् प्रथमम् सर्वादिकारणत्वात्[15] पूर्वम् दध्रे धारितवत्यः आपः। तदुक्तम्—'आप एवेदमग्र आसुः। ता आपः सत्यम् असृजन्त' इति। यत्र यस्मिन् प्रजापतौ विश्वकर्मणि जाते सति देवाः विषयक्रीडनकैः क्रीडनशीलाः प्रजापतेः

---

१. ददाति वि[२] अ. २. प्रत्नाः वि[१]. ३. ब ··· त्वेन वि[१]; त्रुटितम् वि[२] अ. ४. °मस्थानेऽपित्वेऽपि मूको. ५. असुरस° मूको. ६. नास्ति मूको. ७. विश्वद्योज्यम् मूको. ८. स ऋजुः मूको. ९. परशब्दंशब्दसा° मूको. १०. कृष्टः मूको. ११. अस्य मूको. १२. देवेभ्यश्च मूको. १३. विद्यं मूको. १४. स सर्वस्य मूको. १५. °काराद् मूको.

विश्वकर्मणः प्राणाश्च सुरादयः समपश्यन्त[1] सम्यग् दृष्टवन्तः स्वंस्वं [2]विषयं रूपादिकं[2] [3]विश्वे सर्वे[3]। पूर्वे प्रथमजाः। यस्मात् आद्ये शरीरे पूर्वविषयोपादानप्रवृत्तिः तस्मात् पूर्वत्वव्यपदेशः ॥ ५ ॥

**वेङ्कट०** परस्ताद् दिवः परस्ताच्च अस्याः पृथिव्याः परस्ताच्च देवासुरेभ्यो गुहायाम् यत् भवति। तम् कम् स्वित्[4] प्रथमम् आपः गर्भम् धृतवत्यः, यस्मिन् वर्तमानाः देवाः समपश्यन्त[5] सर्वे सङ्गताः इतरेतरं पश्यन्तीति जानत एव कस्यचित् प्रश्नः[6] ॥ ५ ॥

**तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।**
**अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥ ६ ॥**

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । सम्ऽअगच्छन्त । विश्वे ।
अजस्य । नाभौ । अधि । एकम् । अर्पितम् । यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ ६ ॥

**उद्गीथ०** तम् इत् तमेव प्रजापतिं विश्वकर्माणम् गर्भम् प्रथमम् अन्यस्माद् विकारात् पूर्वम् दध्रे धारितवत्यो जगत्कारणभूताः आपः, यत्र यस्मिन् विश्वकर्मणि प्रजापतौ [7]देवाः विषयक्रीडनकैः क्रीडनशीलाश्च सुरादयः प्राणाः विश्वे सर्वे सप्तदशापि लिङ्गशरीरनिमित्ताः समगच्छन्त सङ्गतवन्तः, लिङ्गशरीरभावेन एकीभूताः क्षीरोदकवत् सम्मूर्च्छिता इत्यर्थः। किञ्च यस्मिन् विधारके विश्वकर्मणि प्रजापतौ[7] विश्वानि सर्वाणि [8]भुवनानि भूतानि[8] तस्थुः प्रोतन्यायेन अवस्थितानि सूत्रे मणिगणा इव, तस्य अजस्य नित्यस्य नाभौ अधि नाभेरुपरि अन्तरण्डं बहिरण्डं च व्याप्य व्यवस्थितस्य मध्यवर्तित्वाद् नाभिभूतस्य अन्तरण्डवर्तिनो विकारात्मनो मध्ये[9] [3]एकम् अर्पितम्[3] इत्यर्थः ॥ ६ ॥

**वेङ्कट०** तम् एव विश्वकर्माणम् प्रथमम् दध्रे आपः, यत्र देवाः सङ्गताः सर्वे। तस्य अजस्य नाभौ एकम् अर्पितम् इत्यण्डाभिप्रायम्। अण्डं हि प्राग् विसर्गान्नाभिस्थाने तिष्ठति[10]। यस्मिन् अण्डे विश्वानि भूतानि तिष्ठन्तीति ॥ ६ ॥

**न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।**
**नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ ७ ॥**

न । तम् । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकम् । अन्तरम् । बभूव ।
नीहारेण । प्रऽवृताः । जल्प्या । च । असुऽतृपः । उक्थऽशसः । चरन्ति ॥ ७ ॥

**उद्गीथ०** वेदशास्त्रार्थानभिज्ञाः केवलतार्किका उच्यन्ते—यः विश्वकर्मा इमा इमानि भूतानि जजान जनितवान्, तम् विश्वकर्माणम् न विदाथ न विजानीथ यूयम्। यत एवम् अतः कारणात् युष्माकम् च विश्वकर्मरूपम् अजानतां तेषां च तद्विदाम् अन्यद् अन्तरम् बभूव महान् विशेषो जात इत्यर्थः। कथम् अतद्विदो वयम्, ते च वेदशास्त्रविदः तद्विद इति चेत्, यतो यूयम् नीहारेण प्रावृताः नीहारेण तत्सदृशेन[11] तमोरूपेण परमार्थवस्त्वाच्छादकेन वेदार्थापरिज्ञान-

१. स सम° मूको. २-२. विषयरू° वि[1]; विषयरुदितं वि[2] अ. ३-३. नास्ति मूको. ४. चित् वि[2] अ[1]. ५. °न्ति वि[2] अ[2]. ६. °श्नम् वि[2] अ[2]. ७-७. नास्ति वि[1]. ८-८. भूतानि भुव° वि[2] अ. ९. मध्यमध्यम मूको. १०. °ष्ठतीति अ[2]. ११. सदृशेन मूको.

लक्षणेन अज्ञानेन आच्छादिता जल्प्या च परबुद्धिपरिभावार्थया[1] न परमार्थस्वरूपावधारणार्थया शुष्कतर्कविद्यया आच्छादिताः असुतृपः असूनां प्राणानां चक्षुरादीनाम् अबादिना[2] तर्पयितारश्चेत्यर्थः। अतः कारणात् अतद्विदो यूयम्। वेदार्थस्य ज्ञातारश्च [3]यतः उक्थशासः चरन्ति[3] उत्तिष्ठन्ति उत्पद्यन्ति विकारा अस्मादिति उक्थं परं कारणं तस्य शंसितारः कथयितारः स्वरूपतो व्याख्यातारः सन्तश्चरन्ति सर्वत्र अप्रतिहन्यमानाः प्रवर्तन्ते, अतस्ते तद्विदः। अतश्च कारणाद् युष्माकं च विश्वकर्मस्वरूपस्य वेत्तॄणां च महदन्तरमिति योज्यम् ॥ ७ ॥

वेङ्कट० न तम् जानीथ यूयम्, यः इमानि भूतानि जनयामास। युष्माभिरज्ञातम् युष्माकम् अन्तर्हृदये अस्तीति विश्वकर्माणमाह। अथ परोक्षमाह—नीहारेण इति। हिमानी नीहारः, तत्सदृशेनाज्ञानेन प्रावृताः जल्प्या च अलौकिकैश्च वचनैः परिवृताः[4] प्राणानामात्मीयानां तर्पयितारः [5]उक्थानि शंसन्तः[5] श्लाघार्थम् आत्मकृतानि वदन्तः चरन्ति ॥ ७ ॥

[6]इति अष्टमाष्टके तृतीयाध्याये सप्तदशो वर्गः[6] ॥

## [ ८३ ]

[6]मन्युस्तापस ऋषिः। मन्युर्देवता। त्रिष्टुप् छन्दः, प्रथमा जगती[6]।

यस्ते॑ म॒न्योऽवि॑धद्वज्र सायक॒ सह॒ ओज॑ः पुष्यति॒ विश्व॑मानु॒षक् ।
सा॒ह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता ॥ १ ॥

यः। ते॒। म॒न्यो इति॑। अवि॑धत्। व॒ज्र॒। सा॒य॒क॒। सह॑ः। ओज॑ः। पु॒ष्य॒ति॒। विश्व॑म्। आ॒नु॒षक्। स॒ह्याम॑। दास॑म्। आर्य॑म्। त्वया॑। यु॒जा। सह॑ःऽकृतेन। सह॑सा। सह॑स्वता ॥ १ ॥

उद्गीथ० उत्तरे सूक्ते सप्तर्चे मान्यवे मन्युर्ददर्श। [7]हे मन्यो! वज्र! वज्रवद्[7] अभेद्य! सायक! शत्रूणाम् अन्तकर! यः यजमानः ते तव, स्तुतिमिति शेषः, अविधत्, 'विध विधाने'। विधानं करणम्। विधति करोतीत्यर्थः। सहः बलं च शरीरपुष्टिलक्षणम् ओजः सामर्थ्यलक्षणं च बलम् पुष्यति हविर्भिः वर्धयतीत्यर्थः। विश्वम् सर्वं देवगणम् त्वदनुचरम्[8] आनुषक् आनुपूर्व्येण स्तुतिभिः हविर्भिश्च पुष्यतीति योज्यम्। तमीप्सितार्थप्रदानेन[9] अनुगृह्णासीति[10] शेषः। यत ईदृशस्त्वम्, अतः वयमपि तव स्तोतारः यष्टारश्च। तव अनुग्रहात् साह्याम अभिभवेम इत्याशास्महे वयम् दासम् उपक्षपयितव्यं शत्रूणाम् आर्यम् अरणीयं[11] शूरत्वादिगुणोपेतत्वात् अभिगमनीयं युद्धार्थं च त्वया मन्युना युजा सहायेन। कीदृशेन। सहस्कृतेन भक्तजनबलस्य कर्त्रा सहसा बलरूपेण च सहस्वता बलवता च ॥ १ ॥

---

१. °भावनार्थया वि[1]; °र्थयो वि[2] अ. २. अवधिना वि[3] अ; नास्ति वि[1]. ३-३. युत···श्चरन्ति वि[3] अ. ४. °वृतां वि[1]. ५-५. नास्ति वि[1]. ६-६. नास्ति मूको. ७-७ ···वज्रवद् मूको. ८. त्वदनुपरम् वि[1]; तदनुपरम् वि[3] अ. ९. तदीप्सि° मूको. १०. अत्र गृह्णामीति वि[3] अ; °मीति वि[1]. ११. रमणीयं वि[1]; अणीयम् वि[3] अ.

**वेङ्कट०** मन्युस्तापसः । यः [1]तुभ्यम् अविधत् †[1] हे मन्यो! परिचरणं करोति बलिष्ठ! शत्रूणाम् अन्तकर!, स मनुष्यो बलं[2] वेगं[3] च वर्धयति सर्वम् अनुषक्तम् । अभिभवेम दासम् आर्यम् चोभयविधशत्रुम् त्वया सहायेन बलेनोत्पादितेन सहमानेन परान् बलवता[4] ॥ १ ॥

मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।
मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ॥ २ ॥

मन्युः । इन्द्रः । मन्युः । एव । आस । देवः । मन्युः । होता । वरुणः । जातऽवेदाः ।
मन्युम् । विशः । ईळते । मानुषीः । याः । पाहि । नः । मन्यो इति । तपसा । सऽजोषाः ॥२॥

**उद्गीथ०** मन्युः इन्द्रः मन्युरेव इन्द्ररूपेण अवस्थित इत्यर्थः । मन्युः एव आस देवः मन्युरेव बभूव अन्योऽपि देवः । अन्यदेवरूपेण मन्युरेव अवस्थित इत्यर्थः । मन्युः होता मन्युरेव होता ऋत्विगित्यर्थः । वरुणः अपि जातवेदाः अपि मन्युरेव । मन्युम्[2] कारणावस्थितम् ईळते स्तुवन्ति विशः मनुष्यजातयः मानुषीः याः [5]मनुष्याकृतयो याः, मनुष्येत्यनेन[5] पर्यायशब्देन युक्ता यास्ता इत्यर्थः । यस्त्वम् ईदृशः स त्वम् पाहि रक्ष नः अस्मान् हे मन्यो! तपसा मत्पित्रा सह सजोषाः समानप्रीतिः समानसेवनो वा ॥ २ ॥

**वेङ्कट०** मन्युः एव इन्द्रः । मन्युः एव आस सर्वः देवः । मन्युः एवाग्निः वरुणः अपि जातप्रज्ञः । मन्युम् एव मनुषोऽपत्यभूताः प्रजाः[6] स्तुवन्ति, नेन्द्रादीन् । स त्वम् अस्मान् रक्ष मन्यो! मत्पित्रा तपसा सङ्गतः ॥ २ ॥

अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥ ३ ॥

अभि । इहि । मन्यो इति । तवसः । तवीयान् । तपसा । युजा । वि । जहि । शत्रून् ।
अमित्रऽहा । वृत्रऽहा । दस्युऽहा । च । विश्वा । वसूनि । आ । भर । त्वम् । नः ॥ ३ ॥

**उद्गीथ०** हे मन्यो! यस्त्वम् तवसः अन्तर्णीतमत्वर्थमेतत्[7] । सर्वस्मात् बलवतः सकाशात् तवीयान् बलवत्तरः, स त्वम् अभि इहि[8] अस्मच्छत्रून् प्रति गच्छ । गत्वा च तपसा तपोनाम्ना अस्मत्पित्रा युजा सहायेन वि जहि अभिभव अस्मच्छत्रून् । विजित्य च अमित्रहा अमित्राणाम् अस्मच्छत्रूणां हन्ता सन् [9]वृत्रहा वृत्रस्य चासुरस्य मेघस्य हन्ता सन्[9] दस्युहा च दस्यूनाम् उपक्षपयितृणाम्[10] अन्येषां च शत्रूणां हन्ता सन् विश्वा सर्वाणि वसूनि अस्मच्छत्रुधनानि आ भर आहर त्वम् नः अस्मभ्यम् ॥ ३ ॥

**वेङ्कट०** अभि गच्छ मन्यो! प्रवृद्धात् प्रवृद्धतरः । तपसा सहायेन वि जहि शत्रून् । अमित्रादीनां

---

१-१. °भ्यमव वि[2] अ[1]. † नास्ति वि[1]. २. नास्ति मूको. ३. वेनं वि[2] अ[1]. ४. °लवर्जितानिति अ[1]. ५-५. मनुष्याकृत्यनेन वि[2] अ; मनुष्याकृत्यानेन वि[1]. ६. प्रज्ञा वि[2] अ[1]; प्राज्ञा वि[1]. ७. अन्तर्हित° वि[1]. ८. त्रुटितम् वि[2] अ. ९-९ नास्ति वि[1]. १०. °क्षयि° वि[2].

हन्ता। अमित्रोऽस्निग्धः। वृत्र आवेष्टकः। दस्युरुपक्षपयिता। विश्वानि वसूनि आ भर त्वम् अस्मभ्यम् ॥ ३ ॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥

त्वम्। हि। मन्यो इति। अभिभूतिऽओजाः। स्वयम्ऽभूः। भामः। अभिमातिऽसहः।
विश्वऽचर्षणिः। सहुरिः। सहावान्। अस्मासु। ओजः। पृतनासु। धेहि ॥ ४ ॥

**उद्गीथ०** हे मन्यो! त्वम् हि यस्मात् अभिभूत्योजाः अभिभवितृबलः शत्रूणाम् अभिभवनशील इत्यर्थः, स्वयम्भूः सर्वकार्येषु च स्वयं भविता स्वतन्त्रश्चेत्यर्थः, भामः क्रोधनश्च शत्रूणाम् उपरि अभिमातिषाहः अभिहिंसितॄणाम् अभिभविता च विश्वचर्षणिः सर्वस्य भक्ताभक्तजनस्य निग्रहानुग्रहबुद्धया द्रष्टा च सहुरिः सहनशीलश्च अभिभवनशीलश्चेत्यर्थः, सहावान् परबलं सहत[1] इति [2]सहा सेना, तद्वांश्च, अस्मात् कारणात्[2] अस्मासु[3] ओजः बलम् धेहि देहि धारय वा पृतनासु सङ्ग्रामेषु, शत्रुजयाय चेति शेषः ॥ ४ ॥

**वेङ्कट०** त्वम् हि मन्यो! शत्रूणामभिभावुकबलः स्वयम्भूः क्रुद्धः अभिमातीनां सोढा सहनशीलः सहनवान् अस्मासु बलम् सङ्ग्रामेषु धेहि ॥ ४ ॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥ ५ ॥

अभागः। सन्। अप। पराऽइतः। अस्मि। तव। क्रत्वा। तविषस्य। प्रचेत इति प्रऽचेतः।
तम्। त्वा। मन्यो इति। अक्रतुः। जिहीळ। अहम्। स्वा। तनूः। बलऽदेयाय। मा। आ। इहि ॥

**उद्गीथ०** हे प्रचेतः! प्रकृष्टज्ञान! महामते! यस्य तव तविषस्य महतः क्रत्वा क्रतुना यागकर्मणा सदा[4] क्रियमाणेन अभागः सन् निर्धनः सन्नित्यर्थः, अप परेतः पराङ्मुखः त्वद्यागकर्मणः सकाशात् अपगतः अस्मि भवामि अननुष्ठातृत्वात्, तम् त्वा हे मन्यो! अक्रतुः अविद्यमान-त्वद्यागकर्मा जिहीळ लज्जामि अहम्। एतत् ज्ञात्वा स्वा तनूः उभयत्र तृतीयाऽर्थे प्रथमा। स्वया तन्वा स्वेन शरीरेण बलदेयाय महद्बलक्षणाय बलदानाय मा माम्, प्रतीति शेषः, आ इहि आगच्छ। अथवा त्वं मम स्वा[5] तनूः स्वशरीरमिति योज्यम् ताद्भाव्यापत्तेः[6] ॥ ५ ॥

**वेङ्कट०** तव कर्मणा भागरहितः सन् त्वामयजमान[7] इत्यर्थः, युद्धात् अप परेतः भवामि महतः

---

१. सह मूको. २-२. °हारिसेना तद्वांश्चात्व कार° वि[1]; °हारिसेग्ना तद्वांश्चाल्प कार° वि[2] अ. ३. अस्मात् मूको. ४. न सदा वि[2] अ. ५. नास्ति वि[2] अ. ६. तद्भा° मूको. ७. °मानाः वि[1].

प्रकृष्टज्ञान!। तम् त्वाम् मन्यो! अहम् कर्मवर्जितः क्रोधितवान्। अथेदानीं मम स्वा तनूः शरीरभूतस्त्वं मम बलदानाय माम् आगच्छेति'॥ ५॥

अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः संहुरे विश्वधायः।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः॥ ६॥

अयम्। ते। अस्मि। उप। मा। आ। इहि। अर्वाङ्। प्रतीचीनः। सहुरे। विश्वऽधायः।
मन्यो इति। वज्रिन्। अभि। माम्। आ। ववृत्स्व। हनाव। दस्यून्। उत। बोधि। आपेः॥६॥

उद्गीथ० अयम् अहम् ते तव ... ... ... ... ...॥ ६॥

वेङ्कट० अयम् तव अस्मि कर्मकृत्। उप आ गच्छ अभिमुखः मां प्रतिगन्ता शत्रूणां सहनशील![1] विश्वस्य [3]धर्तः! मन्यो![3] वज्रिन्! अभि आ ववृत्स्व माम्, हनाव शत्रून्, अपि च[4] बुध्यस्व सखायं[5] मामिति॥ ६॥

अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जङ्घनाव भूरि।
जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव॥ ७॥

अभि। प्र। इहि। दक्षिणतः। भव। मे। अध। वृत्राणि। जङ्घनाव। भूरि।
जुहोमि। ते। धरुणम्। मध्वः। अग्रम्। उभौ। उपऽअंशु। प्रथमा। पिबाव॥ ७॥

वेङ्कट० अभि प्र गच्छ युद्धम्। दक्षिणतः भव मम सखा त्वम्। अथ शत्रून् बहून् जङ्घनाव। जुहोमि ते धारकम् सोमस्य अग्रम्। उभौ आवां [6]प्रथमौ अप्रकाशम्[6] पिबाव सोममिति॥ ७॥

[7]इति अष्टमाष्टके तृतीयाध्याये अष्टादशो वर्गः[7]॥

## [ ८४ ]

[7]मन्युस्तापस ऋषिः। मन्युर्देवता। जगती छन्दः, आद्यास्तिस्रस्त्रिष्टुभः[7]।

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः॥ १॥

त्वया। मन्यो इति। सऽरथम्। आऽरुजन्तः। हर्षमाणासः। धृषिताः। मरुत्वः।
तिग्मऽइषवः। आयुधा। सम्ऽशिशानाः। अभि। प्र। यन्तु। नरः। अग्निऽरूपाः॥ १॥[8]

वेङ्कट० त्वया मन्यो! रथेन सहितं शत्रुम् आभिमुख्येन रुजन्तः। 'सरथमारुह्य रुजन्तः'

---

१. °गच्छेः वि[2] अ[2]. २. °शीलस्य वि[2] अ[1]. ३-३. नास्ति वि[2] अ[1]. ४. यः वि[1] अ[1].
५. सुखाय वि[1] अ[1]. ६-६. °थमा प्रका° वि[1] अ[1]; °थमौ प्रका° वि[1]. ७-७. नास्ति मूको. ८. या. (१०,३०) व्याख्यानं द्र.

इति यास्कः ( १०, ३० )। हृष्टाः धृष्टाः मारुतैर्युक्त![1] तिग्मेषवः आयुधानि संशिश्यन्तः अभि प्र गच्छन्तु शत्रून् प्रति अग्निरूपाः अग्निकर्माणः, यद्वा सन्नद्धाः कवचिन इति ॥ १ ॥

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥ २ ॥

[2]अग्निःऽइव । मन्यो इति । त्विषितः । सहस्व[2] । सेनाऽनीः । नः । सहुरे । हूतः । एधि ।
हत्वाय । शत्रून् । वि । भजस्व । वेदः । ओजः । मिमानः । वि । मृधः । नुदस्व ॥ २ ॥

**वेङ्कट०** अग्निः इव मन्यो! ज्वलितः अभिभव शत्रून्। सेनानीः[3] अस्माकम् [4]सहनशील! हूतः[4] भव। हत्वा शत्रून् वि भजस्व तद्धनम् अस्माकम्। अस्माकं बलं कुर्वन् वि नुदस्व शत्रून् ॥ २ ॥

सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ॥ ३ ॥

सहस्व । मन्यो इति । अभिऽमातिम् । अस्मे इति । रुजन् । मृणन् । प्रऽमृणन् । प्र । इहि । शत्रून् ।
उग्रम् । ते । पाजः । ननु । आ । रुरुध्रे । वशी । वशम् । नयसे । एकऽज । त्वम् ॥ ३ ॥

**वेङ्कट०** अभिभव[5] मन्यो! अभिगन्तारम् अस्माकम्। रुजन् मृणन्[6] प्रमृणन् च प्र इहि शत्रून्। उग्रम् तव बलमिह केचन ननु आ रुन्धते। तथा सम्भवति वशी वशम् नयसे सर्वम् त्वम् असहाय! ॥ ३ ॥

एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि ।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ॥ ४ ॥

एकः । बहूनाम् । असि । मन्यो इति । ईळितः । विशम्ऽविशम् । युधये । सम् । शिशाधि ।
अकृत्तऽरुक् । त्वया । युजा । वयम् । द्युऽमन्तम् । घोषम् । विऽजयाय । कृण्महे ॥ ४ ॥

**वेङ्कट०** एकः बहूनाम् भवसि पर्याप्तस्त्वम् मन्यो! स्तुतः। विशं-विशम् अस्मदीयां योधनाय[7] तीक्ष्णीकुरु। अच्छिन्नदीप्ते! त्वया सहायेन वयम्[8] दीप्तिमन्तम् सिंहनादम् विजयार्थम् कुर्मः त्वयाऽधिष्ठिता इति ॥ ४ ॥

विजेषकृदिन्द्रइवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥

---

१. वेगमारु° मूको. २-२. निगमोऽयं या. ( १,१७ ) द्र. ३. अग्निः वि[२] अ[१]. ४-४. °शीलतत वि[२] अ[१]; °शीलतो वि[१]. ५. अभि वि[१]. ६. प्राणः वि[१]. ७. योद्ध° वि[१]. ८. वशं वि[२] अ[१].

[1]वि॒जे॒ष॒ऽकृत् । इन्द्रः॑ऽइव । अ॒न॒व॒ऽब्र॒वः[1] । अ॒स्माक॑म् । म॒न्यो॒ इति॑ । अ॒धि॒ऽपाः । भ॒व॒ । इ॒ह ।
प्रि॒यम् । ते॒ । नाम॑ । स॒हु॒रे॒ । गृ॒णी॒म॒सि॒ । वि॒द्म । तम् । उत्स॑म् । यतः॑ । आ॒ऽब॒भूथ॑ ॥ ५ ॥

**वेङ्कट०** विजयस्य कर्ता[2] इन्द्रः इव अनवमानां वचनानां वक्ता अस्माकम् मन्यो! रक्षकश्च भव अत्र। प्रियम् ते नाम सहनशील! उच्चारयामः। विद्म तम् उत्सम् यतः बलात्[3] आबभूथ इति ॥ ५ ॥

आभू॑त्या सह॒जा व॑ज्र सायक॒ सहो॑ बिभर्ष्यभिभूत॒ उत्त॑रम् ।
क्रत्वा॑ नो मन्यो स॒ह मे॒द्ये॑धि महाध॒नस्य॑ पुरुहूत सं॒सृजि॑ ॥ ६ ॥

आऽभू॑त्या । स॒ह॒ऽजाः । व॒ज्र॒ । सा॒य॒क॒ । सहः॑ । बि॒भ॒र्षि॒ । अ॒भि॒ऽभू॒ते॒ । उत्ऽत॑रम् ।
क्रत्वा॑ । नः॒ । म॒न्यो॒ इति॑ । स॒ह । मे॒दी । ए॒धि॒ । म॒हा॒ऽध॒नस्य॑ । पु॒रु॒ऽहू॒त॒ । स॒म्ऽसृजि॑ ॥ ६ ॥

**वेङ्कट०** आभूतिः[4] अभिभवः तया सहप्रादुर्भूतस्त्वं बलवन्! शत्रूणाम् अन्तकर![5] बलं धारयसि अभिभावुक! उद्गततरम्[6]। कर्मणा सह अस्माकम् मन्यो! स्निग्धः भव युद्धस्य पुरुहूत! संसर्गे ॥६॥

संसृ॑ष्टं॒ धन॑मु॒भयं॑ स॒माकृ॑तम॒स्मभ्यं॑ दत्तां॒ वरु॑णश्च म॒न्युः ।
भियं॒ दधा॑ना॒ हृद॑येषु॒ शत्र॑वः॒ परा॑जितासो॒ अप॒ नि ल॑यन्ताम् ॥ ७ ॥

स॒म्ऽसृ॑ष्टम् । धन॑म् । उ॒भय॑म् । स॒म्ऽआकृ॑तम् । अ॒स्मभ्य॑म् । द॒त्ता॒म् । वरु॑णः । च॒ । म॒न्युः ।
भिय॑म् । दधा॑नाः । हृद॑येषु । शत्र॑वः । परा॑ऽजितासः । अप॑ । नि । ल॒य॒न्ता॒म् ॥ ७ ॥

**वेङ्कट०** आनीय संसृष्टम् उभयम् अपि धनम् समानीतम्[7] अस्मभ्यम्[8] दत्ताम् वरुणः च मन्युः च समानीयैकीभूतम् अस्मभ्यम् दत्तामिति। भियम् दधानाः हृदयेषु शत्रवः पराजितासः अप नि लयन्ताम् इति अपनिलीना[9] भवन्त्विति ॥ ७ ॥

[10]इति अष्टमाष्टके तृतीयाध्याये एकोनविंशो वर्गः[10] ॥

## [ ८५ ]

[10]सावित्री सूर्या ऋषिका। १-५ सोमो देवता, ६-१६ सूर्याविवाहः, १७ देवाः, १८ सोमार्कौ, १९ चन्द्रमाः, २०-२८ नृणां विवाहमन्त्रा आशीःप्रायाः, २९-३० वधूवासः-संस्पर्शनिन्दा, ३१ दम्पत्योर्यक्ष्मनाशनम्, ३२-४७ सूर्या सावित्री। अनुष्टुप् छन्दः; १४,१९-२१,२३,२४,२६,३६,३७,४४ त्रिष्टुभः; १८, २७, ४३ जगत्यः; ३४ उरोबृहती[10]।

स॒त्येनोत्त॑भिता॒ भूमिः॒ सूर्ये॒णोत्त॑भिता॒ द्यौः ।
ऋ॒तेना॑दि॒त्यास्ति॑ष्ठन्ति दि॒वि सोमो॒ अधि॑ श्रि॒तः ॥ १ ॥

---

१-१. निगमोऽयं या. (६,२९) द्र. २. कर्त्रे वि[2] अ[1]. ३. बलां वि[2] अ[1]. ४. आहूत्यानिः वि[1] अ[1]. ५. °त्रूणामकरण वि[1] अ[1]. ६. °तर वि[1]. ७. सोमा° मूको. ८. °स्मन् वि[1]. ९. °पनीलाः वि[1]. १०-१०. नास्ति मूको.

स॒त्येन॑ । उत्त॑भिता । भूमि॑: । सूर्ये॑ण । उत्त॑भिता । द्यौः ।
ऋ॒तेन॑ । आ॒दि॒त्याः । ति॒ष्ठ॒न्ति॒ । दि॒वि । सोम॑: । अधि॑ । श्रि॒तः ॥ १ ॥

**वेङ्कट०** **कात्यायनः**[1]—'सत्येन सप्तचत्वारिंशत् सावित्री सूर्यात्मदैवतमानुष्टुभम् । पञ्चभिः **सोममस्तौत्**, पराभिः स्वविवाहं, सप्तदश्या देवान्, परया सोमार्कौ, परया चन्द्रमसं, [2]परा नृणां[2] विवाहमन्त्रा आशीःप्रायाः, परा देहीति द्वे वधूवासःसंस्पर्शमोचिन्यौ[3], परा यक्ष्मनाशिनी[4] दम्पत्योः' (ऋअ २,८५) **इति**।

**ब्रह्मणा अधःस्थितेन** उत्तभिता भूमिः । **सूर्येण** उत्तभिता द्यौः । **यज्ञेन**[5] धृताः तिष्ठन्ति आदित्याः । दिवि सोमः अधि श्रितः **इति स्वं पतिं सूर्या**[6] **स्तौति** ॥ १ ॥

सोमे॑नादि॒त्या ब॒लिन॒: सोमे॑न पृथि॒वी म॒ही ।
अथो॒ नक्ष॑त्राणामे॒षामु॒पस्थे॒ सोम॒ आहि॑तः ॥ २ ॥

सोमे॑न । आ॒दि॒त्याः । ब॒लिन॑: । सोमे॑न । पृ॒थि॒वी । म॒ही ।
अथो॒ इति॑ । नक्ष॑त्राणाम् । ए॒षाम् । उ॒पऽस्थे॑ । सोम॑: । आऽहि॑तः ॥ २ ॥

**वेङ्कट०** सोमेन पीतेन आदित्याः बलिनः । सोमेन **यज्ञस्य धारकेण** पृथिवी **महती भवति । अपि च अयम्** सोमः नक्षत्राणाम् एषाम् **उपस्थाने अन्तरिक्षे** आहितः ॥ २ ॥

सोमं॑ मन्यते पपि॒वान् यत् सं॑पि॒षन्त्योष॑धिम् ।
सोमं॒ यं ब्र॒ह्माणो॑ वि॒दुर्न तस्या॑श्नाति॒ कश्च॒न ॥ ३ ॥

सोम॑म् । म॒न्य॒ते॒ । प॒पि॒ऽवान् । यत् । स॒म्ऽपि॒षन्ति॑ । ओष॑धिम् ।
सोम॑म् । यम् । ब्र॒ह्माण॑: । वि॒दुः । न । तस्य॑ । अ॒श्ना॒ति॒ । कः । च॒न ॥ ३ ॥

**वेङ्कट०** **सोमपः सोमोऽयमिति** मन्यते, **यमृत्विजो यज्ञे सोमस्य विप्रेभ्यो जाताम् ओषधिम्** सम्-पिंषन्ति । सोमम् यम् **सकलदिवि स्थितं** ब्राह्मणाः **जानन्ति, न तम्** कश्-चित् अश्नाति । **यास्कस्त्वाह—** '**सोमं** मन्यते पपिवान् यत् संपिषन्त्योषधिमिति वृथासुतम् असोममाह । सोमं यं ब्रह्मणो विदुरिति । न तस्याश्नाति कश्चनाऽयज्वा' (११, ४) **इति** ॥ ३ ॥

आ॒च्छद्वि॑धानैर्गुपि॒तो बार्ह॑तैः सोम रक्षि॒तः ।
ग्राव्णा॒मिच्छृ॒ण्वन् ति॑ष्ठसि॒ न ते॑ अश्नाति॒ पार्थि॑वः ॥ ४ ॥

आ॒च्छत्ऽवि॑धानैः । गु॒पि॒तः । बार्ह॑तैः । सो॒म॒ । र॒क्षि॒तः ।
ग्राव्णा॑म् । इत् । शृ॒ण्वन् । ति॒ष्ठ॒सि॒ । न । ते॒ । अ॒श्ना॒ति॒ । पार्थि॑वः ॥ ४ ॥

---

१. °यनं वि[2] अ[1]. २-२. परा स्त्री नृणां वि[2] अ[1]. ३. वस्त्रे वास° वि[2] अ[1]; °मोचन्यौ वि[1]; °चन्यौ अ[1]. ४. यक्ष° वि[2] अ[1]. ५. यज्ञे वि[1]. ६. सूर्ये वि[2] अ[1].

**वेङ्कट०** आच्छद्विधानैः आच्छादकानि विधानानि[1] येषां[2] विद्यन्ते तैर्गुप्तः[3] तथा बृहद्भिः स्वानादिकैः[4] तैर्गन्धर्वैः सोम! परि-रक्षितः त्वम्[5]। 'एते वा अमुष्मिँल्लोके सोममरक्षन्' (तै ६,१,१०,५) इति ब्राह्मणम्। ग्राव्णाम् अभिषवप्रवृत्तानां शब्दम् शृण्वन् तिष्ठसि न[6] त्वाम् अश्नाति पार्थिवः। 'चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति' (माश ११,१,५,३) इति वाजसनेयकं ब्राह्मणम् ॥ ४ ॥

यत् त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥

यत्। त्वा। देव। प्रऽपिबन्ति। ततः। आ। प्यायसे। पुनरिति।
वायुः। सोमस्य। रक्षिता। समानाम्। मासः। आकृतिः ॥ ५ ॥

**वेङ्कट०** देव![7] 'सोम! यदा त्वाम्[8] पौर्णमास्यामभिषुत्य[9] देवाः प्रपिबन्ति यावदपरपक्षम्, ततः अमावास्यायाः पुनः वृद्धो भवसि। तस्य तव वायुः रक्षिता[10] भवति रसमनुप्रयच्छन्। सोऽयम् मासः सोमः संवत्सराणाम् आकृतिः भवति। कालस्य व्यवच्छेदकः। यद्वा व्यवच्छेदानि ऋतुलिङ्गानि समाः[11] नयन्निति ॥ ५ ॥

[12]इति अष्टमाष्टके तृतीयाध्याये विंशो वर्गः[12] ॥

रैभ्यासीदनुदेयी नाराशंसी न्योचनी। सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥६॥

रैभी। आसीत्। अनुऽदेयी। नाराशंसी। निऽओचनी।
सूर्यायाः। भद्रम्। इत्। वासः। गाथया। एति। परिऽकृतम् ॥ ६ ॥

**वेङ्कट०** 'रैभीः शंसन्ति[13] रेभन्तो वै देवाः' (ऐब्रा ६,३२) इति विहिता ऋग्विशेषा रैभ्य[14] इति। 'प्राता रत्नम्' (ऋ १,१२५,१) इत्यादिका मनुष्याणां स्तुतयो नाराशंस्यः प्रसिद्धाः। गाथाः ब्राह्मणप्रतिपादिताः[15]। मद्विवाहे रैभी आसीत् अनुदेयी। योढाया अनुसखी साऽनुदेयी। नाराशंसी न्योचनी दासी। उचतिः सेवाकर्मा। सूर्यायाः कल्याणम् वासः गाथया संस्तुतम् परिधानाय गच्छति। तत् सूर्या पर्यधत्तेति ॥ ६ ॥

चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम्।
द्यौर्भूमिः कोश आसीद् यदयात् सूर्या पतिम् ॥ ७ ॥

चित्तिः। आः। उपऽबर्हणम। चक्षुः। आः। अभिऽअञ्जनम्।
द्यौः। भूमिः। कोशः। आसीत्। यत्। अयात्। सूर्या। पतिम् ॥ ७ ॥

---

१. विविधानि वि[1]. २. नास्ति वि[1]. ३. °प्तं वि[2] अ[1]. ४. स्थानाधिक्ये मूको. ५. ते मूको. ६. तत् वि[1]; विन वि[2] अ[1]. ७. देव वि[1] अ[1]. ८-८. अभिष्टुतं वि[1] अ[1]. ९. °ष्टुत्य वि[2] अ[1]. १०. अर्थिता वि[1]. ११. स्म मूको. १२-१२. नास्ति मूको. १३. नास्ति वि[2] अ[1]. १४. °भ्यं वि[2] अ[1]. १५. °ह्मणप्रसिद्धाः वि[2] अ[1].

वेङ्कट० चित्तिः देवता आः[1] आसीत् उपबर्हणम् । चक्षुः आसीत् अभ्यञ्जनम् आञ्जनम् अत्राऽभ्यञ्जनम् उक्तम् । वृत्रस्य कनीनिका परापतत् । ततः त्रिककुन्नाम[2] पर्वतोऽभवत् । तेन त्रैककुदेन आञ्जनेन सजातीयेन चक्षुषी आञ्जते । तच्चक्षुरेवाऽऽञ्जनम् आसीदिति[3] । द्यावापृथिव्यौ धनाधिष्ठाने अनुदेयं धनम् आस्ताम् । यदा अगच्छत् सूर्या पतिम् सोममिति ॥ ७ ॥

स्तोमा॑ आसन् प्रति॒धयः॑ कु॒रीरं॒ छन्द॑ ओप॒शः ।
सू॒र्याया॑ अ॒श्विना॑ व॒राग्निरा॑सीत् पुरोग॒वः ॥ ८ ॥

स्तोमा॑ः । आ॒स॒न् । प्र॒ति॒ऽधयः॑ । कु॒रीर॑म् । छन्दः॑ । ओ॒प॒शः ।
सू॒र्यायाः॑ । अ॒श्विना॑ । व॒रा । अ॒ग्निः । आ॒सी॒त् । पु॒रः॒ऽग॒वः ॥ ८ ॥

वेङ्कट० स्तोमाः [4]आसन् अभवन् अनसः[4] प्रतिधयः । कुरीरम् नाम [5]छन्दः अनसः[5] ओपशः अभवत् । येन उपशेरते[6] स ओपशः । सूर्यायाः अश्विना वरा अभवताम् । अग्निः आसीत् पुरोगन्ता । यः पूर्वमेव प्रस्तावाद्यर्थं गच्छति स पुरोगवः ॥ ८ ॥

सोमो॑ वधू॒युर॑भवद॒श्विना॑स्तामु॒भा व॒रा ।
सू॒र्यां यत् पत्ये॒ शंस॑न्तीं॒ मन॑सा सवि॒ताद॑दात् ॥ ९ ॥

सोमः॑ । व॒धू॒ऽयुः । अ॒भ॒व॒त् । अ॒श्विना॑ । आ॒स्ता॒म् । उ॒भा । व॒रा ।
सू॒र्याम् । यत् । पत्ये॑ । शंस॑न्तीम् । मन॑सा । स॒वि॒ता । अद॑दात् ॥ ९ ॥

वेङ्कट० सोमः वधूकामो वरः अभवत्, अश्विनौ आस्ताम् उभौ वरौ[7], सूर्याम् सविता यदा[8] पत्ये शंसन्तीम् प्राप्तयौवनामित्यर्थः, मनसा सदृशाय वराय सोमाय प्रादात् दित्सांचकारेति ॥ ९ ॥

मनो॑ अ॒स्या अन॑ आसी॒द् द्यौरा॑सीदु॒त च्छ॒दिः ।
शु॒क्राव॑न॒ड्वाहा॑वास्तां॒ यद॑या॒त् सू॒र्या गृ॒हम् ॥ १० ॥

मनः॑ । अ॒स्याः । अनः॑ । आ॒सी॒त् । द्यौः । आ॒सी॒त् । उ॒त । छ॒दिः ।
शु॒क्रौ । अ॒न॒ड्वाहौ॑ । आ॒स्ता॒म् । यत् । अया॑त् । सू॒र्या । गृ॒हम् ॥ १० ॥

वेङ्कट० शीघ्रगम्[9] मनः भवति, तत् स्वांशेन अस्याः अनः आसीत्, द्यौः आसीत् सर्वस्य जगतः छादयित्री तस्यानसः छदिः, सूर्याचन्द्रमसौ अनड्वाहौ आस्ताम्, येन अनसा[10] अयात् सूर्या[11] पतिगृहम् ॥ १० ॥

[12]इति अष्टमाष्टके तृतीयाध्याये एकविंशो वर्गः[12] ॥

---

१. शना वि[2] अ[1]; शनारत्नमित्यादिका मनुष्याः वि[1]. २. त्रिककुन्नो॰ वि[2] अ[1]. ३. ॰रेवासीदि॰ वि[1]; ॰रेवमासादि॰ वि[2] अ[1]. ४-४. आसन्ननसः वि[1]; अभवन् वि[2] अ[1]. ५-५. शस्तस्थानः मूको. ६. उत्तं-खति मूको. ७. वरो वि[2] अ[1]. ८. यथा वि[2] अ[1]. ९. शीघ्रं वि[1]. १०. नास्ति वि[2] अ[1]. ११. सूर्यः वि[2] अ[1]. १२-१२. नास्ति मूको.

ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः ।
श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥ ११ ॥

ऋक्ऽसामाभ्याम् । अभिऽहितौ । गावौ । ते । सामनौ । इतः ।
श्रोत्रम् । ते । चक्रे इति । आस्ताम् । दिवि । पन्थाः । चराचरः ॥ ११ ॥

वेङ्कट० ऋक्सामाभ्याम् अभिधानीभूताभ्याम् अभिहितौ गावौ ते सूर्याचन्द्रमसौ[1] समानगमनौ[2] गच्छतः । श्रोत्रम् चक्राकारं दैवं त्वदीयस्यानसः चक्रम् अभवद् द्विधाभूतम् । दिवि मार्गः अभवद् अत्यन्तं गमनसाधनम् ॥ ११ ॥

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् ॥ १२ ॥

शुची इति । ते । चक्रे इति । यात्याः । विऽआनः । अक्षः । आऽहतः ।
अनः । मनस्मयम् । सूर्या । आ । अरोहत् । प्रऽयती । पतिम् ॥ १२ ॥

वेङ्कट० शुद्धे श्रोत्रे तव अनसः चक्रे अभवतां गच्छन्त्याः । व्यानः च सर्वेषां भाराणां धारकः स्वांशेन अक्षः अभूत् आहतः । इत्थं मनसा अन्यैश्च देवैः सह निर्मितम् अनः सूर्या आ अरोहत् प्रगच्छन्ती पतिम्[3] इति ॥ १२ ॥

सूर्याया वहतुः प्रागात् सविता यमवासृजत् ।
अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥ १३ ॥

सूर्यायाः । वहतुः । प्र । अगात् । सविता । यम् । अवऽअसृजत् ।
अघासु । हन्यन्ते । गावः । अर्जुन्योः । परि । उह्यते ॥ १३ ॥

वेङ्कट० सोमाय प्रदित्सितायाः सूर्यायाः[4] वहतुः प्रागेव अगच्छत्, [5]सविता यम् वहतुम् अवासृजत्[5] । अघा मघा भवन्ति । याः[6] सवित्रा दत्ताः गावः सोमगृहं प्रति [7]तास्तु अघासु[7] मघासु दण्डैः हन्यन्ते प्रेरणाय । अथोत्तरयोः फल्गुन्योः परि उह्यते सवितुः सोमगृहं प्रति नीयत इति । 'मघाभिर्गावो गृह्यन्ते' ( आपगृ १,२,१ ) इत्यन्येषां पाठ इति ॥ १३ ॥

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
विश्वे देवा अनु तद्वामजानन् पुत्रः पितराववृणीत पूषा ॥ १४ ॥

---

१. सूर्यच° वि[1]. २. °गमनौ समानगमनौ वि[1] अ[1]. ३. नास्ति वि[2] अ[1]. ४. सूर्या वि[2] अ[1]. ५-५. संहितायामिहतुमवासृचत्यहे त्रि[2] अ[1]. ६. यस्मा वि[1] अ[1]. ७-७. तास्वाहतास्तासु वि[1] अ[1]; तास्वाह-तासु वि[1].

यत् । अश्विना । पृच्छमानौ । अयातम् । त्रिऽचक्रेण । वहतुम् । सूर्यायाः ।
विश्वे । देवाः । अनु । तत् । वाम् । अजानन् । पुत्रः । पितरौ । अवृणीत । पूषा ॥ १४ ॥

**वेङ्कट०** यत् अश्विना! पृच्छन्तौ प्रष्टुं सवितारम् अयातम् त्रिचक्रेण विवाहम् सूर्यायाः[1]। तदानीम् विश्वे देवाः वाम् अनु अजानन् सवितारं प्रति गच्छन्तौ इति। तथाऽश्विनोः पुत्रः पूषा गमनाय तौ अवृणीत इति ॥ १४ ॥

यदयातं शुभस्पती वरेयं सूर्यामुप । क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथुः ॥१५॥

यत् । अयातम् । शुभः । पती इति । वरेऽयम् । सूर्याम् । उप ।
क्व । एकम् । चक्रम् । वाम् । आसीत् । क्व । देष्ट्राय । तस्थथुः ॥ १५ ॥

**वेङ्कट०** यत् अयातम् उदकस्य पती! वरैर्याच्यम् पितरम् सूर्याम्[2] उद्दिश्य। तयोर्भवतोः सम्प्रति दृश्यमानमिदं तृतीयम् चक्रम् पुरा क्व आसीत्। क्व वाम् युवां दानाय प्रवृत्तौ तस्थथुः इति निवासमश्विनौ पृच्छति[3] ॥ १५ ॥

[4]इति अष्टमाष्टके तृतीयाध्याये द्वाविंशो वर्गः[4] ॥

द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः । अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ॥१६॥

द्वे इति । ते । चक्रे इति । सूर्ये । ब्रह्माणः । ऋतुऽथा । विदुः ।
अथ । एकम् । चक्रम् । यत् । गुहा । तत् । अद्धातयः । इत् । विदुः ॥ १६ ॥

**वेङ्कट०** [5]अथ स्वयमेव[5] [6]स्वात्मानं प्रति[6] सूर्या वदति। हे सूर्ये! तत्र प्रज्ञाते [7]पुराऽपि दृष्टे[7] द्वे चक्रे चन्द्रसूर्यात्मके ब्राह्मणाः ऋतुषु निविष्टे जानन्ति। अथ यत् तृतीयम् चक्रम् संवत्सरात्मकं[8] गुहायां निहितम् तत् अद्धातयः एव जानन्ति। मेधाविनामैतत् (निघ ३,१५)। ये परोक्षमपि जानन्ति प्रज्ञानेन, त एव जानन्तीति[9] ॥ १६ ॥

सूर्यायै देवेभ्यो मित्राय वरुणाय च । ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः ॥ १७ ॥

सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च ।
ये । भूतस्य । प्रऽचेतसः । इदम् । तेभ्यः । अकरम् । नमः ॥ १७ ॥

**वेङ्कट०** सूर्यपत्न्यै देवेभ्यः [10]मित्राय वरुणाय च[10] ये भूतजातस्य सुमतयो [11]भवन्ति दातुं धनम्, इदम्[11] तेभ्यः अहम् अकरम् नमः इति ॥ १७ ॥

पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥ १८ ॥

---

१. सूर्या वि[2] अ[1]. २. सूर्यं अ[1]. ३. °च्छन्ति वि[2] अ[1]; प्रयच्छति वि[1]. ४-४. नास्ति मूको. ५-५. °थायमे° वि[2] अ[1]. ६-६. स्वात्मा संप्रति वि[2] अ[1]. ७-७. पुरावदृष्टे वि[2] अ[1]. ८. नास्ति वि[1]. ९. °नन्ति वि[1]; °न्तीन्त्यभिप्रायः अ[1]. १०-१०. मित्रावरुणयोः मूको. ११-११. भवन्ति धनमिह वि[2] अ[1].

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीळन्तौ । परि । यातः । अध्वरम् ।
विश्वानि । अन्यः । भुवना । अभिऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायते । पुनरिति ।१८।

वेङ्कट० कश्चित्पूर्वं गच्छत्यन्यस्तस्य पृष्ठतः । एवम् एतौ पूर्वापरम् प्रज्ञया सह चरतः । शिशू क्रीळन्तौ परि गच्छतः यज्ञम् । तयोः अन्यः[1] विश्वानि भुवनानि अभिपश्यति[2] आदित्यः । ऋतून् अन्यः कुर्वन् मासानर्धमासांश्च जायते पुनःपुनः चन्द्रमाः ॥ १८ ॥

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १९ ॥

नवःऽनवः । भवति । जायमानः । अह्नाम् । केतुः । उषसाम् । एति । अग्रम् ।
भागम् । देवेभ्यः । वि । दधाति । आऽयन् । प्र । चन्द्रमाः । तिरते । दीर्घम् । आयुः ॥१९॥

वेङ्कट० यास्कः ( ११, ६ )—'नवोनवो भवति जायमानः । इति पूर्वपक्षादिमभिप्रेत्य । अह्नां केतुरुषसामेत्यग्रम् । इत्यपरपक्षान्तम्[3] अभिप्रेत्य । आदित्यदैवतो द्वितीयः पाद इत्येके । भागं[4] देवेभ्यो वि दधात्यायन्[5] । इत्यर्धमासेज्यामभिप्रेत्य । प्रवर्धयते[6] चन्द्रमा दीर्घमायुः' इति ॥ १९ ॥

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥

सुऽकिंशुकम् । शल्मलिम् । विश्वऽरूपम् । हिरण्यऽवर्णम् । सुऽवृतम् । सुऽचक्रम् ।
आ । रोह । सूर्ये । अमृतस्य । लोकम् । स्योनम् । पत्ये । वहतुम् । कृणुष्व ॥ २० ॥

वेङ्कट० सूर्या देवता । हे सूर्ये ! शोभनकिंशुकम् शल्मलिमयम् नानारूपम् हिरण्यवर्णम् सुवर्तनम्[7] सुचक्रम् रथम् आ रोह । अमृतस्य स्थानम् सुखम् पत्ये वहतुम् आत्मनः[8] प्रापणं सोमाय कुरुष्व[9] । गुरुसारैः किंशुकैश्शल्मलिभिश्च रथः क्रियते । निरुक्तं ( या १२,८ ) द्रष्टव्यमिति ॥२०॥

[10]इति अष्टमाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[10] ॥

उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे ।
अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २१ ॥

उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुम् । नमसा । गीःऽभिः । ईळे ।
अन्याम् । इच्छ । पितृऽसदम् । विऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥२१॥

वेङ्कट० उत्-तिष्ठ अतः पतिवती हि एषा अभूत् । विश्वावसुम् च त्वां नमस्कारेण स्तुतिभिश्च स्तौमि[11] ।

---

१. अन्या वि[२]. २. पश्यन्ति वि[१]. ३. °क्षान्तम् इति वि[२]. ४. भागवान् वि[२]. ५. मिथा° वि[१]. ६. वर्ध° वि[२] अ[१]. ७. सुवृतं अ[१]. ८. °त्मानं वि[२] अ[१]. ९. कृणुष्व वि[२]. १०-१०. नास्ति मूको. ११. स्तौति वि[२] अ[१].

स त्वम् अन्याम् कन्याम् इच्छ पितृगृहस्थाम्[१] व्यक्ताम्। सः विश्वावसो! तव भागः जन्मनैव। तमेव भागं लभस्वेति ॥ २१ ॥

उदी॑र्ष्वातो॑ विश्वावसो नम॑सेळामहे त्वा ।
अ॒न्यामि॑च्छ प्रफ॒र्व्यं॑१ सं जा॒यां पत्या॑ सृज ॥ २२ ॥

उत् । ई॒र्ष्व॒ । अतः॑ । वि॒श्व॒व॒सो॒ इति॑ विश्वऽवसो । नम॑सा । ई॒ळा॒म॒हे॒ । त्वा॒ ।
अ॒न्याम् । इ॒च्छ॒ । प्र॒ऽफ॒र्व्य॑म् । सम् । जा॒याम् । पत्या॑ । सृ॒ज॒ ॥ २२ ॥

**वेङ्कट०** उत् ईर्ष्व अस्माच्छयनात् विश्वावसो!। नमस्कारेण सह त्वाम् स्तुमः[२]। स त्वम् अन्याम् इच्छ बृहन्नितम्बां कन्याम्। सम् सृज पुनः जायाम् आत्मीयेन पत्या इति ॥ २२ ॥

अ॒नृ॒क्ष॒रा ऋ॒जवः॑ सन्तु॒ पन्था॑ येभिः॑ सखा॑यो॒ यन्ति॑ नो व॒रेय॑म् ।
सम॑र्य॒मा सं भगो॑ नो निनी॒यात् सं जा॑स्प॒त्यं सु॒यम॑मस्तु देवाः ॥ २३ ॥

अ॒नृ॒क्ष॒राः । ऋ॒जवः॑ । स॒न्तु॒ । पन्थाः॑ । येभिः॑ । सखा॑यः । यन्ति॑ । नः॒ । व॒रे॒ऽय॑म् ।
सम् । अ॒र्य॒मा । सम् । भगः॑ । नः॒ । नि॒ऽनी॒या॒त् । सम् । जाः॒ऽप॒त्यम् । सु॒ऽयम॑म् । अ॒स्तु॒ । दे॒वाः॒ ॥

**वेङ्कट०** [३]कण्टकवर्जिताः अकुटिलाः[३] सन्तु पन्थानः, यैः पथिभिः गच्छन्ति अस्माकं वरैर्याचितव्यं पितरं वरप्रेषिताः सखायः वराः। सम् निनीयात् अस्मान् अर्यमा भगः च। पतिकुलं सम्यक् सङ्गतमस्तु हे देवाः!, इदं जायापत्योर्युगलं सुमिथुनमिति ॥ २३ ॥

प्र त्वा॑ मुञ्चामि॒ वरु॑णस्य॒ पाशा॒द् येन॒ त्वाब॑ध्नात् सवि॒ता सु॒शेवः॑ ।
ऋ॒तस्य॒ योनौ॑ सुकृ॒तस्य॑ लो॒केऽरि॑ष्टां त्वा स॒ह पत्या॑ दधामि ॥ २४ ॥

प्र । त्वा॒ । मु॒ञ्चा॒मि॒ । वरु॑णस्य । पाशा॑त् । येन॑ । त्वा॒ । अब॑ध्नात् । स॒वि॒ता । सु॒ऽशेवः॑ ।
ऋ॒तस्य॑ । योनौ॑ । सु॒ऽकृ॒तस्य॑ । लो॒के । अरि॑ष्टाम् । त्वा॒ । स॒ह । पत्या॑ । द॒धा॒मि॒ ॥ २४ ॥

**वेङ्कट०** अमी मन्त्रा आत्मनो विवाहाय सूर्यया दृष्टाः। ततश्च मन्त्राः पतिरूपम् ऋत्विग्रूपं[४] चास्थायेत्थं दृष्टा[५] इति बोद्धव्यम्। तत्र जातं वरुणः सवित्रा प्रेरित आत्मपाशैर्बध्नाति। तस्मात् वरुणस्य पाशात् त्वाम् प्र मुञ्चामि, येन त्वा अबध्नात् सविता वरुणस्य प्रेरकः सुसुखः। अथ तां यज्ञस्य[६] योनौ अस्मिन् लोके सुकृतस्य लोके च परत्र अहिंसिताम् त्वाम् पत्या सह स्थापयामीति ॥ २४ ॥

प्रेतो मु॒ञ्चामि॒ नामुतः॑ सुब॒द्धाम॒मुत॑स्करम् ।
यथे॒यमि॑न्द्र मीढ्वः सुपु॒त्रा सु॒भगास॑ति ॥ २५ ॥

---

१. °हस्थितां अ[१]. २. स्तुतिमः वि[२] अ[१]. ३-३. अकण्टका अकूर्मिलाः वि[२] अ[१]. ४ °ग्रूपां वि[१]. ५. दृष्ट्वा वि[२] अ[१]. ६. यज्ञयज्ञ° वि[१].

प्र । इ॒तः । मु॒ञ्चामि॑ । न । अ॒मुतः॑ । सु॒ऽब॒द्धाम् । अ॒मुतः॑ । क॒र॒म् ।
यथा॑ । इ॒यम् । इ॒न्द्र॒ । मी॒ढ्वः॒ । सु॒ऽपु॒त्रा । सु॒ऽभगा॑ । अस॑ति ॥ २५ ॥

**वेङ्कट०** प्र मुञ्चामि इमां पितृगृहात्, न अमुतः पतिगृहात्। सुबद्धाम् अमुतः पतिकुले करोमि। यथा इयम् इन्द्र! सेक्तः! सुपुत्रा सुधना च भवति तथा कुर्विति ॥ २५ ॥

[1]इति अष्टमाष्टके तृतीयाध्याये चतुर्विंशो वर्गः[1] ॥

पू॒षा त्वे॒तो न॑यतु हस्त॒गृह्या॒श्विना॑ त्वा॒ प्र व॑हतां॒ रथे॑न ।
गृ॒हान् ग॑च्छ गृ॒हप॑त्नी॒ यथासो॑ व॒शिनी॒ त्वं वि॒दथ॒मा व॑दासि ॥ २६ ॥

पू॒षा । त्वा॒ । इ॒तः । न॒य॒तु॒ । ह॒स्त॒ऽगृह्य॑ । अ॒श्विना॑ । त्वा॒ । प्र । व॒ह॒ता॒म् । रथे॑न ।
गृ॒हान् । ग॒च्छ॒ । गृ॒हऽप॑त्नी । यथा॑ । अस॑ः । व॒शिनी॑ । त्व॒म् । वि॒दथ॑म् । आ । व॒दा॒सि॒ ॥ २६ ॥

**वेङ्कट०** पूषा त्वाम् पितृगृहात् नयतु मृदुहस्तो हस्ते गृहीत्वा। अश्विनौ त्वाम् आत्मीयं रथमारोप्य प्र वहताम्। गृहान् गच्छ गृहाणां पत्नी [2]यथा त्वं[2] भवसि। स्वतन्त्रा त्वम् गृहस्थितं जनम् आ वद ॥ २६ ॥

इ॒ह प्रि॒यं प्र॒जया॑ ते॒ सम॑ृध्यताम॒स्मिन् गृ॒हे गार्ह॑पत्याय जागृहि ।
ए॒ना पत्या॑ त॒न्वं१॒ सं सृ॑ज॒स्वाधा॒ जिव्री॑ वि॒दथ॒मा व॑दाथः ॥ २७ ॥

इ॒ह । प्रि॒यम् । प्र॒ऽजया॑ । ते॒ । सम् । ऋ॒ध्य॒ता॒म् । अ॒स्मिन् । गृ॒हे । गार्ह॑ऽपत्याय । जा॒गृ॒हि॒ ।
ए॒ना । पत्या॑ । त॒न्व॑म् । सम् । सृ॒ज॒स्व॒ । अध॑ । जिव्री॒ इति॑ । वि॒दथ॑म् । आ । व॒दा॒थः॒ ॥ २७ ॥

**वेङ्कट०** इह तव पतिकुले प्रजया सह प्रियम् सम् ऋध्यताम्। अस्मिन् गृहे प्रभुत्वाय जागृहि। पत्या च एना आत्मीयं शरीरम् सम् सृजस्व। अथ जीर्णावमृतौ युवां जायापती गृहम् आभिमुख्येन वदतम्[3] ॥ २७ ॥

नी॒ल॒लो॒हि॒तं भ॑वति कृ॒त्यास॒क्तिर्व्य॑ज्यते ।
एध॑न्ते अस्या ज्ञा॒तय॒ः पति॑र्ब॒न्धेषु॑ बध्यते ॥ २८ ॥

नी॒ल॒ऽलो॒हि॒तम् । भ॒व॒ति॒ । कृ॒त्या । आ॒स॒क्तिः । वि । अ॒ज्य॒ते॒ ।
एध॑न्ते । अ॒स्याः॒ । ज्ञा॒तय॑ः । पति॑ः । ब॒न्धेषु॑ । ब॒ध्य॒ते॒ ॥ २८ ॥

**वेङ्कट०** नीललोहितम् भवति कृत्यायाः रूपम्। सेयं[4] कृत्या अस्यामासक्ता वि अज्यते [5]प्रेते। अथ[5] कृत्यायाम् अपनीतायाम् अस्याः ज्ञातयः पितृकुलस्थाः वर्धन्ते। पतिः चात्मनो बन्धकेषु स्वकुल्येषु बध्यते[6] इति ॥ २८ ॥

---

१-१. नास्ति मूको. २-२. यथायं वि[2] वि[1]. ३. वदथ वि[2] अ[1]; वदतः वि[1]. ४. सें वि[1].
५-५. त्रुटितम् वि[2]; प्र ··· अ[1]. ६. वर्धते वि[2] अ[1].

परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्व्या जाया विशते पतिम् ॥ २९ ॥

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु ।
कृत्या । एषा । पत्ऽवती । भुत्वी । आ । जाया । विशते । पतिम् ॥ २९ ॥

**वेङ्कट०** शरीराच्छन्नस्य मलस्य धारकम् शामुल्यम् वस्त्रम् परा देहि विसृज । धृतप्रायश्चित्तार्थं ब्राह्मणेभ्यः प्रयच्छ धनम् । कृत्या एषा पद्वती भूत्वा पतिम् जाया आ विशते, यदात्मीयं वासस्तस्मिन्निधत्त इति वधूवासःस्पर्शनिन्दार्थमुक्तम्, प्रमादात् स्पृशतः प्रायश्चित्तं च ॥ २९ ॥

अश्रीरा तनूर्भवति रुशती पापयामुया ।
पतिर्यद्वध्वो३ वाससा स्वमङ्गमभिधित्सते ॥ ३० ॥

अश्रीरा । तनूः । भवति । रुशती । पापया । अमुया ।
पतिः । यत् । वध्वः । वाससा । स्वम् । अङ्गम् । अभिऽधित्सते ॥ ३० ॥

**वेङ्कट०** श्रीरहिता तनूः भवति दीप्ता पापया अनया वासोरूपया कृत्यया । पतिः यदि वध्वः वाससा स्वम् अङ्गम् परिधातुमिच्छति ॥ ३० ॥

[1]इति अष्टमाष्टके तृतीयाध्याये पञ्चविंशो वर्गः[1] ॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥ ३१ ॥

ये । वध्वः । चन्द्रम् । वहतुम् । यक्ष्माः । यन्ति । जनात् । अनु ।
पुनरिति । तान् । यज्ञियाः । देवाः । नयन्तु । यतः । आऽगताः ॥ ३१ ॥

**वेङ्कट०** ये[2] वध्वः सुवर्णरूपम् वहतुम् प्रति यक्ष्माः यन्ति जनात् अनु, पुनः तान् यक्ष्मान् यज्ञार्हाः देवाः नयन्तु, यतः ते [3]यक्ष्माः आगताः[3] इति ॥ ३१ ॥

मा विदन् परिपन्थिनो य आसीदन्ति दंपती । सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥ ३२ ॥

मा । विदन् । परिऽपन्थिनः । ये । आऽसीदन्ति । दम्पती इति दम्ऽपती ।
सुऽगेभिः । दुःऽगम् । अति । इताम् । अप । द्रान्तु । अरातयः ॥ ३२ ॥

**वेङ्कट०** मा प्रापयन् पर्यवस्थातारः [4]ये आसीदन्ति[4] दम्पती । सुगैर्मार्गैः गच्छन्तौ[5] दुर्गम् पन्थानम् [6]अति इताम्[6] । अप-गच्छन्तु अरातयः ॥ ३२ ॥

---

१-१. नास्ति मूको. २. ये स वि[1]. ३-३. यक्ष्माज्ञाता वि[1]. ४-४. वसू सीदन्ति वि[1].
५. °च्छन्तः वि[2] अ[1]. ६-६. °तीतम् वि[1].

सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥३३॥

सुऽमङ्गलीः । इयम् । वधूः । इमाम् । सम्ऽएत । पश्यत ।
सौभाग्यम् । अस्यै । दत्त्वाय । अथ । अस्तम् । वि । परा । इतन ॥ ३३ ॥

वेङ्कट० शोभनमङ्गला इयम् वधूः। इमाम् समेत पश्यत च। अस्यै सौभाग्यम् दत्वा अथ यथायथं स्वं-स्वं गृहम् प्रति गच्छत ॥ ३३ ॥

तृष्टमेतत् कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा विद्यात् स इद्वाधूयमर्हति ॥ ३४ ॥

तृष्टम् । एतत् । कटुकम् । एतत् । अपाष्ठऽवत् । विषऽवत् । न । एतत् । अत्तवे ।
सूर्याम् । यः । ब्रह्मा । विद्यात् । सः । इत् । वाधूऽयम् । अर्हति ॥ ३४ ॥

वेङ्कट० दाहजनकम् कटुकम् च एतत् अपाष्ठवत्। अपाष्ठम् अपस्थितम् ऋजीषं तद्वत्[1]। विषवत् न एतत् अत्तव्यम्। सूर्याम् यः ब्राह्मणः जानाति, सः एव एतद्वधूवस्त्रम् अर्हति। अन्यस्तु प्रतिगृह्णानः प्रत्यवैति, यथाऽपेयं पीत्वेति। 'चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात्' (आगृ १,८,१२) इति विवाहे आश्वलायनः। सर्वेषां मन्त्राणां गृह्ये ज्ञातव्यो विनियोग इति ॥ ३४ ॥

आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुन्धति ॥ ३५ ॥

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।
सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । तु । शुन्धति ॥ ३५ ॥

वेङ्कट० वासांसि[2] अवस्थितान्याशसनादीनि सूर्यायाः रूपाणि भवन्ति। पुरा सूर्या आत्मशरीरे स्थितानि[3] विदधे वासांस्यमङ्गलानि। तानि रूपाणि सूर्याविद् ब्राह्मण एव तस्माद्वाससः अपनयति। तत्र आशसनम् तूषाधानम् चान्यवर्णं भवति। विशसनम् शिरसि निधीयमानम्। तादृशं दशान्ते[4] निधीयमानम् अधिविकर्तनम् यत् त्रिधा वासो निकृन्तन्ति इति ॥ ३५ ॥

[5]इति अष्टमाष्टके तृतीयाध्याये षड्विंशो वर्गः[5] ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ३६ ॥

गृभ्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।
भगः । अर्यमा । सविता । पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ३६ ॥

---

१. तद्वच मूको. २. वासस्वि वि[1]; पाशसि वि[2] अ[1]. ३ अन्वितानि वि[1]. ४. दान्ते मूको.
५-५. नास्ति मूको.

**वेङ्कट०** गृह्णामि[1] ते सौभाग्याय हस्तम्, मया पत्या यथा त्वं प्राप्तवार्धक्या भवसि। भगः अर्यमा सविता पूषा च मह्यम् त्वाम् प्रायच्छन्, यथाऽहं[2] गृहपतिः स्यामिति ॥ ३६ ॥

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति।
या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ ३७ ॥

ताम्। पूषन्। शिवऽतमाम्। आ। ईरयस्व। यस्याम्। बीजम्। मनुष्याः। वपन्ति।
या। नः। ऊरू इति। उशती। विऽश्रयाते। [3]यस्याम्। उशन्तः। प्रऽहराम। शेपम्[3] ॥३७॥

**वेङ्कट०** ताम् पूषन्! शिवतमाम् आ गमय, यस्याम् बीजम् मनुष्याः वपन्ति, या अस्माकम् ऊरू कामयमाना विश्रयाते[4], यस्याम् कामयमानाः वयम् प्रहराम शेपम् इति ॥ ३७ ॥

तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ ३८ ॥

तुभ्यम्। अग्रे। परि। अवहन्। सूर्याम्। वहतुना। सह।
पुनरिति। पतिऽभ्यः। जायाम्। दाः। अग्ने। प्रऽजया। सह ॥ ३८ ॥

**वेङ्कट०** तुभ्यम् अग्ने प्रायच्छन् गन्धर्वाः सूर्याम् वहतुना सह। अथ [5]तां त्वं[5] सोमाय प्रायच्छः। इदानीमपि पुनः एनाम् पतिभ्यः जायाम् देहि अग्ने! प्रजया सह इति ॥ ३८ ॥

पुनः पत्नीमग्निरदादायुषा सह वर्चसा।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ ३९ ॥

पुनरिति। पत्नीम्। अग्निः। अदात्। आयुषा। सह। वर्चसा।
[6]दीर्घऽआयुः। अस्याः। यः। पतिः। जीवाति। शरदः। शतम्[6] ॥ ३९ ॥

**वेङ्कट०** आत्मपरिगृहीताम् एनाम् पुनः अपि पत्नीम् अग्निः प्रयच्छतु[7] आयुषा वर्चसा सह। दीर्घायुः अस्याः यः पतिः जीवतु शरदः शतम् इति ॥ ३९ ॥

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ४० ॥

सोमः। प्रथमः। विविदे। गन्धर्वः। विविदे। उत्ऽतरः।
[8]तृतीयः। अग्निः। ते। पतिः[8]। तुरीयः। ते। मनुष्यऽजाः ॥ ४० ॥

**वेङ्कट०** जाताम् सोमः प्रथमः लब्धवान्। गन्धर्वः विश्वावसुः उत्तरः विविदे। ततः[9] तृतीयः अग्निः ते पतिः। तुरीयः ते मनुष्येषु जातोऽयं मानुषः पतिः ॥ ४० ॥

[10]इति अष्टमाष्टके तृतीयाध्याये सप्तविंशो वर्गः[10] ॥

---

१. गृह्णामि वि[1]. २. अथात्वं वि[1]. ३-३. या. (३,२१) निगमोऽयं द्र. ४. नास्ति मूको. ५-५. तं त्वा मूको. ६-६. या. (४,२५) व्याख्यानं द्र. ७. प्राय॰ वि[2]. ८-८. या. (१०,२१) निगमोऽयं द्र. ९. ते वि[1] अ[1]. १०-१०. नास्ति मूको.

**सोमो॑ ददद्गन्धर्वाय॑ गन्ध॒र्वो द॑ददग्नये॑ । र॒यिं च॑ पु॒त्राँश्चा॑दाद॒ग्निर्मह्य॒मथो॑ इ॒माम् ॥४१॥**

सोम॑ः । द॒द॒त् । ग॒न्ध॒र्वाय॑ । ग॒न्ध॒र्वः । द॒द॒त् । अ॒ग्नये॑ ।
र॒यिम् । च॒ । पु॒त्रान् । च॒ । अ॒दा॒त् । अ॒ग्निः । मह्य॑म् । अथो॒ इति॑ । इ॒माम् ॥ ४१ ॥

**वेङ्कट०** सोमः प्रयच्छतु गन्धर्वाय । [1]गन्धर्वः प्रयच्छतु[1] अग्नये[2] । रयिम् च पुत्रान् च प्रयच्छतु[3] अग्निः मह्यम् अथो इमाम् च ॥ ४१ ॥

**इ॒हैव स्तं॑ मा वि यौ॑ष्टं॒ विश्व॒मायु॒र्व्य॑श्नुतम्। क्रीळ॑न्तौ पु॒त्रैर्नप्तृ॑भि॒र्मोद॑मानौ॒ स्वे गृ॒हे ।४२।**

इ॒ह । ए॒व । स्त॒म् । मा । वि । यौ॒ष्ट॒म् । विश्व॑म् । आयु॑ः । वि । अ॒श्नु॒त॒म् ।
क्रीळ॑न्तौ । पु॒त्रैः । नप्तृ॑ऽभिः । मोद॑मानौ । स्वे । गृ॒हे ॥ ४२ ॥

**वेङ्कट०** इह एव भवतम्[4] । मा [5]पृथग् भूतम्[5] । विश्वम् च आयुः वि अश्नुतम् क्रीळन्तौ पुत्रैः पौत्रैश्च स्वे गृहे ॥ ४२ ॥

**आ नः॑ प्र॒जां ज॑नयतु प्र॒जाप॑तिराजर॒साय॑ सम॑नक्त्वर्य॒मा ।**
**अदु॑र्मङ्गलीः पतिलो॒कमा वि॑श॒ शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥ ४३ ॥**

आ । न॒ः । प्र॒ऽजाम् । ज॒न॒य॒तु॒ । प्र॒जाऽप॑तिः । आ॒ऽज॒र॒साय॑ । सम् । अ॒न॒क्तु॒ । अ॒र्य॒मा ।
अदु॑ःऽमङ्गलीः । प॒ति॒ऽलो॒कम् । आ । वि॒श॒ । शम् । न॒ः । भ॒व॒ । द्वि॒ऽपदे॑ । शम् । चतु॑ःऽपदे ॥४३॥

**वेङ्कट०** आ जनयतु अस्माकम् प्रजापतिः प्रजाम् । चिरमवस्थानाय सम्-गमयतु अर्यमा । सा त्वम् अदुर्मङ्गलीः भूत्वा पतिसकाशे [6]आ विश । शम्[6] चास्माकम् भव द्विपदे चतुष्पदे च । या मङ्गलाचारान्[7] दूषयति सा दुर्मङ्गली, ततोऽन्या अदुर्मङ्गलीति[8] ॥ ४३ ॥

**अघो॑रचक्षु॒रप॑तिघ्न्येधि शि॒वा प॒शुभ्य॑ः सु॒मना॑ः सु॒वर्चा॑ः ।**
**वी॒र॒सूर्दे॒वका॑मा स्यो॒ना शं नो॑ भव द्वि॒पदे॒ शं चतु॑ष्पदे ॥ ४४ ॥**

अघो॑रऽचक्षुः । अप॑तिऽघ्नी । ए॒धि॒ । शि॒वा । प॒शुऽभ्य॑ः । सु॒ऽमना॑ः । सु॒ऽवर्चा॑ः ।
वी॒र॒ऽसूः । दे॒वऽका॑मा । स्यो॒ना । शम् । न॒ः । भ॒व॒ । द्वि॒ऽपदे॑ । शम् । चतु॑ःऽपदे ॥ ४४ ॥

**वेङ्कट०** अघोरचक्षुः अपतिघ्नी च भव शिवा पशुभ्यः सुहृदया [9]सुरूपा च[9] वीरसू देवानिच्छन्ती सुखस्य भावयित्री ॥ ४४ ॥

**इ॒मां त्वमि॑न्द्र मीढ्वः सुपु॒त्रां सु॒भगां॑ कृणु ।**
**दशा॑स्यां पु॒त्राना धे॑हि॒ पति॑मेकाद॒शं कृ॑धि ॥ ४५ ॥**

---

१-१. गन्धर्वाः प्रयच्छन्तु वि[1]. २. त्वग्न° वि[2] अ[1]. ३. °च्छति वि[2] अ[1]. ४. °तां वि[1].
५-५. °थमं भूतं अ[1]. ६-६. शमाविश अ[1]. ७. °चारा वि[2] अ[1]. ८. मङ्गलीरिति वि[1].
९-९. सुरूपया वि[1] अ[1]; स्वरूपया वि[2].

इमाम् । त्वम् । इन्द्र । मीढ्वः । सुऽपुत्राम् । सुऽभगाम् । कृणु ।
दश । अस्याम् । पुत्रान् । आ । धेहि । पतिम् । एकादशम् । कृधि ॥ ४५ ॥

**वेङ्कट०** इमाम् एवंविधाम् त्वम् इन्द्र! मीढ्वः! सुपुत्राम् सुभगाम् कुरु। दश च[1] अस्याम् पुत्रान् आ धेहि। तथा कृत्वा पतिम् एकादशम् कृधि इति ॥ ४५ ॥

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ४६ ॥

सम्ऽराज्ञी । श्वशुरे । भव । सम्ऽराज्ञी । श्वश्र्वाम् । भव ।
ननान्दरि । सम्ऽराज्ञी । भव । सम्ऽराज्ञी । अधि । देवृषु ॥ ४६ ॥

**वेङ्कट०** श्वशुरादिषु त्वम् सम्राज्ञी भव देवृषु देवरेष्विति ॥ ४६ ॥

समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥ ४७ ॥

सम् । अञ्जन्तु । विश्वे । देवाः । सम् । आपः । हृदयानि । नौ ।
सम् । मातरिश्वा । सम् । धाता । सम् । ऊँ इति । देष्ट्री । दधातु । नौ ॥ ४७ ॥

**वेङ्कट०** सम् गमयन्तु आवयोः हृदयानि विश्वे देवाः आपः च। तथा मातरिश्वा धाता सरस्वती च नौ सम् दधातु इति ॥ ४७ ॥

[2]इति अष्टमाष्टके तृतीयाध्याये अष्टाविंशो वर्गः[2] ॥

एकोनषष्टमध्यायं व्याकरोदिति माधवः ।
जगतामेकधीरस्य[3] विषये निवसन् सुखम् ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके तृतीयोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके तृतीयोऽध्यायः ॥



१. नास्ति मूको. २-२. नास्ति मूको. ३. °कवीरस्य वि°.

## अथ चतुर्थोऽध्यायः

वेङ्कट०

'वि हि सोतोरसृक्षत' व्याचिख्यासति माधवः।
ऋग्भाष्यकृद्विवक्तव्यमादितः सम्प्रदर्शयन् ॥ १ ॥

अधीतसाङ्गवेदोऽपि पदार्थमिह मानवः[1]।
बाहुश्रुत्याद्विजानाति[2] व्यसनादभियोगतः[3] ॥ २ ॥

जघनार्धे[4] कुरुक्षेत्रे शर्यणावद्ध वै सरः।
अस्तीति शाट्यायनकं 'तद्विदच्छर्यणावति'[5] ॥ ३ ॥

'महः क्षोणस्याश्विने(ना' इ[6])ति क्षोणो वीणेति दर्शितम्।
'चत्वारि शृङ्गा'[7] व्याख्याता ब्राह्मणेऽथर्वणामिति ॥ ४ ॥

अव्युत्पन्नाः प्राक्पदार्थाः कल्प्यन्ते यत्नतोऽपि च।
इह प्राज्ञैर्व्यसनिभिः पदवाक्यानुसारिभिः[8] ॥ ५ ॥

आश्विनार्भवसूक्तानाम् आश्विनार्भवदर्शनात्।
निर्णयोऽर्थस्य भवति सोऽभियोगः प्रकीर्तितः ॥ ६ ॥

ज्ञातेष्वपि पदार्थेषु वाक्यार्थपरिकल्पनम्।
अशक्यमृक्षु बह्वीषु नरैरकृतबुद्धिभिः ॥ ७ ॥

तस्मात्पदार्थवाक्यार्थान् प्रयत्नेन प्रदर्शयेत्।
नान्यत् किञ्चिदपि ब्रूयाद् निरुक्तमपि तादृशम् ॥ ८ ॥

भाष्याणि वैदिकान्याहुरार्यावर्तनिवासिनः।
क्रियमाणान्यपीदानीं निरुक्तानीति[9] माधवः ॥ ९ ॥

स्कन्दस्वामी नारायण उद्गीथ इति ते क्रमात्।
चक्रुस्सहैकमृग्भाष्यं पदवाक्यार्थगोचरम् ॥ १० ॥

[10]भाषमाणास्तमेवार्थम् अथ सम्प्रति[10] मानवाः।
मायाविनो लिखन्त्यन्ये व्याख्यानानि गृहेगृहे ॥ ११ ॥

वर्गाणामथ सूक्तानाम् ऋक्सङ्ख्यां तत्र कश्चन।
प्रदर्शयति मायार्थं विनियोगमथापरः[11] ॥ १२ ॥

---

१. माधवः वि[2] अ[1].　२. °विजानन्ति वि[2] अ[1].　३. °सनाद्यभि° वि[2] अ[1].　४. °र्धे वि[1].
५. ऋ १,८४,१४.　६. ऋ १,११७,८.　७. ऋ ४,५८,३.　८. यागतः पद° वि[1].　९. °क्तादीनि वि[1].　१०-१०. भाषणास्तमेवार्थमसंप्रति वि[1].　११. °परं वि[2] अ[1].

पृच्छन्ति ताविमौ प्राज्ञाः शौनकेन प्रदर्शिता ।
अक्षराणां[1] पदानां च सङ्ख्या सा [2]किन्न लिख्यते[2] ॥ १३ ॥

एतावदक्षरं सूक्तम् एतावत्पदकं तथा ।
इत्येवमुच्यमाने हि तच्च जानन्ति लौकिकाः ॥ १४ ॥

ग्रन्थेऽस्ति[3] पदसङ्ख्येति यत्नो न भवतोस्ततः ।
पदसङ्ख्या च भवतोर्वाच्या ग्रन्थं निरीक्ष्य तम् ॥ १५ ॥

लोकतः काव्यतोऽङ्गैश्च[4] पदार्थानन्वयानपि ।
[2]न विज्ञातान् वदेत्[2] प्राज्ञो मन्त्राणामिति निश्चयः ॥ १६ ॥

न त्वात्मीयं परिज्ञानम् अङ्गोपाङ्गादिगोचरम्[5] ।
अनपेक्षितमप्यर्थं दर्शयेद् यत्नमास्थितः[6] ॥ १७ ॥

बहूनामपि सूक्तानां बह्वीनामप्यृचां तथा ।
प्रदर्शितामयाऽन्येऽर्था न तु मायेह विद्यते ॥ १८ ॥

येऽर्था भाष्येषु कथिता ये चास्माभिः प्रदर्शिताः ।
गवाश्ववद्विभिन्नास्ते[7] [8]न त्वाम्रसहकारवत्[8] ॥ १९ ॥

उपर्यर्थो विभिन्नोऽत्र शिष्टः प्रायेण तत्समः ।
युक्तायुक्तविनिर्णयं कृतबुद्धिषु तिष्ठति ॥ २० ॥

[ ८६ ]

[9]इन्द्र ऋषिः ; ७,१३,२३ ऐन्द्रो वृषाकपिः ; २-६,९-१०,१५-१८ इन्द्राणी ।
इन्द्रो देवता । पङ्क्तिश्छन्दः[9] ।

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥ १ ॥

वि । हि । सोतोः । असृक्षत । न । इन्द्रम् । देवम् । अमंसत ।
यत्र । अमदत् । वृषाकपिः । अर्यः । पुष्टेषु । मत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १ ॥

वेङ्कट० इन्द्राण्यै[10] कल्पितं हविः कश्चिन्मृगः अदूदुषत्[11] इन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानः ।

---

१. अक्ष्माणां वि[2] अ[1]. २-२. त्रुटितम् वि[2] अ[1]. ३. °न्योस्ति वि[2] अ[1]. ४. कार्यतो° वेंकअ. ५. °गोचरः वि[1] अ[1]. ६. °स्थितं वि[1] अ[1]. ७ °श्वबलिभिन्नः° वि[2] अ[1]. ८-८. प्रत्वाम्र° वि[1] अ[1]; नत्वाम्रास° वि[1]. ९-९. नास्ति मूको. १०. इन्द्राण्याः वि[1]; इन्द्राण्यं वि[2] अ[1]. ११. अदुद्दषत् वि[1]; अदुदूषम् वि[2] अ[1].

[1]तत्र इन्द्रमिन्द्राणी वदति[1]— अभिषोतुम् उपरताभिषवा आसन् यजमानाः । न च मम पतिम् इन्द्रम् देवम् स्तुवन्ति दुष्टे यज्ञे यस्मिन् जनपदे अमदत् वृषाकपिः तव पुत्रः स्वामी पुष्टेषु । [2]मत्सखा प्रियः[2] विश्वस्मात् मम पतिः इन्द्रः उत्कृष्टः ॥ १ ॥

परा हीन्द्र धावसि वृषाकपेरति व्यथिः ।
नो अह प्र विन्दस्यन्यत्र सोमपीतये विश्वस्मादिन्द्र उत्तरः ॥ २ ॥

परा । हि । इन्द्र । धावसि । वृषाकपेः । अति । व्यथिः ।
नो इति । अह । प्र । विन्दसि । अन्यत्र । सोमऽपीतये । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥२॥

**वेङ्कट०** अत्यन्तम् इन्द्र! त्वं चलितः वृषाकपिम् प्रति-धावसि । अन्यत्र[3] सोमपानाय नैव च प्र-गच्छसि । सोऽयम् इन्द्रः विश्वस्मात् उत्तरः ॥ २ ॥

किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसीदु न्वर्यो वा पुष्टिमद्वसु विश्वस्मादिन्द्र उत्तरः ॥ ३ ॥

किम् । अयम् । त्वाम् । वृषाकपिः । चकार । हरितः । मृगः ।
यस्मै । इरस्यसि । इत् । ऊँ इति । नु । अर्यः । वा । पुष्टिऽमत् । वसु । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

**वेङ्कट०** किम् अयम् त्वाम् प्रति प्रियम् चकार हरितवर्णः मृगः । वृषाकपिः मृगजातिः । यस्मै प्रयच्छस्येव क्षिप्रम् उदारः इव दरिद्राय पोषयुक्तम् धनम्, यस्त्वम् इन्द्रः विश्वस्मात् उत्तरः ॥ ३ ॥

यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥ ४ ॥

यम् । इमम् । त्वम् । वृषाकपिम् । प्रियम् । इन्द्र । अभिऽरक्षसि ।
श्वा । नु । अस्य । जम्भिषत् । अपि । कर्णे । वराहऽयुः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ४ ॥

**वेङ्कट०** यम् इमम् त्वम् वृषाकपिम् प्रियम् पुत्रम् इन्द्र! अभिरक्षसि । श्वा क्षिप्रम् एनम् भक्षयतु, अपि च कर्णे गृह्णातु वराहमिच्छन् । श्वानो हीच्छन्ति वराहानिति ॥ ४ ॥

प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥ ५ ॥

प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् ।
शिरः । नु । अस्य । राविषम् । न । सुऽगम् । दुःऽकृते । भुवम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

---

१-१. तत्रे ··· सक्ष वि[2] अ[1]; तत्रे ··· सक्षत वि[1]. २-२. मायत्सुखा यो वि[2] अ[1]; मायस्सखाशो वि[1].
३. नास्ति वि[2] अ[1].

**वेङ्कट०** प्रियाणि यजमानैः कल्पितानि मे कश्चित् कपिः अस्य विषये वर्तमानः [1]आज्यै-र्व्यंक्तान्यन्नानि वि अदूदुषत्[1]। ततोऽहं तस्य[2] स्वामिनो वृषाकपेः शिरः क्षिप्रम् लुनीयाम्। न सुगम् सुखम् अहम् अस्मै दुष्कृते भुवम्। यस्याः[3] मम पतिः इन्द्रः विश्वस्मात् उत्तरः ॥ ५ ॥

[4]इति अष्टमाष्टके चतुर्थाध्याये प्रथमो वर्गः[4] ॥

न मत् स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत् प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् ।
न । मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी । विश्वस्मात् । इन्द्रः । उत्ऽतरः ।६।

**वेङ्क०** न मत्तोऽन्या स्त्री सुभसत्तरा शोभनकटिप्रदेशा। न च[5] सुपुत्रा अभवद् अत्यन्तम्। याशुः पुत्रः। 'ददाति मह्यं यादुरी याशूनां भोज्या शता' (ऋ १, १२६, ६) इति मन्त्रः। यद्वाऽन्ये मैथुनविषयो याशुः। न मत्तोऽन्या शरीरस्य पुमांसं प्रति अत्यन्तं च्यावयित्री। न [6]चान्या मैथुने अनुगुणम्[6] सक्थि उद्यच्छति ॥ ६ ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिन्द्र उत्तरः ॥ ७ ॥

उवे । अम्ब । सुलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽइव । हृष्यति । विश्वस्मात् । इन्द्रः । उत्ऽतरः ।७।

**वेङ्कट०** इन्द्राण्या शप्तो[7] वृषाकपिः तां वदति। उवे इति निपात आभिमुख्यकृत् स्त्रीणाम्। उवे! अम्ब! सुलाभे![8] यथा[9] त्वया शप्तस्य भविष्यति, तथेदानीं [10]भसत् बाहुमूलम्[10] सक्थि शिरः च मम वि हृष्यन्ति कम्पन्ते। मम पिता इन्द्रः विश्वस्मात् उत्तरः, तव पतिर्वेति[11] ॥ ७ ॥

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो । पृथुऽजघने ।
किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि । वृषाकपिम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

**वेङ्कट०** इन्द्राणीमिन्द्र उपशमयति। किम् शोभनबाहो![12] शोभनाङ्गुलिके! पृथुकेशसङ्घाते! पृथुजघने! शूरपतिके! त्वम् अस्मदीयम् वृषाकपिम् अभि-क्रुध्यसि, यस्य पिता इन्द्रः विश्वस्मात् उत्तरः ॥८॥

---

१-१. द्रूषान्नमूदुष्यत् दूव्रशान्तमृढुषव अ[1] वि[1]. २. त्यस्य वि[1]. ३. यस्मात् वि[2] अ[1]. ४-४. नास्ति मूको. ५. नास्ति वि[1]. ६-६. च या मैथुने गुणं मूको. ७. उक्तो वि[1]; शक्तो वि[2] अ[1]. ८. °लभे वि[2] अ[1]; °लेमे वि[1]. ९. यदा वि[2] अ[1]. १०-१०. भसद् बाल्य(ल्प)मूलं वि[2] अ[1]; भवसबाहुमूलं वि[1]. ११ °तिर्वेति वि[1]. १२. अस्मदीयं वृषाकपिं मूको.

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥

[1]अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।[1]
उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी । मरुत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥९॥

**वेङ्कट०** अपुत्राम् इव माम् अयम् शरारुः मृगः अभि मन्यते । अपि च अहम् अस्मि वीरवती इन्द्रस्य पत्नी मरुद्भिश्च युक्ता, यस्याः मम पतिः इन्द्रः त्वम् विश्वस्मात् उत्तरः ॥ ९ ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥

सम्ऽहोत्रम् । स्म । पुरा । नारी । समनम् । वा । अव । गच्छति ।
वेधाः । ऋतस्य । वीरिणी । इन्द्रऽपत्नी । महीयते । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १० ॥

**वेङ्कट०** यज्ञम् खलु पुरा नारी सङ्ग्रामम् वा प्रति गच्छति, विधात्री सत्यस्य वीरवती इन्द्रस्य पत्नी स्तूयते । तस्याः पतिः इन्द्रः विश्वस्मात् उत्तरः ॥ १० ॥

[2]इति अष्टमाष्टके चतुर्थाध्याये द्वितीयो वर्गः[2] ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।
नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥११॥[3]

**वेङ्कट०** अथ वृषाकपिमातरं स्तौति । इन्द्राणीम् आसु नारीषु सुभाग्याम् अहम् अश्रौषम् । नहि अस्याः अपरम् इव भूतं[4] जरया म्रियते पतिः इन्द्रः सर्वोत्कृष्टः ॥ ११ ॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ १२ ॥

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते ।
यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥१२॥[3]

**वेङ्कट०** न अहम् इन्द्रः इन्द्राणि! रमे वृषाकपेः सख्युः ऋते[5], '[6]यस्य सकाशम् इदम् अप्सु[6] भवम् अद्भिर्वा संस्कृतम्[7] हविः प्रियम् देवानां मध्ये गच्छति, यश्च सर्वोत्कृष्टः ॥ १२ ॥

---

१-१. या. ( ६,३१ ) व्याख्यानं द्र. २-२. नास्ति मूको. ३. अत्र या. (११,३८;३९ यथाक्रमं) द्र.
४. भातारम् वि[1]. ५. इन्द्रादृते मूको. ६-६. यस्यैषः सु वि[2] अ[1]; यस्यैरमाशु वि[1]. ७. संस्तुतं वि[1].

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत् त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ॥ १३ ॥

वृषाकपायि । रेवति । सुऽपुत्रे । आत् । ऊँ इति । सुऽस्नुषे ।
घसत । ते । इन्द्रः । उक्षणः । प्रियम् । काचित्ऽकरम् । हविः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

वेङ्कट० इन्द्रोऽपि वृषाकपिः, तस्य पत्नि! धनवति! शोभनपुत्रे! शोभनस्नुषे!। 'वायुरस्याः पुत्रो माध्यमिका वाक् स्नुषा' इति यास्कः । प्राश्नातु तव अयम् इन्द्रः संस्कृतानुपाकृतान्[1] उक्षणः । अत्र यास्कः ( १२, ९ )—'प्रियं कुरुष्व सुखाचयकरं हविः' इति ॥ १३ ॥

उक्षणो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः ॥ १४ ॥

उक्षणः । हि । मे । पञ्चऽदश । साकम् । पचन्ति । विंशतिम् ।
उत । अहम् । अद्मि । पीवः । इत् । उभा । कुक्षी इति । पृणन्ति । मे । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

वेङ्कट० इन्द्रवचनम् । अनया मम पत्न्या प्रेरिता मदर्थम् उक्षणः पञ्चदश विंशतिम् च साकम् [2]पचन्ति । अपि च अहम् अश्नामि अन्नम्[2] । उभौ च कुक्षी पूरयन्ति मे सोमैः । यः इन्द्रः सर्वस्माद् उत्कृष्टः ॥ १४ ॥

वृषभो न तिग्मशृङ्गोऽन्तर्यूथेषु रोरुवत् ।
मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः ॥ १५ ॥

वृषभः । न । तिग्मऽशृङ्गः । अन्तः । यूथेषु । रोरुवत् ।
मन्थः । ते । इन्द्र । शम् । हृदे । यम् । ते । सुनोति । भावयुः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

वेङ्कट० यथा तिग्मशृङ्गः वृषभः यूथेषु अन्तः शब्दं कुर्वन् अभिरमयति गाः, तथा अभिरमय माम् । मन्थः चायं तव इन्द्र! शङ्करः भवतु हृदयाय यम् च तुभ्यम् सोमम् अभि-षुणोति भावमिच्छन्तीन्द्राणी[3] इतीन्द्राण्या[4] वचनमिति ॥ १५ ॥

[5]इति अष्टमाष्टके चतुर्थाध्याये तृतीयो वर्गः[5] ॥

न सेशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृत् ।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥ १६ ॥

---

१. संस्तुतानुपागतान् वि[1]. २-२. नास्ति वि[2] अ[1]. ३. भवमीन्द्राणी मूको. ४. °णी वि[1].
५-५. नास्ति मूको.

न । सः । ई॒शे॒ । यस्य॑ । रम्ब॑ते । अ॒न्त॒रा । स॒क्थ्या॑ । कपृ॑त् ।
सः । इत् । ई॒शे॒ । यस्य॑ । रो॒म॒शम् । नि॒ऽसे॒दुषः॑ । वि॒ऽजृम्भ॑ते । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥

वेङ्कट० न सः जन ईष्टे शक्नोति मैथुनं कर्तुम्, यस्य जनस्य अन्तरा सक्थिनी लम्बते कपृत् शेपः । सः एव ईशे, यस्य रोमशम् उपस्थं शयानस्य विवृतं[1] भवति । यस्य च पतिर्हि इन्द्रः विश्वस्माद् उत्तरः उत्कृष्ट इति यियासोः[2] पत्न्या वचनम् ॥ १६ ॥

न सेशे॒ यस्य॑ रोम॒शं नि॑षे॒दुषो॑ वि॒जृम्भ॑ते ।
सेदी॑शे॒ यस्य॒ रम्ब॑तेऽन्त॒रा स॒क्थ्या॒३ कपृ॒द् विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ १७ ॥

न । सः । ई॒शे॒ । यस्य॑ । रो॒म॒शम् । नि॒ऽसे॒दुषः॑ । वि॒ऽजृम्भ॑ते ।
सः । इत् । ई॒शे॒ । यस्य॑ । रम्ब॑ते । अ॒न्त॒रा । स॒क्थ्या॑ । कपृ॑त् । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥

वेङ्कट० अथ तां यियासुरिन्द्र[3] आह — न सः ईशे इति ॥ १७ ॥

अ॒यमि॑न्द्र वृ॒षाक॑पिः॒ पर॑स्वन्तं ह॒तं वि॑दत् ।
अ॒सिं सू॒नां नवं॑ च॒रुमादेध॒स्यान॒ आचि॑तं॒ विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ १८ ॥

अ॒यम् । इ॒न्द्र॒ । वृ॒षाक॑पिः । पर॑स्वन्तम् । ह॒तम् । वि॒द॒त् ।
अ॒सिम् । सू॒नाम् । नव॑म् । च॒रुम् । आत् । एध॑स्य । अनः॑ । आऽचि॑तम् । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥

वेङ्कट० अयम् इन्द्र ! वृषाकपिः परस्वन्तम् परस्वम् आत्मनो विषयेऽवर्तमानम् हतम् विन्दतु, तथा हतस्य विशसनाय असिम् उद्घनम्[4] पाकार्थम्[5] [6]नवम् चरुम् भाण्डम्[6], अनन्तरं काष्ठस्य पूर्णम् अनः च । स त्वम् इन्द्रः असि विश्वस्मात् उत्कृष्टः ॥ १८ ॥

अ॒यमे॑मि वि॒चाक॑शद् विचि॒न्वन् दास॒मार्य॑म् ।
पिबा॑मि पाक॒सुत्व॑नो॒ऽभि धीर॑मचाक॒शं विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ १९ ॥

अ॒यम् । ए॒मि॒ । वि॒ऽचाक॑शत् । वि॒ऽचि॒न्वन् । दास॑म् । आर्य॑म् ।
पिबा॑मि । पा॒क॒ऽसुत्व॑नः । अ॒भि । धीर॑म् । अ॒चा॒क॒श॒म् । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥ १९ ॥

वेङ्कट० इन्द्र आह । अयम् गच्छामि विपश्यन् पृथक् कुर्वन् असुरम् आर्यम् च । पिबामि पाकेन मनसा यस्सुनोति सोमं तदीयम् । तथा धीरम् च अभि-पश्यामि यजमानम् । योऽहम् इन्द्रः विश्वोत्कृष्टः । उत्तरत्र 'सुविता कल्पयावहै' ( ऋ १०,८६,२१ ) इत्यनेनाऽर्थसमाप्तिः ॥ १९ ॥

---

१. विवृतं वि[2] विवृद्धं वि[1]. २. यियसोः वि[2] अ[1]. ३. यियस्तु° वि[2]; °स्सु° अ[1].
४. उद्घानं अ[1]. ५. न पा° मूको. ६-६. न पञ्चभाण्ड° वि[1]; मु न पञ्चभाण्ड° अ[1]; नवं च भाण्ड° वि[1].

धन्वं च यत् कृन्तत्रं च कति स्वित् ता वि योजना ।
नेदीयसो वृषाकपेऽस्तमेहिं गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥ २० ॥

धन्वं । च । यत् । कृन्तत्रम् । च । कति । स्वित् । ता । वि । योजना ।
नेदीयसः । वृषाकपे । अस्तम् । आ । इहि । गृहान् । उप । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

वेङ्कट० धन्व निरुदकोऽरण्यरहितो देशः । कृन्तत्रम् कर्तनीयमरण्यम् । यत्र धन्व वनम् च भवतः। मृगावासम् अरण्यम् एवंविधं[1] भवति नात्यन्तविपिनम् । तस्य भवच्छत्रोर्निलयस्यास्य मध्ये कति स्वित् तानि योजनानि वि-ष्ठितानि । नात्यन्तदूरे तद्भवतीत्यर्थः । ततश्च त्वम्[2] नेदीयसः अन्तिकतमात् [3]वृषाकपे! अस्तम् अन्तिकभूतान्[3] गृहान् उप-आ-गच्छ ॥ २० ॥

पुनरेहिं वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषिं पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥ २१ ॥

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥

वेङ्कट० यतस्त्वं गतस्तत्र पुनः आ इहि परस्वन्तं हन्तुम् । वृषाकपे! कल्याणानि शत्रुहननादीनि[4] कल्पयावहै तव । ततः तस्मिन् हते शत्रौ यः एषः स्वप्नानाशनः त्वम्[5] इहास्यां निशायाम् अपनीतनिद्रः प्रभातायाम् आत्मीयम् आवासं गच्छसि मार्गेण पुनः इति । निरुक्तं ( १२, २८ ) द्रष्टव्यमिति ॥ २१ ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥ २२ ॥

यत् । उदञ्चः । वृषाकपे । गृहम् । इन्द्र । अजगन्तन ।
क्व । स्यः । पुल्वघः । मृगः । कम् । अगन् । जनऽयोपनः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥२२॥

वेङ्कट० अपुनरागतं वृषाकपिम् इन्द्राणी पृच्छति — यत् उदञ्चः वृषाकपे! त्वं चेन्द्रश्च गृहम् अगच्छतम् । द्वयोरपि बहुवचनं दृष्टम् । तत्र भवतोः सः मृगः क्व अभूत् पुल्वघः बहोर्हन्ता । 'बह्वादी' इति यास्कः ( १३, ३ ) । कम् वाऽगच्छत् देशं जनानां बाधक इत्युक्ते यत्तत्र वक्तव्यमुत्तरं तत्तेनोक्तं वृषाकपिहतोऽयमिति[6] ॥ २२ ॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम् ।
भद्रं भल त्यस्या अभूद् यस्या उदरमामयद् विश्वस्मादिन्द्र उत्तरः ॥ २३ ॥

---

१-१. °वं मूको. २. ताम् मूको. ३-३. °पेस्तमां सिकाभूतान् मूको. ४. तु हन° वि[१] अ[१]. ५. नास्ति मूको. ६. °कपि हनोक्तमिति मूको.

पर्शुः । ह । नाम॑ । मा॒न॒वी । सा॒कम् । स॒सू॒व॒ । विं॒श॒तिम् ।
भ॒द्रम् । भ॒ल॒ । त्यस्यै॑ । अ॒भू॒त् । यस्याः॑ । उ॒दर॑म् । आम॑यत् । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥२३

**वेङ्कट०** पर्शुः ह नाम **मृगी मनोर्दुहिता** साकम् सुषुवे विंशतिम् पुत्रान्। हे इन्द्रेण **विसृज्यमान!** [१]भल! शर![१]। भलतिर्भेदनकर्मा। तस्यै भद्रम् भवतु, यस्याः उदरम् **गर्भस्थैः विंशतिभिः पुत्रैः पुष्टम् आसीदितीन्द्रेण विसृज्यमानं शरं वृषाकपिराशास्ते ॥ २३ ॥**

[२]इति अष्टमाष्टके चतुर्थाध्याये चतुर्थो वर्गः[२] ॥

[ ८७ ]

[१]पायुर्भारद्वाज ऋषिः। रक्षोहाऽग्निर्देवता। त्रिष्टुप् छन्दः, अन्त्याश्चतस्रोऽनुष्टुभः[१]।

**र॒क्षो॒हणं॑ वा॒जिन॒मा जि॑घर्मि मि॒त्रं प्रथि॑ष्ठ॒मुप॑ यामि॒ शर्म॑ ।**
**शिशा॑नो अ॒ग्निः क्रतु॑भिः॒ समि॑द्धः॒ स नो॒ दिवा॒ स रि॒षः पा॑तु॒ नक्त॑म् ॥ १ ॥**

र॒क्षः॒ऽहन॑म् । वा॒जिन॑म् । आ । जि॒घ॒र्मि॒ । मि॒त्रम् । प्रथि॑ष्ठम् । उप॑ । या॒मि॒ । शर्म॑ ।
शिशा॑नः । अ॒ग्निः । क्रतु॑ऽभिः । सम्ऽइ॑द्धः । सः । नः॒ । दिवा॑ । सः । रि॒षः । पा॒तु॒ । नक्त॑म् ॥१॥

**वेङ्कट०** पायुर्भारद्वाजः। **रक्षसां** हन्तारम् वाजिनम् **अग्निं घृतेन** आ जुहोमि । मित्रम् पृथुतमम्[३] उप गच्छामि शरणम्। सोऽयं ज्वालास्तीक्ष्णीकुर्वन् अग्निः **कर्मपरैः** समिद्धः। [४]सः **अस्मान्**[४] **अह्नि रात्रौ च रक्षसः** पातु ॥ १ ॥

**अयो॑दंष्ट्रो अ॒र्चिषा॑ यातु॒धाना॒नुप॑ स्पृश जातवे॒दः समि॑द्धः ।**
**आ जि॒ह्वया॒ मूर॑देवान् रभस्व क्र॒व्यादो॑ वृ॒क्त्व्यपि॑ धत्स्वा॒सन् ॥ २ ॥**

अयः॑ऽदंष्ट्रः । अ॒र्चिषा॑ । या॒तु॒ऽधाना॑न् । उप॑ । स्पृ॒श॒ । जा॒त॒ऽवे॒दः॒ । सम्ऽइ॑द्धः ।
आ । जि॒ह्वया॑ । मूर॑ऽदेवान् । र॒भ॒स्व॒ । क्र॒व्य॒ऽअदः॑ । वृ॒क्त्वी । अपि॑ । ध॒त्स्व॒ । आ॒सन् ॥ २ ॥

**वेङ्कट०** **अयोमयदंष्ट्रः ज्वालया राक्षसान्** उप स्पृश जातवेदः![५] समिद्धः। **आ रभस्व ज्वालया मारकव्यवहारान् राक्षसान्।** क्रव्यादः **राक्षसान्**[६] **छित्वा** अपि-धेहि **आस्ये ॥ २ ॥**

**उ॒भोभ॑यावि॒न्नुप॑ धेहि॒ दंष्ट्रा॑ हिं॒स्रः शिशा॒नोऽव॑रं॒ परं॑ च ।**
**उ॒तान्तरि॑क्षे॒ परि॑ याहि राज॒ञ्जम्भैः॒ सं धे॑ह्य॒भि या॑तु॒धाना॑न् ॥ ३ ॥**

उ॒भा । उ॒भ॒या॒वि॒न् । उप॑ । धे॒हि॒ । दंष्ट्रा॑ । हिं॒स्रः । शिशा॑नः । अव॑रम् । पर॑म् । च॒ ।
उ॒त । अ॒न्तरि॑क्षे । परि॑ । या॒हि॒ । रा॒ज॒न् । जम्भैः॑ । सम् । धे॒हि॒ । अ॒भि । या॒तु॒ऽधाना॑न् ॥ ३ ॥

**वेङ्कट०** उभे **दंष्ट्रे** हे[७] उभयाविन्! **उभाभ्यां दंष्ट्राभ्यां युक्त!** [८]उप धेहि[८] हिंस्रः **तीक्ष्णीकुर्वन्।**

---

१-१. नास्ति वि[२] अ[१]. २-२. नास्ति मूको. ३. विधुगमम् वि[२]; विधुम् अ[१]. ४-४. सोमान् मूको. ५. त्रुटितम् वि[२] अ[१]. ६. राक्षसो वि[२]; राक्षस अ[१]. ७. नास्ति वि[१]. ८-८. उवसहि वि[१] अ[१]; उव्रदेवी वि[१].

अवरम् च [1]परम् च[1] रक्षस्व। अपि च अन्तरिक्षे परि गच्छ राजन्!। दंष्ट्राभिः[2] अभि सम् धेहि यातुधानान्[3] ॥ ३ ॥

**यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः ।**
**ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रति भङ्ध्येषाम् ॥ ४ ॥**

यज्ञैः । इषूः । सम्ऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः ।
ताभिः । विध्य । हृदये । यातुऽधानान् । प्रतीचः । बाहून् । प्रति । भङ्धि । एषाम् ॥ ४ ॥

**वेङ्कट०** यज्ञैः बलकरैः वाचा च इषूः वक्राः सन्नममानः अग्ने! [4]तासाम् शल्यान्[4] अशनिभिः सह दिहानः तीक्ष्णीकुर्वन् ताभिः विध्य हृदये राक्षसान्। ततः प्रतिगतान् एषाम् बाहून् प्रति भङ्धि[5] ॥ ४ ॥

**अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।**
**प्र पर्वाणि जातवेदः शृणीहि क्रव्यात् क्रविष्णुर्वि चिनोतु वृक्णम् ॥ ५ ॥**

अग्ने । त्वचम् । यातुऽधानस्य । भिन्धि । हिंस्रा । अशनिः । हरसा । हन्तु । एनम् ।
प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । वृक्णम् ॥ ५ ॥

**वेङ्कट०** अग्ने! त्वचम् [6]राक्षसस्य भिन्धि[6]। हिंस्रा तव अशनिः तापेन[7] हन्तु एनम्। प्र शृणीहि रक्षसां शरीरपर्वाणि जातवेदः!। क्रव्यात् वृकः [8]मांसमिच्छन्† वि चिनोतु‡ एनं हतम्, ततो[8] मांसञ्च ॥ ५ ॥

[9]इति अष्टमाष्टके चतुर्थाध्याये पञ्चमो वर्गः[9] ॥

**यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।**
**यद्वान्तरिक्षे पथिभिः पतन्तं तमस्ता विध्य शर्वा शिशानः ॥ ६ ॥**

यत्र । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने । उत । वा । चरन्तम् ।
यत् । वा । अन्तरिक्षे । पथिऽभिः । पतन्तम् । तम् । अस्ता । विध्य । शर्वा । शिशानः ॥ ६ ॥

**वेङ्कट०** अस्ता निरसितेषोः। शर्वा शरेणेषुणा। शिष्टं स्पष्टमिति ॥ ६ ॥

**उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् ।**
**अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥ ७ ॥**

---

१-१. नास्ति वि[1]. २. °भिः सं वि[2] अ[1]. ३. °नान् वि[2] अ[1]. ४-४. त्यातं सां शल्यान् वि[1]; ···सां शल्यन् वि[2] अ[1]. ५. नास्ति मूको. ६-६. °क्षस्याभिसि वि[1]; °क्षस्याभिर्हिसि अ[1]; °क्षस्य भि° वि[1]. ७. तविन वि[1,2]; तवानि अ[1]. ८-८. °च्छन्··· हस्तिशो वि[2] अ[1]. † °च्छसि वि[1]. ‡ °नोति वि[1]. ९-९. नास्ति मूको.

उत । आऽलब्धम् । स्पृणुहि । जातऽवेदः । आऽलेभानात् । ऋष्टिऽभिः । यातुऽधानात् ।
अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विङ्क्षाः । तम् । अदन्तु । एनीः ॥७॥

**वेङ्कट०** अपि च आलब्धम्[1] हस्ताभ्यामारब्धं साधुम् आलभमानाद् राक्षसात् पारय जातवेदः! आत्मीयाभिः ऋष्टिभिः। अग्ने! पूर्वः नि जहि प्रज्वलन्। क्रव्यादः क्ष्विङ्क्षाः नाम पक्षिणः तम् अदन्तु हतं श्वेतवर्णाः ॥ ७ ॥

इह प्र ब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति ।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ॥ ८ ॥

इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यः । यातुऽधानः । यः । इदम् । कृणोति ।
तम् । आ । रभस्व । सम्ऽइधा । यविष्ठ । नृऽचक्षसः । चक्षुषे । रन्धय । एनम् ॥ ८ ॥

**वेङ्कट०** यः यातुधानः, यः च इदम् यज्ञे दूषणादिकं करोति, सः यतमः तम् अवधारणार्थम्[2] प्र ब्रूहि इह अग्ने!। तम् त्वमेव आ लभस्व[3] तेजसा युवतम!। नृणां द्रष्टुस्तव तेजसे वशं नय एनम् इति ॥ ८ ॥

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्र णय प्रचेतः ।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन् यातुधाना नृचक्षः ॥ ९ ॥

तीक्ष्णेन । अग्ने । चक्षुषा । रक्ष । यज्ञम् । प्राञ्चम् । वसुऽभ्यः । प्र । नय । प्रचेत इति प्रऽचेतः ।
हिंस्रम् । रक्षांसि । अभि । शोशुचानम् । मा । त्वा । दभन् । यातुऽधानाः । नृऽचक्षः ॥ ९ ॥

**वेङ्कट०** तीक्ष्णेन अग्ने! तेजसा रक्ष यज्ञम्। प्राञ्चम् "प्र नय" वसूनामर्थाय हे प्रचेतः!। हिंस्रम् इति स्पष्टम् ॥ ९ ॥

नृचक्षा रक्षः परि पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा ।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥ १० ॥

नृऽचक्षाः । रक्षः । परि । पश्य । विक्षु । तस्य । त्रीणि । प्रति । शृणीहि । अग्रा ।
तस्य । अग्ने । पृष्टीः । हरसा । शृणीहि । त्रेधा । मूलम् । यातुऽधानस्य । वृश्च ॥ १० ॥

**वेङ्कट०** नृणां द्रष्टा त्वं राक्षसम् परि पश्य मनुष्येषु। तस्य त्रीणि प्रति शृणीहि अग्राणि शिरांसि। तस्य अग्ने! पृष्टीः पार्श्वस्थान् राक्षसान् तेजसा शृणीहि। त्रेधा पादम् च यातुधानस्य वृश्च इति ॥ १० ॥

[4]इति अष्टमाष्टके चतुर्थाध्याये षष्ठो वर्गः[5] ॥

---

१. नास्ति वि[१]. २. अवधानार्थम् वि[२] अ[१]; अवधः नार्थम् वि[१]. ३. लभ्यसे वि[१]. ४-४. नास्ति वि[२] अ[१]. ५-५. नास्ति मूको.

त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति ।
तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते नि वृङ्धि ॥ ११ ॥

त्रिः । यातुऽधानः । प्रऽसितिम् । ते । एतु । ऋतम् । यः । अग्ने । अनृतेन । हन्ति ।
तम् । अर्चिषा । स्फूर्जयन् । जातऽवेदः । समऽअक्षम् । एनम् । गृणते । नि । वृङ्धि ॥११॥

**वेङ्कट०** अयम् यातुधानः त्वदीयाम् प्रसितिम् त्रिः यातु । त्रिर्बद्धं हि सुबद्धं भवति । सत्यम् यः अग्ने! अनृतेन हन्ति । तम् इति स्पष्टम् । स्फूर्जतिरत्र निष्पेषकर्मेति ॥ ११ ॥

तदग्ने चक्षुः प्रति धेहि रेभे शफारुजं येन पश्यसि यातुधानम् ।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ॥ १२ ॥

तत् । अग्ने । चक्षुः । प्रति । धेहि । रेभे । शफऽआरुजम् । येन । पश्यसि । यातुऽधानम् ।
अथर्वऽवत् । ज्योतिषा । दैव्येन । सत्यम् । धूर्वन्तम् । अचितम् । नि । ओष ॥ १२ ॥

**वेङ्कट०** तत् अग्ने! तेजः प्रति धेहि शब्दायमाने राक्षसे, शफाभ्यामारुजन्तम् येन पश्यसि यातुधानम् । अथर्ववत् ज्योतिषा दिवि भवेन सत्यम् अनृतेन [1]हिंसन्तम् अज्ञानम् नि ओष[1] । आथर्वणो दध्यङ्ङथर्वा । स रक्षसां हन्तेति प्रागुक्तमिति ॥ १२ ॥

यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥ १३ ॥

यत् । अग्ने । अद्य । मिथुना । शपातः । यत् । वाचः । तृष्टम् । जनयन्त । रेभाः ।
मन्योः । मनसः । शरव्या । जायते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ १३ ॥

**वेङ्कट०** यत् अग्ने! अद्य स्त्रीपुंसौ भूत्वा शपातः[2] । यदा वा वाचः कटुकम् जनयन्ति [3]परुषा वाचः[3] । शत्रूणाम् अभिमन्तुः[4] तव मनसः या शरव्या इषुः जायते, तया[5] हृदये विध्य यातुधानान्[6] ॥१३॥

परा शृणीहि तपसा यातुधानान् पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवाञ्छृणीहि परासुतृपो अभि शोशुचानः ॥ १४ ॥

परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरऽदेवान् । शृणीहि । परा । असुऽतृपः । अभि । शोशुचानः ॥ १४ ॥

**वेङ्कट०** तापेन यातुधानान् परा शृणीहि । अग्ने ! [7]रक्षः औष्ण्येन[7] परा शृणीहि । अर्चिषा राक्षसान् मारककर्मणः[8] परा शृणीहि । परा-श्रृणीहि मनुष्याणाम् असुभिस्तृप्तान् ज्वलन् ॥ १४ ॥

---

१-१. °न्तं जानन्नेष वि[२] अ[१]; °न्तमञ्छान्योष वि[१]. २. शपतः वि[१]; पेतो वि[२] अ[१]. ३-३. पुरुष वा° वि[१]; परुषवचः अ[१]; परुषवा° वि[२]. ४. °मस्तुः वि[१]. ५. तान् वि[२] अ[१]; बा वि[१]. ६. °नाः मूको. ७-७. रक्षौष्ण्येन मूको. ८. मासकर्म° वि[२] अ[१]; वधकर्म° वि[१].

परा॒द्य दे॒वा वृ॑जि॒नं शृ॑णन्तु प्र॒त्यगे॑नं श॒पथा॑ यन्तु तृ॒ष्टाः ।
वा॒चास्ते॒नं शर॑व ऋच्छन्तु मर्म॒न् विश्व॑स्यैतु प्रसि॑तिं यातु॒धान॑ः ॥ १५ ॥

परा॑ । अ॒द्य । दे॒वाः । वृ॒जि॒नम् । शृ॒ण॒न्तु॒ । प्र॒त्यक् । ए॒न॒म् । श॒पथा॑ः । य॒न्तु॒ । तृ॒ष्टाः ।
वा॒चाऽस्ते॑नम् । शर॑वः । ऋ॒च्छ॒न्तु॒ । मर्म॑न् । विश्व॑स्य । ए॒तु॒ । प्रऽसि॑तिम् । या॒तु॒ऽधान॑ः ॥१५॥

**वेङ्कट०** परा शृणन्तु अद्य देवाः **राक्षसम्। अथ** एनम् **अस्माभिरुक्ताः कटुकाः** शपथाः **आयान्तम्** '**प्रत्यक् यन्तु**'[1] । वाचास्तेनम् **अनृतवचनम् शराः** गच्छन्तु **मर्मणि। व्याप्तस्याऽग्नेः** प्रसितिम् **जालम्** ( तु. या ६,१२ ) गच्छतु[2] यातुधानः ॥ १५ ॥

[3]**इति अष्टमाष्टके चतुर्थाध्याये सप्तमो वर्गः**[3] ॥

यः पौरु॑षेयेण क्र॒विषा॑ सम॒ङ्क्ते यो अश्व्ये॑न प॒शुना॑ यातु॒धान॑ः ।
यो अ॒घ्न्याया॒ भर॑ति क्षी॒रम॑ग्ने॒ तेषा॑ं शी॒र्षाणि॒ हर॒सापि॑ वृश्च ॥ १६ ॥

यः । पौरु॑षेयेण । क्र॒विषा॑ । स॒म्ऽअ॒ङ्क्ते । यः । अश्व्ये॑न । प॒शुना॑ । या॒तु॒ऽधान॑ः ।
यः । अ॒घ्न्याया॑ः । भर॑ति । क्षी॒रम् । अग्ने॒ । तेषा॑म् । शी॒र्षाणि॑ । हर॑सा । अपि॑ । वृ॒श्च॒ ॥१६॥

**वेङ्कट०** यः पौरुषेयेण **मांसेन सङ्गमयति आत्मानम्,** यः **च** अश्व्येन, **यो वाऽन्येन** पशुना यातुधानः, यः वा गोः क्षीरम् **अपहरति** अग्ने!, तेषाम् शीर्षाणि **तेजसा** अपि वृश्च ॥ १६ ॥

सं॒व॒त्स॒रीण॒ं पय॑ उ॒स्रिया॑या॒स्तस्य॒ माशी॑द्यातु॒धानो॑ नृचक्षः ।
पी॒यूष॑मग्ने यत॒मस्तितृ॑प्सा॒त् तं प्र॒त्यञ्च॑म॒र्चिषा॑ विध्य॒ मर्म॑न् ॥ १७ ॥

सं॒व॒त्स॒रीण॑म् । पय॑ः । उ॒स्रिया॑याः । तस्य॑ । मा । अ॒शी॒त् । या॒तु॒ऽधान॑ः । नृ॒ऽच॒क्षः॒ ।
पी॒यूष॑म् । अग्ने॒ । य॒त॒मः । तितृ॑प्सात् । तम् । प्र॒त्यञ्च॑म् । अ॒र्चिषा॑ । वि॒ध्य॒ । मर्म॑न् ॥ १७ ॥

**वेङ्कट० यत्** उस्रियायाः पयः **संवत्सरेण साधितम् ओषधीर्जनयता तत्** पयः मा **भक्षयतु** यातुधानः **नृणां द्रष्टः!।** यतमः **पीयूषेणात्मानं तर्पयितुमिच्छति। तृपियोगे द्वितीया च दृष्टा।** अग्ने!, तम् प्रत्यञ्चम् अर्चिषा विध्य **मर्मणीति** ॥ १७ ॥

वि॒षं गवा॑ं यातु॒धाना॑ः पिबन्त्वा वृ॑श्च्यन्ता॒मदि॑तये दु॒रेवा॑ः ।
परै॑नान् दे॒वः स॑वि॒ता द॑दातु॒ परा॑ भा॒गमोष॑धीनां जयन्ताम् ॥ १८ ॥

वि॒षम् । गवा॑म् । या॒तु॒ऽधाना॑ः । पि॒ब॒न्तु॒ । आ । वृ॒श्च्य॒न्ता॒म् । अदि॑तये । दु॒ःऽएवा॑ः ।
परा॑ । ए॒ना॒न् । दे॒वः । स॒वि॒ता । द॒दा॒तु॒ । परा॑ । भा॒गम् । ओष॑धीनाम् । ज॒य॒न्ता॒म् ॥ १८ ॥

---

१-१. तृप्यन्तु वि॰ अ॰; वृषन्तु वि॰. २. °ति वि॰ अ॰. ३-३. नास्ति मूको.

**वेङ्कट०** गवाम् शृङ्गे स्थितम् विषम् यातुधानाः पिबन्तु । आ वृश्च्यन्ताम् अदितये अस्यै राक्षसाः । परा ददातु देवः सविता एनान् हिंस्रेभ्यः । तेऽमी भागम् ओषधीनाम् अन्नम् परा जयन्ताम् ॥ १८ ॥

सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ १९ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः ।
अनु । दह । सहऽमूरान् । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ १९ ॥

**वेङ्कट०** चिरादारभ्य बाधसे अग्ने! त्वम् यातुधानान् । न त्वाम् राक्षसाः पृतनासु अजयन् । स त्वमिदानीम् अनुक्रमेण दह मूलेन 'सहितान् अपि वा' मारकेण कर्मणा युक्तान् राक्षसान् । तव दैव्याद् आयुधात् ते मा मुक्षत मा भूवन् मुक्ता इति ॥ १९ ॥

त्वं नो अग्ने अधरादुदक्तात् त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥ २० ॥

त्वम् । नः । अग्ने । अधरात् । उदक्तात् । त्वम् । पश्चात् । उत । रक्ष । पुरस्तात् ।
प्रति । ते । ते । अजरासः । तपिष्ठाः । अघऽशंसम् । शोशुचतः । दहन्तु ॥ २० ॥

**वेङ्कट०** 'प्राक्तादपाक्तादधरादुदक्तात्' (ऋ ७,१०४,१९) इति दर्शनाद् अधरो[2] दक्षिणावचनः । सर्वाभ्यो दिग्भ्यः रक्ष । प्रति दहन्तु ते तप्तृतमा रश्मयस्त्वदीया जरावर्जिताः ज्वलन्तः राक्षसम् ॥ २० ॥

[3]इति अष्टमाष्टके चतुर्थाध्याये अष्टमो वर्गः[3] ॥

पश्चात् पुरस्तादधरादुदक्तात् कविः काव्येन परि पाहि राजन् ।
सखे सखायमजरो जरिम्णेऽग्ने मर्ताँ अमर्त्यस्त्वं नः ॥ २१ ॥

पश्चात् । पुरस्तात् । अधरात् । उदक्तात् । कविः । काव्येन । परि । पाहि । राजन् ।
सखे । सखायम् । अजरः । जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वम् । नः ॥ २१ ॥

**वेङ्कट०** सर्वतोऽस्मान्[4] कविः कविकर्मणा परि पाहि राजन् ! । सखे! सखायम् माम् अजरः त्वं जरायै कुरु आजरसं जीवेयम् । एतदेव बहुवदाह—अग्ने! मर्तान् इति । जरिम्णे कुर्विति शेषः ॥ २१ ॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २२ ॥

---

१-१. सविताऽनविचा वि[2] अ[1]; सहिताविवा वि[1]. २. °धरं वि[2] अ[1]. ३-३. नास्ति मूको.
४. °तोऽस्मिन् वि[1].

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवताम् ॥ २२ ॥

**वेङ्कट०** परि धीमहि रक्षसामपहननाय त्वाम्[1] पूरकम् वयम् मेधाविनम् सहसे हित! सहसो वा जात! धर्षकरूपम् अन्वहम् हन्तारम् भङ्गुरकर्मयुक्तानां रक्षसाम् ॥ २२ ॥

विषेण भङ्गुरावतः प्रति ष्म रक्षसो दह ।
अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥ २३ ॥

विषेण । भङ्गुरऽवतः । प्रति । स्म । रक्षसः । दह ।
अग्ने । तिग्मेन । शोचिषा । तपुःऽअग्राभिः । ऋष्टिऽभिः ॥ २३ ॥

**वेङ्कट०** व्याप्तेन तेजसा भञ्जनकर्मयुक्तम् प्रति दह रक्षः अग्ने! तीक्ष्णेन शोचिषा तथा तपनशीलाऽग्राभिः ऋष्टिभिः च ॥ २३ ॥

प्रत्यग्ने मिथुना दह यातुधाना किमीदिना ।
सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥ २४ ॥

प्रति । अग्ने । मिथुना । दह । यातुऽधाना । किमीदिना ।
सम् । त्वा । शिशामि । जागृहि । अदब्धम् । विप्र । मन्मऽभिः ॥ २४ ॥

**वेङ्कट०** प्रति दह अग्ने! मिथुनभूतान् यातुधानान् किमीदिनः[2] । 'किमिदानीमिति ये चरन्ति ते किमीदिनः[3]' इति यास्कः (तु. या ६,११)। सम् शिशामि त्वाम् । ततस्त्वम् जागृहि अहिंसितं मेधाविन्! स्तुतिभिः ॥ २४ ॥

प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ।२५।

प्रति । अग्ने । हरसा । हरः । शृणीहि । विश्वतः । प्रति ।
यातुऽधानस्य । रक्षसः । बलम् । वि । रुज । वीर्यम् ॥ २५ ॥

**वेङ्कट०** प्रति शृणीहि अग्ने! हरसा हरणशीलं [4]रक्षः सर्वतः[4] । हिंसायाः कर्तुः[5] राक्षसस्य बलम् वि रुज वीर्यम् च ॥ २५ ॥

[6]इति अष्टमाष्टके चतुर्थाध्याये नवमो वर्गः[6] ॥

[ ८८ ]

[6]आङ्गिरसो मूर्धन्वान् वामदेव्यो वा ऋषिः । सूर्यो वैश्वानरोऽग्निश्च समुदितो देवता । त्रिष्टुप् छन्दः[6] ।

हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त ॥ १ ॥

---

१. नास्ति वि[1]. २. °नात् वि[2] अ[1]; °नान् वि[1]. ३. °दिना मूको. ४-४. °क्षस एता वि[2]; °क्षण एता अ[1]. ५. °र्तृ मूको. ६-६. नास्ति मूको.

हविः । पान्तम् । अजरम् । स्वःऽविदि । दिविऽस्पृशि । आऽहुतम् । जुष्टम् । अग्नौ ।
तस्य । भर्मणे । भुवनाय । देवाः । धर्मणे । कम् । स्वधया । पप्रथन्त ॥ १ ॥

**वेङ्कट०** मूर्धन्वान् आङ्गिरसः । सौर्यवैश्वानरीयम्[1] । यास्कः ( ७,२५ )—'हविर्यत्[2] पानीयम् अजरं सूर्यविदि दिविस्पृशि आहुतं[3] जुष्टम् अग्नौ, तस्य भरणाय च भावनाय च धारणाय च । एतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निम अन्नेनापप्रथन्त' इति ॥ १ ॥

गीर्णं भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ ।
तस्य देवाः पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य ॥ २ ॥

गीर्णम् । भुवनम् । तमसा । अपऽगूळ्हम् । आविः । स्वः । अभवत् । जाते । अग्नौ ।
तस्य । देवाः । पृथिवी । द्यौः । उत । आपः । अरणयन् । ओषधीः । सख्ये । अस्य ॥ २ ॥

**वेङ्कट०** उद्गीर्णं पूर्वम्[4] भुवनम् महता नैशेन तमसा अपगूळ्हम् आविर्-भवति सर्वम् जाते वैश्वानरे । तस्य अस्य सख्ये देवाः त्रयश्च लोका ओषध्यश्च अरमन्त ॥ २ ॥

देवेभिर्न्विषितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहन्तम् ।
यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम् ॥ ३ ॥

देवेभिः । नु । इषितः । यज्ञियेभिः । अग्निम् । स्तोषाणि । अजरम् । बृहन्तम् ।
यः । भानुना । पृथिवीम् । द्याम् । उत । इमाम् । आऽततान । रोदसी इति । अन्तरिक्षम् ॥३॥

**वेङ्कट०** देवैः[5] क्षिप्रम् प्रेषितः यज्ञार्हैः अग्निम् स्तौमि[6] अजरम् महान्तम्, यः वैश्वानरः तेजसा अमून् त्रीन् लोकान् आतनोति । तदेवोक्तम्—आततान[7] इति ॥ ३ ॥

यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः ।
स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ ४ ॥

यः । होता । आसीत् । प्रथमः । देवऽजुष्टः । यम् । सम्ऽआञ्जन् । आज्येन । वृणानाः ।
सः । पतत्रि । इत्वरम् । स्थाः । जगत् । यत् । श्वात्रम् । अग्निः । अकृणोत् । जातऽवेदाः ॥४॥[8]

**वेङ्कट०** यः होता आसीत् प्रथमः देवैः सेवितः, यम् च समञ्जन्ति आज्येन होतृत्वेन वृणानाः, सः पतनशीलम् स्थावरम् जङ्गमम् च गच्छन् क्षिप्रमेव अग्निः अजनयद् जातप्रज्ञः ॥ ४ ॥

यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥ ५ ॥

---

१. °र्यं वै° मूको. २. °र्यः वि[1]; °र्यं वि[2] अ[1]. ३. इति वि[2] अ[1]. ४. सर्वम् मूको. ५. देवेभिः वि[1]. ६. स्तौम्यहं वि[2] अ[1]. ७. °ता ··· वि[2] अ[1]. ८. उत्तरोऽर्धर्चः या. (५,३) व्याख्यातः द्र.

यत् । जातऽवेदः । भुवनस्य । मूर्धन् । अतिष्ठः । अग्ने । सह । रोचनेन ।
तम् । त्वा । अहेम । मतिऽभिः । गीःऽभिः । उक्थैः । सः । यज्ञियः । अभवः । रोदसिऽप्राः ॥५॥

वेङ्कट० यत् जातवेदः! भुवनस्य मूर्धन् अतिष्ठः अग्ने! सह आदित्येन, तम् त्वा प्रपद्यामहे अर्चनीयैः स्तुतिभिः शस्त्रैः च। सः यज्ञियः भवसि[1] द्यावापृथिव्योः पूरयिता ॥ ५ ॥

[2]इति अष्टमाष्टके चतुर्थाध्याये दशमो वर्गः[2] ॥

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् ।
मायामू तु यज्ञियानामेतामपो यत् तूर्णिश्चरति प्रजानन् ॥ ६ ॥

मूर्धा । भुवः । भवति । नक्तम् । अग्निः । ततः । सूर्यः । जायते । प्रातः । उत्ऽयन् ।
मायाम् । ऊँ इति । तु । यज्ञियानाम् । एताम् । अपः । यत् । तूर्णिः । चरति । प्रऽजानन् ॥[3]

वेङ्कट० मूर्धा भूतजातस्य भवति नक्तम् अग्निः। अथ सूर्यः जायते प्रातः उद्यन्। प्रज्ञामेव एताम् यज्ञियानाम् देवानां मन्यन्ते कवयः, यत् प्रज्ञायमानः सूर्योऽन्तरिक्षं क्षिप्रम् चरति ॥ ६ ॥

दृशेन्यो यो महिना समिद्धोऽरोचत दिविर्योनिर्विभावा ।
तस्मिन्नग्नौ सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥ ७ ॥

दृशेन्यः । यः । महिना । सम्ऽइद्धः । अरोचत । दिविऽयोनिः । विभाऽवा ।
तस्मिन् । अग्नौ । सूक्तऽवाकेन । देवाः । हविः । विश्वे । आ । अजुहवुः । तनूऽपाः ॥ ७ ॥

वेङ्कट० दर्शनीयः यः महत्त्वेन समिद्धः अरोचत द्युस्थानः दीप्तिमान्, तस्मिन् अग्नौ स्तोत्राणां वचनेन देवाः हविः सर्वे आभिमुख्येन आ अजुहवुः तनूनां रक्षकाः ॥ ७ ॥

सूक्तवाकं प्रथममादिदग्निमादिद्धविरजनयन्त देवाः ।
स एषां यज्ञो अभवत् तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥ ८ ॥

सूक्तऽवाकम् । प्रथमम् । आत् । इत् । अग्निम् । आत् । इत् । हविः । अजनयन्त । देवाः ।
सः । एषाम् । यज्ञः । अभवत् । तनूऽपाः । तम् । द्यौः । वेद । तम् । पृथिवी । तम् । आपः ॥

वेङ्कट० सूक्तवाकम् प्रथमम् मनसा निरूपयन्ति। [4]अथ अग्निम् मथ्नन्ति[4]। ततः हविः जनयन्ति देवाः। सः अग्निः एषाम् यष्टव्यः भवति तनूपाः[5]। तम् त्रयो लोकाः जानन्ति ॥ ८ ॥

यं देवासोऽजनयन्ताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा ।
सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥ ९ ॥

---

१. °वन्ति वि[२]; °वन्नि अ[१]. २-२. नास्ति मूको. ३. अत्र या. (७,२७) व्याख्यानं द्र.
४-४ अथाभिमन्वन्ति वि[२] अ[१]. ५. तंत्रवाः वि[२] अ[१]; तंतुवाः वि[१].

यम् । देवासः । अजनयन्त । अग्निम् । यस्मिन् । आ । अजुहवुः । भुवनानि । विश्वा ।
सः । अर्चिषा । पृथिवीम् । द्याम् । उत । इमाम् । ऋजुऽयमानः । अतपत् । महिऽत्वा ॥९॥

वेङ्कट० यम् देवाः अजनयन्त अग्निम्, यस्मिन् चाग्नौ आ अजुहवुः सर्वमेधे सर्वाणि भूतानि, सः तेजसा अन्तरिक्षम् द्याम् अपि च इमाम् ऋजुगमनां[1] कुर्वन् तपति महत्त्वेन ॥ ९ ॥

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।
तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥ १० ॥

स्तोमेन । हि । दिवि । देवासः । अग्निम् । अजीजनन् । शक्तिऽभिः । रोदसिऽप्राम् ।
तम् । ऊँ इति । अकृण्वन् । त्रेधा । भुवे । कम् । सः । ओषधीः । पचति । विश्वऽरूपाः ॥[2]

वेङ्कट० [3]स्तोमेन हि दिवि[3] देवासः अग्निम् अजीजनन् सूर्यात्मकं शक्तैरुतेजोभिः द्यावापृथिव्यौ पूरयितारम् । तम् एव यज्ञे त्रेधा कुर्वन्ति[4] भवनाय[5] सुखकरम् । सः पृथिव्यां वर्तमानः ओषधीः पचति सर्वरूपाः ॥ १० ॥

[6]इति अष्टमाष्टके चतुर्थाध्याये एकादशो वर्गः[6] ॥

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित् प्रापश्यन् भुवनानि विश्वा ॥ ११ ॥

यदा । इत् । एनम् । अदधुः । यज्ञियासः । दिवि । देवाः । सूर्यम् । आदितेयम् ।
यदा । चरिष्णू इति । मिथुनौ । अभूताम् । आत् । इत् । प्र । अपश्यन् । भुवनानि । विश्वा ॥

वेङ्कट० यदा एव एनम् अदधुः यज्ञार्हाः दिवि देवाः सूर्यम् अदितेः पुत्रम् प्रातः, यदा चेमौ[7] चरणशीलौ सूर्यश्च वैश्वानरश्च मिथुनौ अभूताम्, अनन्तरमेव सर्वाणि भुवनानि[8] तौ प्र-पश्यन्ति । निरुक्तं ( ७,२९ ) द्रष्टव्यमिति ॥ ११ ॥

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥ १२ ॥

विश्वस्मै । अग्निम् । भुवनाय । देवाः । वैश्वानरम् । केतुम् । अह्नाम् । अकृण्वन् ।
आ । यः । ततान । उषसः । विऽभातीः । अपो इति । ऊर्णोति । तमः । अर्चिषा । यन् ॥१२॥

वेङ्कट० सर्वस्मै भुवनाय तदर्थम् अग्निम् देवाः वैश्वानरम् अह्नाम् प्रज्ञापनम् अकृण्वन् । आ ततान यः उषसः व्युच्छन्तीः[9], सोऽयम् अप गमयति तेजसा नैशम् तमः उद्गच्छन् ॥ १२ ॥

---

१. °ना वि[1]; °नम् वि[2] अ[1]. २. अत्र या. ( ७, २८ ) द्र. ३-३. नास्ति वि[2] अ[1].
४. तूर्वन्ति मूको. ५. भा° वि[2] अ[1]. ६-६. नास्ति मूको. ७. वेमौ वि[2] अ[1], ८. नास्ति वि[1].
९. पृच्छन्ति वि[2] अ[1]; व्युच्छन्ति वि[1].

वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम् ।
नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहन्तम् ॥ १३ ॥

वैश्वानरम् । कवयः । यज्ञियासः । अग्निम् । देवाः । अजनयन् । अजुर्यम् ।
नक्षत्रम् । प्रत्नम् । अमिनत् । चरिष्णु । यक्षस्य । अधिऽअक्षम् । तविषम् । बृहन्तम् ॥ १३ ॥

**वेङ्कट०** वैश्वानरम् कवयः यज्ञार्हाः अग्निम् देवाः अजनयन् जरावर्जितम् । नक्षतिः व्याप्तिकर्मा । यद् दीप्त्यनुबन्धं तत् नक्षत्रम् । नक्षत्रसामानाधिकरण्याल्लिङ्गभेदः । नक्षत्रम् पुराणम् जगद् अहिंसत् । चरणशीलमिति वैश्वानर उक्तः । यजमानस्य अध्यक्षम् वृद्धम् महान्तम् ॥ १३ ॥

वैश्वानरं विश्वहा दीदिवांसं मन्त्रैरग्निं कविमच्छा वदामः ।
यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात् ॥ १४ ॥

वैश्वानरम् । विश्वहा । दीदिऽवांसम् । मन्त्रैः । अग्निम् । कविम् । अच्छ । वदामः ।
यः । महिम्ना । परिऽबभूव । उर्वी इति । उत । अवस्तात् । उत । देवः । परस्तात् ॥ १४ ॥

**वेङ्कट०** वैश्वानरम् सर्वदा दीप्तम् मन्त्रैः अग्निम् क्रान्तप्रज्ञम् अभिष्टुमः । यः महत्त्वेन परिभवति द्यावापृथिव्यौ । अपि च अयम् अवस्तात् तपति अपि च परस्तात् सूर्याग्निरूपः ॥ १४ ॥

द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥ १५ ॥

द्वे इति । स्रुती इति । अशृणवम् । पितॄणाम् । अहम् । देवानाम् । उत । मर्त्यानाम् ।
ताभ्याम् । इदम् । विश्वम् । एजत् । सम् । एति । यत् । अन्तरा । पितरम् । मातरम् । च ॥

**वेङ्कट०** द्वौ मार्गौ अहम् अश्रौषम् पितॄणाम् मृतानाम् देवानाम् अपि च मनुष्याणाम् । ताभ्याम् इदम् विश्वम् जगत् सम् एति मृतम् यद् अन्तरा द्यां पृथिवीं च भवति । तौ मार्गौ बृहदारण्यके दर्शितौ (तु. बृउ ६,२,२)। 'पितृयाणोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम्' (यास्मृ ३,१८४) इति श्लोकाभ्यां याज्ञवल्क्येन चोक्ताविति ॥ १५ ॥

[1]इति अष्टमाष्टके चतुर्थाध्याये द्वादशो वर्गः[1] ॥

द्वे समीची बिभृतश्चरन्तं शीर्षतो जातं मनसा विमृष्टम् ।
स प्रत्यङ् विश्वा भुवनानि तस्थावप्रयुच्छन् तरणिर्भ्राजमानः ॥ १६ ॥

द्वे इति । समीची इति सम्ऽईची । बिभृतः । चरन्तम् । शीर्षतः । जातम् । मनसा । विऽमृष्टम् ।
सः । प्रत्यङ् । विश्वा । भुवनानि । तस्थौ । अप्रऽयुच्छन् । तरणिः । भ्राजमानः ॥ १६ ॥

---

१-१. नास्ति मूको.

**वेङ्कट०** द्वे सङ्गते द्यावापृथिव्यौ धारयतः चरन्तम् शिरस्तः जातम्। 'उत मन्येऽहमेनमनयोर्हि शिरस्तोऽयं प्रातर्जायते'। मनसा विमृष्टम्। सः अभिमुखः सर्वाणि भुवनानि तिष्ठति। 'तस्मात् सर्व एव मन्यते मां प्रत्युदगात्' (तै ६,५,४,२) इति ब्राह्मणम्। न प्रमाद्यन्निति न ह्यागमने[1] प्रमादः। गमनशीलः दीप्यन्[2] ॥ १६ ॥

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद।
आ शेकुरित् सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत् ॥ १७ ॥

यत्र। वदेते इति। अवरः। परः। च। यज्ञऽन्योः। कतरः। नौ। वि। वेद।
आ। शेकुः। इत्। सधऽमादम्। सखायः। नक्षन्त। यज्ञम्। कः। इदम्। वि। वोचत् ॥१७॥

**वेङ्कट०** पार्थिवस्य माध्यमिकस्य च पुराऽपि विवादोऽभूत्। तत्रैको ब्राह्मणो होता यज्ञं नयतीत्याह, अन्यस्त्वग्निर्वैश्वानरो यज्ञं नयतीति। तत्र तृचोऽयं प्रवृत्तः। यत्र वैश्वानरे विवदेते अवरः परः च 'अयं चाग्निरसौ च मध्यमः' इति यास्कः (७,३०)। यज्ञस्य नेत्रोरावयोः कतरः भूयिष्ठं यज्ञं वेत्ति। आ शक्नुवन्ति कर्तुं यज्ञम् समानख्याना ऋत्विजः तथा अश्नुवते च यज्ञम् अनुतिष्ठन्ति। तेषां विदुषाम् अश्नुवानानां मध्ये क आवयोरस्य विवादस्य निर्णयम् वि-ब्रवीतीति[3] माध्यमिकम् इममग्निं ब्रवीति ॥ १७ ॥

कत्यग्नयः कति सूर्यासः कत्युषासः कत्यु स्विदापः।
नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कम् ॥ १८ ॥

कति। अग्नयः। कति। सूर्यासः। कति। उषसः। कति। ऊँ इति। स्वित्। आपः।
न। उपऽस्पिजम्। वः। पितरः। वदामि। पृच्छामि। वः। कवयः। विद्मने। कम् ॥ १८ ॥

**वेङ्कट०** तथा विवदमानौ पितॄन् प्रश्नमुपेयतुः। तत्र मध्यमस्तान् पृच्छति। कति अग्नयः, कति च सूर्याः, कति उषासः, कति स्विद् आपः इति विवादे प्रस्तुतान् सर्वानर्थान्[4] प्रसङ्गात् पृच्छति[5]। विजिगीषार्थं प्रश्नः। [6]उपस्पिजम् न वः पितरः।[6] अहम् वदामि। पृच्छामि वः कवयः। ज्ञानायैव ॥ १८ ॥

यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः।
तावद्दधात्युप यज्ञमायन् ब्राह्मणो होतुरवरो निषीदन् ॥ १९ ॥

यावत्ऽमात्रम्। उषसः। न। प्रतीकम्। सुऽपर्ण्यः। वसते। मातरिश्वः।
तावत्। दधाति। उप। यज्ञम। आऽयन्। ब्राह्मणः। होतुः। अवरः। निऽसीदन् ॥ १९ ॥

**वेङ्कट०** प्राकरणिकस्य वैश्वानरस्य विषये यः प्रश्नः प्रवृत्तस्तस्य निर्णयमनया वदन्ति — यावन्मात्रमिति।

---

१. वियाग° मूको. २. दीप्यन् मूको. ३. नास्ति वि[1]. ४. सर्वदानर्थान् वि[2] अ[1]. ५. प्रगच्छति वि[2] अ[1]. ६-६. °प···पि° वि[2] वि[3]; °परपृञ्जतं वः वि[1].

यावन्मात्रम् उषसः मुखं सुपतना रात्रयः आच्छादयन्ति स्वेनान्धकारेण हे मातर्यन्तरिक्षे श्वसन्! माध्यमिक!, तावद् एव उप दधाति यज्ञम् उपगच्छन् ब्राह्मणः होता अस्याऽग्नेर्वैश्वानरस्य होतुः अवरः निषीदन् पृथिव्यां वैश्वानरस्याधस्तान्निषीदन् । एवं च पार्थिवोऽग्निर्माध्यमिकाद् भूयिष्ठं यज्ञं जानन्नयति तं ह्यधिष्ठितः वैश्वानरः। माध्यमिकस्तु ब्राह्मणस्य होतुः वाचि प्रविशतीति। न इति पूरणः ॥ १९ ॥[१]

[२]इति अष्टमाष्टके चतुर्थोध्याये त्रयोदशो वर्गः[२] ॥

[ ८९ ]

[३]रेणुर्वैश्वामित्र ऋषिः । इन्द्रो देवता, पञ्चम्या इन्द्रासोमौ । त्रिष्टुप् छन्दः[३] ।

इन्द्रं॑ स्तवा॒ नृत॑मं॒ यस्य॑ म॒ह्ना वि॑बबा॒धे रो॑च॒ना वि ज्मो अन्ता॑न् ।
आ यः प॒प्रौ च॑र्षणी॒धृद्वरो॑भि॒ः प्र सिन्धु॑भ्यो रिरिचा॒नो म॑हि॒त्वा ॥ १ ॥

इन्द्र॑म् । स्त॒व॒ । नृऽत॑मम् । यस्य॑ । म॒ह्ना । वि॒ऽब॒बाधे । रो॒च॒ना । वि । ज्मः । अन्ता॑न् ।
आ । यः । प॒प्रौ । च॒र्ष॒णि॒ऽधृत् । वरः॑ऽभिः । प्र । सिन्धु॑ऽभ्यः । रि॒रि॒चा॒नः । म॒हि॒ऽत्वा ॥ १ ॥

वेङ्कट० रेणुर्वैश्वामित्रः । [३]हे स्तोतः! इन्द्रम् नृतमम् स्तव, यस्य महत्त्वम् विबाधते[३] तेजांसि, अन्तान् पृथिव्याश्च[४] पर्यन्तान्, आ पूरयति यः मनुष्याणां धर्ता वारकैः[५] तेजोभिः द्यावापृथिव्यौ सिन्धुभ्यः अपि महत्त्वेन प्र रिरिचानः ॥ १ ॥

स सूर्य॑ः पर्यु॒रू वरां॒स्येन्द्रो॑ ववृत्या॒द्रथ्ये॑व च॒क्रा ।
अति॑ष्ठन्तमप॒स्यं१॒॑ न सर्गं॑ कृ॒ष्णा तमां॑सि॒ त्विष्या॑ जघान ॥ २ ॥

सः । सूर्य॑ः । परि॑ । उ॒रु । वरां॑सि । आ । इन्द्र॑ः । व॒वृ॒त्या॒त् । रथ्या॑ऽइव । च॒क्रा ।
अति॑ष्ठन्तम् । अ॒प॒स्य॑म् । न । सर्ग॑म् । कृ॒ष्णा । तमां॑सि । त्विष्या॑ । ज॒घा॒न॒ ॥ २ ॥

वेङ्कट० सः सूर्यः इन्द्रः बहूनि तेजांसि परि-आ वतर्यति सारथिः इव रथचक्राणि । सोऽयम् अतिष्ठन्तम् शीघ्रम् इव अश्वम् कृष्णानि तमांसि[६] दीप्त्या हन्ति ॥ २ ॥

स॒मा॒नम॑स्मा॒ अन॑पावृदर्च क्ष्म॒या दि॒वो अस॑मं॒ ब्रह्म॒ नव्य॑म् ।
वि यः पृ॒ष्ठेव॒ जनि॑मान्य॒र्य इन्द्र॑श्चि॒काय॒ न सखा॑यमी॒षे ॥ ३ ॥

स॒मा॒नम् । अ॒स्मै॒ । अन॑पऽवृत् । अ॒र्च॒ । क्ष्म॒या । दि॒वः । अस॑मम् । ब्रह्म॑ । नव्य॑म् ।
वि । यः । पृ॒ष्ठाऽइ॑व । जनि॑मानि । अ॒र्यः । इन्द्र॑ः । चि॒काय॑ । न । सखा॑यम् । ई॒षे॒ ॥ ३ ॥

---

१. अत्र या. (७,३१) द्र. २-२. नास्ति मूको. ३-३. हस्तो···पि बाध° वि[२] अ[१]; ह स्तोतरिन्द्रः स्त्वपि विबाधसे वि[१]. ४. इतः परं १०,८८,२ इति मन्त्रभाष्यादारभ्य १०,८८,१२ इति मन्त्रभाष्ये 'तदर्थमग्निं देवाः' इति पाठपर्यन्तं भाष्यमत्र पुनरुक्तम् वि[२] अ[१]. ५. पादकैः वि[२]; पारकैः अ[१]; धदकैः वि[१]. ६. तेजांसि मूको.

वेङ्कट० मया सह इन्द्राय अनपावृत् उच्चारय दिवः पृथिव्याश्च असमम् अतिरिक्तमत्यन्तं महत् स्तोत्रम् नवतरम्। वि चिनोति यः पृष्ठानि इव यज्ञेषु जातानि शत्रून् इन्द्रः, न च सखायम् इच्छति ॥ ३ ॥

इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक् तस्तम्भ पृथिवीमुत द्याम् ॥ ४ ॥

इन्द्राय । गिरः । अनिशितऽसर्गाः । अपः । प्र । ईरयम् । सगरस्य । बुध्नात् ।
यः । अक्षेणऽइव । चक्रिया । शचीभिः । विष्वक् । तस्तम्भ । पृथिवीम् । उत । द्याम् ॥४॥

वेङ्कट० इन्द्राय स्तुतयः अतनूकृतविसर्गा[1] उपर्युपरि निर्गच्छन्ति [2]अस्माकम्। ताभिः[2] अपः प्र ईरयामि अन्तरिक्षस्य बुध्नात्। यः इन्द्रः द्याम् च पृथिवीम् च कर्मभिः विष्वक् अस्तभ्नात् अक्षेण इव रथचक्राणि ॥ ४ ॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ५ ॥

आपान्तऽमन्युः । तृपलऽप्रभर्मा । धुनिः । शिमीऽवान् । शरुऽमान् । ऋजीषी ।
सोमः । विश्वानि । अतसा । वनानि । न । अर्वाक् । इन्द्रम् । प्रतिऽमानानि । देभुः ॥ ५ ॥

वेङ्कट० आपातितमन्युः क्षिप्रप्रहारी कम्पयिता शत्रूणां कर्मवान् आयुधवान् ऋजीषी सोमः विश्वानि अतसमयानि वनानि वर्धयतीति। त्रयः पादाः सोम्याः तुरीय ऐन्द्रः। प्रतिमानभूतानि इन्द्रम् न अर्वाक् दभ्नुवन्ति। दभ्नोतिरिहाऽऽकर्षणकर्मा। तुलया मीयमानानि लघूनि भवन्ति। अन्यत्र[3] प्रतिनिधीयमानानि गुरूणि तान्यात्माभिमुखम् आकर्षन्ति। नैवमिन्द्रं कुर्वन्ति। सर्वेभ्योऽतिरिक्त इन्द्र इत्यर्थः। यास्कस्त्वाह—'यैरेनं प्रतिमिमते, नैनं तानि दभ्नुवन्ति। अर्वागेवैनमप्राप्य विनश्यन्तीति' ( या ५,१२ ) ॥ ५ ॥

[4]इति अष्टमाष्टके चतुर्थाध्याये चतुर्दशो वर्गः[4] ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि ॥ ६ ॥

न । यस्य । द्यावापृथिवी इति । न । धन्व । न । अन्तरिक्षम् । न । अद्रयः । सोमः । अक्षारिति ।
यत् । अस्य । मन्युः । अधिऽनीयमानः । शृणाति । वीळु । रुजति । स्थिराणि ॥ ६ ॥

वेङ्कट० न यस्य द्युप्रभृतयः प्रतिमानानि भवन्ति, तस्य सोमः क्षरति। धन्व इत्युदकनाम।

---

१. तनू··· मूको. २-२. °स्माभिः मूको. ३. चेदन्य° मूको. ४-४. नास्ति मूको.

यदा अस्य क्रोधः शत्रुष्वधिनिधीयमानो भवति, तदानीमयं हिनस्ति दृढम्, रुजति स्थिराणि ॥ ६ ॥

जघान॑ वृ॒त्रं स्वधि॑ति॒र्वने॑व रु॒रोज॒ पुरो॒ अर॑द॒न्न सिन्धू॑न् ।
बि॒भेद॑ गि॒रिं नव॒मिन्न कु॒म्भमा गा इन्द्रो॑ अकृणुत स्व॒युग्भिः॑ ॥ ७ ॥

ज॒घान॑ । वृ॒त्रम् । स्व॒ऽधि॑तिः । वना॑ऽइव । रु॒रोज॑ । पुरः॑ । अर॑दत् । न । सिन्धू॑न् ।
बि॒भेद॑ । गि॒रिम् । नव॑म् । इत् । न । कु॒म्भम् । आ । गाः । इन्द्रः॑ । अ॒कृ॒णु॒त॒ । स्व॒यु॒क्ऽभिः॑ ॥ ७ ॥

वेङ्कट० हन्ति वृत्रम् परशुः वृक्षान् इव । रुजति च[1] पुरीः । व्यलिखच्च सिन्धून् । भिनत्ति मेघम् नवम् इव घटम् । आ गाः कृणोति इन्द्रः उदकानि स्वयं युज्यमानैर्मरुद्भिः ॥ ७ ॥

त्वं ह॒ त्यदृ॑ण॒या इ॑न्द्र॒ धीरो॒ऽसिर्न पर्व॑ वृ॒जिना शृ॑णासि ।
प्र ये मि॒त्रस्य॒ वरु॑णस्य॒ धाम॒ युजं॒ न जना॑ मि॒नन्ति॑ मि॒त्रम् ॥ ८ ॥

त्वम् । ह॒ । त्यत् । ऋ॒ण॒ऽयाः । इ॒न्द्र॒ । धीरः॑ । अ॒सिः । न । पर्व॑ । वृ॒जि॒ना । शृ॒णा॒सि॒ ।
प्र । ये । मि॒त्रस्य॑ । वरु॑णस्य । धाम॑ । यु॒जम् । न । जना॑ः । मि॒नन्ति॑ । मि॒त्रम् ॥ ८ ॥

वेङ्कट० त्वम् ह तद् ऋणानां स्तोतृविषयाणां प्रापयिता इन्द्र! प्राज्ञः, असिः इव पशूनां पर्वाणि स्तोतॄणाम् उपद्रवान् हंसि, प्र हिंसन्ति ये मित्रावरुणयोः धारकं कर्म युक्तमिव मित्रम् अज्ञा नृशंसाः जनाः ॥ ८ ॥

प्र ये मि॒त्रं प्रार्य॒मणं॑ दु॒रेवाः॒ प्र सं॒गिरः॒ प्र वरु॑णं मि॒नन्ति॑ ।
न्य१॒॑मित्रे॑षु व॒धमि॑न्द्र॒ तुम्रं॒ वृष॒न् वृषा॑णमरु॒षं शि॑शीहि ॥ ९ ॥

प्र । ये । मि॒त्रम् । प्र । अ॒र्य॒मण॑म् । दुः॒ऽएवा॑ः । प्र । स॒म्ऽगिर॑ः । प्र । वरु॑णम् । मि॒नन्ति॑ ।
नि । अ॒मित्रे॑षु । व॒धम् । इ॒न्द्र॒ । तुम्र॑म् । वृष॑न् । वृषा॑णम् । अ॒रु॒षम् । शि॒शी॒हि॒ ॥ ९ ॥

वेङ्कट० ये दुष्टगमनाः प्र हिंसन्ति मित्रम् अर्यमणम्, संगिरः मरुतः, तान् वरुणम् च, तानुद्दिश्य तीक्ष्णीकुरु आयुधम् वृषन्! इन्द्र! गमनशीलम् कामानां वर्षकम् आरोचमानम् ॥ ९ ॥

इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्या इन्द्रो॑ अ॒पामिन्द्र॒ इत् पर्व॑तानाम् ।
इन्द्रो॑ वृ॒धामिन्द्र॒ इन्मेधि॑रा॒णामिन्द्रः॒ क्षेमे॒ योगे॒ हव्य॒ इन्द्रः॑ ॥ १० ॥

इन्द्र॑ः । दि॒वः । इन्द्र॑ः । ई॒शे॒ । पृ॒थि॒व्याः । इन्द्र॑ः । अ॒पाम् । इन्द्र॑ः । इत् । पर्व॑तानाम् ।
इन्द्र॑ः । वृ॒धाम् । इन्द्र॑ः । इत् । मेधि॑राणाम् । इन्द्र॑ः । क्षेमे॑ । योगे॑ । हव्य॑ः । इन्द्र॑ः ॥ १० ॥

---

1. नास्ति वि[2] अ[1].

**वेङ्कट०** इन्द्रः द्यावापृथिव्योः [1]ईष्टे, इन्द्रः एव मेघानाम्, इन्द्रः एव उदकानाम्, इन्द्रः वृद्धानाम्, इन्द्रः एव प्राज्ञानाम्। इन्द्रः योगे ह्वातव्यः, इन्द्रः एव क्षेमे[1] ।। १० ॥

[2]इति अष्टमाष्टके चतुर्थाध्याये पञ्चदशो वर्गः[2] ॥

प्राक्तुभ्य इन्द्रः प्र वृधो अहंभ्यः प्रान्तरिक्षात् प्र समुद्रस्य धासेः ।
प्र वातस्य प्रथसः प्र ज्मो अन्तात् प्र सिन्धुभ्यो रिरिचे प्र क्षितिभ्यः ॥११॥

प्र । अक्तुऽभ्यः । इन्द्रः । प्र । वृधः । अहऽभ्यः । प्र । अन्तरिक्षात् । प्र । समुद्रस्य । धासेः ।
प्र । वातस्य । प्रथसः । प्र । ज्मः । अन्तात् । प्र । सिन्धुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥

**वेङ्कट०** [1]प्र रिरिचे रात्रिभ्यः इन्द्रः। प्र-रिरिचे वृद्धः अहोभ्यः, प्र अन्तरिक्षात्, प्र च समुद्रस्य धारकात् स्थानात्, प्र च वातस्य प्रथिम्नः, प्र च पृथिव्याः[1] पर्यन्तात्, प्र च नदीभ्यः, प्र च मनुष्येभ्यः ॥ ११ ॥

प्र शोशुचत्या उषसो न केतुरसिन्वा ते वर्ततामिन्द्र हेतिः ।
अश्मेव विध्य दिव आ सृजानस्तपिष्ठेन हेषसा द्रोघमित्रान् ॥ १२ ॥

प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्तताम् । इन्द्र । हेतिः ।
अश्माऽइव । विध्य । दिवः । आ । सृजानः । तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥ १२ ॥

**वेङ्कट०** प्र वर्तताम् ज्वलन्त्याः उषसः इव रश्मिः बन्धनरहिता शत्रुषु तव हेतिः इन्द्र! । स त्वं तपिष्ठया हेत्या विध्य द्रोघमित्रान् येषां सन्ति द्रुग्धानि मित्राणि तान्, यथा दिवः आ-सृज्यमानः अश्मा अशनिः वृक्षादीन् विध्यति, तद्वदिति ॥ १२ ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः ।
अन्विन्द्रं रोदसी वावशाने अन्वापो अजिहत जायमानम् ॥ १३ ॥

अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः । अनु । पर्वतासः ।
अनु । इन्द्रम् । रोदसी इति । वावशाने इति । अनु । आपः । अजिहत । जायमानम् ॥ १३ ॥

**वेङ्कट०** प्रादुर्भवन्तम् प्रातः इन्द्रम् एता देवताः अनु गच्छन्ति, द्यावापृथिव्यौ च कामयमाने श्रद्दधाने इति ॥ १३ ॥

कर्हि स्वित् सा त इन्द्र चेत्यासदघस्य यद्भिनदो रक्ष एषत् ।
मित्रक्रुवो यच्छसने न गावः पृथिव्या आपृगमुया शयन्ते ॥ १४ ॥

कर्हि । स्वित् । सा । ते । इन्द्र । चेत्या । असत् । अघस्य । यत् । भिनदः । रक्षः । आऽईषत् ।
मित्रऽक्रुवः । यत् । शसने । न । गावः । पृथिव्याः । आऽपृक् । अमुया । शयन्ते ॥ १४ ॥

१-१. नास्ति वि[1]. २-२. नास्ति मूको.

वेङ्कट० कर्हि स्विद् तत् इन्द्र! आयुधम् अभूत् त्वदीयम्[1], आहननार्थम् आगच्छत् रक्षः[2] येन अभिनः, मित्राणां क्रूरस्य कर्मणः कर्तारः येन विशसनस्थाने पशवः इव पृथिव्याः अस्या आपर्चनाहताः सन्तः अनया पृथिव्या सङ्गता युद्धे शेरत इति ॥ १४ ॥

शत्रूयन्तो अभि ये नस्ततस्रे महि व्राधन्त ओगणास इन्द्र ।
अन्धेनामित्रास्तमसा सचन्तां सुज्योतिषो अक्तवस्ताँ अभि ष्युः ॥ १५ ॥

शत्रुऽयन्तः । अभि । ये । नः । ततस्रे । महि । व्राधन्तः । ओगणासः । इन्द्र ।
अन्धेन । अमित्राः । तमसा । सचन्ताम् । सुऽज्योतिषः । अक्तवः । तान् । अभि । स्युरिति स्युः ॥

वेङ्कट० शत्रुत्वमिच्छन्तः [3]अभि क्षिपन्ति[3] ये अस्मान् अत्यन्तं बाधमानाः सङ्घीभूताः इन्द्र!, ते अमित्राः अन्धेन तमसा सङ्गच्छन्ताम्, सुज्योतिषः दिवसाः रात्रयश्च तान् अभि-भवन्तु ॥ १५ ॥

पुरूणि हि त्वा सवना जनानां ब्रह्माणि मन्दन् गृणतामृषीणाम् ।
इमामाघोषन्नवसा सहूतिं तिरो विश्वाँ अर्चतो याह्यर्वाङ् ॥ १६ ॥

पुरूणि । हि । त्वा । सवना । जनानाम् । ब्रह्माणि । मन्दन् । गृणताम् । ऋषीणाम् ।
इमाम् । आऽघोषन् । अवसा । सऽहूतिम् । तिरः । विश्वान् । अर्चतः । याहि । अर्वाङ् ॥ १६ ॥

वेङ्कट० बहूनि हि त्वा सवनानि जनानाम् ब्रह्माणि च मन्दन् स्तुवताम् ऋषीणाम् । इमाम् स्तुतिम् [4]त्वम् आघोषन्[4] सुष्टुतमिति वदन् रक्षणेन सह तिरस्कृत्य अन्यान् स्तुवतः सर्वान् अभिमुखः गच्छ अस्मान्[5] इति ॥ १६ ॥

एवा ते वयमिन्द्र भुञ्जतीनां विद्याम सुमतीनां नवानाम् ।
विद्याम वस्तोरवसा गृणन्तो विश्वामित्रा उत त इन्द्र नूनम् ॥ १७ ॥

एव । ते । वयम् । इन्द्र । भुञ्जतीनाम् । विद्याम । सुऽमतीनाम् । नवानाम् ।
विद्याम । वस्तोः । अवसा । गृणन्तः । विश्वामित्राः । उत । ते । इन्द्र । नूनम् ॥ १७ ॥

वेङ्कट० एवम् ते वयम् इन्द्र! रक्षन्तीः लभेमहि सुमतीः नवाः । विद्याम च वसतिम् रक्षणार्थम् स्तुवन्तः । विश्वामित्राः अमी त्वदीया एव भवन्तु पुरा च इदानीं[6] चेति ॥ १७ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १८ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १८ ॥

---

१. तदी° मूको. २. तद्रक्षः वि[2] अ[1]. ३-३. अभि क्षबन्ति वि[2] अ[1]; °भक्षय° वि[1].
४-४. च मोघो° वि[2] अ[1]; तमाघो° वि[1]. ५. °स्मात् स्थितिः वि[2] अ[1]. ६. °दासीं मूको.

वेङ्कट० निगदसिद्धेति ॥ १८ ॥

[1]इति अष्टमाष्टके चतुर्थाध्याये षोडशो वर्गः[1] ॥

[ ९० ]

[1]नारायण ऋषिः । पुरुषो देवता । अनुष्टुप् छन्दः, अन्त्या त्रिष्टुप्[1] ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् ।
सः । भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

वेङ्कट० नारायणः । अत्र वाजसनेयकम्—'पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् तमाहरत् तेनायजत तेनेष्ट्वाऽत्यतिष्ठत् सर्वाणि भूतानीदं सर्वमभवत्' ( माश १३, ६, १, १ ) इति । यथा परोक्षस्याग्नेः प्रत्यक्षैरग्निभिः स्तवः परोक्षेण च[2] भवति, तद्वत् परोक्षस्य पुरुषस्य लौकिकैः पुरुषैः सहस्रशीर्षेति स्तवः । यस्य पुरुषस्य सहस्रशिरस्कत्वं बह्वक्षिपादत्वं च, सः अयं पुरुषो महिम्ना सर्वाम् भूमिम् ससमुद्रां[3] व्याप्य अति अतिष्ठत् दशाङ्गुलम् [4]यथा अन्यः[4] स्व आसन[5] आसीनः पुरुषः, एवमिति । अत्र वाजसनेयकं ब्राह्मणक्षत्रियवैश्यशूद्राणामालम्भनमुक्त्वाह[6]— "नियुक्तान् पुरुषान् । ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा पुरुषः' इति" ( माश १३, ६, २, १२ ) । सोऽयं यथा पुरुषो भूत्वा जायतेऽङ्गैर्नानाविधैस्तत्[7] 'अद्भ्यः संभूतः पृथिव्यै रसाच्च' ( तैआ ३, १३, १ ) इत्युक्त्वा नारायणेनोक्तं परं मतम् । एवंविधमेवास्यानेकवक्त्रनयनं शरीरमस्ति, तच्चार्जुनाय दर्शयामासेति न चोद्यावसरः ॥ १ ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ।
उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ २ ॥

वेङ्कट० पुरुषः एव इदम् सर्वम्[8] स्थावरजङ्गमम्[9] यत् भूतम् यत् च भविष्यत्[10] । सोऽयं स्थावरजङ्गमात्मकस्य सर्वस्य अमृतत्वस्य ईशानः भवति । यदा ह्ययं स्थावरं वा जङ्गमं वा विमुञ्चति देवान् वा, तदानीं तत् मृतमित्याख्यायते । यत् किञ्चिदिह भूतजातम् अन्नेन अतिवर्धत इति । देवानामन्नं हविः ॥ २ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1]. ३. समुद्रां मूको. ४-४. यथा भूयश्च वि[1]; यथा भूत् वि[2] अ[1]. ५. नास्ति वि[1]. ६. °लम्बनमु° वि[2] अ[1]; °लम्बनु° वि[1]. ७. जायते…नाना° वि[2] अ[1]. ८. सर्वसर्वं वि[2] अ[1]. ९. °मं च वि[2] अ[1]. १०. °ष्यति वि[2] अ[1].

एतावा॑नस्य महि॒मातो॒ ज्याया॑ँश्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३ ॥

ए॒तावा॑न् । अ॒स्य॒ । म॒हि॒मा । अतः॑ । ज्याया॑न् । च॒ । पुरु॑षः ।
पादः॑ । अ॒स्य॒ । विश्वा॑ । भू॒तानि॑ । त्रि॒ऽपात् । अ॒स्य॒ । अ॒मृत॑म् । दि॒वि ॥ ३ ॥

**वेङ्कट०** यदिदं देवतिर्यङ्मनुष्यात्मकं दृश्यते एतावान् अस्य पुरुषस्य महिमा । स स्वयम् अतः अपि ज्यायान् पुरुषः । तदेवाह — पादः अस्य सर्वाणि भूतानि तुरीयांऽशः, त्रिपात् अस्य अमृतम् दिवि भवति । तुरीयस्तु पादो जननमरणयुक्त इति । 'अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिम्' ( तैआ ३,१३,२ [ तु. मा ३१,१९ ] ) इत्युत्तरनारायणम् ॥ ३ ॥

त्रि॒पादू॒र्ध्व उदै॒त् पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त् पुनः॑ ।
ततो॒ विष्व॒ङ् व्य॑क्रामत् साशनानश॒ने अ॒भि ॥ ४ ॥

त्रि॒ऽपात् । ऊ॒र्ध्वः । उत् । ऐ॒त् । पुरु॑षः । पादः॑ । अ॒स्य॒ । इ॒ह । अ॒भ॒व॒त् । पुनः॒ इति॑ ।
ततः॑ । विष्व॑ङ् । वि । अ॒क्रा॒म॒त् । सा॒श॒ना॒न॒श॒ने इति॑ । अ॒भि ॥ ४ ॥

**वेङ्कट०** अयम् पुरुषः ऊर्ध्वः उत् ऐत् । अथ अस्य तुरीयः पादः इह पुनःपुनः भवति । तेन तुरीयेण पादेन स पुरुषो नानाञ्चनः सर्वतः वि अक्रामत् साशनानशने लक्षीकृत्य । साशनाः देवमनुष्याः, अनशनाः वृक्षादय इति ॥ ४ ॥

तस्मा॑द्वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।
स जा॒तो अत्य॑रिच्यत प॒श्चाद् भूमि॒मथो॑ पु॒रः ॥ ५ ॥

तस्मा॑त् । वि॒ऽराट् । अ॒जा॒य॒त॒ । वि॒ऽराजः॑ । अधि॑ । पुरु॑षः ।
सः । जा॒तः । अति॑ । अ॒रि॒च्य॒त॒ । प॒श्चात् । भूमि॑म् । अथो॒ इति॑ । पु॒रः ॥ ५ ॥

**वेङ्कट०** तस्मात् पुरुषात् विराट् नाम पुरुषः अजायत[1] ब्रह्मभूतः[2] । 'द्विधा कृत्वाऽऽत्मनो[3] देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां च विराजमसृजत् प्रभुः' इति मानवम् ( मनुः १,३२ ) । अथ तस्मात् विराजः अन्यः पुरुषः जायते। तत्र वाजसनेयकम् — " 'विराजो अधि पूरुषः' इत्येषा वै सा विराडेतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति" ( माश १३,६,१,२ ) इति । सः[4] [5]च तृतीयः[5] पुरुषः जातः अतिरिक्त आसीत् भूमिम् पश्चात् पुरस्ताच्च ॥ ५ ॥

[6]इति अष्टमाष्टके चतुर्थाध्याये सप्तदशो वर्गः[6] ॥

यत् पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।
व॒स॒न्तो अ॑स्यासी॒दाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥ ६ ॥

---

१. जातः वि[1]. २. प्रादुर्भूतः वि[1]. ३. °कृत्या° वि[1] अ[1]. ४. यः वि[1]. ५-५. नास्ति वि[1], ६-६. नास्ति मूको.

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ।
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ ६ ॥

**वेङ्कट०** **अथ स पुरुषोऽश्व आसीत्। तेनाश्वेन** हविषा **यदा** देवाः यज्ञम् अतन्वत, **तदानीम्** अस्य **यज्ञस्य रसानामुत्पादकः** वसन्तः **स्वमहिम्ना** आज्यम् आसीत्, **शोषकः** ग्रीष्मः इध्मः, **अन्नस्योत्पादयित्री** शरत् हविः ॥ ६ ॥

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः ।
तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥ ७ ॥

**वेङ्कट०** तम् यज्ञम् पुरुषम् अग्रतः जातम् **यज्ञे** प्र औक्षन् **अश्वभूतम्**[1] । तेन देवाः अयजन्त साध्याः ऋषयः च ये **सन्तीति** ॥ ७ ॥

तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम् ।
पशून् ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८ ॥

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत्ऽआज्यम् ।
पशून् । तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च । ये ॥ ८ ॥

**वेङ्कट०** **सर्वहुत् आश्वमेधिकोऽश्वः** । तस्मात् यज्ञात् **अश्वभूतात्**[2] **किञ्चित्**[3] संभृतम् पृषदाज्यम् **कृतम्** । **अथ तत्** देवाः ग्राम्यान् आरण्यान् च पशून् **चक्रिरे** । **वायुदेवत्या भवन्ति आरण्याः पशवः** ॥ ८ ॥

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ।
छन्दांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥ ९ ॥

**वेङ्कट०** सर्वहुतः[4] तस्मात् यज्ञात् **एतानि च त्रिविधानि अजायन्त** छन्दांसि **च तदधिष्ठानानीति** ॥ ९ ॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ १० ॥

तस्मात् । अश्वाः । अजायन्त । ये । के । च । उभयादतः ।
गावः । ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजावयः ॥ १० ॥

---

१. °भूतः वि[1]; °भूतं वि[2] अ[1]. २. सुर्वभूताद वि[2] अ[1]. ३. कश्चित् मूको. ४. नास्ति वि[2] अ[1].

वेङ्कट० तस्मात् अश्वाः अजायन्त, ये के चिद् अन्ये उभयतोदन्ताः। तस्मात् एव गावः च अजायन्त। तस्मात् एव जाताः अजावयः॥ १०॥

[1]इति अष्टमाष्टके चतुर्थाध्याये अष्टादशो वर्गः[1]॥

यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥ ११॥

यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्पयन्।
मुखम्। किम्। अस्य। कौ। बाहू इति। कौ। ऊरू इति। पादौ। उच्येते इति॥११॥

वेङ्कट० यथा पुरुषम् वि अदधुः साध्या देवाः, तथा[2] तम् कतिधा वि अकल्पयन्। मुखम् किम् अस्य आसीत, कौ च बाहू, कौ वा ऊरू पादौ च उच्येते इति प्रश्नस्योत्तरम् 'ब्राह्मणः' (मं १२) इति॥ ११॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ १२॥

ब्राह्मणः। अस्य। मुखम्। आसीत्। बाहू इति। राजन्यः। कृतः।
ऊरू इति। तत्। अस्य। यत्। वैश्यः। पत्ऽभ्याम्। शूद्रः। अजायत॥१२॥

वेङ्कट० अजायत अस्य मुखतः ब्राह्मणः। बाहू कृतः राजन्यः। ऊरू तत् अस्य वैश्यः अभवताम्। यत् इदं वैश्य इति तदभवतामूरू इति। पद्भ्याम् अजायत शूद्रः॥ १२॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ १३॥

चन्द्रमाः। मनसः। जातः। चक्षोः। सूर्यः। अजायत।
मुखात्। इन्द्रः। च। अग्निः। च। प्राणात्। वायुः। अजायत॥ १३॥

वेङ्कट० तस्य मनःप्रभृतिभ्यः पञ्च अमी चन्द्रादयः[3] जज्ञिरे इति॥ १३॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन्॥ १४॥

नाभ्याः। आसीत्। अन्तरिक्षम्। शीर्ष्णः। द्यौः। सम्। अवर्तत।
पत्ऽभ्याम्। भूमिः। दिशः। श्रोत्रात्। तथा। लोकान्। अकल्पयन्॥ १४॥

वेङ्कट० नाभिप्रभृतिभ्यः त्रयो लोकाः सम् अभवन्। दिशः श्रोत्रात् निर्गताः। इत्थं साध्या देवताः तस्मात् पुरुषात् लोकान् अकल्पयन् इति॥ १४॥

---

१-१. नास्ति मूको. २. तदा वि[1]. ३. नास्ति मूको.

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ।
देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ १५ ॥

**वेङ्कट०** यदा साध्याः देवाः यज्ञम् तन्वानाः तस्मिन् यज्ञे अबध्नन् पुरुषम् अश्वभूतम्, तदानीं[1] सप्त छन्दांसि परिधयः आसन्, त्रिः सप्त एकविंशतिसङ्ख्यायुक्ताः समिधः कृताः ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥

**वेङ्कट०** अत्र वाजसनेयकम् "'यज्ञेन यज्ञमयजन्त देवाः' यज्ञेन हि तं यज्ञमयजन्त देवाः 'तानि धर्माणि प्रथमान्यासन्' इति ते हि धर्माः प्रथमेऽक्रियन्त 'ते ह नाकं महिमानस्सचन्त' इति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकं सचन्त ये[2] तं[3] यज्ञमयजन्नित्येतत् ॥ 'यत्र पूर्वे साध्याः सन्ति देवाः' इति । प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्" ( माश १०,२,२,२ ) इति ॥ १६ ॥[4]

[5]इति अष्टमाष्टके चतुर्थाध्याये एकोनविंशो वर्गः[5] ॥

[ ९१ ]

[5]अरुणो वैतहव्य ऋषिः । अग्निर्देवता । जगती छन्दः, अन्त्या त्रिष्टुप्[5] ।

सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥ १ ॥

सम् । जागृवतऽभिः । जरमाणः । इध्यते । दमे । दमूनाः । इषयन् । इळः । पदे ।
विश्वस्य । होता । हविषः । वरेण्यः । विऽभुः । विभाऽवा । सुऽसखा । सखिऽयते ॥ १ ॥

**वेङ्कट०** अरुणो वैतहव्यः । सम् इध्यते जागरणशीलैः स्तूयमानः गृहे दममनाः अन्नमिच्छन् इडायाः पदे उत्तरवेद्याम् विश्वस्य होता हविषः वरणीयः विभुः दीप्तिमान् शोभनसखा[6] यजमानाय सखित्वमिच्छते ॥ १ ॥

स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो३ विशंविशम् ॥ २ ॥

---

१. तदा वि[1]. २. नास्ति वि[1]. ३. एतं वि[2] अ[1]; एतव वि[1]. ४. अत्र या. (१२,४१) द्र. ५-५. नास्ति मूको. ६. °सखा वि[2] अ[1].

सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये । तक्ववीःऽइव ।
जनम्ऽजनम् । जन्यः । न । अति । मन्यते । विशः । आ । क्षेति । विश्यः । विशम्ऽविशम् ॥२॥

**वेङ्कट०** सः दर्शनीयश्रीः अतिथिः गृहेगृहे **काष्ठेकाष्ठे श्रयति गच्छन् इव स्तेनः । जातंजातम् जनहितः** न अति मन्यते **न विसृज्य गच्छति । तदेवोक्तम्** — विशः आ **निवसति विक्षु वसन्**[1] **सर्वाम् विशम् अधितिष्ठतीति ॥ २ ॥**

## सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।
## वसुर्वसूनां क्षयसि त्वमेक इद् द्यावा च यानि पृथिवी च पुष्यतः ॥ ३ ॥

सुऽदक्षः । दक्षैः । क्रतुना । असि । सुऽक्रतुः । अग्ने । कविः । काव्येन । असि । विश्वऽवित् ।
वसुः । वसूनाम् । क्षयसि । त्वम् । एकः । इत् । द्यावा । च । यानि । पृथिवी इति । च । पुष्यतः ॥

**वेङ्कट०** सुबलः **बलैः भवसि । कर्मणा च भवसि** सुक्रतुः, अग्ने ! **कविः च भवसि कविकर्मणा सर्वज्ञः । वासयिता वासयितॄणाम् धनानि वससि** त्वम् एकः **एव द्यावाभूमी**[2] **यानि वसूनि** पुष्यतः **पार्थिवानां दिव्यानां चेशिषे धनानामिति ॥ ३ ॥**

## प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवन्तमासदः ।
## आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥ ४ ॥

प्रऽजानन् । अग्ने । तव । योनिम् । ऋत्वियम् । इळायाः । पदे । घृतऽवन्तम् । आ । असदः ।
आ । ते । चिकित्रे । उषसाम्ऽइव । एतयः । अरेपसः । सूर्यस्यऽइव । रश्मयः ॥ ४ ॥

**वेङ्कट०** प्रजानन् अग्ने ! तव **आवासस्थानम् ऋतौ भवम्** इळायाः पदे घृतवन्तम् आ [3]**सीदसि ।** आ[3] **ज्ञायन्ते** तव उषसाम् इव **श्वेता रश्मयः,** अरेपसः सूर्यस्य इव च **रश्मयः ॥ ४ ॥**

## तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः ।
## यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥ ५ ॥

तव । श्रियः । वर्ष्यस्यऽइव । विऽद्युतः । चित्राः । चिकित्रे । उषसाम् । न । केतवः ।
यत् । ओषधीः । अभिऽसृष्टः । वनानि । च । परि । स्वयम् । चिनुषे । अन्नम् । आस्ये ॥५॥

**वेङ्कट०** तव **रश्मयः**[4] **मेघस्य** इव विद्युतः चित्राः **प्रज्ञायन्ते** उषसाम् **इव रश्मयः, यदा त्वम्** ओषधीः अभि-**विसृष्टः काष्ठानि च** परि चिनुषे स्वयम् एव अन्नम् आस्ये ॥ ५ ॥

[5]**इति अष्टमाष्टके चतुर्थाध्याये विंशो वर्गः**[5] ॥

---

१. पत्सु वि[२] अ[१]. २. द्यावापृथिवी वि[१]. ३-३ सीदा वि[१,२]; सीमा अ[१]. ४. नास्ति वि[१].
५-५. नास्ति मूको.

तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।
तमित् समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ ६ ॥

तम् । ओषधीः । दधिरे । गर्भम् । ऋत्वियम् । तम् । आपः । अग्निम् । जनयन्त । मातरः ।
तम् । इत् । समानम् । वनिनः । च । वीरुधः । अन्तःऽवतीः । च । सुवते । च । विश्वहा ॥

वेङ्कट० तम् ओषधीः धारयन्ति गर्भम् ऋतौ प्राप्तम्, तम् आपः च अग्निम् जनयन्ति मातरः, तम् एकमेव अरण्ये दावं वृक्षाः वीरुधः च तथा गर्भवत्य ओषधयः च सुवते सर्वदा ॥ ६ ॥

वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतन्ते रथ्योऽ यथा पृथक् शर्धांस्यग्ने अजराणि धक्षतः ॥ ७ ॥

वातऽउपधूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना । वेविषत् । विऽतिष्ठसे ।
आ । ते । यतन्ते । रथ्यः । यथा । पृथक् । शर्धांसि । अग्ने । अजराणि । धक्षतः ॥ ७ ॥

वेङ्कट० वातेनावधूतः कम्पितः प्रेषितः कान्तान् वनस्पतीन् प्रति क्षिप्रम् यदा त्वम् अन्नानि व्याप्नुवन् इतस्ततोऽरण्ये गच्छसि, तदानीम् आ गच्छन्ति[1], यथा पृथक् रथिनः आगच्छन्ति तद्वत्, तव तेजांसि अग्ने! अजराणि काष्ठानि दहतः ॥ ७ ॥

मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।
तमिदर्भे हविष्या समानमित् तमिन्महे वृणते नान्यं त्वत् ॥ ८ ॥

मेधाऽकारम् । विदथस्य । प्रऽसाधनम् । अग्निम् । होतारम् । परिऽभूतमम् । मतिम् ।
तम् । इत् । अर्भे । हविषि । आ । समानम् । इत् । तम् । इत् । महे । वृणते । न । अन्यम् । त्वत् ॥

वेङ्कट० प्रज्ञायाः कर्तारम् यज्ञस्य प्रसाधनम् अग्निम् होतारम् अतिशयेन परिभवितारम् [2]मन्तारम् वृणीमहे । तम् एव अल्पे[2] हविषि आ वृणते [3]ऋत्विजः सहैव[3], महति अपि न अन्यम् त्वत्तः वृणते इति ॥ ८ ॥

त्वामिदत्र वृणते त्वायवो होतारमग्ने विदथेषु वेधसः ।
यद्देवयन्तो दधति प्रयांसि ते हविष्मन्तो मनवो वृक्तबर्हिषः ॥ ९ ॥

त्वाम् । इत् । अत्र । वृणते । त्वाऽयवः । होतारम् । अग्ने । विदथेषु । वेधसः ।
यत् । देवऽयन्तः । दधति । प्रयांसि । ते । हविष्मन्तः । मनवः । वृक्तऽबर्हिषः ॥ ९ ॥

वेङ्कट० त्वाम् एव अत्र वृणते त्वत्कामाः ह्वातारम् अग्ने! यज्ञेष्वृत्विजः, यदा देवानिच्छन्तः प्रयच्छन्ति हवींषि तुभ्यम् हविष्मन्तः मनुष्याः छिन्नबर्हिषः ॥ ९ ॥

---

१. °गच्छसीति वि'; °गच्छति वि[2] अ[1]. २-२. महान्तं देवाल्पेन वि[2] अ'; महान्तमेवाल्पेन वि[1].
३-३. ससजसमेव वि[2] अ[1].

तवा॑ग्ने हो॒त्रं तव॑ पो॒त्रमृ॒त्वियं॒ तव॑ ने॒ष्ट्रं त्वम॒ग्निदृ॑ताय॒तः ।
तव॑ प्रशा॒स्त्रं त्वम॑ध्वरीयसि ब्र॒ह्मा चासि॑ गृ॒हप॑तिश्च नो॒ दमे॑ ॥ १० ॥

तव॑ । अग्ने॒ । हो॒त्रम् । तव॑ । पो॒त्रम् । ऋ॒त्विय॑म् । तव॑ । ने॒ष्ट्रम् । त्वम् । अ॒ग्नित् । ऋ॒त॒ऽय॒तः ।
तव॑ । प्र॒ऽशा॒स्त्रम् । त्वम् । अ॒ध्व॒रि॒ऽय॒सि॒ । ब्र॒ह्मा । च॒ । असि॑ । गृ॒हऽप॑तिः । च॒ । नः॒ । दमे॑ ॥

**वेङ्कट०** पूर्वं ( ऋ २,१,२ ) गतेति ॥ १० ॥

[1]इति अष्टमाष्टके चतुर्थाध्याये एकविंशो वर्गः[1] ॥

यस्तुभ्य॑मग्ने अ॒मृता॑य॒ मर्त्यः॑ स॒मिधा॒ दाश॑दु॒त वा॑ ह॒विष्कृ॑ति ।
तस्य॒ होता॑ भवासि॒ यासि॑ दू॒त्य१॒॑मुप॑ ब्रूषे॒ यज॑स्यध्वरी॒यसि॑ ॥ ११ ॥

यः । तु॒भ्य॑म् । अ॒ग्ने॒ । अ॒मृता॑य । मर्त्यः॑ । स॒म्ऽइधा॑ । दाश॑त् । उ॒त । वा॒ । ह॒विःऽकृ॑ति ।
तस्य॑ । होता॑ । भ॒व॒सि॒ । यासि॑ । दू॒त्य॑म् । उप॑ । ब्रू॒षे॒ । यज॑सि । अ॒ध्व॒रि॒ऽय॒सि॑ ॥ ११ ॥

**वेङ्कट०** यः तुभ्यम् अग्ने! अमृताय मर्त्यः समिधम् प्रयच्छति । द्वितीयाया आकारः । अपि वा यज्ञम् अनुतिष्ठति । तस्य होता भवसि, यासि च दूत्यम्, ततो देवान् प्रति ब्रह्मा भूत्वा च उप ब्रूषे, यजमानो भूत्वा यजसि, तथाऽध्वर्युरिव च आचरसीति ॥ ११ ॥

इ॒मा अ॑स्मै म॒तयो॒ वाचो॑ अ॒स्मदाँ॒ ऋचो॒ गिरः॑ सुष्टु॒तयः॑ सम॑ग्मत ।
व॒सू॒यवो॒ वस॑वे जा॒तवे॑दसे वृ॒द्धासु॑ चि॒द्वर्ध॑नो॒ यासु॑ चा॒कन॑त् ॥ १२ ॥

इ॒माः । अ॒स्मै॒ । म॒तयः॑ । वाचः॑ । अ॒स्मत् । आ । ऋचः॑ । गिरः॑ । सु॒ऽस्तु॒तयः॑ । सम् । अ॒ग्म॒त॒ ।
व॒सु॒ऽयवः॑ । वस॑वे । जा॒तऽवे॑दसे । वृ॒द्धासु॑ । चि॒त् । वर्ध॑नः । यासु॑ । चा॒कन॑त् ॥ १२ ॥

**वेङ्कट०** इमाः अस्मै पूजयित्र्यः वाचः अस्मत्तः निर्गच्छन्ति । तदेवाह — ऋचः गिरः सुष्टुतयः च सम् गच्छन्ते धनकामाः वासयित्रे जातप्रज्ञाय । [2]तमिमाः प्रीणयन्तु[2] । [3]वृद्धासु स्तुतिषु[3] वर्धयिता यासु स्तोतॄन् कामयते ॥ १२ ॥

इ॒मां प्र॒त्नाय॑ सुष्टु॒तिं नवी॑यसीं वो॒चेय॑मस्मा उश॒ते शृ॒णोतु॑ नः ।
भू॒या अन्त॑रा हृ॒द्य॑स्य नि॒स्पृशे॑ जा॒येव॒ पत्य॑ उश॒ती सु॒वासाः॑ ॥ १३ ॥

इ॒माम् । प्र॒त्नाय॑ । सु॒ऽस्तु॒तिम् । नवी॑यसीम् । वो॒चेय॑म् । अ॒स्मै॒ । उ॒श॒ते । शृ॒णोतु॑ । नः॒ ।
भू॒याः । अन्त॑रा । हृ॒दि । अ॒स्य॒ । नि॒ऽस्पृशे॑ । जा॒याऽइ॑व । पत्ये॑ । उ॒श॒ती । सु॒ऽवासाः॑ ॥१३॥

**वेङ्कट०** इमाम् प्रत्नाय सुष्टुतिम् नवतराम् वोचेयम् अस्मै कामयमानाय । स च ताम् अस्मदीयाम्

---

१-१. नास्ति मूको. २-२. °मां प्रीणयतु मूको. ३-३. °दृधातिषु वि[2] अ[1]; °दृध स्तुतिषु वि[1].

श्रृणोतु । भूयासम् अग्नेः हृदयस्य अन्तरा निस्पर्शनाय अग्नेर्हृदिस्पृगहं स्याम्, जाया यथा पत्ये[1] भवति कामयमाना सुवासाः ॥ १३ ॥

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ १४ ॥

यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः । अवऽसृष्टासः । आऽहुताः ।
कीलालऽपे । सोमऽपृष्ठाय । वेधसे । हृदा । मतिम् । जनये । चारुम् । अग्नये ॥ १४ ॥

**वेङ्कट०** यस्मिन् अश्वादयः आहुताः भवन्ति, तस्मै सुरां सौत्रामण्यां पिबते । 'कीलालम्' ( निघ २,७ ) इत्यन्ननामसु पठितम् । सोमपृष्ठाय विधात्रे हृदयेन स्तुतिम् जनयामि[2] चारुम् अग्नये ॥ १४ ॥

अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ १५ ॥

अहावि । अग्ने । हविः । आस्ये । ते । स्रुचिऽइव । घृतम् । चम्विऽइव । सोमः ।
वाजऽसनिम् । रयिम् । अस्मे इति । सुऽवीरम् । प्रऽशस्तम् । धेहि । यशसम् । बृहन्तम् ॥ १५ ॥

**वेङ्कट०** अहावि अग्ने! हविः आस्ये ते, यथा स्रुचि घृतम् गृह्यते, यथा वा चमसे सोमः । ततस्त्वम् अन्नस्य दातारम् रयिम् अस्मासु नि-धेहि सुवीरम्[3] प्रशस्तम् यशस्विनम् महान्तम् ॥ १५ ॥

[4]इति अष्टमाष्टके चतुर्थाध्याये द्वाविंशो वर्गः[4] ॥

## [ ९२ ]

[5]शार्यातो मानव ऋषिः । विश्वे देवा देवता । जगती छन्दः[5] ।

यज्ञस्य वो रथ्यं विश्पतिं विशां होतारमक्तोरतिथिं विभावसुम् ।
शोचञ्छुष्कासु हरिणीषु जर्भुरद् वृषा केतुर्यजतो द्यामशायत ॥ १ ॥

यज्ञस्य । वः । रथ्यम् । विश्पतिम् । विशाम् । होतारम् । अक्तोः । अतिथिम् । विभाऽवसुम् ।
शोचन् । शुष्कासु । हरिणीषु । जर्भुरत् । वृषा । केतुः । यजतः । द्याम् । अशायत ॥ १ ॥

**वेङ्कट०** शार्यातो मानवः । यज्ञस्य यूयम् नेतारम् विशां पतिम् होतारम् अतिथिम् रात्रेः विभावसुम् परिचरत । प्रज्वलन् शुष्कासु आर्द्रासु [5]च ओषधीषु[5] ॥ १ ॥

इममञ्जस्पामुभये अकृण्वत धर्माणमग्निं विदथस्य साधनम् ।
अक्तुं न यह्वमुषसः पुरोहितं तनूनपातमरुषस्य निंसते ॥ २ ॥

---

१. त्रुटितम् वि[2] अ[1]; अपत्ये वि[1]. २. °याम मूको. ३. सुचिरम् मूको. ४-४. नास्ति मूको. ५-५. चो मूको. । 'वायोः पुत्रमाश्रयन्ति' इतीह मूको. स्थानभ्रष्टः पाठः (तु. पृ ३६९३ टि १-१).

इमम् । अञ्जःऽपाम् । उभये । अकृण्वत । धर्माणम् । अग्निम् । विदथस्य । साधनम् ।
अक्तुम् । न । यह्वम् । उषसः । पुरःऽहितम् । तनूऽनपातम् । अरुषस्य । निंसते ॥ २ ॥

वेङ्कट० उभये देवमनुष्याः 'वायोः पुत्रम् आश्रयन्ति' इति ॥ २ ॥

बळस्य नीथा वि पणेश्च मन्महे वया अस्य प्रहुता आसुरत्तवे ।
यदा घोरासो अमृतत्वमाशतादिज्जनस्य दैव्यस्य चर्किरन् ॥ ३ ॥

बट् । अस्य । नीथा । वि । पणेः । च । मन्महे । वयाः । अस्य । प्रऽहुताः । आसुः । अत्तवे ।
यदा । घोरासः । अमृतऽत्वम् । आशत । आत् । इत् । जनस्य । दैव्यस्य । चर्किरन् ॥३॥

वेङ्कट० सत्यमेव अस्य नयनानि विविधम् संस्तुमः देवानां स्तोतुः । अपि च अस्य शाखाभूताः ज्वालाः हविर्भिः[2] प्रहुताः आसुः देवानामशनाय । यदा अस्य घोराः रश्मयः अमृतत्वम् प्राप्ताः, ततः[3] दैव्यस्य जनस्य हवींषि विकिरन्ति । अमृतत्वम् एषां काष्ठैः प्रज्वलितानां भवति ॥ ३ ॥

ऋतस्य हि प्रसितिर्द्यौरुरु व्यचो नमो मह्यरमतिः पनीयसी ।
इन्द्रो मित्रो वरुणः सं चिकित्रिरेऽथो भगः सविता पूतदक्षसः ॥ ४ ॥

ऋतस्य । हि । प्रऽसितिः । द्यौः । उरु । व्यचः । नमः । मही । अरमतिः । पनीयसी ।
इन्द्रः । मित्रः । वरुणः । सम् । चिकित्रिरे । अथो इति । भगः । सविता । पूतऽदक्षसः ॥ ४ ॥

वेङ्कट० ऋतस्य हि विस्तृता द्यौः विस्तीर्णम् च व्यचः व्याप्तम् अन्तरिक्षम् अपर्यन्ता स्तुत्या पृथिवी च नमनं कुर्वन्ति । अपि चेन्द्रादयः शुद्धबलाः एनमग्निम् सम् जानते ज्यैष्ठ्याय[4] । 'ततो वै[5] इन्द्रं देवा ज्यैष्ठ्यायाभिसमजानतः'[6] इत्यनेनैतत्समानम् ॥ ४ ॥

प्र रुद्रेण ययिना यन्ति सिन्धवस्तिरो महीमरमतिं दधन्विरे ।
येभिः परिज्मा परियन्नुरु ज्रयो वि रोरुवज्जठरे विश्वमुक्षते ॥ ५ ॥

प्र । रुद्रेण । ययिना । यन्ति । सिन्धवः । तिरः । महीम् । अरमतिम् । दधन्विरे ।
येभिः । परिऽज्मा । परिऽयन् । उरु । ज्रयः । वि । रोरुवत् । जठरे । विश्वम् । उक्षते ॥५॥

वेङ्कट० प्र गच्छन्ति रुद्रपुत्रेण मरुद्गणेन गमनशीलेन सिन्धवः । अथ बहुवदाह—तेऽमी मरुतः तिरस्कुर्वन्ति पृथिवीम् अपर्यन्ताम्, यैः सह परितो गन्ता इन्द्रः परितो गच्छन् उरु वेगम् करोति, यैर्वा अन्तरिक्षे शब्दं कुर्वन् पर्जन्यः[7] विश्वम् सिञ्चति[8] ॥ ५ ॥

'इति अष्टमाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः' ॥

क्षाणा रुद्रा मरुतो विश्वकृष्टयो दिवः श्येनासो असुरस्य नीळयः ।
तेभिश्चष्टे वरुणो मित्रो अर्यमेन्द्रो देवेभिरर्वशेभिरर्वशः ॥ ६ ॥

---

१-१. नास्ति मूको. (पृ ३६९२ टि ५ द्र.) २. त्रुटितम् वि[२] अ[१]. ३. तदा वि[१]. ४. °य शाखाभूता वि[१]. ५. नास्ति वि[२] अ[१]. ६. तु. मै २,२,६. ७. पन्वन्यः मूको. ८. सिन्वतीति अ[१]. ९-९. नास्ति मूको.

क्राणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः । असुरस्य । नीळयः ।
तेभिः । चष्टे । वरुणः । मित्रः । अर्यमा । इन्द्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ ६ ॥

वेङ्कट० कुर्वाणाः रुद्रपुत्राः मरुतः व्याप्तमनुष्याः अन्तरिक्षस्य श्येनाः[1] मेघस्य आवासभूताः तेभिः चारभूतैः पश्यन्ति कृताकृतं वरुणादयः इन्द्रः च देवैस्तैः अश्ववद्भिः अश्ववानिति ॥ ६ ॥

इन्द्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये ।
प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥ ७ ॥

इन्द्रे । भुजम् । शशमानासः । आशत । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
प्र । ये । नु । अस्य । अर्हणा । ततक्षिरे । युजम् । वज्रम् । नृऽसदनेषु । कारवः ॥ ७ ॥

वेङ्कट० इन्द्रे भोगसाधनम् स्तुवन्तः प्राप्नुवन्ति । तथा सुवीर्यस्य प्रदर्शके तेजसि वर्षितुः बले च भोगं प्राप्नुवन्ति । कुर्वन्ति ये अस्य वरणीयानि स्तोत्राणि, ते सहायम् वज्रम् युद्धेषु कुर्वन्ति स्तोतारः ॥ ७ ॥

सूरश्चिदा हरितो अस्य रीरमदिन्द्रादा कश्चिद्भयते तवीयसः ।
भीमस्य वृष्णो जठरादभिश्वसो दिवेदिवे सहुरिः स्तन्नबाधितः ॥ ८ ॥

सूरः । चित् । आ । हरितः । अस्य । रीरमत् । इन्द्रात् । आ । कः । चित् । भयते । तवीयसः ।
भीमस्य । वृष्णः । जठरात् । अभिऽश्वसः । दिवेऽदिवे । सहुरिः । स्तन् । अबाधितः ॥ ८ ॥

वेङ्कट० सूर्योऽपि अस्य आज्ञां परिपालयितुम् आत्मनः अश्वान् प्रेरयन्[2] अध्वनि आ रमयति । यः कः चित् इह देवो [3]बिभेति स इन्द्राद् बिभेति[3] प्रवृद्धात् । 'भीषाऽस्माद्वातः पवते' ( तैउ २,८ ) इत्यनेन समानम् । भीमस्य वर्षितुः जठरात् अभिश्वसतः[4] अन्वहम् सहनशीलः अबाधितः पर्जन्यः स्तनयति ॥ ८ ॥

स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन ।
येभिः शिवः स्ववाँ एवयावभिर्दिवः सिषक्ति स्वयशा निकामभिः ॥ ९ ॥

स्तोमम् । वः । अद्य । रुद्राय । शिक्वसे । क्षयत्ऽवीराय । नमसा । दिदिष्टन ।
येभिः । शिवः । स्वऽवान् । एवयावऽभिः । दिवः । सिसक्ति । स्वऽयशाः । निकामऽभिः ॥९॥

वेङ्कट० स्तोमम् यूयम् अद्य रुद्राय शक्ताय क्षपितवीराय नमस्कारेण सह दिशत । यैः शिवः मरुद्भिः एवंगच्छद्भिः शातिमान् द्युलोकात् सेवते यजमानान् स्वभूतकीर्तिः नियताभिलषितैः[5] तैस्सह[6] । तस्मै रुद्रायेति ॥ ९ ॥

---

१. त्रुटितम् वि[2] अ[1]; व श्येनाः वि[1]. २. प्रेरयति वि[2] अ[1]. ३-३. नास्ति वि[1]. ४. अग्निश्वसतः वि[2] अ[1]. ५. यताभि° वि[2] अ[1]. ६. तैस्समरुमै वि[1].

ते हि प्रजाया अभरन्त वि श्रवो बृहस्पतिर्वृषभः सोमजामयः ।
यज्ञैरथर्वा प्रथमो वि धारयद् देवा दक्षैर्भृगवः सं चिकित्रिरे ॥ १० ॥

ते । हि । प्रऽजायाः । अभरन्त । वि । श्रवः । बृहस्पतिः । वृषभः । सोमऽजामयः ।
यज्ञैः । अथर्वा । प्रथमः । वि । धारयत् । देवाः । दक्षैः । भृगवः । सम् । चिकित्रिरे ॥१०॥

**वेङ्कट०** ते हि देवाः प्रजायाः वि भरन्ति[1] अन्नम् बृहस्पतिः च वर्षिता सोमबन्धुकाः । तेषाम् यज्ञैः क्रियमाणैः अथर्वा प्रथममेव मार्गान् विधृतान् अकरोत् । अथ देवाः बलैः सह भृगवः च ऋषयः तत्र गत्वा पशून् सम्-ज्ञातवन्तः । 'यज्ञैरथर्वा प्रथमः पथस्तते' ( ऋ १,८३,५ ) इत्युक्तमिति ॥ १० ॥

[2]इति अष्टमाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः[2] ॥

ते हि द्यावापृथिवी भूरिरेतसा नराशंसश्चतुरङ्गो यमोऽदितिः ।
देवस्त्वष्टा द्रविणोदा ऋभुक्षणः प्र रोदसी मरुतो विष्णुरर्हिरे ॥ ११ ॥

ते इति । हि । द्यावापृथिवी इति । भूरिऽरेतसा । नराशंसः । चतुःऽअङ्गः । यमः । अदितिः ।
देवः । त्वष्टा । द्रविणःऽदाः । ऋभुक्षणः । प्र । रोदसी इति । मरुतः । विष्णुः । अर्हिरे ॥११॥

**वेङ्कट०** ते हि द्यावापृथिव्यौ ओषधीभिः उदकैश्च बहुरेतस्के भवतः । नराशंसः[3] चतुरङ्गः । दक्षिणाग्निवर्जं चतुर्भिरग्निभिश्चतुरङ्गत्वम् । यमः च अदितिः च देवः त्वष्टा तथा द्रविणोदाः ऋभुक्षणः[4] । ऋभवः ऋभुक्षण उच्यन्ते । प्र पूज्यन्ते द्यावापृथिव्यौ मरुतः विष्णुः चास्माभिः स्तोतृभिः ॥ ११ ॥

उत स्य न उशिजामुर्विया कविरहिः शृणोतु बुध्न्यो३ हवीमनि ।
सूर्यामासा विचरन्ता दिविक्षिता धिया शमीनहुषी अस्य बोधतम् ॥ १२ ॥

उत । स्यः । नः । उशिजाम् । उर्विया । कविः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ।
सूर्यामासा । विऽचरन्ता । दिविऽक्षिता । धिया । शमीनहुषी इति । अस्य । बोधतम् ॥१२॥

**वेङ्कट०** अपि च सः अस्माकम् कामयमानानाम् महान् कविः अहिः बुध्न्यः शृणोतु स्तुतिं हवने । सूर्याचन्द्रमसौ च विचरन्तौ दिवि निवसन्तौ बुध्येताम् । अथ हे शमीनहुषी! युवां च बुद्ध्या स्तोत्रमिदं बुध्येथाम् । तत्र पृथिवी शमी । 'द्यौर्नहुषीयं वै शमी तस्या एष गर्भः' इति वाजसनेयकम् ॥ १२ ॥

प्र नः पूषा चरथं विश्वदेव्योऽपां नपादवतु वायुरिष्टये ।
आत्मानं वस्यो अभि वातमर्चत तदश्विना सुहवा यामनि श्रुतम् ॥ १३ ॥

प्र । नः । पूषा । चरथम् । विश्वऽदेव्यः । अपाम् । नपात् । अवतु । वायुः । इष्टये ।
आत्मानम् । वस्यः । अभि । वातम् । अर्चत । तत् । अश्विना । सुऽहवा । यामनि । श्रुतम् ॥

१. °रति मूको. २-२. नास्ति मूको. ३. नारा° वि[2] अ[1]. ४. नास्ति मूको.

**वेङ्कट०** प्र अवतु अस्माकम् पूषा जङ्गमम् विश्वदेवहितः अपाम् नपात् वायुः यज्ञस्य क्रियमाणस्य निष्कृत्यर्थम्। सर्वेषामात्मभूतम् वायुम् च वसीयः प्रशस्यतरमन्नं प्राप्तुम् अभि अर्चत। तत् इदं स्तोत्रं हे अश्विनौ! स्वाह्वानौ![1] युवाम् आगमने शृणुतम् ॥ १३ ॥

विशामासामभयानामधिक्षितं गीर्भिरु स्वयशसं गृणीमसि।
ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानं नृमणा अधा पतिम् ॥ १४ ॥

विशाम्। आसाम्। अभयानाम्। अधिऽक्षितम्। गीःऽभिः। ऊँ इति। स्वऽयशसम्। गृणीमसि। ग्नाभिः। विश्वाभिः। अदितिम्। अनर्वणम्। अक्तोः। युवानम्। नृऽमनाः। अध। पतिम् ॥

**वेङ्कट०** आसाम् विशाम् अभयानि प्रदातुम् अभिनिवसन्तम् स्तुतिभिः [2]स्वयशसम् स्तुमः सर्वाभि सह[2] देवपत्नीभिः अदीनम् अप्रत्यृतम् रात्रेः युवानम् नृमणसम् स्वामिनम् अग्निं गृहपतिमिति ॥ १४ ॥

रेभदत्र जनुषा पूर्वो अङ्गिरा ग्रावाण ऊर्ध्वा अभि चक्षुरध्वरम्।
येभिर्विहाया अभवद्विचक्षणः पाथः सुमेकं स्वधितिर्वनन्वति ॥ १५ ॥

रेभत्। अत्र। जनुषा। पूर्वः। अङ्गिराः। ग्रावाणः। ऊर्ध्वाः। अभि। चक्षुः। अध्वरम्। येभिः। विऽहायाः। अभवत्। विऽचक्षणः। पाथः। सुऽमेकम्। स्वऽधितिः। वनन्ऽवति ॥१५॥

**वेङ्कट०** अस्तौत् अत्र जन्मना पूर्वः प्रत्नः अङ्गिराः। ग्रावाणः च उत्थिताः अभि अपश्यन् अध्वरम् अभिषवोद्युक्ता आसन्, येभिः यजमानानां विद्रष्टा इन्द्रः महान् भवति, प्रज्ञः प्रवृत्त आसीदित्यर्थः। अनन्तरम् अस्य स्वधितिः वज्रः उदकवति मेघे स्थितम् अन्नसाधनम् शोभनमुदकम्, निरगमयदिति शेषः ॥ १५ ॥

[3]इति अष्टमाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः[3] ॥

[ ९३ ]

[1]तान्वः पार्थ ऋषिः। विश्वे देवा देवता। प्रस्तारपङ्क्तिश्छन्दः; २,३,१३ अनुष्टुभः; ९ अक्षरैः पङ्क्तिः; ११ न्यङ्कुसारिणी; १५ पुरस्ताद्बृहती[3]।

महि द्यावापृथिवी भूतमुर्वी नारी यह्वी न रोदसी सदं नः।
तेभिर्नः पातं सह्यस एभिर्नः पातं शूषणि ॥ १ ॥

महि। द्यावापृथिवी इति। भूतम्। उर्वी इति। नारी इति। यह्वी इति। न। रोदसी इति। सदम्। नः। तेभिः। नः। पातम्। सह्यसः। एभिः। नः। पातम्। शूषणि ॥ १ ॥

**वेङ्कट०** तान्वः पार्थः। अत्यन्तम् हे द्यावापृथिव्यौ! विस्तीर्णे भवतम्[4]। स्त्रियौ इव महत्यौ द्यावापृथिव्यौ सदा अस्माकम्। तैः त्वदीयैः पालनैः अस्माकम् अत्यन्तमभिभवितुः शत्रोः पातम्। एभिः त्वदीयैः अस्मान् रक्षतम् शत्रुबले ॥ १ ॥

---

१. साह्वानौ वि[2]; सहानौ अ[1]; स्वाहानौ वि[1]. २-२. °शसं…सह वि[1] अ[1]; °शसं सर्वाभिः सह वि[1]. ३-३. नास्ति मूको. ४. भवत वि[1].

यज्ञेयज्ञे स मर्त्यो देवान्त्सपर्यति। यः सुम्नैर्दीर्घश्रुत्तम आविवासात्येनान् ॥२॥
यज्ञेऽयज्ञे । सः । मर्त्यः । देवान् । सपर्यति ।
यः । सुम्नैः । दीर्घश्रुत्ऽतमः । आऽविवासाति । एनान् ॥ २ ॥

**वेङ्कट०** यज्ञेयज्ञे सः मनुष्यः देवान् [१]परिचरति, यः सुखकरैः हविर्भिः एनान्[१] परिचरति अतिशयेन दीर्घश्रवणः[२] ॥ २ ॥

विश्वेषामिरज्यवो देवानां वार्महः ।
विश्वे हि विश्वमहसो विश्वे यज्ञेषु यज्ञियाः ॥ ३ ॥
विश्वेषाम् । इरज्यवः । देवानाम् । वाः । महः । विश्वे । हि । विश्वऽमहसः । विश्वे । यज्ञेषु । यज्ञियाः ॥ ३ ॥

**वेङ्कट०** हे विश्वेषाम् ईश्वराः[३]! देवानाम् भवतां वरणीयम् महत् धनं विद्यते। विश्वे हि यूयं व्याप्ततेजस्काः । विश्वे यज्ञेषु यष्टव्याः ॥ ३ ॥

ते घा राजानो अमृतस्य मन्द्रा अर्यमा मित्रो वरुणः परिज्मा ।
कद्रुद्रो नृणां स्तुतो मरुतः पूषणो भगः ॥ ४ ॥
ते । घ । राजानः । अमृतस्य । मन्द्राः । अर्यमा । मित्रः । वरुणः । परिऽज्मा ।
कत् । रुद्रः । नृणाम् । स्तुतः । मरुतः । पूषणः । भगः ॥ ४ ॥

**वेङ्कट०** ते खलु राजानः अमृतेन माद्यन्ते अर्यमा मित्रः वरुणः च परितो गन्ता। सुखम् रुद्रः प्रयच्छतु स्तुतः[४] नृणाम्, मरुतः पूषणः भगः च ॥ ४ ॥

उत नो नक्तमपां वृषण्वसू सूर्यामासा सदनाय सधन्या ।
सचा यत् साद्येषामहिर्बुध्नेषु बुध्न्यः ॥ ५ ॥
उत । नः । नक्तम् । अपाम् । वृषण्वसू इति वृषण्ऽवसू । सूर्यामासा । सदनाय । सऽधन्या ।
सचा । यत् । सादि । एषाम् । अहिः । बुध्नेषु । बुध्न्यः ॥ ५ ॥

**वेङ्कट०** अपि च अस्माकम् नक्तम् व्याप्तानाम् अति नक्तमेति[५] ॥ ५ ॥

[६]इति अष्टमाष्टके चतुर्थाध्याये षड्विंशो वर्गः[६] ॥

उत नो देवावश्विना शुभस्पती धामभिर्मित्रावरुणा उरुष्यताम् ।
महः स राय एषतेऽति धन्वेव दुरिता ॥ ६ ॥
उत । नः । देवौ । अश्विना । शुभः । पती इति । धामऽभिः । मित्रावरुणौ । उरुष्यताम् ।
महः । सः । रायः । आ । ईषते । अति । धन्वऽइव । दुःऽइता ॥ ६ ॥

---

१-१. नास्ति वि[१]. २. °वणम् वि[१] अ[१]. ३. तु. निघ २,२१;३,५. ४. स्तुतो वि[२] अ[१]; स्ततो वि[१]. ५. नक्तमिति वि[१]. ६-६. नास्ति मूको.

वेङ्कट० अपि च अस्मान् देवौ अश्विनौ[1] उदकस्य पती तथा मित्रावरुणौ च आत्मीयैः शरीरैः रक्षताम्। यम् अमी रक्षन्ति, सः महान्ति धनानि आभिमुख्येन गच्छति, अति-गच्छति च दुरितानि शीघ्रम्, यथा पथिको निरुदकान् देशानिति ॥ ६ ॥

उत नो रुद्रा चिन्मृळतामश्विना विश्वे देवासो रथस्पतिर्भगः।
ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः ॥ ७ ॥

उत। नः। रुद्रा। चित्। मृळताम्। अश्विना। विश्वे। देवासः। रथःपतिः। भगः।
ऋभुः। वाजः। ऋभुक्षणः। परिऽज्मा। विश्वऽवेदसः ॥ ७ ॥

वेङ्कट० अपि च अस्मान्[2] रुद्रपुत्रौ अश्विनौ सुखयताम्, तथा विश्वे देवाः[3]रथस्य पतिः[3] पूषा भगः च। ऋभुः वाजः च हे महान्तो देवाः! परितो गन्ता वायुश्च सुखयन्तु हे विश्वधनाः! ॥ ७ ॥

ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना।
दुष्टरं यस्य साम चिदृधग्यज्ञो न मानुषः ॥ ८ ॥

ऋभुः। ऋभुक्षाः। ऋभुः। विधतः। मदः। आ। ते। हरी इति। जूजुवानस्य। वाजिना।
दुस्तरम्। यस्य। साम। चित्। ऋधक्। यज्ञः। न। मानुषः ॥ ८ ॥

वेङ्कट० ऋभुः महान्, ऋभुः परिचरतः मदकरः[4]। तस्य तव गच्छतः अश्वौ बलिनौ आ-गच्छतः, यस्य तव रक्षोभिः दुष्टरम् साम गीयते[5], तथा पृथग् यज्ञः च मानुषः अनुष्ठीयत इति ॥ ८ ॥

कृधी नो अह्रयो देव सवितः स च स्तुषे मघोनाम्।
सहो न इन्द्रो वह्निभिर्न्येषां चर्षणीनां चक्रं रश्मिं न योयुवे ॥ ९ ॥

कृधि। नः। अह्रयः। देव। सवितरिति। सः। च। स्तुषे। मघोनाम्।
सहो इति। नः। इन्द्रः। वह्निऽभिः। नि। एषाम्। चर्षणीनाम्। चक्रम्। रश्मिम्। न। योयुवे ॥

वेङ्कट० कुरु अस्मान् अनवनतवदनान् देव! सवितः!। सः त्वं स्तूयसे यजमानानाम् ऋत्विग्भिः। अथ इन्द्रः अस्माकम् एषाम् मनुष्याणाम् मरुद्भिः सह बलम् नि मिश्रयतु, यथा रथस्य चक्रम् अश्वानाम् रश्मिम् आत्मनि यच्छतीति। तृतीयोऽस्यां पादश्चतुर्दशकः ॥ ९ ॥

ऐषु द्यावापृथिवी धातं महदस्मे वीरेषु विश्वचर्षणि श्रवः।
पृक्षं वाजस्य सातये पृक्षं रायोत तुर्वणे ॥ १० ॥

आ। एषु। द्यावापृथिवी इति। धातम्। महत्। अस्मे इति। वीरेषु। विश्वऽचर्षणि। श्रवः।
पृक्षम्। वाजस्य। सातये। पृक्षम्। राया। उत। तुर्वणे ॥ १० ॥

---

१. नास्ति वि[1]. २. त्रुटितम् वि[1]. ३-३. रथपतीः वि[1]. ४. °कः मूको. ५. नीय° वि[1] अ[1].

**वेङ्कट०** आ धत्तम् हे द्यावापृथिव्यौ![1] एषु महत् अस्माकम् पुत्रेषु [2]सर्वमनुष्यं (?)[2] यशः। तथा अन्नम् आधत्तम् बलस्य भजनाय। अन्नम् अपि च अत्र धनेन सह आधत्तम् शत्रूणां तरणाय ॥ १०॥

[3]इति अष्टमाष्टके चतुर्थाध्याये सप्तविंशो वर्गः[3] ॥

एतं शंसमिन्द्रास्मयुष्ट्वं कूचित् सन्तं सहसावन्नभिष्टये सदा पाह्यभिष्टये ।
मेदतां वेदता वसो ॥ ११ ॥

एतम्। शंसम्। इन्द्र। अस्मऽयुः। त्वम्। कूऽचित्। सन्तम्। सहसाऽवन्। अभिष्टये। सदा। पाहि। अभिष्टये। मेदताम्। वेदता। वसो इति ॥ ११ ॥

**वेङ्कट०** एतम् शंसम् इन्द्र! अस्मत्कामः त्वम् यत्र क्वचिदपि स्थितम् बलवन्! अभिलषितसिद्ध्यर्थम् अपि वा यागार्थम् सदा रक्ष। [4]मम स्तोतुः मेदताम् मांसलतां[4] प्रज्ञानेन हे वासयितः! बुध्यस्वेति ॥ ११ ॥

एतं मे स्तोमं तुना न सूर्ये द्युतद्यामानं वावृधन्त नृणाम् ।
संवननं नाश्व्यं तष्टेवानपच्युतम् ॥ १२ ॥

एतम्। मे। स्तोमम्। तुना। न। सूर्ये। द्युतत्ऽयामानम्। ववृधन्त। नृणाम्। सम्ऽवननम्। न। अश्व्यम्। तष्टाऽइव। अनपऽच्युतम् ॥ १२ ॥

**वेङ्कट०** एतम् मदीयम् स्तोत्रम् मनुष्याः रश्मीन् इव विस्तृतान्[5] सूर्ये दीप्तगमनम् वर्धयन्तु नेतॄणां देवानां स्वभूतम्, यथा शत्रूणाम् संवननम् अश्वार्हं रथं [6]संस्कृतम् तष्टा[6] संस्कारस्थानात् अनपच्युतम् रथिष्वागतेषु प्रेरयति। 'रथं [7]न तष्टेव तत्सिनाय[7]' (ऋ १,६१,४) इत्यनेन समानमिति ॥१२॥

वावर्त येषां राया युक्तैषां हिरण्ययी ।
नेमधिता न पौंस्या वृथेव विष्टान्ता ॥ १३ ॥

ववर्त। येषाम्। राया। युक्ता। एषाम्। हिरण्ययी। नेमऽधिता। न। पौंस्या। वृथाऽइव। विष्टऽअन्ता ॥ १३ ॥

**वेङ्कट०** येषाम्[8] नेतॄणां देवानाम्[8] धनेन पुरुषो वर्तते, तेषु मदीयेयं हितरमणीया स्तुतिः[10] युक्ता भवतु। यथा सङ्ग्रामे बलानि अनायासेन व्याप्तपर्यन्तानि सङ्गच्छन्ते, तद्वदिति ॥ १३ ॥

प्र तद् दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्च शतास्मयु पथा विश्राव्येषाम् ॥ १४ ॥

---

१. °थिवी वि[1]. २-२. सर्वे मनुष्यमहद् मूको. ३-३. नास्ति मूको. ४-४. ममस्तोतुर्वेदता मांसलकाः वि[1]; मम स्तोतुं मे···मांसलताम् वि[2]; मम स्तोत्रं ··मांस° अ[1]. ५. सृतान् वि[1]. ६-६. त्रुटितम् वि[2] अ[1]. ७-७. नष्टे वत्सिनाय वि[1]; नष्टेवतं सविनाय वि[2] अ[1]. ८. येषां देवानाम् वि[2] अ[1]. ९. नास्ति मूको. १०. स्तुतिभिः मूको.

प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचम् । असुरे । मघवत्ऽसु ।
ये । युक्त्वाय । पञ्च । शता । अस्मऽयु । पथा । विऽश्रावि । एषाम् ॥ १४ ॥

**वेङ्कट०** प्र अवोचम् तत् दुश्शीमनाम्नि, पृथवानः पृथिः तस्मिन्, वेने च । प्र अवोचम् रामे च बलवति, इत्थं धनवत्सु एषु तत् स्तोत्रम् । ये अमी युक्त्वा पञ्च शतानि रथान् अस्मत्कामाः पथा आगच्छन्ति, तेषाम् एषाम् प्रावोचं विश्रावकम्[1] गुणयुक्तं देवानां स्तोत्रमिति ॥ १४ ॥

अधीन्न्वत्र सप्ततिं च सप्त च ।
सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः ॥ १५ ॥

अधि । इत् । नु । अत्र । सप्ततिम् । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः । सद्यः । दिदिष्ट । मायवः ॥ १५ ॥

**वेङ्कट०** एषु राजसु गवाम् सप्त सप्ततिम् च सद्यः एवायम् ऋषिः अधि दिदिष्ट । अधिपूर्वो दिशिः याच्ञार्थः[2] । पृथोः[3] पुत्रः पार्थ्यः[4] । मायुश्च नामास्य कुले कश्चिदिति ॥ १५ ॥

[5]इति अष्टमाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः[5] ॥

## [ ९४ ]

[5]अर्बुदः काद्रवेयः सर्प ऋषिः । ग्रावाणो देवता । जगती छन्दः; ५,७,१४ त्रिष्टुभः[5] ।

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥ १ ॥

प्र । एते । वदन्तु । प्र । वयम् । वदाम । ग्रावऽभ्यः । वाचम् । वदत । वदत्ऽभ्यः ।
यत् । अद्रयः । पर्वताः । साकम् । आशवः । श्लोकम् । घोषम् । भरथ । इन्द्राय । सोमिनः ॥ १ ॥[6]

**वेङ्कट०** अर्बुदः काद्रवेयः सर्प ऋषिः । प्र वदन्तु एते ग्रावाणः, प्र वदाम वयम् ग्रावभ्यः वाचम्, यूयम् च वदत वदद्भ्यः, यदा हे आदरणीयाः! ग्रावाणः! सह क्षिप्रकारिणः श्रोतव्यम् घोषम् भरथ इन्द्रार्थम् सोमेन लिप्ताः तदानीमिति ॥ १ ॥

एते वदन्ति शतवत् सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः ।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत ॥ २ ॥

एते । वदन्ति । शतऽवत् । सहस्रऽवत् । अभि । क्रन्दन्ति । हरितेभिः । आसऽभिः ।
विष्ट्वी । ग्रावाणः । सुऽकृतः । सुऽकृत्यया । होतुः । चित् । पूर्वे । हविःऽअद्यम् । आशत ॥२॥

---

१. प्रश्रावकम् वि[1]. २. यज्ञार्थः मूको. ३. °थेः वि[1]; थे त्रि[2] अ[1]. ४. पार्थः त्रि[2] अ[1]; प्रार्थ्यः वि[1]. ५-५. नास्ति मूको. ६. अत्र या. (९,९) द्र.

**वेङ्कट०** [1]एते वदन्ति[1] [2]यथा शतं मनुष्याः[2] सह वदन्ति, [1]यथा वा सहस्रम्[1]। अभि क्रन्दन्ति **सोमसंसर्गाद्** हरितवर्णैः आस्यैः । यज्ञं व्याप्य ग्रावाणः सुकर्माणः शोभनया क्रियया होतुः **अग्नेः पूर्वमेव** हविषो भक्षणम् प्राप्नुवन्ति ॥ २ ॥

एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि ।
वृक्षस्य शाखामरुणस्य बप्सतस्ते सूभर्वा वृषभाः प्रेमराविषुः ॥ ३ ॥

एते । वदन्ति । अविदन् । अना । मधु । नि । ऊङ्खयन्ते । अधि । पक्वे । आमिषि ।
वृक्षस्य । शाखाम् । अरुणस्य । बप्सतः । ते । सूभर्वाः । वृषभाः । प्र । ईम् । अराविषुः ॥३॥

**वेङ्कट०** एते शब्दायन्ते, लभन्ते च आस्येन सोमम् । नि ऊङ्खयन्ते शब्दविशेषं कुर्वन्ति पक्वे **आमिषे**, तदत्तुमिच्छन्ति[3] इति सोमाभिप्रायम् । यथा क्रव्यादा मांसमत्तुमिच्छन्तः शब्दायन्ते, तद्वच्छब्दं कुर्वन्ति । अरुणवर्णस्य कस्यचित् वृक्षस्य शाखाम् भक्षयन्तः ते शोभनभक्षाः वृषभाः **पुमांसः** प्र रुवन्ति ॥ ३ ॥

बृहद्वदन्ति मदिरेण मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु ।
संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयन्तः पृथिवीमुपब्दिभिः ॥ ४ ॥

बृहत् । वदन्ति । मदिरेण । मन्दिना । इन्द्रम् । क्रोशन्तः । अविदन् । अना । मधु ।
सम्ऽरभ्य । धीराः । स्वसृऽभिः । अनर्तिषुः । आऽघोषयन्तः । पृथिवीम् । उपब्दिऽभिः ॥ ४ ॥

**वेङ्कट०** अत्यन्तम् शब्दायन्ते मदकरेण सोमेन [4]अभिपूयमाणेन इन्द्रम्[4] क्रोशन्तः । अलभन्त आस्येन सोमम् । तेऽमी संरब्धा भूत्वा धृष्टाः[5] अङ्गुलीभिः सह नृत्यन्ति स्वशब्दैः पृथिवीम् आघोषयन्तः । अभिपूयमाणे हि[6] सोम उपरवेषु शब्दा जायन्ते ॥ ४ ॥

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्यङ्नि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ॥ ५ ॥

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
न्यक् । नि । यन्ति । उपरस्य । निःऽकृतम् । पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ ५ ॥

**वेङ्कट०** सुपतना ग्रावाणः उप द्यवि[7] कुर्वन्ति शब्दम् । व्रज[8] आखरः[9] । कस्मिंश्चित् आखरे कृष्णाः मृगाः गमनशीलाः नृत्यन्तीति [10]अभिषवप्रवृत्ता आखरस्था[10] ग्रावाण उच्यन्ते । ते अधोमुखम् गच्छन्ति उपरस्य मध्यस्थस्य ग्राव्णः निष्कृतम् अभिषवयोग्यम्[11] । पुरु च सोमलक्षणमुदकम्

१-१. नास्ति वि[1]. २-२. यथागतमनुष्याः वि[1] अ[1]. ३. °च्छन्त वि[1]. ४-४. °माणेन्द्रं वि[1]; °मानेन्द्रं वि[2] अ[1]. ५. सृष्टाः वि[1] अ[1]; हृष्टाः वि[3]. ६. नास्ति वि[1]. ७. नास्ति मूको. ८. अप्रज मूको. ९. आखर··· वि[2] अ[1]. १०-१०. °त्तखर° वि[1]; °त्ताखर° वि[2] अ[1]. ११. अभि···योग्यं मुखं वि[2] अ[1].

धारयन्ति सूर्यवच्छ्वेतवर्णाः सोमसंसर्गात् । 'अध श्वेतं कलशम्' (ऋ ४,२७,५) इत्युक्तम् ॥५॥

'इति अष्टमाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः' ॥

उग्राईव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ॥ ६ ॥

उग्राःऽईव । प्रऽवहन्तः । सम्ऽआयमुः । साकम् । युक्ताः । वृषणः । बिभ्रतः । धुरः ।
यत् । श्वसन्तः । जग्रसानाः । अराविषुः । शृण्वे । एषाम् । प्रोथथः । अर्वताम्ऽइव ॥ ६ ॥

वेङ्कट० उद्‌गूर्णाः इव अश्वाः रथम् प्रवहन्तः समागच्छन्ति साकम् युक्ताः ग्रावाणः यज्ञस्य धुरः धारयन्तः। यज्ञं वहन्तीत्यर्थः । यदा श्वसन्तः सोमं ग्रसमानाः शब्दायन्ते, तदानीम् एषाम् शब्दः श्रूयते अश्वानाम् इव हेषाशब्दः ॥ ६ ॥

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥ ७ ॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश । युक्ताः । वहत्ऽभ्यः ॥ ७ ॥

वेङ्कट० एवंविधेभ्यो ग्रावभ्यः स्तुतिमुच्चारयतेत्यर्थः । तत्र '[1]कक्ष्याः । अवनयः[1]' (निघ २,५) इत्यादीन्यङ्गुलीनामसु पठितानि । तत्र यास्कः (३,९)—'अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि । कक्ष्याः प्रकाशयन्ति कर्माणि । योक्त्राणि योजनानीति व्याख्यातम् । अभीशवोऽभ्यश्नुवते कर्माणि' इति । दश अङ्गुलीः वहद्भ्यः । तदेवाह — दश अभिषवकर्मणि[3] युक्ताः वहद्भ्यः इति ॥ ७ ॥

ते अद्रयो दशयन्त्रास आशवस्तेषामाधानं पर्येति हर्यतम् ।
त ऊं सुतस्य सोम्यस्यान्धसोंऽशोः पीयूषं प्रथमस्य भेजिरे ॥ ८ ॥

ते । अद्रयः । दशऽयन्त्रासः । आशवः । तेषाम् । आऽधानम् । परि । एति । हर्यतम् ।
ते । ऊँ इति । सुतस्य । सोम्यस्य । अन्धसः । अंशोः । पीयूषम् । प्रथमस्य । भेजिरे ॥ ८ ॥

वेङ्कट० ते ग्रावाणः दशाङ्गुलीयन्त्राः क्षिप्राः । तेषाम् आधानम् अभिषवकर्म परि गच्छति स्पृहणीयम्[4] सुतम् अन्धः । ते एव अभिषुतस्य [5]सोममयस्य अन्नस्य[5] पीयूषं प्रथमम् भेजिरे । तदेवाह — अंशोः मुख्यस्य पीयूषम् भेजिरे इति ॥ ८ ॥

ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥ ९ ॥

---

१-१. नास्ति मूको. २-२. अवनयः कक्ष्याः मूको. ३. °कर्माणि मूको. ४. °णीयः वि[2] अ[1].
५-५. सोमं यस्यान्नस्य वि[2] अ[1].

ते । सोम॒ऽअदः॑ । हरी॒ इति॑ । इन्द्र॑स्य । निं॒सते॑ । [१]अं॒शुम् । दु॒हन्तः॑ । अधि॑ । आ॒स॒ते॒ । गवि॑[१] ।
तेभिः॑ । दु॒ग्धम् । प॒पि॒ऽवान् । सो॒म्यम् । मधु॑ । इन्द्रः॑ । वर्ध॑ते । प्रथ॑ते । वृ॒ष॒ऽयते॑ ॥ ९ ॥

वेङ्कट० ते[२] सोमस्यात्तारः अश्वौ इन्द्रस्य प्राप्नुवन्ति । सोमम् दुहन्तः अधि आसते च [३]अधिषवण-चर्मणि आनडुहे[३] । तैः दुग्धम् पपिवान् सोममयम् मधु इन्द्रः वृद्धशरीरो भवति, विस्तीर्ण-शरीरश्च, तथा वृषेवाचरति ॥ ९ ॥

वृषा॑ वो अं॒शुर्न किला॑ रिषाथ॒नेळा॑वन्तः सद॒मित् स्थ॒नाशि॑ताः ।
रै॒व॒त्येव॒ मह॑सा॒ चार॑वः स्थन॒ यस्य॒ ग्रावा॑णो॒ अजु॑षध्वमध्व॒रम् ॥ १० ॥

वृषा॑ । व॒ः । अं॒शुः । न । किल॑ । रि॒षा॒थ॒न॒ । इळा॑ऽवन्तः । सद॑म् । इत् । स्थ॒न॒ । आशि॑ताः ।
रै॒व॒त्याऽइ॑व । मह॑सा । चार॑वः । स्थ॒न॒ । यस्य॑ । ग्रा॒वा॒णः॒ । अजु॑षध्वम् । अ॒ध्व॒रम् ॥ १० ॥

वेङ्कट० वर्षिता वः[४] सोमः । न किल यूयम् रिषाथन शीर्णाः[५] [६]भवथ । अन्नवन्तः[६] सदैव भवथ सुहिताः । ते यूयं रेवतः स्वभूतेन इव तेजसा युक्ताः कल्याणाः भवथ । यस्य यजमानस्य ग्रावाणः ! अजुषध्वम् यज्ञम्, तत्रेति ॥ १० ॥

[७]इति अष्टमाष्टके चतुर्थाध्याये त्रिंशो वर्गः[७] ॥

तृ॒दि॒ला अतृ॑दिलासो॒ अद्र॑योऽश्रम॒णा अशृ॑थिता॒ अमृ॑त्यवः ।
अ॒ना॒तु॒रा अ॒जराः॑ स्थाम॑विष्णवः सुपी॒वसो॒ अतृ॑षिता॒ अतृ॑ष्णजः ॥ ११ ॥

तृ॒दि॒लाः । अतृ॑दिलासः । अद्र॑यः । अ॒श्र॒म॒णाः । अशृ॑थिताः । अमृ॑त्यवः ।
अ॒ना॒तु॒राः । अ॒जराः॑ । स्थ॒ । अम॑विष्णवः । सु॒ऽपी॒वसः॑ । अतृ॑षिताः । अतृ॑ष्णऽजः ॥ ११ ॥

वेङ्कट० अन्येषां भेदकाः स्वयमन्येनाऽभिन्नाः ग्रावाणः श्रमवर्जिताः[८] अन्यैरशिथिलीकृताः अमारिताः अरोगाः जरारहिताः अहिंसकाः भवथ अत्यन्तं मेदुराः अपिपासवः असञ्जाततृष्णाः ॥ ११ ॥

ध्रु॒वा ए॒व वः॑ पि॒तरो॑ यु॒गेयु॑गे॒ क्षेम॑कामासः॒ सद॑सो॒ न युं॑ञ्जते ।
अ॒जु॒र्यासो॑ हरि॒षाचो॑ ह॒रिद्र॑व॒ आ द्यां रवे॑ण पृथि॒वीम॑शुश्रवुः ॥ १२ ॥

ध्रु॒वाः । ए॒व । व॒ः । पि॒तरः॑ । यु॒गेऽयु॑गे । क्षेम॑ऽकामासः । सद॑सः । न । यु॒ञ्जते॒ ।
अ॒जु॒र्यासः॑ । ह॒रि॒ऽसाचः॑ । ह॒रिद्र॑वः । आ । द्याम् । रवे॑ण । पृ॒थि॒वीम् । अ॒शु॒श्र॒वुः॒ ॥ १२ ॥

वेङ्कट० निश्चलाः[९] एव युष्माकम् पितरः पर्वताः[९] सर्वेषु युगेषु । तथाऽऽत्मनः[१०] क्षेमकामाः सदांसि न आत्मना संयोजयन्ति । जरावर्जिताः सोमस्य सम्भक्तारः हरणशीलाः हरितवर्णाः द्यावा-पृथिव्यौ रवेण आ श्रावयन्ति ॥ १२ ॥

---

१-१. अत्र निरुक्तं (२,५) द्र. २. नास्ति वि[२] अ[१]. ३-३ °मेण्ाहंडुहे वि[१] अ[१]; °मण्यानधुह वि[१].
४. नवः मूको. ५. विशी° वि[१]. ६-६. °वान्न° वि[२] अ[१]; °वदेन्न° वि[१]. ७-७. नास्ति मूको.
८. °ताः सोपस्य संभक्तारः मूको. ९. नास्ति वि[१]. १०. °तदा° वि[१] अ[१].

तदिद्वंदन्त्यद्रयो विमोचने यामन्नञ्जस्पाइव घेदुपब्दिभिः ।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः ॥ १३ ॥

तत् । इत् । वदन्ति । अद्रयः । विऽमोचने । यामन् । अञ्जःपाःऽइव । घ । इत् । उपब्दिऽभिः ।
वपन्तः । बीजम्ऽइव । धान्यऽकृतः । पृञ्चन्ति । सोमम् । न । मिनन्ति । बप्सतः ॥१३॥

**वेङ्कट०** तत् एव वदन्ति ग्रावाणः विमोचनवेलायामपि यथा गमने अञ्जसा [1]गच्छन् (?) रथः[1] शब्दैः ( तु. मं ४ )। तदेव वदन्ति— तच्छब्देन शब्दस्य घोषः परामृश्यते। सर्वदैकरूपो भवति ग्राव्णां शब्दघोष[2] इति। वपन्तः बीजम् इव कृषीवलाः सम्पर्चयन्ति सोमम् च कर्मणि, न च हिंसन्ति सोमं भक्षयन्तः ॥ १३ ॥

सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदन्तः ।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानाः ॥ १४ ॥

सुते । अध्वरे । अधि । वाचम् । अक्रत । आ । क्रीळयः । न । मातरम् । तुदन्तः ।
वि । सु । मुञ्च । सुसुऽवुषः । मनीषाम् । वि । वर्तन्ताम् । अद्रयः । चायमानाः ॥ १४ ॥

**वेङ्कट०** सुतसोमे यज्ञे वाचम् कृण्वन्ति यथा आ-क्रीडकाः कुमाराः मातरम् हस्तेन तुदन्तः। अथ स्तोतः! वि मुञ्च सोममभिषुतवतो ग्राव्णः स्तुतिम्। वि गच्छन्ताम् अद्रयः पूज्यमानाः इति ॥१४॥

[3]इति अष्टमाष्टके चतुर्थाध्याये एकत्रिंशो वर्गः[3] ॥

इत्थं व्याख्यत् षष्ठितमम् अध्यायं माधवाह्वयः।
चोलेषु निवसन् कश्चित सस्यमालिषु सर्वदा ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके चतुर्थोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके चतुर्थोऽध्यायः ॥



1-1. गच्छद्रथं मूको; रक्षन्° इतीव सा  2. शब्दो घोर् अ[1]; °घोर वि[2].  3-3. नास्ति मूको.

अथ पञ्चमोऽध्यायः ।

वेङ्कट० 'हये जाये मनसा (सा' अ)थ व्याचिख्यासति माधवः ।
[1]अनर्थकत्वसन्देहं मन्त्रेष्वादावपानुदन्[1] ॥ १ ॥

बहूनामिह मन्त्राणामर्थं नोपलभामहे[2] ।
ततो नार्थोऽस्ति तात्पर्यम् इति कौत्सस्त्वभाषत[3] ॥ २ ॥

यथर्षभस्य मेघस्य दुन्दुभेश्च[4] रथस्य च ।
साम्नां चानर्थकाः शब्दाः [5]तद्वदृग्यजुषस्य च[5] ॥ ३ ॥

यच्च कर्म क्रियमाणम् ऋग्यजुर्वा वदेदिह ।
तदेव ब्राह्मणान्याहुस्तस्मान्मन्त्रा निरर्थकाः ॥ ४ ॥

यानि घर्मे कपालानि कपालानां विमोचनम् ।
[6]प्रथनं चो(च 'उ)रु प्रथस्व†' 'प्र त्वा'‡ चोक्तं¶ विमोचनम्[6] ॥ ५ ॥

'आप उन्दन्तु जीवसे[7]' केशानामपि चोन्दनम् ।
मन्त्रैरेव प्रतीतानि ब्राह्मणैर्विहितान्यपि ॥ ६ ॥

तथा विप्रतिषिद्धार्थौ 'ऋज्राश्वः शतमेकं च'[8] ।
'शतं मेषान् वृक्ये (क्यै[9]') इति भिन्ना सङ्ख्याऽनयोर्ऋचोः ॥ ७ ॥

एवम् 'एक एव रुद्रोऽ(द्रः'[10], 'अ)संख्याता सहस्राणी (णि'[11] इ)ति ।
'अशत्रुरिन्द्र ! जज्ञिषे'[12], 'शतं सेनास्'[13] तथाऽजयत् ॥ ८ ॥

'मायेत् सा ते यानी( नि'[14] इ )ति च विस्पष्टमृषिरुक्तवान्[15] ।
सर्वेषामेव युद्धानां मुक्तकण्ठमसत्यताम् ॥ ९ ॥

देवलोके वहत्यग्निर्हवींषीति प्रतीयते ।
'यत्र वेत्थ वनस्पते'[16], 'भूमिं पर्जन्या जिन्वन्ति'[17] ॥ १० ॥

'अश्वो न देववाहनः'[18], 'देवत्रा हव्यमोहिषे'[19] ।
'महे यत् पित्र ईं रसम्'[20] बहवः सन्ति तादृशाः ॥ ११ ॥

---

१-१. °र्थकृतसन्देहम° वि[2] अ[1] वेंकृअ; °सन्देहम° वि[1]. २. नोपाल° वि[2]. ३. को···भा° वि[2] अ[1]; कौत्स्थेस्त्व° वि[1]. ४. मुष्टुभे' वि[2] अ[1]. ५-५ 'दृग्यजुषोरपि वेंकृअ. ६-६. नास्ति अ[1]. † तै १, १,८,१. ‡ ऋ १०,८५,२४. ¶ योक्ता वि[1]; योक्ता वि[2]. ७. तै १,२,१,१. ८. ऋ १,११७,१८. ९. ऋ १,११७,१७. १०. तु. तै १,८,६,१. ११. मा १६,५४. १२. ऋ १०,१३३,२. १३. ऋ १०,१००,१. १४. ऋ १०,५४,२. १५. °ष्टमितिरु° वि[1]; °ष्टमिममुक्त° वि[2] अ[1]. १६. ऋ ५,५,१०. १७. ऋ १,१६४,५१. १८. ऋ ३,२७,१४. १९. ऋ १,१२८,६. २०. ऋ १,७१,५.

आहूयन्ते[1] च यज्ञेषु यक्ष्यमाणास्तथाऽऽदितः ।
'अग्निमग्न आवह (ह'[2] इ)ति सन्त्यृचश्च तथाविधाः ॥ १२ ॥

'आ द्वाभ्यां हरिभ्यामिन्द्र'[3], 'य इन्द्राग्नी चित्रतमः'[4] ।
'अपाः सोममस्तमिन्द्र'[5], 'परा याहि मघवन्ना च'[6] ॥ १३ ॥

छिन्दन्नेवापि च ब्रूत ओषधीं स्वधितिं तथा[7] ।
'ओषधे त्रायस्वैनम्[8], स्वधिते मैनं हिंसीरि (सीः'[8] इ)ति ॥ १४ ॥

विवक्षितेऽसमाप्तेऽर्थे छन्दश्चेत् संस्थितं भवेत् ।
ब्रूतेऽवशिष्टं न पुनः 'अश्वं न त्वा वारवन्तम्'[9] ॥ १५ ॥

अत्यष्टिष्वपि चोक्तानि पदान्यर्थेऽनवेक्षिते ।
पुनःपुनः प्रयुज्यन्ते तस्मान्मन्त्रा निरर्थकाः ॥ १६ ॥

अत्र ब्रूमोऽर्थवन्तः स्युः पदसङ्घा भवन्ति ते ।
तदुक्तमृषिणेत्याह लिङ्गाच्च विनियुञ्ज्महे ॥ १७ ॥

उपादाय तथा मन्त्रान् व्याचष्ट ब्राह्मणं क्वचित् ।
ऋग्यजुर्वाभिवदति समृद्धं तदुवाच च ॥ १८ ॥

[10]नैष स्थाणोरपराधो यत्तमन्धो न पश्यति ।
वृद्धसेवाभियोगाभ्यामर्थो ज्ञेयः प्रयत्नतः ॥ १९ ॥

दुर्ज्ञानानि ब्राह्मणानि सन्ति कानिचिदित्यतः ।
नानर्थकानि सर्वाणि तद्वन्मन्त्राश्च सार्थकाः ॥ २० ॥

प्रशंसार्थमुपादानं वैशद्यार्थं तथैव च[10] ।
'उरु' प्रथस्वे(स्व' इ)त्यादीनां मन्त्राणां ब्राह्मणैः कृतम् ॥ २१ ॥

लोकेऽप्युपेक्षा भवति महत्यल्पस्य तद्यथा ।
चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ॥ २२ ॥

इति ब्रुवाणो वदति सहस्राणि चतुर्दश ।
ऋच्येकस्यामुपेक्ष्यैव[11] मेषस्यैकस्य युज्यते ॥ २३ ॥

रुद्रस्यैकस्य तस्थुषः[12] सहस्राणि सहस्रशः ।
रुद्राः शतपथेनोक्ता विरोधो नास्ति तत्र च ॥ २४ ॥

---

१. आश्रयन्ते वि[१,२] अ[१]. २. तै २,५,९,४. ३. ऋ २,१८,४. ४. ऋ १,१०८,१. ५. ऋ ३, ५३,६. ६. ऋ ३,५३,५. ७. ततः वेंऋअ. ८. तै १,२,१,१. ९. ऋ १,२७,१. १०-१०. नास्ति वि[२] अ[१]. ११. °क्ष्यैवम् वेंऋअ. १२. विप्रस्ताः वि[१]; विप्रजाः वि[२] अ[१]; विप्रुषः वेंऋअ.

अशत्रुत्वं तथेन्द्रस्य सर्वशत्रुनिबर्हणात्[1] ।
स्तुतिः 'मायेत् सा ते (तें') इति न त्वसत्यत्वकीर्तनम् ॥ २५ ॥

अग्निर्हवींषि वहति यजमानेषु केषुचित् ।
तपःश्रद्धाविहीनेषु येषु नायान्ति देवताः ॥ २६ ॥

श्रद्धातपस्समृद्धेषु यजमानेषु देवताः ।
आहूयानीय यजति गुणवद्याजकेषु च ॥ २७ ॥

सर्वत्राऽऽवाहनं कार्यम् अपरैः श्रेयसामिह ।
आगच्छन्तु न वा देवास्तथा [2]लोके च[2] दृश्यते ॥ २८ ॥

अहिंसाऽऽम्नायवचनाद् यूपच्छेदे[3] प्रतीयते ।
अहिंसावचनं चैतद् अध्वर्योर्निह्नवात्मकम् ॥ २९ ॥

छन्दसोऽनुविधानाय लौकिकाश्च प्रयुञ्जते ।
नापेक्षितं क्वचिच्छब्दम् अधिकं च प्रयुञ्जते ॥ ३० ॥

तस्मान् मन्त्रास्सामवर्जम् अर्थवन्त इति [4]स्थितिः ।
गीतिर्नार्थवती[4] लोके तथा साम निरर्थकम् ॥ ३१ ॥ इति[5] ।

[ ९५ ]

[6]ऐलः पुरूरवा ऋषिः । उर्वशी देवता । २,४,५,७,११,१२,१५,१६,१८ उर्वशी ऋषिका, पुरूरवा देवता । त्रिष्टुप् छन्दः[6] ।

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।
न नौ मन्त्रा अनुदितास एते मयस्करन् परतरे चनाहन् ॥ १ ॥

हये । जाये । मनसा । तिष्ठ । घोरे । वचांसि । मिश्रा । कृणवावहै । नु ।
न । नौ । मन्त्राः । अनुदितासः । एते । मयः । करन् । परऽतरे । चन । अहन् ॥ १ ॥

**वेङ्कट०** उर्वशीमैडः पुरूरवाः पूर्वोषितां कामात् पुनरासाद्याऽवरोद्धुमैच्छत् । सा तमनिच्छन्ती[7] प्रत्याचष्ट । तयोरेष संवादः ।

हये जाये! अवहितेन मनसा युक्ता[8] तिष्ठ घोरे! । वचांसि आवां मिश्राणि कृणवावहै क्षिप्रम् । न आवयोः अभिलषिता अर्थाः [9]हृदि कल्पिताः[9] परस्परमनुक्ताः एते सुखम् कुर्वन्ति बहुष्वपि दिवसेषु गतेषु तेषामुत्तमेऽप्यहनीति । अत्र वाजसनेयकम्— 'तिरोभूतां स आध्या जल्पन् कुरुक्षेत्रं समया

---

१. °णा वि[1]; °णाः वि[2] अ[1]. २-२. लोकेषु वि[2] अ[1]. ३-३. उवच्छेदे वि[2] अ[1]. ४-४. त्रुटितम् वि[2] अ[1]. ५. इति कारिका समाप्ता अ[1]. ६-६. नास्ति मूको. ७. °च्छती° वि[2] अ[1]; °न्ति वि[1]. ८. नास्ति वि[1]. ९. हृ तैः वि[2] अ[1].

चचार[1] इत्युक्त्वा[2] आह — "तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे। तं[3] हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुः। तां हायं ज्ञात्वाऽभिपरोवाद। 'हये जाये' " ( माश ११,५,१,४-६ ) इत्यादि ॥ १ ॥

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।
पुरूरवः पुनरस्तं परेहि दुरापना वातइवाहमस्मि ॥ २ ॥

किम् । एता । वाचा । कृणव । तव । अहम् । प्र । अक्रमिषम् । उषसाम् । अग्रियाऽइव ।
पुरूरवः । पुनः । अस्तम् । परा । इहि । दुःऽआपना । वातःऽइव । अहम् । अस्मि ॥२॥

**वेङ्कट०** किम् एतया केवलया वाचा करोमि तव अहम्। त्वत्सकाशात्[3] अहम् प्र अक्रमिषम्, यथा उषसाम् बह्वीनां पूर्वापूर्वोषाः[4] प्राक्रमीत् पुनर्वृत्तये। तथा सति पुरूरवः! पुनः अस्तम् प्रतिगच्छ दुरापा अहम् अस्मि वातः इव इति ॥ २ ॥

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।
अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयन्त धुनयः ॥ ३ ॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः । शतऽसाः । न । रंहिः ।
अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न । मायुम् । चितयन्त । धुनयः ॥ ३ ॥

**वेङ्कट०** सम्प्रति विसृष्टराजकार्ये मयि इषुधेः सकाशात् [5]इषुः न असनायै[5] भवति श्रयर्थम्[6] शत्रुष्वपि तर्हि इषुधावेव शेते। तथा वेगवान् वीरः न शत्रूणां गा भजते, न च बहूनि धनानि। सोऽयं पुरूरवा वीरेणात्मना वर्जिते राजकर्मणि सति न वि द्योतते। विस्तीर्णे सङ्ग्रामे न [7]सिंहनादम् बुध्यन्ते[7] भटाः ॥ ३ ॥

सा वसु दधती श्वशुराय वय उषो यदि वष्ट्यन्तिगृहात् ।
अस्तं ननक्षे यस्मिञ्चाकन् दिवा नक्तं श्नथिता वैतसेन ॥ ४ ॥

सा । वसु । दधती । श्वशुराय । वयः । उषः । यदि । वष्टि । अन्तिऽगृहात् ।
अस्तम् । ननक्षे । यस्मिन् । चाकन् । दिवा । नक्तम् । श्नथिता । वैतसेन ॥ ४ ॥

**वेङ्कट०** द्वे[8] उर्वश्याः। तत्र प्रथमया पुरात्मना कृतमुषसे निवेद्य द्वितीयया पुरूरवसे निवेदयति। सा इयमुर्वशी [9]'वासकम् अन्नम्'[9] श्वशुराय प्रयच्छन्ती[10] हे उषः! देवि! तद्गृहे [11]"स्थिता यदि मध्ये पतिं कामयते[11], अन्तिगृहात्[12] श्वशुरात् पतिगृहस्यान्तिके यस्य श्वशुरस्य गृहं

---

१. इत्युक्ता वि[२] अ[१]. २. कर्म वि[२] अ[१]; तत् वि[१]. ३. त्वं सका° मूको. ४. त्रुटितम् वि[१] वि[२] अ[१]; पूर्वेषां वि[१]. ५-५. इषून्नधमायै मूको. ६. श्रियर्थे वि[२] अ[१]. ७-७. °दशब्दं ··· वि[२] अ[१]. ८. नास्ति वि[२] अ[१]. ९-९. वासकमं न ··· वि[२] अ[१]. १०. °च्छति वि[१]. ११-११. स्थिताय ··· कामयन्ते वि[२] अ[१]. १२. तत्रो गृहात् मूको.

तस्माच्छ्वशुराद् आत्मीयं गृहं व्याप्नोति, यस्मिन् कामयमानः पतिः आस्ते, दिवा नक्तम् च श्नथिता पुरूरवसः प्रजननेन ॥ ४ ॥

त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि ।
पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः ॥ ५ ॥

त्रिः । स्म । मा । अह्नः । श्नथयः । वैतसेन । उत । स्म । मे । अव्यत्यै । पृणासि ।
पुरूरवः । अनु । ते । केतम् । आयम् । राजा । मे । वीर । तन्वः । तत् । आसीः ॥ ५ ॥

वेङ्कट० एकस्य अह्नः त्रिः माम् पुरा वैतसेन[1] अश्नथयः अपि च मह्यम् अव्यत्यै या सपत्नीभिः सह पर्यायेण पतिमभिगच्छति, साव्यती भवति, [2]अताद्दश्यै च[2] पूरयसि कामम्। पुरूरवः! तव गृहम् [3]अहमेव अनु अगच्छम्, त्वं च[3] तदा वीर! मम तन्वः[4] स्वामी अभवः। मत्सम्भोगस्त्वया कृतः[5], इदानीमुपरन्तव्यमिति ॥ ५ ॥

[6]इति अष्टमाष्टके पञ्चमाध्याये प्रथमो वर्गः[6] ॥

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः ।
ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त ॥ ६ ॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नेऽआपिः । ह्रदेऽचक्षुः । न । ग्रन्थिनी । चरण्युः ।
ताः । अञ्जयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न । धेनवः । अनवन्त ॥ ६ ॥

वेङ्कट० आलिभूताभिः[7] चतसृभिर्मानिनीभिः[8] गमनशीलाभिः एवंनामधेयाभिः उर्वशी आजगाम । नकारः समुच्चयार्थीयः । ताः इमाः अञ्जयः अरुणयः च वर्णतः तव सख्यः न यथापूर्वं माम् उपगच्छन्ति । एतदेव परोक्षमाह—वत्सस्य[9] श्रयणाय धेनवः[10] गावः न शब्दायन्त इति ॥ ६ ॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन् नद्य१ः स्वगूर्ताः ।
महे यत् त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः ॥ ७ ॥

सम् । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईम् । अवर्धन् । नद्यः । स्वऽगूर्ताः ।
महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् । दस्युऽहत्याय । देवाः ॥ ७ ॥[11]

वेङ्कट० एताभिश्च संसर्गस्त्वयानुभूत इत्युर्वशी वदति । सम् आसत पुरा अस्मिन् पुरूरवसि जायमाने देवकार्यार्थं वर्धमाने वा ग्नाः अप्सरसः देवपत्न्यः वा । अपि चैनम् अवर्धयन् अप्सरसामावासभूताः नद्यः स्वयंगामिन्यः । महते यत् त्वा पुरूरवः! रणाय अवर्धयन् दस्युहननाय च देवाः ॥ ७ ॥

---

१. व्यु. अर्थश्च या. (३,२१) द्र. २-२. °दृशैश्च वि[2] अ[1]; °दृश्ये भत्र वि[1]. ३-३. °मेवास गच्छ त्वं च वि[2] अ[1]; °मेवागच्छत्र वि[1]. ४. तन्वा वि[2] अ[1]. ५. कृतम् मूको. ६-६. नास्ति मूको. ७. आनिभू° वि[2] अ[1]; आभिभु° वि[1]. ८ °मालिनीभिः मूको. ९. वंसस्य वि[2] अ[1]. १०. सैनवः मूको. ११. या. (१०,४७) व्याख्यानं द्र. ]

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।
अप स्म मत् तरसन्ती न भुज्युस्ता अत्रसन् रथस्पृशो नाश्वाः ॥ ८ ॥

सचा । यत् । आसु । जहतीषु । अत्कम् । अमानुषीषु । मानुषः । निऽसेवे ।
अप । स्म । मत् । तरसन्ती । न । भुज्युः । ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥ ८ ॥

वेङ्कट० [1]'सचा यत् आसु[1] इति पुरूरवसस्तिस्रः, तत्रादितो[2] द्वाभ्यामुर्वशीमन्याश्च सह, तृतीययोर्वशीमिति । सहायभूतः[3] पुरूरवा यदा आसु आत्मीयं रूपम् जहतीषु[4] आतिभूतासु अमानुषीषु अप्सरस्सु मानुषः निषेवे अभिमुखं गच्छति, तदानीं ताः मत्तः अप स्म गच्छन्ति । त्रसिर्गमनकर्मा । यथा तरसन्ती तरसत् नाम मृगस्तस्य भोगसाधनभूता स्त्री व्याधाद् अपगच्छति, यथा वा [5]रथे नियुक्ता अश्वाः[5] । यद्वा याः पुरा निषेवे, ताः सम्प्रतीत्थं कुर्वन्तीत्यर्थः ॥ ८ ॥

यदासु मर्तो अमृतासु निस्पृक् सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।
ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो दन्दशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सम् । क्षोणीभिः । क्रतुऽभिः । न । पृङ्क्ते ।
ताः । आतयः । न । तन्वः । शुम्भत । स्वाः । अश्वासः । न । क्रीळयः । दन्दशानाः ॥ ९ ॥

वेङ्कट० यदा आसु अप्सरस्सु मनुष्यः नितरां स्पृशन् वाग्भिः [6]कर्मभिश्च सम्पर्कं[6] करोति । समुच्चयार्थीयो न-कारः । तदानीम् ताः इमाः आतीभूता[7] आत्मीयानि शरीराणि न शुम्भत[8] न प्रकाशयन्ति अश्वाः इव क्रीडमानाः जिह्वाभिरात्मीयाः सृक्काः[9] दन्दशानाः[10] ॥ ९ ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ १० ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या । काम्यानि ।
जनिष्टो इति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी । तिरत । दीर्घम् । आयुः ॥ १० ॥

वेङ्कट० विद्युत् इव या [11]पतन्ती अद्योतत हरन्ती[11] मह्यम् अन्तरिक्ष्याणि उदकानि । तस्या उर्वश्या यदि जायते व्याप्तः[12] नृहितः सुजातः पुत्रः, अथ [13]प्र वर्धयति उर्वशी[13] मम दीर्घम् आयुः । 'प्रजामनु प्र जायसे तदु ते मर्त्यामृतम्' ( तैब्रा १,५,५,६ ) इति मन्त्रः ॥ १० ॥[14]

[15]इति अष्टमाष्टके पञ्चमाध्याये द्वितीयो वर्गः[15] ॥

---

१-१. नास्ति वि[1]. २. तथादि° मूको. ३. सखाय° मूको. ४. जगतीषु मूको. ५-५. त्रुटितम् वि[2] अ[1]. ६-६. °भिस्त्वसंपर्कं तं वि[1]. ७. आन्ती' वि[2] अ[1]. ८. तुंमत वि[2]; तुम्भ अ[1]. ९. सृत्वा वि[1] अ[1]; सक्त्वा वि[2]. १०. °नाम् मूको. ११-११. वतन्त्य ··· वि[2] अ'; पतन्त्यभ्योतत हरन्ति वि[1]. १२. व्याप्ता मूको. १३-१३. वर्तयन्त्युर्वशी वि[1] अ'; वर्धयन्त्युर्वशी वि[1]. १४. तु. या. ( ११,३६ ). १५-१५. नास्ति मूको.

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत् पुरूरवो म ओजः ।
अशासं त्वा विदुषी सस्मिन्नहन् न म आशृणोः किमभुग्वदासि ॥ ११ ॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधाथ । तत् । पुरूरवः । मे । ओजः ।
अशासम् । त्वा । विदुषी । सस्मिन् । अहन् । न । मे । आ । अशृणोः । किम् । अभुक् । वदासि ॥

वेङ्कट० जातोऽसि अमुत्रोर्वश्यां पृथिव्या रक्षणाय [1]हि । दधाथ[1] तत् पुरूरवः! ममोदरे ओजः मयि निहितवानसि गर्भम् । तत्त्वया[2] ज्ञातमिति । अथापि स्थातव्यमिति चेत्, तत्राह—अनुशासितवत्यहम् त्वा विदुषी पुरा सर्वस्मिन् अहनि यत्[3] मम[4] कर्तव्यम् । तच्च मदीयं वचनं त्वम् न अशृणोः । किं समयपालनरहितः सम्प्रति वदसीति[5] । तत्र वाजसनेयकम्—'उर्वशी हाप्सराः पुरूरवसमैडं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन हतादकामां स्म मां निपद्यासै मो स्म त्वा नग्नं दर्शम् एष वै न स्त्रीणामुपचार इति । सा हास्मिञ्ज्योगुवास । अपि हास्माद् गर्भिण्यास' (माश ११,५,१,१;२) इति । तामिमां संविदं ज्ञात्वा गन्धर्वा नग्ने पुरूरवसि 'विद्युतं जनयाञ्चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो 'हैवेयं तिरोबभूव' ( माश ११,५,१,४ ) इति[1] ॥ ११ ॥

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन् ।
को दंपती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥ १२ ॥

कदा । सूनुः । पितरम् । जातः । इच्छात् । [6]चक्रन् । न[6] । अश्रु । वर्तयत् । विऽजानन् ।
कः । दम्पती इति दम्ऽपती । सऽमनसा । वि । युयोत् । अध । यत् । अग्निः । श्वशुरेषु । दीदयत् ॥

वेङ्कट० कदा सूनुः तवोदरस्थः पितरम् माम् जातः[7] इच्छति[8] । कदा वा क्रन्दमानश्च अश्रु वर्तयति पितरम् माम् विजानन् । कः[9] दम्पती त्वां मां च समनस्कौ वि-श्लेषयेत्, सम्प्रति यत् अग्निः तवोदरस्थः तव श्वशुरेषु दीप्यते[10] ॥ १२ ॥

प्रति ब्रवाणि वर्तयते अश्रु चक्रन् न क्रन्ददाध्ये शिवायै ।
प्र तत् ते हिनवा यत् ते अस्मे परेह्यस्तं नहि मूर मापः ॥ १३ ॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रन्दत्[1] । आऽध्ये । शिवायै ।
प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति । परा । इहि । अस्तम् । नहि । मूर । मा । आपः ॥

वेङ्कट० [1]पुरूरवः! त्वाम् प्रति ब्रवाणि[1] वर्तयिष्यते तदपत्यम् अश्रु तथा रुदन्, न रोदिति आध्याते शिवे कल्याणे उपस्थिते सति, तत् अपत्यं तुभ्यम् प्र हिणोमि, यत् तव मया निहितम् । परा इहि अस्तम्, नहि मूढ! मा आप्नोषि ॥ १३ ॥

---

१-१. नास्ति वि[2] अ[1]. २. तत्तया वि[1]. ३. नास्ति वि[2] अ[1]. ४. मत् वि[1]. ५. °तीति वि[1]. ६-६. पाठः?; चक्र- > -क्रम् इति, 'न' उपमार्थीय इति चेतीव निर्देशस्तूपपन्नतरः स्यात् (वैप १, १२९५ k द्र.) ७. जातम् मूको. ८. इच्छन्ति वि[1]. ९. तौ वि[2] अ[1]. १०. त्रुटितम् वि[2] अ[1]; दीव्यतेति वि[1].

सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥ १४ ॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतम् । परमाम् । गन्तवै । ऊँ इति ।
अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनम् । वृकाः । रभसासः । अद्युः ॥ १४ ॥

**वेङ्कट०** अथ परिद्यूनो वदति पुरूरवाः । सुक्रीडः पतिः तव अद्य प्रपतेत् अनावृत् परावतम्[1] अत्यन्तदूरां दिशं गन्तुम् अनशनो महाप्रस्थानं कुर्यात् । अथ शयीत 'तत्र अनश्नन् पृथिव्याः उपस्थे । अथ एनम् शयानम्[2] वृकाः वेगवन्तः अद्युः[3] । 'सुदेवोऽद्योद्वा बध्नीत प्र वा पतेत् तदेनं वृका वा श्वानो वाऽद्युरिति हैव तदुवाच' इति वाजसनेयकम् ( माश ११,५,१,८ ) ॥ १४ ॥

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥ १५ ॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊँ इति । क्षन् ।
न । वै । स्त्रैणानि । सख्यानि । सन्ति । सालावृकाणाम् । हृदयानि । एता ॥ १५ ॥

**वेङ्कट०** पुरूरवः! मा म्रियेथाः । मा वा प्र पप्तः । मा च त्वाम् वृकाः अशिवाः अदन्तु । न खलु स्त्रैणानि [4]सख्यानि विद्यन्ते[4] । स्त्रियो नाम हि सालावृकाणाम् हृदयानि । 'मैतदादृथा न वै स्त्रैणं सख्यमस्ति पुनर्गृहानिहीति[5] हैवैनं तदुवाच' इति वाजसनेयकम् ( माश ११,५,१,९ ) ॥ १५ ॥

[6]इति अष्टमाष्टके पञ्चमाध्याये तृतीयो वर्गः ॥[6]

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥१६॥

यत् । विऽरूपा । अचरम् । मर्त्येषु । अवसम् । रात्रीः । शरदः । चतस्रः ।
घृतस्य । स्तोकम् । सकृत् । अह्नः । आश्नाम् । तात् । एव । इदम् । ततृपाणा । चरामि ॥१६॥

**वेङ्कट०** यत् मानुषसङ्गताद् विगतदेवरूपा अचरम् मनुष्येषु । तदानीम् अवसम् रमयित्रीः शरदः चतस्रः । तदानीम् अहम् घृतस्य स्तोकम्[7] सकृत् अह्नः आश्नाम् । तेन एव स्तोकेनाहम् इदम् सम्प्रति तृप्ता सती चरामि म्रियमाणशरीरा[8] । स्त्रियाऽपि सत्या [9]मया तव सुकृतं[9] न विस्मृतं[10] देवेषु[11] [12]वा नोत्सर्पामीति[12] ॥ १६ ॥

---

१. °वत ··· वि[2] अ[1]. २-२. तत्राञ्जज्ञं पृथिव्य···श° वि[2] अ[1]; तत्र ह्शान् पृथि° वि[1]. ३. अध्वर्युः वि[2] अ[1]. ४-४. निविद्यन्ते वि[2] अ[1]. ५. °ह्यानीति मूको. ६-६. नास्ति मूको. ७. अस्माकं वि[2] अ[1]. ८. व्रिय° वि[1]. ९-९. °यात्रवक्षुकु° वि[2] अ[1]. १०. विस्तृतं वि[1]. ११. दैवु वि[2] अ[1]. १२-१२. बाणोत्स° वि[2] अ[1].

अन्तरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।
उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥

अन्तरिक्षऽप्राम् । रजसः । विऽमानीम् । उप । शिक्षामि । उर्वशीम् । वसिष्ठः ।
उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि । वर्तस्व । हृदयम् । तप्यते । मे ॥ १७ ॥

**वेङ्कट०** तेजसाऽन्तरिक्षस्य पूरयित्रीम् उदकस्य निर्मात्रीम् वशं नयामि उर्वशीम् समानाम् वसिष्ठः । उप [1]तिष्ठतु त्वाम्[1] सुकृतस्य रातिः दाता पुरूरवाः । नि वर्तस्व हृदयम् तप्यते मे ॥ १७ ॥

इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबन्धुः ।
प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे ॥ १८ ॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईम् । एतत् । भवसि । मृत्युऽबन्धुः ।
प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे । ऊँ इति । त्वम् । अपि । मादयासे ॥१८॥

**वेङ्कट०** इति त्वाम् देवाः इमे आहुः ऐळ![2], **बन्धनो मृत्योः**[2] यथा **भविष्यसि** । प्रजा ते देवान् हविषा[3] [4]यजतु । **अथ**[4] स्वर्गे एव त्वम् अपि मादयासे **मया सहेति** ॥ १८ ॥

[x]**इति अष्टमाष्टके पञ्चमाध्याये चतुर्थो वर्गः**[x] ॥

[ ९६ ]

[5]बरुराङ्गिरस ऋषिः, सर्वहरिर्वा ऐन्द्रः । हरिर्देवता । जगती छन्दः, अन्त्ये त्रिष्टुभौ[5] ।

प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम् ।
घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः ॥ १ ॥

प्र । ते । महे । विदथे । शंसिषम् । हरी इति । प्र । ते । वन्वे । वनुषः । हर्यतम् । मदम् ।
घृतम् । न । यः । हरिऽभिः । चारु । सेचते । आ । त्वा । विशन्तु । हरिऽवर्पसम् । गिरः ॥१॥

**वेङ्कट०** बरुरैन्द्रः । [6]प्र अस्ताविषम्[6] तव अश्वौ महति सङ्ग्रामे । प्र च भजे तव हन्तुः स्पृहणीयम् मदम् । घृतम् इव सुपूतम् यः हरिभिः चारु उदकम् पृथिव्यां सिञ्चति, तं त्वाम् आ विशन्तु गिरः[7] मदीया हरितवर्णमिति ॥ १ ॥

हरिं हि योनिमभि ये समस्वरन् हिन्वन्तो हरी दिव्यं यथा सदः ।
आ यं पृणन्ति हरिभिर्न धेनव इन्द्राय शूषं हरिवन्तमर्चत ॥ २ ॥

---

१-१. °ष्ठ कृत्वां वि[2] अ[1]. २. मृतो मूको. ३. वह° वि[2] अ[1]. ४-४. °जस्वाथ वि[2] अ[1]. ५-५. नास्ति मूको. ६-६. प्रान्तोषं वि[2] अ[1]; प्रस्तौषत् वि[1]. ७. शिरः मूको.

हरि॑म् । हि । योनि॑म् । अ॒भि । ये । स॒म्ऽअस्व॑रन् । हि॒न्वन्त॑ः । हरी॒ इति॑ । दि॒व्यम् । यथा॑ । सद॑ः ।
आ । यम् । पृ॒णन्ति॑ । हरि॑ऽभिः । न । धे॒नव॑ः । इन्द्रा॑य । शू॒षम् । हरि॑ऽवन्तम् । अ॒र्च॒त ॥२॥

**वेङ्कट०** अश्वम्[1] हि इन्द्रस्य स्थानम् ये[2] संस्तुवन्ति प्रेरयन्तः अश्वौ इन्द्राय यज्ञियम् इव बर्हिरधिष्ठानार्थम्, ते स्तोतारः यम् सोमैश्च आ पूरयन्ति [3]धेनवः इव वत्सम्[3]। यूयमपि तं हरितवर्णम् शूषम्[4] बलम् इन्द्रप्रीत्यर्थम् उपाऽर्चत[5] ॥ २ ॥

सो अ॒स्य॒ वज्रो॒ हरि॑तो॒ य आ॑य॒सो हरि॒र्निका॑मो॒ हरि॒रा गभ॑स्त्योः ।
द्यु॒म्नी सु॑शि॒प्रो हरि॑मन्युसायक॒ इन्द्रे॒ नि रू॒पा हरि॑ता मिमिक्षिरे ॥ ३ ॥

सः । अ॒स्य॒ । वज्र॑ः । हरि॑तः । यः । आ॒य॒सः । हरि॑ः । नि॒ऽका॑मः । हरि॑ः । आ । गभ॑स्त्योः ।
द्यु॒म्नी । सु॒ऽशि॒प्रः । हरि॑मन्युऽसायकः । इन्द्रे॑ । नि । रू॒पा । हरि॑ता । मि॒मि॒क्षि॒रे॒ ॥ ३ ॥

**वेङ्कट०** सः इन्द्रस्य[6] वज्रः हरितवर्णः यः निर्मितोऽयसा। हरिः च [7]अश्वः अस्य[7] कमनीयः। हर्ता[8] शत्रूणां यज्ञ आस्ते बाह्वोः अन्नवान् सुशिप्रः हरिमन्युसायकः, शत्रूणां हर्ताऽभिमन्ता चास्य सायको भवति। किं बहुना इन्द्रे हरितानि सर्वाणि रूपाणि नि मिमिक्षिरे निर्मितानीति[9] ॥ ३ ॥

दि॒वि न के॒तुरधि॑ धायि हर्य॒तो वि॒व्यच॒द्वज्रो॒ हरि॑तो॒ न रंह्या॑ ।
तु॒दद॒हिं॒ हरि॑शि॒प्रो य आ॑य॒सः स॒हस्र॑शोका अभवद्धरिम्भ॒रः ॥ ४ ॥

दि॒वि । न । के॒तुः । अधि॑ । धा॒यि॒ । ह॒र्य॒तः । वि॒व्यच॑त् । वज्र॑ः । हरि॑तः । न । रंह्या॑ ।
तु॒दत् । अहि॑म् । हरि॑ऽशिप्रः । यः । आ॒य॒सः । स॒हस्र॑ऽशोकाः । अ॒भ॒व॒त् । ह॒रि॒म्ऽभ॒रः ॥ ४ ॥

**वेङ्कट०** यथा[10] दिवि प्रज्ञापक आदित्यः निहितः, एवमयं स्तोतृभिः अधि[11] निहितः। स्पृहणीयः व्याप्नोति चास्य वज्रः व्याप्तव्यम्, यथा वेगेन आदित्याश्वा व्याप्नुवन्ति गन्तव्यं देशम्। तुदत् अहिम् हरिशिप्रः अस्य वज्रः यः अयसा निर्मितः, सोऽयं सहस्रदीप्तिः भवति हर्योः भर्ता[12] ॥ ४ ॥

त्वंत्व॑मह॒र्यथा॒ उप॑स्तुत॒ः पूर्वे॑भिरिन्द्र हरिकेश॒ यज्व॑भिः ।
त्वं ह॑र्यसि॒ तव॒ विश्व॑मु॒क्थ्य१॒॑मसा॑मि॒ राधो॑ हरिजात ह॒र्यत॑म् ॥ ५ ॥

त्वम्ऽत्व॑म् । अ॒ह॒र्य॒थाः । उप॑ऽस्तुतः । पूर्वे॑भिः । इ॒न्द्र॒ । ह॒रि॒ऽके॒श॒ । यज्व॑ऽभिः ।
त्वम् । ह॒र्य॒सि॒ । तव॑ । विश्व॑म् । उ॒क्थ्य॑म् । असा॑मि । राध॑ः । ह॒रि॒ऽजा॒त॒ । ह॒र्यत॑म् ॥ ५ ॥

**वेङ्कट०** त्वमेव अकामयथाः पूर्वेभिः इन्द्र! हरिकेश! यज्वभिः उपस्तुतः[13]। त्वम् कामयसे तव

---

१. …अश्वा वि[2] अ[1]. २. यदि मूको. ३-३. नास्ति मूको. ४. त्रुटितम् वि[2] अ[1]; सुषं वि[1]. ५. उपारयद् मूको. ६. हेन्द्रस्य वि[2] अ[1]. ७-७. त्रुटितम् वि[2] अ[1]. ८. नर्ता वि[2] अ[1]. ९. निमित्तानिति वि[2] अ[1]; तिमीता° वि[1]. १०. नास्ति वि[2] अ[1]. ११. अभि वि[1]. १२. भक्ताः वि[2] अ[1]. १३. स्तुतः मूको.

स्वभूतं व्याप्तम् प्रशस्यम् असाधारणं कृत्स्नम् अन्नम् शत्रुहारकप्रादुर्भाव! स्पृहणीयम् ॥ ५ ॥

[1]इति अष्टमाष्टके पञ्चमाध्याये पञ्चमो वर्गः[1] ॥

ता वज्रिणं मन्दिनं स्तोम्यं मद इन्द्रं रथे वहतो हर्यता हरी ।
पुरूण्यस्मै सवनानि हर्यत इन्द्राय सोमा हरयो दधन्विरे ॥ ६ ॥

ता । वज्रिणम् । मन्दिनम् । स्तोम्यम् । मदे । इन्द्रम् । रथे । वहतः । हर्यता । हरी इति ।
पुरूणि । अस्मै । सवनानि । हर्यते । इन्द्राय । सोमाः । हरयः । दधन्विरे ॥ ६ ॥

वेङ्कट० तौ वज्रिणम् माद्यम् स्तोमार्हम् मदे [2]इन्द्रम् रथे वहतः कान्तौ अश्वौ । बहूनि[2] सवनानि अस्मै[3] भवन्ति स्पृहणीयाय । इन्द्राय सोमाः हरितवर्णाः निधीयन्ते ॥ ६ ॥

अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन् हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥ ७ ॥

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरी इति । तुरा ।
अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् । ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥

वेङ्कट० [4]पर्याप्तम् कामाय हरितवर्णाः निधीयन्ते[4] । स्थिराय इन्द्राय प्रेरयन्ति सोमाः[5] क्षिप्रौ [6]अश्वौ । गन्तृभिः यः अश्वैः[6] शूरैः सेव्यं सङ्ग्रामं गच्छति, सः रथः इन्द्रस्य कमनीयम् यज्ञम् व्याप्नोति[7] ॥७॥

हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥ ८ ॥

हरिऽश्मशारुः । हरिऽकेशः । आयसः । तुरःऽपेये । यः । हरिऽपाः । अवर्धत ।
अर्वत्ऽभिः । यः । हरिऽभिः । वाजिनीऽवसुः । अति । विश्वा । दुःऽइता । पारिषत् । हरी इति ॥

वेङ्कट० हरिवर्णश्मश्रुः हरिकेशः अयोमयहृदयः त्वरमाणैः पातव्ये सोमे यः सोमपाः अवर्धत । यः गन्तृभिः[8] हरितवर्णैः सोमैः [9]प्रीतः अन्नधनः अति पारयति[9] विश्वानि दुर्गाणि[10] आत्मीयावश्वौ[11] । उत्तरत्र सम्बन्धः ॥ ८ ॥

स्रुवेव यस्य हरिणी विपेततुः शिप्रे वाजाय हरिणी दविध्वतः ।
प्र यत् कृते चमसे मर्मृजद्धरी पीत्वा मदस्य हर्यतस्यान्धसः ॥ ९ ॥

---

१-१. नास्ति मूको. २-२. इन्द्र ··· वि[2] अ[1]; इन्द्रं रथेस्मि वि[1]. ३. नास्ति मूको. ४-४. नास्ति वि[1]. ५. स्तोमाः वि[1]. ६-६. अयोगं तृतीय ··· वि[2] अ[1]. ७-७. इन्द्र ··· वि[2] अ[1]; °प्नोति नप्तोति वि[1]. ८. हन्तृ वि[2] अ[1]; गन्तृ वि[1]. ९ ९. प्रीता न धनोति वा( पा वि[1]. )र° मूको. १०. दुर्गमाणि वि[2] अ[1]. ११. °त्मीयतपश्चौ वि[2] अ[1]; °त्मीया विश्वौ वि[1].

सुवाऽइव । यस्य । हरिणी इति । विऽपेततुः । शिप्रे इति । वाजाय । हरिणी इति । दविध्वतः ।
प्र । यत् । कृते । चमसे । मर्मृजत् । हरी इति । पीत्वा । मदस्य । हर्यतस्य । अन्धसः ॥ ९ ॥

वेङ्कट० स्रुवौ इव[1] यस्य [2]हरितवर्णे कनीनिके सोमं प्रति विपततः। तथा यस्य च हनू[2] हरिणी सोमपानार्थं कम्पयतः[3]। इन्द्रः[4] प्र मार्ष्टि अश्वौ पृष्ठे यदा संस्कृते[5] चमसे [6]स्थितं सोमं[6] मदकरम् स्पृहणीयम् पीत्वा, तदानीमिन्द्रं स्तुतेति ॥ ९ ॥

उत स्म सद्म हर्यतस्य पस्त्योरत्यो न वाजं हरिवाँ अचिक्रदत् ।
मही चिद्धि धिषणाहर्यदोजसा बृहद्वयो दधिषे हर्यतश्चिदा ॥ १० ॥

उत । स्म । सद्म । हर्यतस्य । पस्त्योः । अत्यः । न । वाजम् । हरिऽवान् । अचिक्रदत् ।
मही । चित् । हि । धिषणा । अहर्यत् । ओजसा । बृहत् । वयः । दधिषे । हर्यतः । चित् । आ ॥

वेङ्कट० अपि च[7] सदनम् स्पृहणीयस्येन्द्रस्य द्यावापृथिव्यौ । [8]सोऽयम् अश्वः इव[8] सङ्ग्रामम् हरिवान् गच्छति। महती हि स्तुतिः कामयते त्वां बलेन युक्तम्। तथा सति बृहत् अन्नम् आ प्रयच्छसि कामयमानस्येति ॥ १० ॥

[9]इति अष्टमाष्टके पञ्चमाध्याये षष्ठो वर्गः[9] ॥

आ रोदसी हर्यमाणो महित्वा नव्यंनव्यं हर्यसि मन्म नु प्रियम् ।
प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय ॥ ११ ॥

आ । रोदसी इति । हर्यमाणः । महिऽत्वा । नव्यम्ऽनव्यम् । हर्यसि । मन्म । नु । प्रियम् ।
प्र । पस्त्यम् । असुर । हर्यतम् । गोः । आविः । कृधि । हरये । सूर्याय ॥ ११ ॥

वेङ्कट० आ पूरयसि महत्त्वेन द्यावापृथिव्यौ [10]कामयमानः, नवतरंनवतरम्[10] च कामयसे स्तोत्रम् क्षिप्रम् प्रियम्। प्रकर्षेण आविः कुरु प्रज्ञावन्! स्पृहणीयम् गृहम् उदकस्य आवासस्थानम् उदकस्य हर्त्रे सूर्याय ॥ ११ ॥

आ त्वा हर्यन्तं प्रयुजो जनानां रथे वहन्तु हरिशिप्रमिन्द्र ।
पिबा यथा प्रतिभृतस्य मध्वो हर्यन् यज्ञं सधमादे दशोणिम् ॥ १२ ॥

आ । त्वा । हर्यन्तम् । प्रऽयुजः । जनानाम् । रथे । वहन्तु । हरिऽशिप्रम् । इन्द्र ।
पिब । यथा । प्रतिऽभृतस्य । मध्वः । हर्यन् । यज्ञम् । सधऽमादे । दशऽओणिम् ॥ १२ ॥

---

१. °वापि च वि[2] अ[1]. २-२. °वर्णे ··· प्रति निवा ··· वि[1] अ[1]; °वर्णो नीनिमं प्रतिनिवा वि[1]. ३. °यः वि[1]; °यत् वि[2] अ[1]. ४. नास्ति मूको. ५. संस्तुते वि[1]. ६-६. स्थितः सोमः वि[2] अ[1]. ७. च स्म मूको. ८-८. सोमो यश्चेव वि[2] अ[1]; सेमश्च इप वि[1]. ९-९ नास्ति मूको. १०-१०. काम्यमाहानत्रपितरं वि[2] अ[1]; कामयवानं नवतर° वि[1].

**वेङ्कट०** आ वहन्तु त्वाम् कामयमानम् प्रयुक्ता अश्वाः जनानाम् समीपम् रथे स्थितं हरितवर्णशिप्रम्[1] इन्द्र ! । पिबसि यथा त्वं प्रतिभृतम् सोमम् कामयमानः हविः सङ्ग्रामार्थम् दशोणिम्, ओणयोऽङ्गुलयः, दशभिरङ्गुलिभिरभिपुतम् ॥ १२ ॥

अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।
ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषञ्जठर आ वृषस्व ॥ १३ ॥

अपाः । पूर्वेषाम् । हरिऽवः । सुतानाम् । अथो इति । इदम् । सवनम् । केवलम् । ते ।
ममद्धि । सोमम् । मधुऽमन्तम् । इन्द्र । सत्रा । वृषन् । जठरे । आ । वृषस्व ॥ १३ ॥

**वेङ्कट०** अपिबः हरिवः! प्रातःसवनस्थान् सोमान् सुतान् । अथो इदम् माध्यन्दिनम् सवनम् असाधारणम् ते । तथा सति ममद्धि सोमम् [2]मधुमन्तम् इन्द्र ! । मदिरिहाऽऽस्वादनकर्मा[2] । 'पिबन्तु मदन्तु वियन्तु सोमम्' ( तैब्रा २,६,११,१० ) इति च मन्त्रः । सत्राशब्दो भूयिष्ठवचनः । तं [3]भूयिष्ठम् वर्षितः![3] जठरे आ सिञ्चस्व ॥ १३ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये सप्तमो वर्गः[4] ॥

[ ९७ ]

[4]आथर्वणो भिषग् ऋषिः । ओषधयो देवता । अनुष्टुप् छन्दः[4] ।

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ १ ॥

याः । ओषधीः । पूर्वाः । जाताः । देवेभ्यः । त्रिऽयुगम् । पुरा ।
मनै । नु । बभ्रूणाम् । अहम् । शतम् । धामानि । सप्त । च ॥ १ ॥

**वेङ्कट०** भिषग् आथर्वणः । सैषा ब्राह्मणे व्याख्याता । अत्र वाजसनेयकम्—"'या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा' इति ऋतवो वै देवास्तेभ्य एतास्त्रिः[5] पुरा जायन्ते वसन्ता प्रावृषि शरदि 'मनै नु बभ्रूणामहम्' इति सोमो वै बभ्रुः सौम्या ओषधयः औषधः पुरुषः 'शतम् धामानि' इति यदिदं शतायुः शतार्धः[6] शतवीर्य एतानि हास्य तानि 'शतम् धामानि सप्त च' इति य एवेमे सप्त शीर्षन् प्राणास्तानेतदाह" ( माश ७,२,४,२६ ) इति । निरुक्तं ( या ९,२८ ) च द्रष्टव्यमिति ॥ १ ॥

शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ २ ॥

शतम् । वः । अम्ब । धामानि । सहस्रम् । उत । वः । रुहः ।
अध । शतऽक्रत्वः । यूयम् । इमम् । मे । अगदम् । कृत ॥ २ ॥

---

१. हरिवर्णशीघ्रम् वि[2] अ[1]. २-२. मदन्तमिन्द्रा…स्वाद० वि[2] अ[1]. ३-३. °ष्ठवर्षि° वि[2] अ[1].
४-४. नास्ति मूको. ५. °स्तिस्रः वि[1] अ[1]. ६. शतयः वि[1,2]; शतायुः अ[1].

वेङ्कट० शतम् वः मातरः! स्थानानि। सहस्रम् अपि च वः रुहः प्ररोहाः[1]। तथा सति हे शतकर्माणः! यूयम् यम् इमम् अहं भिषज्यामि, तम् अगदम् कृत ॥ २ ॥

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ३ ॥

ओषधीः । प्रति । मोदध्वम् । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । [2]वीरुधः । पारयिष्ण्वः ॥ ३ ॥[2]

वेङ्कट० ओषधयः! इमम् प्रति मुदिता भवत पुष्पवत्यः फलवत्यः बडवाः इव सह रोगं जयन्त्यः विरोहन्त्यः पुरुषं पारयन्त्यो रोगादिति ॥ ३ ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ४ ॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥

वेङ्कट० ओषधीः! इत्थम् हे मातरः! तत् वचः युष्मान् प्रति देव्यः! उप ब्रुवे। किं तदित्याह— हे भिषज्यमान पुरुष! तुभ्यम् अहम् अश्वादिकम् ददामि शरीरम् चेति ॥ ४ ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत् किलासथ यत् सनवथ पूरुषम् ॥ ५ ॥

अश्वत्थे । वः । निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥

वेङ्कट० देवभूतानां भवतीनाम् अश्वत्थे निषदनम् तथा पलाशेषु वः वसतिः कृता। किञ्च[3] गवां भोजयित्र्यः एव भवथ, यदि सम्भजध्वे पुरुषम् ॥ ५ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये अष्टमो वर्गः[4] ॥

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः ॥ ६ ॥

यत्र । ओषधीः । समऽअग्मत । राजानः । समितौऽइव ।
विप्रः । सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ ६ ॥

वेङ्कट० यत्र ओषधयः सङ्गच्छन्ते राजानः इव सङ्ग्रामे। ब्राह्मणः सः उच्यते भैषज्यकृद् रक्षसां हन्ता रोगाणां चातनः ॥ ६ ॥

---

१. °रोहः वि[1]. २-२. या. (६,३) द्र. ३. नास्ति वि[1]. ४-४. नास्ति मूको.

अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ ७ ॥

अश्वऽवतीम् । सोमऽवतीम् । ऊर्जयन्तीम् । उत्ऽओजसम् ।
आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टऽतातये ॥ ७ ॥

**वेङ्कट०** अश्ववतीप्रभृतयः प्रधानाश्चतस्र ओषधयः । ताः सर्वाः अहम् आ जाने अस्मै रोगाय अमुं रोगं नाशयितुम् ॥ ७ ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनं सनिष्यन्तीनामात्मानं तव पूरुष ।८।

उत् । शुष्माः । ओषधीनाम् । गावः । गोस्थात्ऽइव । ईरते ।
धनम् । सनिष्यन्तीनाम् । आत्मानम् । तव । पुरुष ॥ ८ ॥

**वेङ्कट०** उद्-गच्छन्ति बलानि ओषधीनाम् गावः इव गोष्ठात् तव आत्मभूतम् धनम् सनिष्यन्तीनाम् हे पुरुष! इति प्ररोहन्तीरोषधीर्दृष्ट्वा वदति[1] ॥ ८ ॥

इष्कृतिर्नाम वो मातार्थो यूयं स्थ निष्कृतीः ।
सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥ ९ ॥

इष्कृतिः । नाम । वः । माता । अथो इति । यूयम् । स्थ । निःऽकृतीः ।
सीराः । पतत्रिणीः । स्थन । यत् । आमयति । निः । कृथ ॥ ९ ॥

**वेङ्कट०** इष्कृतिः नाम युष्माकम् माता, यस्मात् सा रुग्णं निष्करोति । तथा यूयम् अपि भवथ निष्कृतयः । सरणस्वभावाः पत्रवत्यश्च भवथ [2]पुष्यन्तीः । पुरुषो[2] यदि आमयति तम् निष्कृथ ॥९॥

अति विश्वाः परिष्ठाः स्तेनइव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्यत् किं च तन्वो३ रपः ॥ १० ॥

अति । विश्वाः । परिऽस्थाः । स्तेनःऽइव । व्रजम् । अक्रमुः ।
ओषधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वः । रपः ॥ १० ॥

**वेङ्कट०** [3]अति अक्रमुः[3] सर्वाः परितः स्थितः स्तेनः इव व्रजम् प्रति । काष्ठादिनिर्मिता ओषधयः प्रच्यावयन्ति, यः कश्चिच्छरीरस्य रोगः तमिति ॥ १० ॥

[3]इति अष्टमाष्टके पञ्चमाध्याये नवमो वर्गः[3] ॥

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ११ ॥

---

१. वति वि[1]; °न्ति वि[2] अ[1]. २. °न्तीरुषो (°षे वि[1])मूको. ३-३. नास्ति मूको.

यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आऽदधे ।
[1]आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीवऽगृभः । यथा[1] ॥ ११ ॥

वेङ्कट० यत् इमाः ओषधीः पुरुषं बलिनं कुर्वन् अहम् हस्ते रुग्णस्य[2] आदधे । ततः यक्ष्मस्य रूपम् वि-नश्यति शीघ्रम्, यथा शकुनिः जीवानां ग्रहीतुर्व्याधादिति ॥ ११ ॥

यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥ १२ ॥

यस्य । ओषधीः । प्रऽसर्पथ । अङ्गम्ऽअङ्गम् । परुःऽपरुः ।
ततः । यक्ष्मम् । वि । बाधध्वे । उग्रः । मध्यमशीःऽइव ॥ १२ ॥

वेङ्कट० यस्य हे ओषधयः! प्रसर्पथ अङ्गम्-अङ्गम् पर्व-पर्व च, ततस्ततः यक्ष्मम् वि बाधध्वे, यथा उग्रः वध्यघातवृत्तिः मध्यमशीः मध्यमे स्थाने पुरस्य वर्तमानः ॥ १२ ॥

साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १३ ॥

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ।
साकम् । वातस्य । ध्राज्या । साकम् । नश्य । निऽहाकया ॥ १३ ॥

वेङ्कट० प्र गच्छ शीघ्रं गच्छता चाषेण पक्षिणा किकिदीविना च साकम्, साकम् च वातस्य वेगेन । साकम् च नश्य निहाकया । निहाकां च गोधिकामाहुः[3] ॥ १३ ॥

अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ १४ ॥

अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत ।
ताः । सर्वाः । सम्ऽविदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥

वेङ्कट० युष्माकम् अन्या अन्ययौषध्या सङ्गच्छताम् । सा च अन्या तस्याः अन्यस्याः समीपम् उप गच्छत[4] । इत्थम् ताः सर्वाः ओषधयः सङ्गताः[5] इदम्[6] मे प्र रक्षत यूयम् वचः इति ॥ १४ ॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १५ ॥

याः । फलिनीः । याः । अफलाः । अपुष्पाः । याः । च । पुष्पिणीः ।
बृहस्पतिऽप्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १५ ॥

---

१-१. निगमोऽयं या. (३,१५) द्र. २ रुरुणस्य वि[2] अ[1]; रुणस्य वि[1]. ३. कामा° मूको. ४. गत मूको ५. सदा वि[1]. ६. इमम् मूको.

**वेङ्कट०** निगदसिद्धेति ॥ १५ ॥

[1]इति अष्टमाष्टके पञ्चमाध्याये दशमो वर्गः[1] ॥

मुञ्चन्तु मा शपथ्या॒३॒दथो॑ वरु॒ण्या॑दु॒त ।
अथो॑ य॒मस्य॒ पड्बी॑शा॒त् सर्व॑स्माद्देवकिल्बि॒षात् ॥ १६ ॥

मु॒ञ्चन्तु॑ । मा॒ । श॒प॒थ्या॑त् । अथो॒ इति॑ । व॒रु॒ण्या॑त् । उ॒त ।
अथो॒ इति॑ । य॒मस्य॑ । पड्बी॑शात् । सर्व॑स्मात् । दे॒व॒ऽकि॒ल्बि॒षात् ॥ १६ ॥

**वेङ्कट०** मुञ्चन्तु मा शपथसञ्जातात् एनसः, अथो वरुणभवात् उत। वरुणोऽपि हि बध्नाति पापकृतः। अपि च यमस्य स्वभूतात् पादबन्धनान्निगलात् सर्वस्मात् एव देवानां स्वभूतादुपद्रवादिति ॥ १६ ॥

अ॒व॒पत॑न्तीरवदन् दि॒व ओष॑धय॒स्परि॑ । यं जी॒वम॒श्नवा॑महै॒ न स रि॑ष्याति॒ पूरु॑षः ॥१७॥

अ॒व॒ऽपत॑न्तीः । अ॒व॒द॒न् । दि॒वः । ओष॑धयः । परि॑ ।
यम् । जी॒वम् । अ॒श्नवा॑महै । न । सः । रि॒ष्या॒ति॒ । पुरु॑षः ॥ १७ ॥

**वेङ्कट०** द्युलोकाद् अवपतन्त्यः ओषधयः इत्थम् अवदन्—यम् जीवन्तम् एव वयम् प्राप्नुमः, न[२] सः रिष्यतु पुरुषः इति ॥ १७ ॥

या ओष॑धीः॒ सोम॑राज्ञीर्ब॒ह्वीः श॒तवि॑चक्षणाः ।
तासा॑म॒सि त्वम॑स्युत्त॒मारं॒ कामा॑य॒ शं हृ॒दे ॥ १८ ॥

याः । ओष॑धीः । सोम॑ऽराज्ञीः । ब॒ह्वीः । श॒त॒ऽवि॑चक्षणाः ।
तासा॑म् । त्वम् । अ॒सि॒ । उ॒त्ऽत॒मा । अर॑म् । कामा॑य । शम् । हृ॒दे ॥ १८ ॥

**वेङ्कट०** याः[३] ओषधयः सोमराजिकाः[४] बह्वयः बहुदर्शनाः[५], तासाम् सर्वासाम् त्वम् असि उत्तमा इति सोममाह, पर्याप्तम् कामाय सुखकरी हृदयायेति ॥ १८ ॥

या ओष॑धीः॒ सोम॑राज्ञी॒र्विष्ठि॑ताः पृथि॒वीमनु॑ ।
बृह॒स्पति॑प्रसूता अ॒स्यै सं द॑त्त वी॒र्य॑म् ॥ १९ ॥

याः । ओष॑धीः । सोम॑ऽराज्ञीः । विऽस्थि॑ताः । पृ॒थि॒वीम् । अनु॑ ।
बृह॒स्पति॑ऽप्रसूताः । अ॒स्यै । सम् । द॒त्त॒ । वी॒र्य॑म् ॥ १९ ॥

**वेङ्कट०** एवंविधाः यूयम् अस्यै रुग्णस्य[६] तन्वे[७] बृहस्पतिप्रसूताः वीर्यम् [८]सम् दत्त[८] ॥ १९ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[१]. ३. नास्ति वि[२] अ[१]. ४. °राजकाः मूको. ५. °शनिकाः वि[२] अ[१]. ६. रुक्नस्य वि[२] अ[१]; रुग्रस्य वि[१]. ७. तन्वै वि[१]. ८. सन्दन्त वि[२] अ[१]; सन्दत् तथा वि[१].

मा वो रिषत् खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥ २० ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥ २० ॥

**वेङ्कट०** मा वः रिषत् खनिता, यस्मै च अहम् खनामि युष्मान् मूलापेक्षया । द्विपत् इति स्पष्टम् ॥ २० ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥ २१ ॥

याः । च । इदम् । उपऽशृण्वन्ति । याः । च । दूरम् । पराऽगताः ।
सर्वाः । सम्ऽगत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्यम् ॥ २१ ॥

**वेङ्कट०** याः च इदम् मदीयं स्तोत्रम् उपशृण्वन्ति । अवशिष्टं स्पष्टम्[1] ॥ २१ ॥

ओषधयः सं वदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥ २२ ॥

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा । यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥

**वेङ्कट०** ओषधयः संवादं कुर्वन्ति सोमेन सह राज्ञा — यस्मै अस्मान् रुग्णाय[2] करोति ब्राह्मणः, तम् [3]राजन्! वयं[3] पारयामः नान्यमिति ॥ २२ ॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सोऽस्माकं यो अस्माँ अभिदासति ॥ २३ ॥

त्वम् । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ।
उपस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ २३ ॥

**वेङ्कट०** त्वम् ओषधीनाम् उत्तमः असि सोम! ओषधे!, तव अन्ये वृक्षाः उपस्तयः अधःशायिनः । तथा सति उपस्तिः अस्तु सः अस्माकम्, यः अस्मान् अभिहिनस्ति भ्रातृव्य इति ॥ २३ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये एकादशो वर्गः[4] ॥

## [ ९८ ]

[4]आर्ष्टिषेणो देवापिः ( वृष्टिकामः ) ऋषिः । देवा देवता । त्रिष्टुप् छन्दः[4] ।

बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा ।
आदित्यैर्वा यद्वसुभिर्मरुत्वान्त्स पर्जन्यं शंतनवे वृषाय ॥ १ ॥

---

१. नास्ति वि[2] अ[1]. २. रुक्काथ वि[1]; गृह्णाय वि[2]. ३-३. राजा स यं वि[2] अ[1].
४-४. नास्ति मूको.

बृहस्पते । प्रति । मे । देवताम् । इहि । मित्रः । वा । यत् । वरुणः । वा । असि । पूषा
आदित्यैः । वा । यत् । वसुऽभिः । मरुत्वान् । सः । पर्जन्यम् । शम्ऽतनवे । वृषय ॥ १ ॥

**वेङ्कट०** आर्ष्टिषेणो देवापिर्वृष्टिकामो देवानस्तौत्[१]। तत्र[२] यास्कः ( २, १० ) — 'देवापिश्चार्ष्टिषेणः शन्तनुश्च[३] कौरव्यौ भ्रातरौ बभूवतुः। स शन्तनुः कनीयानभिषेचयाञ्चक्रे[४]। देवापिस्तपः प्रेतिपेदे। ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष। तमूचुर्ब्राह्मणाः। अधर्मस्त्वयाऽऽचरितः। ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम्। [५]तस्मात्ते देवो[५] न वर्षतीति। स शन्तनुर्देवापिं शिशिक्ष राज्येन। तमुवाच देवापिः। पुरोहितस्तेऽसानि, याजयानि च त्वेति। तस्यैतत् वर्षकामस्य सूक्तम्' इति। तत्र ब्रह्मत्वे प्रवृत्तो बृहस्पतिमनुधावति।

बृहस्पते! प्रति गच्छ मम वृष्ट्यर्थं यष्टव्याम् देवताम्। यदि त्वम् मित्रः वा भवसि, यदि वा वरुणः पूषा वा, यद्वा आदित्यैः वसुभिः च सङ्गतः इन्द्रो यो वृष्टेः[६] सहायभूतः, सः त्वं भूत्वा पर्जन्यम् देवम् शन्तनवे वर्षय ॥ १ ॥

आ देवो दूतो अजिरश्चिकित्वान्त्वद्देवापे अभि मामगच्छत् ।
प्रतीचीनः प्रति मामा ववृत्स्व दधामि ते द्युमतीं वाचमासन् ॥ २ ॥

आ । देवः । दूतः । अजिरः । चिकित्वान् । त्वत् । देवऽआपे । अभि । माम् । अगच्छत् ।
प्रतीचीनः । प्रति । माम् । आ । ववृत्स्व । दधामि । ते । द्युऽमतीम् । वाचम् । आसन् ॥२॥

**वेङ्कट०** अभि[७] आ गच्छतु देवः गमनशीलः[८] कश्चित् दूतः चिकित्वान् त्वया प्रेषितस्त्वत्तो बृहस्पते! देवबन्धो!। अभिमुखः माम् प्रति आ ववृत्स्व। स्थापयामि ते दीप्तिमतीम् वाचम् आस्य इति ब्रुवाण आगच्छतु दूत इति ॥ २ ॥

अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषिराम् ।
यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ॥ ३ ॥

अस्मे इति । धेहि । द्युऽमतीम् । वाचम् । आसन् । बृहस्पते । अनमीवाम् । इषिराम् ।
यया । वृष्टिम् । शम्ऽतनवे । । वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ ३ ॥

**वेङ्कट०** अस्मासु धेहि दीप्तिमतीम् वाचम् आस्ये बृहस्पते! अमीवारहिताम् गमनशीलाम्, यया वाचा देवानिष्ट्वा वृष्टिम् शन्तनवे वनाव भजेवहि त्वं चाहं च। त्वयाऽधिष्ठितो द्युलोकात् द्रप्सः उदकम् मधुरसः आ विशतु पृथिवीमिति ॥ ३ ॥

आ नो द्रप्सा मधुमन्तो विशन्त्विन्द्र देह्यधिरथं सहस्रम् ।
नि षीद होत्रमृतुथा यजस्व देवान् देवापे हविषा सपर्य ॥ ४ ॥

---

१. °वानां स्तौति वि[२] अ[१]. २. तत वि[१]. ३. नास्ति वि[१]. ४. °नमिषेकं चक्रे वि[१] अ[१]; °नदिषवेणां चक्रे वि[१]. ५-५. अस्मात्ते रवपा वि[२] अ[१]. ६. पृष्ठे वि[२] अ[१]. ७. नास्ति वि[१]. ८. नम° वि[२] अ[१].

आ । नः । द्रप्साः । मधुऽमन्तः । विशन्तु । इन्द्र । देहि । अधिऽरथम् । सहस्रम् ।
नि । सीद । होत्रम् । ऋतुऽथा । यजस्व । देवान् । देवऽआपे । हविषा । सपर्य ॥ ४ ॥

वेङ्कट० आ विशन्तु अस्मान् मधुमन्तः द्रप्साः । इन्द्र! ईश्वर! बृहस्पते! अस्मभ्यम् देहि[1] अधिरथम् सहस्रम् पशून् । यस्य सहस्रस्य रथोऽधिकं तथोक्तम् । नि षीद आर्त्विज्यं कर्तुम् । काले च यजस्व देवान् । देवापे! बृहस्पते! हविषा [2]परिचर तान्[2] ॥ ४ ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥ ५ ॥

आर्ष्टिषेणः । होत्रम् । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिम् । चिकित्वान् ।
सः । उत्ऽतरस्मात् । अधरम् । समुद्रम् । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥ ५ ॥[3]

वेङ्कट० ऋष्टिषेणस्य पुत्रः होत्रम् कर्तुम् निषीदन् ऋषिः देवापिः देवानां कल्याणीं मतिम् चिकित्वान् । सः उत्तरस्मात् अन्तरिक्षाख्यात् समुद्रात् अधरम् पार्थिवम् समुद्रम् अभि दिव्याः अपः विसृजतु[4] वर्षभवाः ॥ ५ ॥

अस्मिन्त्समुद्रे अध्युत्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन् ।
ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु ॥ ६ ॥

अस्मिन् । समुद्रे । अधि । उत्ऽतरस्मिन् । आपः । देवेभिः । निऽवृताः । अतिष्ठन् ।
ताः । अद्रवन् । आर्ष्टिषेणेन । सृष्टाः । देवऽआपिना । प्रऽइषिताः । मृक्षिणीषु ॥ ६ ॥

वेङ्कट० अस्मिन् पार्थिवे समुद्रे तथा उत्तरस्मिन् आपः देवैः निरुद्धाः तिष्ठन्ति । ताः प्रस्रवन्ति आर्ष्टिषेणेन देवापिना सृष्टाः [5]प्रेषिताः मृष्टवतीषु परिमृष्टासु रुक्षासुं[5] स्थलीषु ॥ ६ ॥

[6]इति अष्टमाष्टके पञ्चमाध्याये द्वादशो वर्गः[6] ॥

यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥ ७ ॥

यत् । देवऽआपिः । शम्ऽतनवे । पुरःऽहितः । होत्राय । वृतः । कृपयन् । अदीधेत् ।
देवऽश्रुतम् । वृष्टिऽवनिम् । रराणः । बृहस्पतिः । वाचम् । अस्मै । अयच्छत् ॥ ७ ॥[3]

वेङ्कट० यदा देवापिः शन्तनवे भ्रात्रे पुरोहितः होत्राय वृतः कृपायमाणः अन्वध्यायत् देवश्रुतम्, देवा एनं शृण्वन्ति, वृष्टियाचिनम् । रममाणः तदानीम् बृहस्पतिः वाचम् अस्मै देवापये प्र-अयच्छत् ॥ ७ ॥

---

१. धेहि वि°. २-२. °रत मूको. ३. या. ( २,११-१२ ) व्याख्याता द्र. ४. °जन्तु मूको. ५-५. °तीमुपरि सृष्टारुक्षा° मूको. ६-६. नास्ति मूको.

यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे ।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम् ॥ ८ ॥

यम् । त्वा । देवऽआपिः । शुशुचानः । अग्ने । आर्ष्टिषेणः । मनुष्यः । सम्ऽईधे ।
विश्वेभिः । देवैः । अनुऽमद्यमानः । प्र । पर्जन्यम् । ईरय । वृष्टिऽमन्तम् ॥ ८ ॥

**वेङ्कट०** यम् त्वा देवापिः ज्वलन् अग्ने! आर्ष्टिषेणः मनुष्यः समीधे[1] सामिधेनीभिः, स त्वं विश्वैः देवैः अनुमोद्यमानः प्र ईरय पर्जन्यम् वृष्टिमन्तम् ॥ ८ ॥

त्वां पूर्व ऋषयो गीर्भिरायन् त्वामध्वरेषु पुरुहूत विश्वे ।
सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ॥ ९ ॥

त्वाम् । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वाम् । अध्वरेषु । पुरुऽहूत । विश्वे ।
सहस्राणि । अधिऽरथानि । अस्मे इति । आ । नः । यज्ञम् । रोहित्ऽअश्व । उप । याहि ॥९॥

**वेङ्कट०** त्वाम् पूर्वे ऋषयः स्तुतिभिः आयन्, त्वाम् यज्ञेषु पुरुहूत! सर्वे। स त्वम् सहस्राणि अधिरथानि अस्मभ्यम् शन्तनुना दक्षिणात्वेन कल्पितानि प्रयच्छन् उप आ[2] याहि अस्माकम् यज्ञम् रोहिदश्व! ॥ ९ ॥

एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।
तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥ १० ॥

एतानि । अग्ने । नवतिः । नव । त्वे इति । आऽहुतानि । अधिऽरथा । सहस्रा ।
तेभिः । वर्धस्व । तन्वः । शूर । पूर्वीः । दिवः । नः । वृष्टिम् । इषितः । रिरीहि ॥ १० ॥

**वेङ्कट०** एतानि अग्ने! गवाम् नवतिः नव च तथाऽधिरथम् च सहस्रम् त्वयि दक्षिणात्वेन आहुतानि। तैः वर्धयन्[3] मनुष्याणां बहूनि शरीराणि अनावृष्टिकर्शितानि शूर! दिवः नः वृष्टिम् प्रेषितः प्रयच्छ ॥१०॥

एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इन्द्राय भागम् ।
विद्वान् पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥ ११ ॥

एतानि । अग्ने । नवतिम् । सहस्रा । सम् । प्र । यच्छ । वृष्णे । इन्द्राय । भागम् ।
विद्वान् । पथः । ऋतुऽशः । देवऽयानान् । अपि । औलानम् । दिवि । देवेषु । धेहि ॥ ११ ॥

**वेङ्कट०** एतानि अग्ने! गवाम् नवतिम् सहस्राणि च इन्द्रस्य भागभूतानि वर्षित्रे इन्द्राय तत्प्रीत्यर्थम् ऋत्विग्भ्यः प्र यच्छ। विद्वान् मार्गान् काले-काले देवयानान् अपि च उलानकुलजातं शन्तनुम्[1] दिवि देवेषु धेहि ॥ ११ ॥

अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध ।
अस्मात् समुद्राद् बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥ १२ ॥

---

१. नास्ति वि[2] अ[1]. २. नास्ति वि[1]. ३. शन्तनितुं वि[2]; शन्तनिनं अ[1]; शन्तनुः वि[1].

अग्ने। बाधस्व। वि। मृधः। वि। दुःऽगहा। अप। अमीवाम्। अप। रक्षांसि। सेध। अस्मात्।
समुद्रात्। बृहतः। दिवः। नः। अपाम्। भूमानम्। उप। नः। सृज। इह॥ १२॥

**वेङ्कट०** अग्ने! वि बाधस्व शत्रून्। वि बाधस्व च दुःखेन गाहितव्यानि। अप सेध अमीवाम्। अप सेध च रक्षांसि। स[१] त्वम् अस्मात् समुद्रात् महतः दीप्तात् अस्माकम् अपाम् भूमानम् उप सृज अस्मिन् लोक इति॥ १२॥

[२]इति अष्टमाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[२]॥

[ ९९ ]

[२]वम्रो वैखानस ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[२]।

कं नश्चित्रमिषण्यसि चिकित्वान् पृथुग्मानं वाश्रं वावृधध्यै।
कत् तस्य दातु शवसो व्युष्टौ तक्षद्वज्रं वृत्रतुरमपिन्वत्॥ १॥

कम्। नः। चित्रम्। इषण्यसि। चिकित्वान्। पृथुऽग्मानम्। वाश्रम्। ववृधध्यै।
कत्। तस्य। दातु। शवसः। विऽउष्टौ। तक्षत्। वज्रम्। वृत्रऽतुरम्। अपिन्वत्॥ १॥

**वेङ्कट०** वम्रो वैखानसः। कम् अस्माकम् चित्रम् प्रेरयसि जानन् पृथोः शत्रोरभिगन्तारम् वाशनशीलम् [३]वर्धनाय वज्रम्[३]। किं च तस्य दानम् भवति बलस्य व्युष्टौ। यम् वज्रम् वृत्रतुरम् त्वष्टा[४] तुभ्यम् अतक्षत् असिञ्चच्[५]॥ १॥

स हि द्युता विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद।
स सनीळेभिः प्रसहानो अस्य भ्रातुर्न ऋते सप्तथस्य मायाः॥ २॥

सः। हि। द्युता। विऽद्युता। वेति। साम। पृथुम्। योनिम्। असुरऽत्वा। आ। ससाद।
सः। सऽनीळेभिः। प्रऽसहानः। अस्य। भ्रातुः। न। ऋते। सप्तथस्य। मायाः॥ २॥[६]

**वेङ्कट०** सः हि द्योतमानया विद्युता सहितः अभिगच्छति यज्ञेषु गीयमानम् साम पृथु च बर्हिः बलेन युक्तः सीदति। सः सनीडैः[७] मरुद्भिः अभिभवन् [८]भवति शत्रून्। अस्य[८] आदित्यानां सप्तमस्य भ्रातुः इन्द्रस्य यज्ञे राक्षसैः प्रयुक्ताः मायाः न विद्यन्ते॥ २॥

स वाजं यातापदुष्पदा यन्त्स्वर्षाता परि षदत् सनिष्यन्।
अनर्वा यच्छतदुरस्य वेदो घ्नञ्छिश्नदेवाँ अभि वर्पसा भूत्॥ ३॥

सः। वाजम्। याता। अपदुःऽपदा। यन्। स्वःऽसाता। परि। सदत्। सनिष्यन्।
अनर्वा। यत्। शतऽदुरस्य। वेदः। घ्नन्। शिश्नऽदेवान्। अभि। वर्पसा। भूत्॥ ३॥

---

१. नास्ति वि[१]. २-२. नास्ति मूको. ३-३. वर्धमानवज्रम् मूको. ४. यद्या मूको. ५. असिच° अ[१]. ६. तु. ऋ १,१००,५;५,२,९;७,९८,५. ७. सघनीलैः वि[२] अ[१]; सप्तनीलैः वि[१]. ८-८. अस्यति शत्रून् वि[१] अ[१]; अस्य वि[१].

**वेङ्कट०** सः सङ्ग्रामम् याता अपगतदुष्टपतनेन रथेन गच्छन् सङ्ग्रामे परि-षीदति शत्रुधनानि[1] सनिष्यन्। अप्रत्यृतः इन्द्रः यत्[2] धनं शतद्वारस्य [3]शत्रुपुरस्यान्तर्निहितं तद् धनम्[3] वारकेण बलेन अभि भवति तेषु द्वारेषु स्थितान् शिश्नक्रीडान् घ्नन् ॥ ३ ॥

स यह्व्यो३ऽवनीर्गोष्वर्वा जुहोति प्रधन्यासु सस्निः ।
अपादो यत्र युज्यासोऽरथा द्रोण्यश्वास ईरते घृतं वाः ॥ ४ ॥

सः । यह्व्यः । अवनीः । गोषु । अर्वा । आ । जुहोति । प्रऽधन्यासु । सस्निः ।
अपादः । यत्र । युज्यासः । अरथाः । द्रोणिऽअश्वासः । ईरते । घृतम् । वारिति वाः ॥ ४ ॥

**वेङ्कट०** सः इन्द्रो महतीः अपः पृथिवीषु अप्रत्यृतः आ क्षिपति[4] प्रकर्षेण धननिमित्तासु सरणशीलः[5], पादरहिताः इन्द्रस्य सख्यो नद्यः यत्र रथवर्जिताः द्रुताश्वाः प्रेरयन्ति क्षरणशीलम् उदकम् ॥४॥

स रुद्रेभिरशस्तवार ऋभ्वा हित्वी गयमारेअवद्य आगात् ।
वम्रस्य मन्ये मिथुना विवव्री अन्नमभीत्यारोदयन्मुषायन् ॥ ५ ॥

सः । रुद्रेभिः । अशस्तऽवारः । ऋभ्वा । हित्वी । गयम् । आरेऽअवद्यः । आ । अगात् ।
वम्रस्य । मन्ये । मिथुना । विवव्री इति विऽवव्री । अन्नम् । अभिऽइत्य । अरोदयत् । मुषायन् ॥

**वेङ्कट०** सः स्तोतृभिः अप्रार्थितधनः स्वयमेव[6] प्रयच्छन् महान् हित्वा आत्मीयं गृहम् दूरेऽवद्यः आ जगाम[7]। वम्रस्य मम मातापितरौ विगतजरौ इन्द्रप्रसादाद् अवगच्छामि। सोऽयं वम्रः शत्रूणाम् अन्नम् अभीत्य मुष्णन् रोदयति ॥ ५ ॥

स इद्दासं तुवीरवं पतिर्दन् षळक्षं त्रिशीर्षाणं दमन्यत् ।
अस्य त्रितो न्वोजसा वृधानो विपा वराहमयोअग्रया हन् ॥ ६ ॥

सः । इत् । दासम् । तुविऽरवम् । पतिः । दन् । षट्ऽअक्षम् । त्रिऽशीर्षाणम् । दमन्यत् ।
अस्य । त्रितः । नु । ओजसा । वृधानः । विपा । वराहम् । अयःऽअग्रया । हन्निति हन् ॥ ६ ॥

**वेङ्कट०** सः एव उपक्षपयितारम् बहुशब्दम् स्वामी दमयन् 'षडक्षम् त्रिशीर्षाणम्' त्वाष्ट्रं विश्वरूपं दमितवान्। अस्य इन्द्रस्य बलेन वर्धमानः त्रितः ऋषिः अयोग्रया अङ्गुल्या वराहम्[8] हतवान्[10] ॥६॥

[11]इति अष्टमाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[11] ॥

स द्रुह्वणे मनुष ऊर्ध्वसान आ साविषदर्शसानाय शरुम् ।
स नृतमो नहुषोऽस्मत् सुजातः पुरोऽभिनदर्हन् दस्युहत्ये ॥ ७ ॥

---

१. °त्रुसनानि वि[1]. २. यम् मूको. ३-३. °हितद्धनं वि[2] अ[1]; °हितं धनं वि[1]. ४. °पन्ती मूको. ५. क्षणशी° मूको. ६. स्वमे मूको. ७. °मसोऽन्नम् मूको. ८-८. ···शी° वि[2] अ[1]. ९. पराहन् वि[1]. १०. हन्तव्यान् अ[1]; हन्तवान् वि[1,2]. ११-११. नास्ति मूको.

सः । द्रुह्वणे । मनुषे । ऊर्ध्वऽसानः । आ । साविषत् । अर्शसानाय । शरुम् ।
सः । नृऽतमः । नहुषः । अस्मत् । सुऽजातः । पुरः । अभिनत् । अर्हन् । दस्युऽहत्ये ॥ ७ ॥

**वेङ्कट०** सः द्रुह्वाणाय(? द्रुह्यमाणा°) मनुष्याय ऊर्ध्वीभवन् आभिमुख्येन प्रसौति हिंसित्रे बाधकम् आयुधम् । सः नेतृतमः 'मनुष्यः अस्मदर्थम्' शोभनजननः पुरीः अभिनत् अर्हन् सङ्ग्रामे ॥ ७ ॥

सो अभ्रियो न यवस उदन्यन् क्षयाय गातुं विदन्नो अस्मे ।
उप यत् सीददिन्दुं शरीरैः श्येनोऽयोपाष्टिर्हन्ति दस्यून् ॥ ८ ॥

सः । अभ्रियः । न । यवसे । उदन्यन् । क्षयाय । गातुम् । विदत् । नः । अस्मे इति ।
उप । यत् । सीदत् । इन्दुम् । शरीरैः । श्येनः । अयःऽअपाष्टिः । हन्ति । दस्यून् ॥ ८ ॥

**वेङ्कट०** सः[1] अभ्रसङ्घः इव यवसार्थम्[1] उदकं दातुमिच्छन् निवासाय अस्माकं मार्गम् विदत् । नः इति पूरणम् । उप सीदति यदा अङ्गैः सोमम्, तदानीम् अयं श्येनसदृशः अयोऽपाष्टिः अयोमयपार्ष्णि-प्रदेशः हन्ति शत्रून् ॥ ८ ॥

स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात् ।
अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ॥ ९ ॥

सः । व्राधतः । शवसानेभिः । अस्य । कुत्साय । शुष्णम् । कृपणे । परा । अदात् ।
अयम् । कविम् । अनयत् । शस्यमानम् । अत्कम् । यः । अस्य । सनिता । उत । नृणाम् ॥ ९ ॥

**वेङ्कट०** सः [4]महतः शत्रून्† बलवद्भिः आयुधैः[4] अस्यति । कुत्साय शुष्णम् असुरम् स्तोत्रे[5] हि आत्मवशम्[6] अनयत् । अयम्[7] इन्द्रः कविम् नयति स्तोतृभिः शस्यमानम्, अस्य इन्द्रस्य स्वरूपम् स्तुतिभिः यः सनिता अपि चास्य सहायानां नेतॄणां मरुतामिति ॥ ९ ॥

अयं दशस्यन् नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी ।
अयं कनीन ऋतुपा अवेद्यमिमीतारुं यश्चतुष्पात् ॥ १० ॥

अयम् । दशस्यन् । नर्येभिः । अस्य । दस्मः । देवेभिः । वरुणः । न । मायी ।
अयम् । कनीनः । ऋतुऽपाः । अवेदि । अमिमीत । अररुम् । यः । चतुःऽपात् ॥ १० ॥

**वेङ्कट०** अयम् दातुमिच्छन् नृहितैः मरुद्भिः सह अस्यति[8] शत्रून् दर्शनीयः देवैः [9]वरुणः इव प्रज्ञावान् । अयम् कमनीयः[9] ऋतौ सोमस्य पाता ज्ञातः, हिंसितवान् यः अररुम् असुरम्, योऽररुः चतुष्पात् इति ॥ १० ॥

---

१-१. °ब्यास्म° वि[1] अ[1]. २. सायं सः मूको. ३. यत्रार्थम् मूको. ४-४. °तो···रायु° वि[2] अ[1]. † तु. निघ २,३. ५. तु. निघ ३,१४. ६. आव° वि[2] अ[1]; न्याव° वि[1]. ७. नास्ति वि[2] अ[1]. ८. अस्येति वि[1]; अस्यन्ति वि[2] अ[1]. ९-९. वरुणपुत्रायो वै वरुणय वि[1]; वरुणपुत्राय वि[2] अ[1].

अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरयद्वृषभेण पिप्रोः ।
सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्पसा भूत् ॥ ११ ॥

अस्य । स्तोमेभिः । औशिजः । ऋजिश्वा । व्रजम् । दरयत् । वृषभेण । पिप्रोः ।
सुत्वा । यत् । यजतः । दीदयत् । गीः । पुरः । इयानः । अभि । वर्पसा । भूत् ॥ ११ ॥

**वेङ्कट०** अस्य स्तोत्रैः [1]उशिजः पुत्रः[1] ऋजिश्वा [2]पिप्रोः गोष्ठान्[2] दारितवान् वज्रेण, सोमस्य सोता यष्टा औशिजो यदा दीदयत् स्तुतीः यदा च शत्रुपुराणि गच्छन् अभि अभूद् वारकेण वज्रेण ॥ ११ ॥

एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम् ।
स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥ १२ ॥

एव । महः । असुर । वक्षथाय । वम्रकः । पट्ऽभिः । उप । सर्पत् । इन्द्रम् ।
सः । इयानः । करति । स्वस्तिम् । अस्मै । इषम् । ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभारित्यभाः ॥

**वेङ्कट०** एवम् महतः बलवन्! वहनाय वम्रकः पादैः उप सर्पत् इन्द्रम् । सः उपगम्यमानः करोतु स्वस्तिम् अस्मै, अन्नम् रसम् सुक्षितिम् च सर्वमिदम् आ हरतु ॥ १२ ॥

[3]इति अष्टमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[3] ॥

## [ १०० ]

[1]दुवस्युर्वान्दन ऋषिः । विश्वे देवा देवता । जगती छन्दः, द्वादशी त्रिष्टुप्[1] ।

इन्द्र दृह्य मघवन्त्वावदिद् भुज इह स्तुतः सुतपा बोधि नो वृधे ।
देवेभिर्नः सविता प्रावतु श्रुतमा सर्वतातिमदितिं वृणीमहे ॥ १ ॥

इन्द्र । दृह्य । मघऽवन् । त्वाऽवत् । इत् । भुजे । इह । स्तुतः । सुतऽपाः । बोधि । नः । वृधे ।
देवेभिः । नः । सविता । प्र । अवतु । श्रुतम् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १ ॥

**वेङ्कट०** दुवस्युर्वान्दनः[4] । इन्द्र! स्थापय अस्मान् [5]त्वया तद्वतो(?)[5] भोगाय । इह स्तुतः सुतस्य पाता बुध्यस्व अस्माकम् वर्धनाय । देवैः सह सविता अस्माकम् स्तोत्रम् प्र रक्षतु । आ वृणीमहे सर्वस्य तनित्रीम् अदितिम् ॥ १ ॥

भराय सु भरत भागमृत्वियं प्र वायवे शुचिपे क्रन्ददिष्टये ।
गौरस्य यः पयसः पीतिमानश आ सर्वतातिमदितिं वृणीमहे ॥ २ ॥

भराय । सु । भरत । भागम् । ऋत्वियम् । प्र । वायवे । शुचिऽपे । क्रन्दतऽइष्टये ।
गौरस्य । यः । पयसः । पीतिम् । आनशे । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ २ ॥

---

१-१. °जपु° मूको. २-२. विप्रो···वि[2] अ[1]. ३-३. नास्ति मूको. ४. उपस्यु° वि[2] अ[1].
५-५. तु. ऋ ५,३१,२; त्वत्सदृशम् इति सा.

वेङ्कट० भर्त्रे देवेन्द्राय सु[1] भरत भागम् काले जातम्। प्र भरत वायवे च सोमस्य पात्रे शब्द-युक्तगमनाय। गौरवर्णस्य पशोः यः पयसः पीतिम्[2] प्राप्नोति ॥ २ ॥

आ नो॑ दे॒वः स॑वि॒ता सा॑विष॒द्वय॑ ऋजू॒य॒ते यज॑मानाय सुन्व॒ते ।
यथा॑ दे॒वान् प्र॑ति॒भूषे॑म पाक॒वदा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ३ ॥

आ । न॒ः । दे॒वः । स॒वि॒ता । सा॒वि॒ष॒त् । वय॑ः । ऋ॒जु॒ऽय॒ते । यज॑मानाय । सु॒न्व॒ते ।
यथा॑ । दे॒वान् । प्र॒ति॒ऽभूषे॑म । पा॒क॒ऽव॒त् । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥ ३ ॥

वेङ्कट० आ साविषत् अस्माकम् देवः सविता अन्नम् ऋजुकामाय यजमानाय सुन्वते, यथा[3] देवान्[4] प्रतिभवेम पक्वैः हविर्भिः तद्वत्[5] ॥ ३ ॥

इन्द्रो॑ अ॒स्मे सु॒मना॑ अस्तु वि॒श्वहा॒ राजा॒ सोम॑ः सुवि॒तस्याध्ये॑तु नः ।
यथा॑यथा मि॒त्रधि॑तानि संद॒धुरा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ४ ॥

इन्द्र॑ः । अ॒स्मे इति॑ । सु॒ऽमना॑ः । अ॒स्तु॒ । वि॒श्वहा॑ । राजा॑ । सोम॑ः । सु॒वि॒तस्य॑ । अधि॑ । ए॒तु॒ । न॒ः ।
यथा॑ऽयथा । मि॒त्रऽधि॑तानि । स॒म्ऽद॒धुः । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥ ४ ॥

वेङ्कट० इन्द्रः अस्माकम् सुमनाः अस्तु सर्वदा। राजा सोमः च सुवितं स्तोत्रम् अस्माकम् अधि गच्छतु। यथा-यथा अस्माकं देवाः मित्रनिहितानि धनानि संदधुः ॥ ४ ॥

इन्द्र॑ उ॒क्थेन॒ शव॑सा॒ परु॑र्दधे॒ बृह॑स्पते प्रत॒री॒तास्यायु॑षः ।
य॒ज्ञो मनु॒ः प्रम॑तिर्नः पि॒ता हि क॒मा स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ५ ॥

इन्द्र॑ः । उ॒क्थेन॑ । शव॑सा । परु॑ः । द॒धे॒ । बृह॑स्पते । प्र॒ऽत॒री॑ता । अ॒सि॒ । आयु॑षः ।
य॒ज्ञः । मनु॑ः । प्रऽम॑तिः । न॒ः । पि॒ता । हि । क॒म् । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥

वेङ्कट० इन्द्रः स्तुत्येन बलेन परुः धारयति। बृहस्पते! प्रवर्धयिता भवसि आयुषः। यज्ञः मन्ता प्रकृष्टमतिः नः पाता सुखम् प्रयच्छतु ॥ ५ ॥

इन्द्र॑स्य॒ नु सुकृ॑तं॒ दैव्यं॒ सहो॒ऽग्निर्गृ॒हे ज॑रि॒ता मेधि॑रः क॒विः ।
य॒ज्ञश्च॑ भूद्वि॒दथे॒ चारु॒रन्त॑म॒ आ स॒र्वता॑ति॒मदि॑तिं वृणीमहे ॥ ६ ॥

इन्द्र॑स्य । नु । सु॒ऽकृ॑तम् । दैव्य॑म् । सह॑ः । अ॒ग्निः । गृ॒हे । ज॒रि॒ता । मेधि॑रः । क॒विः ।
य॒ज्ञः । च॒ । भू॒त् । वि॒दथे॑ । चारु॑ः । अन्त॑मः । आ । स॒र्वऽता॑तिम् । अदि॑तिम् । वृ॒णी॒म॒हे॒ ॥ ६ ॥

वेङ्कट० इन्द्रस्य खलु सुष्ठु कृतम् देवार्हम् बलम् अग्निः गृहे वर्तते देवानां स्तोता प्राज्ञः कविः, यज्ञः च भवति गृहे चारुः अन्तिकतमः ॥ ६ ॥

[6]इति अष्टमाष्टके पञ्चमाध्याये षोडशो वर्गः[6] ॥

---

१. प्र मूको. २. पतिं वि[1] अ[1] ३. यदा मूको. ४. देवो वि[2] अ[1]; देवा वि[1]. ५. नास्ति वि[1] अ[1]. ६-६. नास्ति मूको.

न वो गुहा चकृम भूरि दुष्कृतं नाविष्ट्यं वसवो देवहेळनम् ।
माकिर्नो देवा अनृतस्य वर्पस आ सर्वतातिमदितिं वृणीमहे ॥ ७ ॥

न । वः । गुहा । चकृम । भूरि । दुःऽकृतम् । न । आविःऽत्यम् । वसवः । देवऽहेळनम् ।
माकिः । नः । देवाः । अनृतस्य । वर्पसः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ७ ॥

**वेङ्कट०** न युष्माकम् प्रच्छन्ने देशे चकृम भूरि पापम् । न च आविर्भूतम् वसवः! चकृम देवानां हेडनम्[1] । मा अस्माकम् देवाः! अनृतस्य रूपस्य [2]प्राप्तिः भवतु[2] ॥ ७ ॥

अपामीवां सविता साविषन्न्य१ग्वरीय इदप सेधन्त्वद्रयः ।
ग्रावा यत्र मधुषुदुच्यते बृहदा सर्वतातिमदितिं वृणीमहे ॥ ८ ॥

अप । अमीवाम् । सविता । साविषत् । न्यक् । वरीयः । इत् । अप । सेधन्तु । अद्रयः ।
ग्रावा । यत्र । मधुऽसुत् । उच्यते । बृहत् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ८ ॥

**वेङ्कट०** अप गमयतु सविता अमीवाम् । नीचीनम् उरुतरं पापम् अद्रयः अप सेधन्तु । ग्रावा यत्र सोमसुत् स्तूयते अत्यन्तम्[3] ॥ ८ ॥

ऊर्ध्वो ग्रावा वसवोऽस्तु सोतरि विश्वा द्वेषांसि सनुतर्युयोत ।
स नो देवः सविता पायुरीड्य आ सर्वतातिमदितिं वृणीमहे ॥ ९ ॥

ऊर्ध्वः । ग्रावा । वसवः । अस्तु । सोतरि । विश्वा । द्वेषांसि । सनुतः । युयोत ।
सः । नः । देवः । सविता । पायुः । ईड्यः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ९ ॥

**वेङ्कट०** अभिषवाय ऊर्ध्वः ग्रावा वसवः! अस्तु अभिषोतरि । विश्वान् शत्रून् अन्तर्हितान् पृथक् कुरु । सः नः देवः सविता रक्षकः स्तोतव्यः ॥ ९ ॥

ऊर्जं गावो यवसे पीवो अत्तन ऋतस्य याः सदने कोशे अङ्ध्वे ।
तनूरेव तन्वो अस्तु भेषजमा सर्वतातिमदितिं वृणीमहे ॥ १० ॥

ऊर्जम् । गावः । यवसे । पीवः । अत्तन । ऋतस्य । याः । सदने । कोशे । अङ्ध्वे ।
तनूः । एव । तन्वः । अस्तु । भेषजम् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ १० ॥

**वेङ्कट०** रसम्[4] हे गावः! सतृणे देशे अन्नम् च अत्तन, यज्ञस्य याः सदने कोशे गृहीतं ग्रहणमिश्रणेन अङ्ध्वे[5] । युष्मत्तनुप्रभवं क्षीरमेव अस्माकम् [6]तन्वः अस्तु[6] भेषजम् ॥ १० ॥

---

१. नास्ति मूको. २-२. भवत मूको. ३. अत्यन्नम् वि[2] अ[1]; अत्यर्थः वि[1]. ४. रंहसे वि[2] अ[1]. ५. अन्ध्ये वि[2] अ[1]; अङ्ध्वे वि[1]. ६-६. तयोस्तु वि[2] अ[1]; तजोस्तु वि[1].

क्रतुप्रावा जरिता शश्वतामव इन्द्र इद् भद्रा प्रमतिः सुतावताम् ।
पूर्णमूधर्दिव्यं यस्य सिक्तय आ सर्वतातिमदितिं वृणीमहे ॥ ११ ॥

क्रतुऽप्रावा । जरिता । शश्वताम् । अवः । इन्द्रः । इत् । भद्रा । प्रऽमतिः । सुतऽवताम् ।
पूर्णम् । ऊधः । दिव्यम् । यस्य । सिक्तये । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ११ ॥

**वेङ्कट०** कर्मणां पूरयिता जरयिता बहूनाम् रक्षकः इन्द्रः एव भद्रा प्रमतिः यजमानानाम्, यस्य दिव्यम् पूर्णम् ऊधः पृथिव्याः सेचनाय भवति ॥ ११ ॥

चित्रस्ते भानुः क्रतुप्रा अभिष्टिः सन्ति स्पृधो जरणिप्रा अधृष्टाः ।
रजिष्ठया रज्या पश्व आ गोस्तूतूर्षति पर्यग्रं दुवस्युः ॥ १२ ॥

चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । सन्ति । स्पृधः । जरणिऽप्राः । अधृष्टाः ।
रजिष्ठया । रज्या । पश्वः । आ । गोः । तूतूर्षति । परि । अग्रम् । दुवस्युः ॥ १२ ॥

**वेङ्कट०** चित्रः ते रश्मिः कर्मणां पूरकः अभ्येषणशीलः। सन्ति च तव स्पर्धाः स्तोतृणां पूरयिन्यः [१]शत्रुभिः अधृष्टाः[१]। ऋजुतमया रज्ज्वा रशनया युक्तः पशोः गमनशीलस्य[२] अग्रम् परि-तरितुमिच्छति शत्रुभिर्नीयमानस्य स्तोतृणां परिचरणमिच्छन्निति ॥ १२ ॥

[३]इति अष्टमाष्टके पञ्चमाष्टके सप्तदशो वर्गः[३] ॥

[ १०१ ]

[१]बुधः सौम्य ऋषिः। विश्वे देवा ऋत्विजो वा देवता। त्रिष्टुप् छन्दः,
चतुर्थीषष्ठ्यौ गायत्र्यौ, पञ्चमी बृहती, नवमीद्वादश्यौ जगत्यौ[१]।

उद् बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ॥ १ ॥

उत् । बुध्यध्वम् । सऽमनसः । सखायः । सम् । अग्निम् । इन्ध्वम् । बहवः । सऽनीळाः ।
दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । इन्द्रऽवतः । अवसे । नि । ह्वये । वः ॥ १ ॥

**वेङ्कट०** बुधस्सौम्यश्चेष्यमाणोऽग्निमृत्विजो वदति — उद् बुध्यध्वम् समानमनस्काः हे सखायः![४], [५]सम् इन्ध्वम्[५] च अग्निम् [६]बहवः समानस्थानाः। अहं च दधिक्राम् अग्निम् उषसम् च देवीम् एतान् त्रीन् देवान् इन्द्रेण[६] युक्तान् युष्माकं रक्षणाय नि ह्वयामि ॥ १ ॥

मन्द्रा कृणुध्वं धिय आ तनुध्वं नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं प्राञ्चं यज्ञं प्र णयता सखायः ॥ २ ॥

---

१-१. °भि … वि[२] अ[१]; °भिरधृष्ट वि[१]. २. °नस्य शी° वि[२] अ[१]. ३-३. नास्ति मूको. ४. सहायः वि[२] अ[१]. ५-५. समग्निमिन्ध्वम् वि[२] अ[१]; समिन्धः वि[१]. ६-६. बह … इ° वि[२] अ[१]; बहवन्दवानिन्द्रे वि[१].

मन्द्रा । कृणुध्वम् । धियः । आ । तनुध्वम् । नावम् । अरित्रऽपरणीम् । कृणुध्वम् ।
इष्कृणुध्वम् । आयुधा । अरम् । कृणुध्वम् । प्राञ्चम् । यज्ञम् । प्र । नयत । सखायः ॥ २ ॥

**वेङ्कट०** मदहेतूनि स्तोत्राणि कृणुध्वम् । कर्माणि च कुरुध्वम्[1] । [2]तथा नावम् अरित्रैः[2] कर्षणादिभिः पारयितव्यां[3] चयनाख्याम् कृणुध्वम् । संस्कुरुत आयुधानि सीरादीनि[4] पर्याप्तम् च कृणुध्वम् प्राञ्चम् च यष्टव्यम् अग्निम् चितेऽग्नौ प्रणयत सखायः![5] ॥ २ ॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात् ॥ ३ ॥

युनक्त । सीरा । वि । युगा । तनुध्वम् । कृते । योनौ । वपत । इह । बीजम् ।
गिरा । च । श्रुष्टिः । सऽभराः । असत् । नः । नेदीयः । इत् । सृण्यः । पक्वम् । आ । इयात् ॥

**वेङ्कट०** [6]युङ्क्त बलीवर्दानां[6] सीराणि । वि तनुध्वम् च बलीवर्दानां स्कन्धेषु युगानि । संस्कृते कृष्टे च स्थाने [7]वपत अत्र[7] बीजम् । वाचा सह अस्माकम् अन्नम् सभरम्[8] भवतु[9] पक्वस्तम्बयुक्तं भवतु । नेदीयः एव अन्तिकं[10] सद् अङ्कुशं पक्वफलयुक्तं लवनाय[11] आ गच्छतु । 'वाग् वै गीरन्नं श्रुष्टिः ××× यदा वा अन्नं पच्यतेऽथ तत् सृण्योपचरन्ति' इति वाजसनेयकम् (माश ७,२,२,५) ॥ ३ ॥

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ॥ ४ ॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् । धीराः । देवेषु । सुम्नऽया ॥ ४ ॥

**वेङ्कट०** सीरा[12] युञ्जन्ति[13] कवयः युगानि च वि तन्वते पृथक् धीराः[14] देवेषु सुम्नया इति । 'यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना इत्येतत्' इति वाजसनेयकम् ( माश ७,२,२,४ ) ॥ ४ ॥

निराहावान् कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम् ॥ ५ ॥

निः । आऽहावान् । कृणोतन । सम् । वरत्राः । दधातन ।
सिञ्चामहै । अवतम् । उद्रिणम् । वयम् । सुऽसेकम् । अनुपऽक्षितम् ॥ ५ ॥

**वेङ्कट०** पानाय बलीवर्दानाम् आहावान् निष्-कुरुत । [15]अथ उदकोत्सेकार्थम्[15] उदञ्चनेषु[16] वरत्राः सम् धत्त । आहावेषु उदकवन्तम् तत्समीपस्थं कूपम् वयम् उत् सिञ्चामहै[17] शोभनोत्सेचनम् अनुपक्षीणोदकम् ॥५॥

---

१. कृणुध्वम् वि[1]. २-२. यानैररित्रैः वि[2] अ[1]; नामरित्रैः वि[1]. ३. पर्याप्तां मूको. ४ धीरा° वि[1] अ[1]. ५. त्रुटितम् मूको. ६-६ त्रुटितम् वि[2] अ[1]; °वलिभिदानानां वि[1]. ७-७. पन्यत्र वि[2] अ[1]; पतन वि[1]. ८. स ई मूको. ९. नास्ति वि[2] अ[1]. १०. एवानिष्टं मूको. ११. °नाव मूको. १२. °राच वि[2] अ[1]. १३. °न्ति सीरञ्च वि[1]. १४. वीरा वि[1] अ[1]. १५. अथे ··· सेका° मूको. १६. °दकं धनेषु मूको.

इष्कृताहावमवतं सुवरत्रं सुषेचनम् । उद्रिणं सिञ्चे अक्षितम् ॥ ६ ॥

इष्कृतऽआहावम् । अवतम् । सुऽवरत्रम । सुऽसेचनम् । उद्रिणम् । सिञ्चे । अक्षितम् ॥ ६ ॥

**वेङ्कट०** निष्कृताहावम्[1] [2]अवतम् गच्छ[2], तथा सुवरत्रम् सुषेचनम् [3]उदञ्चनम् च तत्र नय। ततश्च उदकवन्तम्[3] [4]अक्षीणोदकम् अवतम् अहम् उत्-सिञ्चे। "'सं वरत्रा दधातन' इति संप्रेष्यति। 'निष्कृताहावमवटम्' इत्यवटादुदकमाहावेषूत्सिञ्चति[4]। तेषु बलीवर्दान् पाययन्ति" ( आपश्रौ १६, १८,१-३ [ तु. तै ४,२,५,५ ] ) इति सूत्रम् ॥ ६ ॥

[5]इति अष्टमाष्टके पञ्चमाध्याये अष्टादशो वर्गः[5] ॥

प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥ ७ ॥

प्रीणीत । अश्वान् । हितम् । जयाथ । स्वस्तिऽवाहम् । रथम् । इत् । कृणुध्वम् ।
द्रोणऽआहावम् । अवतम् । अश्मऽचक्रम् । अंसत्रऽकोशम् । सिञ्चत । नृऽपानम् ॥ ७ ॥

**वेङ्कट०** आजिधावनार्थं सन्तर्पयत अश्वान्। शत्रुनिहितं धनं जयथ। स्वस्तेः प्रापकम् रथम्[6] कुरुध्वम्। अथ युद्धं कूपेनोपमिमीते — तस्य द्रुममयो रथ आहावस्थाने भवति। परितः प्रेर्यमाणानि व्याप्तान्यायुधानि चक्रस्थाने भवन्ति। कवचानि कोशस्थाने। तमिमं कूपम् अभिमतानि धनानि[7] उत्-सिञ्चत कूपादिवोदकानि पिपासव इव धनलिप्सवो यत्र धनानि लभन्ते तम् नृपाणम् इति ॥ ७ ॥

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥ ८ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् । बहुला । पृथूनि ।
पुरः । कृणुध्वम । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥ ८ ॥

**वेङ्कट०** सङ्ग्रामम् कृणुध्वम्। सः हि वः कूपः। वर्माणि[8] सीव्यध्वम् बहुलानि च पृथूनि च। शत्रुभिः अधृष्टाः आयसीः पुरः कृणुध्वम् इति च कवचाभिप्रायम्। मा वः सुस्रोत् कूपः सङ्ग्रामाख्यः। तम् कवचैः दृंहत इति ॥ ८ ॥

आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ९ ॥

---

१. निष्कृणुताभावम् मूको. २-२ अवगच्छ वि[2] अ[1]; अवरं च वि[1]. ३-३. उदकंचन···चोदकवन्तम् वि[2] अ[1]; उदकंचनं चोदकवन्तम् वि[1]. ४-४. अक्षीणमुदकवतमहमुत्सिच्च···अवटादुदकमाहावे सि° वि[2] अ[1].; अक्षीणमुदकवतमुत्सिञ्चे अवटादुदकमाहावे सि° वि[1]. ५-५. नास्ति मूको. ६. नास्ति वि[1]. ७. धानानि मूको. ८ पर्याणी वि[2] अ[1]; वीर्याणी वि[1].

आ । वः । धियम् । यज्ञियाम् । वर्ते । ऊतये । देवाः । देवीम् । यजताम् । यज्ञियाम् । इह ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ९ ॥

वेङ्कट० आ वर्तयामि युष्माकम् यज्ञसाधनं सान्निचित्यं कर्म रक्षणार्थम् । [1]हे देवाः! देवीम् यष्टव्याम्[1] यज्ञस्य धारयित्रीम् वाचं च स्तुतिरूपाम् आ-वर्तयामि । सा अस्माकम् [2]दुग्धाम् तथाऽभिगमनात्[2] कामान् यवसानि गत्वा बहुधारा महती गौः क्षीरेण यथा पुरुषाणामभिलषितं साधयति ॥ ९ ॥

**आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।**
**परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥**

[3]आ । तु । सिञ्च । हरिम् । ईम् । द्रोः । उपऽस्थे । वाशीभिः । तक्षत । अश्मन्ऽमयीभिः[3] ।
परि । स्वजध्वम् । दश । कक्ष्याभिः । उभे इति । धुरौ । प्रति । वह्निम् । युनक्त ॥ १० ॥

वेङ्कट० आ सिञ्चत क्षिप्रम् हरितवर्णम्[4] इमम् सोमं [5]द्रोणकलशस्य उपस्थे । तदर्थं[5] ग्रावमयीभिः वाशीभिः तक्षत । परि स्वजध्वम् च दशभिः अङ्गुलिभिः । अभिषुतं च सोमं हविर्धानस्य उभे धुरौ[6] प्रति युङ्ग्ध्वम्[7] पात्रेषु गृहीतम् ॥ १० ॥

**उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः ।**
**वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ॥ ११ ॥**

उभे इति । धुरौ । वह्निः । आऽपिब्दमानः । अन्तः । योनाऽइव । चरति । द्विऽजानिः ।
वनस्पतिम् । वने । आ । अस्थापयध्वम् (?) । नि । सु । दधिध्वम् । अखनन्तः । उत्सम् ॥ ११ ॥

वेङ्कट० हविर्धानस्य उभे धुरौ प्रति वोढा [8]सोमः आस्तूयमानः[8] अन्तः गृहे इव चरति [9]द्वयोः फलकयोर्जायमानः[9] । तमिमं वनानां पतिं सोमम् वने पात्रेषु आस्थापयत । खनित्रैः अखनन्तः कञ्चन उत्सम् सुष्ठु नि दधिध्वम् इति सोमाभिप्रायमिति ॥ ११ ॥

**कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये ।**
**निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ १२ ॥**

कपृत् । नरः । कपृथम् । उत् । दधातन । चोदयत । खुदत । वाजऽसातये ।
निष्टिग्र्यः । पुत्रम् । आ । च्यवय । ऊतये । इन्द्रम् । सऽबाधः । इह । सोमऽपीतये ॥ १२ ॥

वेङ्कट० हे मनुष्याः! आत्मीयम् कपृत् स्त्रीणाम् कपृथम् प्रति 'उद्-धत्त, उद्धितं' च स्त्रीप्रजननं प्रति

---

१-१. त्रुटितम् वि[२] अ[१]. २-२ दुग्धाम्…अभिग° वि[२] अ[१]; दुग्धामिति ग[?] वि[१]. ३-३. अत्र या. (४, १९) द्र. ४. हरिव° वि[२] अ[१]. ५-५. द्रोण…वि[२] अ[१]. ६. त्रुटितम् वि[२] अ[१]; धुतौ वि[१]. ७ युद्धम् मूको. ८-८. स्तूय आस्तूयमाने वि[१]. ९-९. द्धकोद्धिकं वि[२] अ[१]; उद्धतोद्धितं वि[१].

[1]चोदयत। अथ[1] तत्र खुदत प्रवेशयत अस्माकम् अन्नलाभाय। निष्टिग्र्यः अदित्याः पुत्रम् इन्द्रम् आ गमयत रक्षणाय बाधासहिताः अस्मिन् यज्ञे सोमपानाय। सेयम् आहनस्यासु एका ( शौ २०,१३७,२ ) इति ॥ १२ ॥

[2]इति अष्टमाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[2] ॥

[ १०२ ]

[3]मुद्गलो भार्म्यश्व ऋषिः। द्रुघण इन्द्रो वा देवता। त्रिष्टुप् छन्दः; १,३,१२ बृहत्यः[3]।

प्र ते रथं मिथूकृतमिन्द्रोऽवतु धृष्णुया।
अस्मिन्नाजौ पुरुहूत श्रवाय्ये धनभक्षेषु नोऽव ॥ १ ॥

प्र। ते। रथम्। मिथुऽकृतम्। इन्द्रः। अवतु। धृष्णुऽया।
अस्मिन्। आजौ। पुरुऽहूत। श्रवाय्ये। धनऽभक्षेषु। नः। अव ॥ १ ॥

वेङ्कट० मुद्गलो भार्म्यश्वः। तस्य शत्रुभिर्हतसर्वस्वस्य गोष्ठे कश्चिद् द्रुघणः कश्चिद् परिशिष्ट आसीद् ऋषभश्च। स तेन द्रुघणेन ऋषभेण[4] च रथे [4]युक्ताभ्याम् आजिम् जिगाय। तदत्रोच्यते[4]। हे मुद्गल! तव रथम् ऋषभद्रुघणाभ्यां युक्तम् [5]प्र रक्षतु[5] इन्द्रः धृष्णुः। हे पुरुहूत! अस्मिन् सङ्ग्रामे श्रवणीये धनभजनेषु अस्मान् रक्ष ॥ १ ॥

उत स्म वातो वहति वासो अस्या अधिरथं यदजयत् सहस्रम्।
रथीरभून्मुद्गलानी गविष्टौ भरे कृतं व्यचेदिन्द्रसेना ॥ २ ॥

उत। स्म। वातः। वहति। वासः। अस्याः। अधिऽरथम्। यत्। अजयत्। सहस्रम्।
रथीः। अभूत्। मुद्गलानी। गोऽइष्टौ। भरे। कृतम्। वि। अचेत्। इन्द्रऽसेना ॥ २ ॥

वेङ्कट० रथोपस्थे स्थितायाः अस्याः वासः वातः पुनःपुनः चालयति, यदा इयम् अधिरथम्[6] गवाम् सहस्रम् शत्रुभ्यो जयति। सारथिः भवति मुद्गलस्य भार्या गवामन्वेषणे। सा चेयम् इन्द्रसेनाख्या सङ्ग्रामे कर्तव्यं सर्वम् वि चिनोति ॥ २ ॥

अन्तर्यच्छ जिघांसतो वज्रमिन्द्राभिदासतः।
दासस्य वा मघवन्नार्यस्य वा सनुतर्यवया वधम् ॥ ३ ॥

अन्तः। यच्छ। जिघांसतः। वज्रम्। इन्द्र। अभिऽदासतः।
दासस्य। वा। मघऽवन्। आर्यस्य। वा। सनुतः। यवय। वधम् ॥ ३ ॥

वेङ्कट० अन्तः नि-यच्छ हन्तुमिच्छतः आयुधम् इन्द्र! उपक्षपयितुः[7]। शूद्रस्य वा मघवन्!

---

१-१. °यन्ताथ वि[2] अ[2]; °थथ वि[1]. २-२. नास्ति मूको. ३. °भौ वि[2] अ[1]. ४-४. °भ्यामा··· अत्रो° वि[2] अ[1]. ५-५. प्रत्यक्षरतु वि[1] अ[1]. ६. अतिरथं वि[2] अ[1]. ७. अवक्ष° वि[1] अ[1].

त्रैवर्णिकस्य वा अन्तर्हितम् अस्माकम् अपरिज्ञातम्[१] आयुधम् अस्मत्तः[२] पृथक् कुरु ॥ ३ ॥

उद्नो ह्रदमपिबज्जर्हृषाणः कूटं स्म तृंहदभिमातिमेति ।
प्र मुष्कभारः श्रव इच्छमानोऽजिरं बाहू अभरत् सिषासन् ॥ ४ ॥

उद्नः । ह्रदम् । अपिबत् । जर्हृषाणः । कूटम् । स्म । तृंहत् । अभिऽमातिम् । एति ।
प्र । मुष्कऽभारः । श्रवः । इच्छमानः । अजिरम् । बाहू इति । अभरत् । सिसासन् ॥ ४ ॥

वेङ्कट० उदकस्य पूर्णम् ह्रदम् अपिबत् हृष्यन् । ततोऽयम्[३] पृथिव्यामुच्छ्रितं देशम् शीघ्रगमनात् पादैर्हिंसन् शत्रुम् एति । प्र-हरति बाहू[४] [५]च पादौ ह्रियमाणमुष्कः[५] शत्रुभ्यः अन्नम् इच्छन् [६]क्षिप्रं सम्भक्तुमिच्छन्[६] सङ्ग्राममिति ॥ ४ ॥

न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः ।
तेन सूभर्वं शतवत् सहस्रं गवां मुद्गलः प्रधने जिगाय ॥ ५ ॥

नि । अक्रन्दयन् । उपऽयन्तः । एनम् । अमेहयन् । वृषभम् । मध्ये । आजेः ।
तेन । सूभर्वम् । शतऽवत् । सहस्रम् । गवाम् । मुद्गलः । प्रऽधने । जिगाय ॥ ५ ॥[७]

वेङ्कट० नि अक्रन्दयन् उपगच्छन्तः शत्रवः एनम् वृषभम्, अमेहयन् च सङ्ग्रामस्य मध्ये । तेन अनेन सूभर्वम्[८] नाम शत्रुं राजानम् गवाम् शतयुक्तम् सहस्रम् सङ्ग्रामे मुद्गलः जिगाय ॥ ५ ॥

ककर्दवे वृषभो युक्त आसीदवावचीत् सारथिरस्य केशी ।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छन्ति ष्मा निष्पदो मुद्गलानीम् ॥ ६ ॥

ककर्दवे । वृषभः । युक्तः । आसीत् । अवावचीत् । सारथिः । अस्य । केशी ।
दुधेः । युक्तस्य । द्रवतः । सह । अनसा । ऋच्छन्ति । स्म । निःऽपदः । मुद्गलानीम् ॥ ६ ॥

वेङ्कट० सङ्ग्रामाय वृषभः युक्तः आसीत् । अत्र प्रेरणाय पुनःपुनश्शब्दं करोति सारथ्यमास्थिता[९] प्रशस्तकेशा मुद्गलानी । कम्पमानस्य रथे युक्तस्य अनसा सह शीघ्रं गच्छतस्तस्य निष्पतन्ति[१०] शकृन्ति[११] मूत्राणि च मुद्गलानीम् प्राप्नुवन्ति ॥ ६ ॥

[१२]इति अष्टमाष्टके पञ्चमाध्याये विंशो वर्गः[१२] ॥

उत प्रधिमुदहन्नस्य विद्वानुपायुनग्वंसगमत्र शिक्षन् ।
इन्द्र उदावत् पतिमघ्न्यानामरंहत पद्याभिः ककुद्मान् ॥ ७ ॥

---

१. परि° वि[२] अ[१]. २. अस्मत् वि[२] अ[१]. ३. तोयम् मूको. ४. नास्ति वि[२] अ[१]; बाहु वि[१]. ५-५. चापादा° वि[२] अ[१]. ६-६ नास्ति वि[१]. ७. या. ( ९,२३ ) व्याख्यानं द्र. ८. रुयहर्वान् वि[२]; नास्ति अ[१]. ९. °स्थिताः मूको. १०. निष्पदः वि[१]. ११. शकुन्ति वि[१]. १२-१२. नास्ति मूको.

उत । प्रऽधिम् । उत् । अहन् । अस्य । विद्वान् । उप॑ । अयुनक् । वंसगम् । अत्र॑ । शिक्षन् ।
इन्द्रः । उत् । आवत् । पतिम् । अघ्न्या॑नाम् । अर॑हत । पद्या॑भिः । ककुत्ऽमा॑न् ॥ ७ ॥

**वेङ्कट०** [1]अपि च[1] इन्द्रः अस्य रथस्य चक्रप्रधिम् जानन् उत् [2]अहन् नियुयोज । अत्र[2] वननीयगमनमृषभम् उप अयुनक् वशं[3] नयन् । इन्द्रः उत् आवत्[4] गवाम् पतिम् ऋषभम् । यः वेगं करोति पद्याभिः गतिभिः स च ककुद्मान्[5] इति ॥ ७ ॥

शुनम॑ष्ट्राव्य॑चरत् कपर्दी व॑रत्राया॑ दार्वा॒नह्य॑मानः ।
नृम्णानि॑ कृण्वन् बहवे जना॑य गाः प॑स्पशानस्तवि॑षीरधत्त ॥ ८ ॥

शुनम् । अष्ट्राऽवी । अचरत् । कपर्दी । वरत्रायाम् । दारु॑ । आऽनह्य॑मानः ।
नृम्णानि॑ । कृण्वन् । बहवे॑ । जना॑य । गाः । पस्पशानः । तवि॑षीः । अधत्त ॥ ८ ॥

**वेङ्कट०** सुखं चरति पूषा कल्याणकपर्दो रथे स्थितायाम् वरत्रायाम् दारु द्रुघणम् आनह्यमानः धनानि कृण्वन् बहवे जनाय । स शत्रूणाम् गाः [6]स्पृशन् तविषीः[6] करोति ॥ ८ ॥

इमं तं प॑श्य वृषभस्य युञ्जं काष्ठा॑या मध्ये॑ द्रुघणं शया॑नम् ।
येन॑ जिगाय॑ शतवत् सहस्रं गवां मुद्गलः पृतनाज्ये॑षु ॥ ९ ॥

इमम् । तम् । पश्य । वृषभस्य॑ । युञ्जम् । काष्ठा॑याः । मध्ये॑ । द्रुऽघनम् । शया॑नम् ।
येन॑ । जिगाय॑ । शतऽव॑त् । सहस्र॑म् । गवा॑म् । मुद्गलः । पृतनाज्ये॑षु ॥ ९ ॥[7]

**वेङ्कट०** इमम् तम् पश्य वृषभस्य सहायभूतम् आजिमध्ये द्रुघणम् शयानम्, येन द्रुघणेन शतयुक्तम् सहस्रम् गवाम् मुद्गलः सङ्ग्रामेषु जिगाय ॥ ९ ॥

आरे अघा को न्वि१त्था द॑दर्श यं युञ्जन्ति तम्वा स्था॑पयन्ति ।
नास्मै तृणं नोदकमा भ॑रन्त्युत्त॑रो धुरो व॑हति प्रदेदि॑शत् ॥ १० ॥

आरे । अघा । कः । नु । इत्था । ददर्श । यम् । युञ्जन्ति । तम् । ऊँ इति॑ । आ ।
स्थापयन्ति । न । अस्मै । तृणम् । न । उदकम् । आ । भरन्ति । उत्ऽत॑रः । धुरः । वहति । प्रऽदेदि॑शत् ॥

**वेङ्कट०** दूरे[8] गतानुपस्थितानुपद्रवान् मत्तोऽन्यः [9]कः ददर्श । यम् युञ्जन्ति[9] द्रुघणम् तम् एव देवा युद्धे प्रवेशयन्ति । न चाश्वाय अस्मै घासम् आ भरन्ति न च उदकम् । सोऽयम् उद्गततरः रथस्य धुरः वहति स्वयमेव पन्थानं[10] प्रदिशन्निति[11] ॥ १० ॥

परि॑ऽवृक्तेव॑ पतिविद्य॑मान॒ट् पीप्या॑ना कूच॑क्रेणेव सिञ्चन् ।
एषैष्या॑ चिद्रथ्या॑ जयेम सुमङ्गलं सिन॑वदस्तु सातम् ॥ ११ ॥

---

१-१. नास्ति वि[2] अ[1]. २-२. °हसि योत्र वि[2] अ[1]; °हन्ति योत्र वि[1]. ३-३. °नत्यवशं वि[2] अ[1].
४. त्रुटितम् मूको. ५. गरुत्मान् वि[2] अ[1]. ६-६. प्सति वि[2] अ[1]; प्सन्ति वि[1]. ७. या. ( ९,२४ ) व्याख्यानं द्र. ८. चादूरे वि[2] अ[1]. ९-९. कं मूको. १०. स्थानम् वि[1]. ११. प्रविश° मूको.

परिवृऽक्ताऽइव । पतिऽविद्यम् । आनट् । पीप्याना । कूचक्रेणऽइव । सिञ्चन् ।
एषऽएष्या । चित् । रथ्या । जयेम । सुऽमङ्गलम् । सिनऽवत् । अस्तु । सातम् ॥ ११ ॥

**वेङ्कट०** चिरकालमुपेक्षिता स्त्री यथा पतिविद्यम् प्राप्नोति, तद्वदयं मुद्गलः शत्रुधनं प्राप्नोति। यथा वा सस्यानि वृद्धानि कुत्सितचक्रेण[1] कूपेन सिञ्चन् लभते। वयम् इच्छतामेष्टव्येन अनेन द्रुघणेनाश्वेन धनम् जयेम, कल्याणमङ्गलवच्च धनम् लब्धम् अस्तु इति ॥ ११ ॥

त्वं विश्वस्य जगतश्चक्षुरिन्द्रासि चक्षुषः ।
वृषा यदाजिं वृषणा सिषासासि चोदयन् वध्रिणा युजा ॥ १२ ॥

त्वम् । विश्वस्य । जगतः । चक्षुः । इन्द्र । असि । चक्षुषः ।
वृषा । यत् । आजिम् । वृषणा । सिसासासि । चोदयन् । वध्रिणा । युजा ॥ १२ ॥

**वेङ्कट०** त्वम् विश्वस्य जगतः त्वामेव पश्यतः चक्षुः असि इन्द्र! । द्रुघणमास्थितः वृषा त्वं यदा सहाय-वृषभेण वध्रिणा बलीवर्देन आजिम् सम्भक्तुमिच्छसि रथम् चोदयन्, तदानीं सर्वे सैनिकास्त्वां पश्यन्ति ॥ १२ ॥

[2]इति अष्टमाष्टके पञ्चमाध्याये एकविंशो वर्गः[2] ॥

## [ १०३ ]

[3]अप्रतिरथ ऐन्द्र ऋषिः । इन्द्रो देवता, ४ बृहस्पतिः, १२ अप्वा देवी,
१३ मरुतो वा । त्रिष्टुप् छन्दः, अन्त्या अनुष्टुप्[3] ।

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥ १ ॥

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः । चर्षणीनाम् ।
सम्ऽक्रन्दनः । अनिऽमिषः । एकऽवीरः । शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥१॥

**वेङ्कट०** अप्रतिरथ ऐन्द्रः । आशुः शृङ्गे तीक्ष्णीकुर्वन् वृषभः इव भयानकः अत्यन्तं हन्ता क्षोभणः च सेनासु प्रजानां सङ्क्रन्दयिता निमेषवर्जितः एकः[1] एव शत्रूणां प्रेरयिता शतम् सेनाः जयति साकम् इन्द्रः ॥ १ ॥

संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २ ॥

सम्ऽक्रन्दनेन । अनिऽमिषेण । जिष्णुना । युत्ऽकारेण । दुःऽच्यवनेन । धृष्णुना ।
तत् । इन्द्रेण । जयत । तत् । सहध्वम् । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥ २ ॥

---

१. कत्सकच° वि[2] अ[1]. २-२. नास्ति मूको. ३. नास्ति वि[2] अ[2].

**वेङ्कट०** सङ्क्रन्दनेन अनिमिषेण जिष्णुना युद्धस्य कर्त्रा शत्रुभिश्च्यावयितुमशक्येन धर्षकेण[1] इन्द्रेण तत् युद्धम् जयत । तत् सहध्वम् हे योद्धारः मनुष्याः! इषुहस्तेन वृष्णा इति ॥ २ ॥

**स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन ।**
**संसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥**

सः । इषुऽहस्तैः । सः । निषङ्गिऽभिः । । वशी । सम्ऽस्रष्टा । सः । युधः । इन्द्रः । गणेन ।
संसृष्टऽजित् । सोमऽपाः । बाहुऽशर्धी । उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता ॥ ३ ॥

**वेङ्कट०** सः इषुहस्तैः सः निषङ्गिभिः च स्वतन्त्रः । संस्रष्टा भवति [2]सः हि इन्द्रः युद्धस्य[2] मरुद्गणेन सहेति । संसृष्टानां जेता सोमपाः बाहुवेगयुक्तः उद्गूर्णधनुष्कः प्रतिहिताभिः इषुभिः शत्रूणां क्षेप्तेति ॥ ३ ॥

**बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।**
**प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥**

बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् । अपऽबाधमानः ।
प्रऽभञ्जन् । सेनाः । प्रऽमृणः । युधा । जयन् । अस्माकम् । एधि । अविता । रथानाम् ॥ ४ ॥

**वेङ्कट०** सैषा बार्हस्पत्या । बृहस्पते! परि गच्छ रथेन रक्षोहा [3]शत्रून् अपबाधमानः[3] प्रभञ्जन् सेनाः प्रकर्षेण मारकः त्वं युद्धेन जयन् अस्माकम् भव रक्षकः रथानाम् ॥ ४ ॥

**बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।**
**अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ ५ ॥**

बलऽविज्ञायः । स्थविरः । प्रऽवीरः । सहस्वान् । वाजी । सहमानः । उग्रः ।
अभिऽवीरः । अभिऽसत्वा । सहःऽजाः । जैत्रम् । इन्द्र । रथम् । आ । तिष्ठ । गोऽवित् ॥ ५ ॥

**वेङ्कट०** बलम् अवगच्छन्[4] प्रवृद्धः प्रवीरः वेगवान् बलवान् अभिभवन् उग्रः अभिगतवीरः अभिगतसत्वकः[5] ओजसो जातः त्वं जयशीलम् इन्द्र! रथम् आ तिष्ठ शत्रुगवां लब्धा ॥ ५ ॥

**गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।**
**इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥ ६ ॥**

गोत्रऽभिदम् । गोऽविदम् । वज्रऽबाहुम् । जयन्तम् । अज्म । प्रऽमृणन्तम् । ओजसा ।
इमम् । सऽजाताः । अनु । वीरयध्वम् । इन्द्रम् । सखायः । अनु । सम् । रभध्वम् ॥ ६ ॥

---

१. सार्षकेण वि[२] अ[१]. २-२. सदयु० वि[१]. ३-३. शत्रगवं चाधमाद वि[२] अ[१]. ४. अगच्छन् मूको.
५. °तसंभर्तृकः मूको.

**वेङ्कट०** मेघभिदम् उदकविदम्[1] वज्रबाहुम् जयन्तम् आजिम्[2] हिंसन्तम् बलेन इमम् इन्द्रं हे समान-जननाः! मरुतः! अनु वीरयध्वम्। इन्द्रम् सखायः! अनु-सम्-रब्धाः भवत ॥ ६ ॥

[3]इति अष्टमाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[3] ॥

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकं सेना अवतु प्र युत्सु ॥ ७ ॥

अभि। गोत्राणि। सहसा। गाहमानः। अदयः। वीरः। शतऽमन्युः। इन्द्रः।
दुःऽच्यवनः। पृतनाषाट्। अयुध्यः। अस्माकम्। सेनाः। अवतु। प्र। युत्ऽसु ॥ ७ ॥

**वेङ्कट०** अभि गाहमानः मेघान् बलेन दयारहितः वीरः बहुक्रोधः इन्द्रः च्यावयितुमशक्यः पृतनानामभिभविता योधयितुमशक्यः प्र रक्षतु अस्माकम् सेनाः युद्धेषु ॥ ७ ॥

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ८ ॥

इन्द्रः। आसाम्। नेता। बृहस्पतिः। दक्षिणा। यज्ञः। पुरः। एतु। सोमः।
देवऽसेनानाम्। अभिऽभञ्जतीनाम्। जयन्तीनाम्। मरुतः। यन्तु। अग्रम् ॥ ८ ॥

**वेङ्कट०** इन्द्रः आसाम् देवसेनानाम् नेता बृहस्पतिः च दक्षिणा [4]यज्ञः च[4] पुरः गच्छतु सोमः च। शत्रून् अभिभञ्जतीनाम् आसाम्[5] जयन्तीनाम् मरुतः च अग्रे गच्छन्त्विति ॥ ८ ॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ९ ॥

इन्द्रस्य। वृष्णः। वरुणस्य। राज्ञः। आदित्यानाम्। मरुताम्। शर्धः। उग्रम्।
महाऽमनसाम्। भुवनऽच्यवानाम्। घोषः। देवानाम्। जयताम्। उत्। अस्थात् ॥ ९ ॥

**वेङ्कट०** इन्द्रादीनां त्रयाणाम् मरुताम् च बलम् उद्गूर्णम् महामनसाम् एषाम् [6]उदकच्यावयितॄणाम् देवानाम्[6] वृत्रम् जयताम् घोषः उत् अतिष्ठदिति ॥ ९ ॥

उद्धर्षय मघवन्नायुधान्युत् सत्वनां मामकानां मनांसि।
उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १० ॥

उत्। हर्षय। मघऽवन्। आयुधानि। उत्। सत्वनाम्। मामकानाम्। मनांसि।
उत्। वृत्रऽहन्। वाजिनाम्। वाजिनानि। उत्। रथानाम्। जयताम्। यन्तु। घोषाः ॥ १० ॥

---

१. °कदं मूको. २. त्रुटितम् मूको. ३-३. नास्ति मूको. ४-४. यज्ञस्य मूको.
५. नास्ति वि[1]. ६-६. °दकदे° मूको; तु. निघ १,१२.

**वेङ्कट०** उत् हर्षय मघवन्! आयुधानि उत् हर्षय मामकानाम् सत्वनाम् मनांसि। उत् हर्षय च[1] वृत्रहन्! अश्वानां बलानि[1]। उद्धर्षणम्[3] उत्थापनम्। उत् गच्छन्तु रथानाम् जयताम् शब्दाः ॥ १० ॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ ११ ॥

अस्माकम्। इन्द्रः। सम्ऽऋतेषु। ध्वजेषु। अस्माकम्। याः। इषवः। ताः। जयन्तु।
अस्माकम्। वीराः। उत्ऽतरे। भवन्तु। अस्मान्। ऊँ इति। देवाः। अवत। हवेषु ॥ ११ ॥

**वेङ्कट०** अस्माकम् इन्द्रः सङ्गतेषु ध्वजेषु आगच्छतु। अस्माकम् याः इषवः ताः शत्रून् जयन्तु। अस्माकम् वीराः उद्गततराः भवन्तु। अस्मान् एव देवाः! रक्षत ह्वानेष्विति ॥ ११ ॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥

अमीषाम्। चित्तम्। प्रतिऽलोभयन्ती। गृहाण। अङ्गानि। अप्वे। परा। इहि।
अभि। प्र। इहि। निः। दह। हृत्ऽसु। शोकैः। अन्धेन। अमित्राः। तमसा। सचन्ताम् ॥

**वेङ्कट०** यास्कः—'अप्वा यदेनया विद्धोऽपवीयते। व्याधिर्वा भयं वा' (या ६,१२)। 'अमीषां चित्तानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेहि। अभिप्रेहि। निर्दहैषां हृदयानि शोकैः। अन्धेनामित्रास्तमसा संसेव्यन्ताम्' (या ९,३३) इति ॥ १२ ॥

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १३ ॥

प्र। इत। जयत। नरः। इन्द्रः। वः। शर्म। यच्छतु।
उग्राः। वः। सन्तु। बाहवः। अनाधृष्याः। यथा। असथ ॥ १३ ॥

**वेङ्कट०** प्र गच्छत जयत अमित्रान् हे नरः!। इन्द्रः युष्माकम् शर्म यच्छतु। उद्गूर्णाः वः सन्तु बाहवः, यथा यूयम् अनाधृष्याः भवथ शत्रुभिरिति ॥ १३ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[4] ॥

[ १०४ ]

[4]अष्टको वैश्वामित्र ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[4] ॥

असावि सोमः पुरुहूत तुभ्यं हरिभ्यां यज्ञमुप याहि तूयम्।
तुभ्यं गिरो विप्रवीरा इयाना दधन्विर इन्द्र पिबा सुतस्य ॥ १ ॥

---

१. नास्ति वि[2] अ[1]. २. नास्ति वि[1]. ३. उद्धर्षम् मूको. ४-४. नास्ति मूको.

असावि । सोमः । पुरुऽहूत । तुभ्यम् । हरिऽभ्याम् । यज्ञम् । उप । याहि । तूयम् ।
तुभ्यम् । गिरः । विप्रऽवीराः । इयानाः । दधन्विरे । इन्द्र । पिब । सुतस्य ॥ १ ॥

**वेङ्कट०** अष्टको वैश्वामित्रः । सुतः सोमः पुरुहूत! तुभ्यम् । अश्वाभ्याम् यज्ञम् उप गच्छ शीघ्रम् । तुभ्यम् स्तुतीः मेधाविप्रजार्थिकाः[1] यजमानाः याचमानाः धारयन्ति, इन्द्र! तथा सति पिब सुतम् ॥ १ ॥

अप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व ।
मिमिक्षुर्यमद्रय इन्द्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहः ॥ २ ॥

अप्ऽसु । धूतस्य । हरिऽवः । पिब । इह । नृऽभिः । सुतस्य । जठरम् । पृणस्व ।
मिमिक्षुः । यम् । अद्रयः । इन्द्र । तुभ्यम् । तेभिः । वर्धस्व । मदम् । उक्थऽवाहः ॥ २ ॥

**वेङ्कट०** वसतीवरीषु शोधितम् हरिवः! पिब । अत्र मनुष्यैः सुतेन सोमेन जठरम् पूरय । असिञ्चन्[2] ग्रावाणः यम् इन्द्र! तुभ्यम्, तैः वर्धय मदम् उक्थैरुह्यमान! ॥ २ ॥

प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यम् ।
इन्द्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणानः ॥ ३ ॥

प्र । उग्राम् । पीतिम् । वृष्णे । इयर्मि । सत्याम् । प्रऽयै । सुतस्य । हरिऽअश्व । तुभ्यम् ।
इन्द्र । धेनाभिः । इह । मादयस्व । धीभिः । विश्वाभिः । शच्या । गृणानः ॥ ३ ॥

**वेङ्कट०** प्रेरयामि [3]उद्गूर्णम् रसम्[3] वृष्णे कल्याणम् प्रैतुं[4] त्वाम् सुतस्य हर्यश्व! तुभ्यम् । इन्द्र! प्रियाभिः इह माद्य स्तुतिभिः कर्मभिश्च सर्वैः प्रज्ञया स्तूयमानः ॥ ३ ॥

ऊती शचीवस्तव वीर्येण वयो दधाना उशिज ऋतज्ञाः ।
प्रजावदिन्द्र मनुषो दुरोणे तस्थुर्गृणन्तः सधमाद्यासः ॥ ४ ॥

ऊती । शचीऽवः । तव । वीर्येण । वयः । दधानाः । उशिजः । ऋतऽज्ञाः ।
प्रजाऽवत् । इन्द्र । मनुषः । दुरोणे । तस्थुः । गृणन्तः । सधऽमाद्यासः ॥ ४ ॥

**वेङ्कट०** रक्षणेन शचीवः! तव वीर्येण च अन्नम् दधानाः ऋत्विजः यज्ञज्ञाः प्रजावन्तः इन्द्र! मनुष्याः गृहे तिष्ठन्ति स्तुवन्तः सहमोदमानाः ॥ ४ ॥

प्रणीतिभिष्टे हर्यश्व सुष्टोः सुषुम्नस्य पुरुरुचो जनासः ।
मंहिष्ठामूतिं वितिरे दधानाः स्तोतार इन्द्र तव सूनृताभिः ॥ ५ ॥

प्रनीतिऽभिः । ते । हरिऽअश्व । सुऽस्तोः । सुऽसुम्नस्य । पुरुऽरुचः । जनासः ।
मंहिष्ठाम् । ऊतिम् । विऽतिरे । दधानाः । स्तोतारः । इन्द्र । तव । सूनृताभिः ॥ ५ ॥

---

१. प्रजा॰ मूको. २. ॰ञ्चद् मूको. ३-३. ··· द्गूर्णरथसं वि॰ अ'; 'णेरसं वि'. ४. प्रैतु मूको.

वेङ्कट० प्रणयनैः युज्यन्ते[1] ते हर्यश्व! सुष्टुतेः सुसुखस्य[2] [3]बहुदीप्तेः जनाः[3] अत्यन्तं धनप्रदम् रक्षणम् वृद्ध्यर्थम् धारयन्तः स्तोतारः इन्द्र! तव सत्यैः ॥ ५ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[4] ॥

उप ब्रह्माणि हरिवो हरिभ्यां सोमस्य याहि पीतये सुतस्य ।
इन्द्र त्वा यज्ञः क्षममाणमानड् दाश्वाँ अस्यध्वरस्य प्रकेतः ॥ ६ ॥

उप । ब्रह्माणि । हरिऽवः । हरिऽभ्याम् । सोमस्य । याहि । पीतये । सुतस्य ।
इन्द्र । त्वा । यज्ञः । क्षममाणम् । आनट् । दाश्वान् । असि । अध्वरस्य । प्रऽकेतः ॥ ६ ॥

वेङ्कट० उप याहि स्तोत्राणि हरिवः! हरिभ्याम् सुतम् सोमम् पातुम् । इन्द्र! त्वा यज्ञः शत्रूनभिभवन्तम् आप्नोति । दाता भवसि हिंसारहितस्य धनस्य[5] सुमतिः ॥ ६ ॥

सहस्रवाजमभिमातिषाहं सुतेरणं मघवानं सुवृक्तिम् ।
उप भूषन्ति गिरो अप्रतीतमिन्द्रं नमस्या जरितुः पनन्त ॥ ७ ॥

सहस्रऽवाजम् । अभिमातिऽसहम् । सुतेऽरणम् । मघऽवानम् । सुऽवृक्तिम् ।
उप । भूषन्ति । गिरः । अप्रतिऽइतम् । इन्द्रम् । नमस्याः । जरितुः । पनन्त ॥ ७ ॥

वेङ्कट० बहुबलम् शत्रूणामभिभवितारम् सुते रममाणम् मघवानम् सुष्टुतिम् उप भवन्ति[6] स्तुतयः[7] । शत्रुभिः अप्रतिगतम्[8] इन्द्रम् अन्नमिच्छमानाः[9] स्तोतुः स्तुतयः स्तुवन्ति ॥ ७ ॥

सप्तापो देवीः सुरणा अमृक्ता याभिः सिन्धुमतर इन्द्र पूर्भित् ।
नवतिं स्रोत्या नव च स्रवन्तीर्देवेभ्यो गातुं मनुषे च विन्दः ॥ ८ ॥

सप्त । आपः । देवीः । सुऽरणाः । अमृक्ताः । याभिः । सिन्धुम् । अतरः । इन्द्र । पूःऽभित् ।
नवतिम् । स्रोत्याः । नव । च । स्रवन्तीः । देवेभ्यः । गातुम् । मनुषे । च । विन्दः ॥ ८ ॥

वेङ्कट० सप्त प्रधानभूताः नद्यः देव्यः सुरमणाः[10] असुरैरहिंसिताः त्वया निर्मिताः, याभिः[11] समुद्रम् अपूरयः[12] इन्द्र! पुरां भेत्ता । अपि च [13]नवतिम् नव[13] च क्षुद्रा नदीः देवेभ्यः प्रायच्छः मनुष्येभ्यश्च । तासां मार्गं च कृतवानिति ॥ ८ ॥

अपो महीरभिशस्तेरमुञ्चोऽजागरास्वधि देव एकः ।
इन्द्र यास्त्वं वृत्रतूर्ये चकर्थ ताभिर्विश्वायुस्तन्वं पुपुष्याः ॥ ९ ॥

---

१. ऽज्यन्त मूको. २. सुख° मूको. ३-३. ष्तिर्जे' वि[2] अ[1]; ष्तिजन्त वि[1]. ४-४. नास्ति मूको. ५. सनस्य वि[2] अ[1]. ६. भवति मूको. ७. स्तुतिः वि[2] अ[1]; स्तुतीः वि[1]. ८. 'तिनतम् वि[2] अ[1]. ९. °मानां मूको १०. सुमना वि[2] अ[1]. ११. याहि मूको. १२. °रयन् वि[2] अ[1]. १३-१३. °तिर्नव वि[2] अ[1].

अपः । महीः । अभिऽशस्तेः । अमुञ्चः । अजागः । आसु । अधि । देवः । एकः ।
इन्द्र । याः । त्वम् । वृत्रऽतूर्ये । चकर्थ । ताभिः । विश्वऽआयुः । तन्वम् । पुपुष्याः ॥ ९ ॥

**वेङ्कट०** अपः महतीः[1] त्वं ब्रह्महत्यायाः अमुञ्चः । अपि च त्वम् एकः एव देवः आसु अप्सु अधि जागर्षि[2] । इन्द्र! याः त्वम् [3]वृत्रहत्यायाम् करोषि अपः, ताभिः[3] सर्वान्नः त्वं मम शरीरम् पोषय ॥ ९ ॥

वरेण्यः क्रतुरिन्द्रः सुशस्तिरुतापि धेना पुरुहूतमीट्टे ।
आर्दयद् वृत्रमकृणोदु लोकं ससाहे शक्रः पृतना अभिष्टिः ॥ १० ॥

वरेण्यः । क्रतुः । इन्द्रः । सुऽशस्तिः । उत । अपि । धेना । पुरुऽहूतम् । ईट्टे ।
आर्दयत् । वृत्रम् । अकृणोत् । ऊँ इति । लोकम् । ससहे । शक्रः । पृतनाः । अभिष्टिः ॥१०॥

**वेङ्कट०** वरणीयः कर्ता इन्द्रः सुष्टुतिः । अपि च पुरुहूतम् अभिष्टौति वाक् । सोऽयं पीडयति मेघम्, करोति च स्तोतॄणां स्थानम्, अभिभवति च शक्रः पृतनाः अभ्येषणशीलः[4] ॥ १० ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

**वेङ्कट०** पूर्वं गता ( ऋ ३,३०,२२ ) ॥ ११ ॥

[5]इति अष्टमाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[5] ॥

[ १०५ ]

[4]कौत्सौ दुर्मित्रः सुमित्रो वा ऋषिः । इन्द्रो देवता । उष्णिक् छन्दः, प्रथमा गायत्री वा, द्वितीयासप्तम्यौ पिपीलिकमध्ये, एकादशी त्रिष्टुप्[4] ।

कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद् वाः । दीर्घं सुतं वाताप्याय ॥१॥

कदा । वसो इति । स्तोत्रम् । हर्यते । आ । अव । श्मशा । रुधत् । वारिति वाः ।
दीर्घम् । सुतम् । वाताप्याय ॥ १ ॥

**वेङ्कट०** दुर्मित्रः कौत्सः । कदा वासयितः! इन्द्र! तव स्तुतिं कामयमानाय मह्यम् श्मशा वायुः उदकम् अव रुणद्धि दिवः । दीर्घकालमिदम् सुतम् भवति उदकाय क्रियमाणमिति । 'शु अश्नुत

---

१. महीः वि[1]. २. °गर्षीति अ[1]. ३-३. °हत्य ··· ताभिः वि[2] अ[1]; °हत्य यस्ताभिः वि[1].
४. अभ्येषः ··· मूको. ५-५. नास्ति मूको.

इति इमशा वायुः' इति यास्कः ( तु. ५,१२ )। तथा 'वाताप्यम्[1] उदकम् भवति। [2]वात एतदाप्याययति[2]' ( या ६,२८ ) इति ॥ १ ॥

हरी यस्य सुयुजा विव्रता वेरर्वन्तानु शेपा । उभा रजी न केशिना पतिर्दन् ॥२॥

हरी इति । यस्य । सुऽयुजा । विऽव्रता । वेः । अर्वन्ता । अनु । शेपा ।
उभा । रजी इति । न । केशिना । पतिः । दन् ॥ २ ॥

**वेङ्कट०** यस्य हन्तुः हरी[3] शोभनयोजनौ विशिष्टकर्माणौ गच्छन्तौ अनु-स्पृशन्तौ भवतः[4] युद्धम् । 'शेपः शपतेः स्पृशतिकर्मणः' इति यास्कः ( ३,२१ )। तौ ऋजुगमनौ प्रशस्तकेशौ पतिः इन्द्रः न दन्[5] भवति स्वयमेव गच्छन्तौ न दमयतीति ॥ २ ॥

अप योरिन्द्रः पापज आ मर्तो न शश्रमाणो बिभीवान् । शुभे यद्युयुजे तविषीवान् ॥३॥

अप । योः । इन्द्रः । पापजे । आ । मर्तः । न । शश्रमाणः । बिभीवान् ।
शुभे । यत् । युयुजे । तविषीऽवान् ॥ ३ ॥

**वेङ्कट०** [6]अप आ हन्ति[6] पृथक्कर्तारं शत्रुम् इन्द्रः अत्यन्तमभिगच्छते यजमानाय । किञ्च[7] मनुष्यः शश्रमाणः[8] [9]बिभ्यच्च न[9] भवति, उदकार्थं यदि रथं युङ्क्ते बलवानिन्द्रः ॥ ३ ॥

सचायोरिन्द्रश्चर्कृष आँ उपानसः सपर्यन् । नदयोर्विव्रतयोः शूर इन्द्रः ॥ ४ ॥

सचा । आयोः । इन्द्रः । चर्कृषे । आ । उपानसः । सपर्यन् । नदयोः । विऽव्रतयोः । शूरः । इन्द्रः ॥४॥

**वेङ्कट०** स्तोतुर्मनुष्यस्य सहायभूतः इन्द्रः आत्मीयस्य रथस्य कर्षणार्थं तस्मिन्नश्वौ आ युनक्ति [10]रथमुपगतः पूजयन् अश्वौ[10] हेषमाणयोः [11]विशिष्टकर्मणोः तयोरीश्वरः शूरः[11] ॥ ४ ॥

अधि यस्तस्थौ केशवन्ता व्यचस्वन्ता न पुष्ट्यै । वनोति शिप्राभ्यां शिप्रिणीवान् ॥५॥

अधि । यः । तस्थौ । केशऽवन्ता । व्यचस्वन्ता । न । पुष्ट्यै । वनोति । शिप्राभ्याम् । शिप्रिणीऽवान् ॥५॥

**वेङ्कट०** अधि तिष्ठति यः प्रशस्तकेशौ व्याप्तौ च पुष्ट्यर्थम् अश्वौ, स हन्ति शत्रुम् शिप्राभ्याम् शिप्री[12] ॥५॥

[13]इति अष्टमाष्टके पञ्चमाध्याये षड्विंशो वर्गः[13] ॥

प्रास्तौदृष्वौजा ऋष्वेभिस्ततक्ष शूरः शवसा । ऋभुर्न क्रतुभिर्मातरिश्वा ॥ ६ ॥

प्र । अस्तौत् । ऋष्वऽओजाः । ऋष्वेभिः । ततक्ष । शूरः । शवसा । ऋभुः । न । क्रतुऽभिः । मातरिश्वा ॥

---

१. पाताप्यम् मूको. २-२. वा एनययति च वि[1]; वा ऐनद ··· वि[2]; वा येन् द ··· अ[1]. ३. हरि··· वि[2] अ[1]. ४. भवन्तौ वि[2] अ[1]. ५. दद् वि[2] अ[1]; दनौ वि[1]; वैप १,१५४३ c द्र. ६-६. इन्द्र वा हन्ति वि[2] अ[1]. ७. क्रियं च वि[1]. ८. शममा° वि[2]; श्रमम° वि[1]. ९-९. नास्ति वि[2] अ[1]. १०-१०. °गत-पूज ··· वि[2] अ[1]. ११-११. नास्ति वि[1]; ··· तयो° वि[2] अ[1]. १२. शिप्रि मूको. १३-१३. नास्ति मूको.

वेङ्कट० [1]प्र स्तौति युद्धम् ऋभ्वौजाः† मरुद्भिः सह, तनूकरोति शत्रून् शूरः बलेन, ‡ऋभुः इव‡ कर्मभिः वायुः वनस्पतीनिति[1] ॥ ६ ॥

वज्रं यश्चक्रे सुहनाय दस्यवे हिरीमशो हिरीमान् । अरुतहनुरद्भुतं न रजः ॥७॥

वज्रम् । यः । चक्रे । सुऽहनाय । दस्यवे । हिरीमशः । हिरीमान् । अरुतऽहनुः । अद्भुतम् । न । रजः ॥

वेङ्कट० [1]वज्रम् यः करोति हन्तुं शक्याय †सर्वस्मै दस्यवे हिरीमशः हरितश्मश्रुः† हरिवान् । हिरी-शब्दो‡ हरिशब्दपर्यायः[2] । अशब्दितहन्तव्यः अशत्रुः[3] महच्च तेजः इति ॥ ७ ॥

अव नो वृजिना शिशीह्यृचा वनेमानृचः । नाब्रह्मा यज्ञ ऋधग्जोषति त्वे ॥८॥

अव । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः ।
न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वे इति ॥ ८ ॥

वेङ्कट० अस्माकम् शत्रुबलानि अव शिशीहि तनूकुरु[4] । स्तुत्या [5]हन्याम अनृचः[5] । अस्तुतिः यज्ञः[6] त्वयि सेवमान ऋद्धः न[7] भवतु ॥ ८ ॥

ऊर्ध्वा यत् ते त्रेतिनी भूद्यज्ञस्य धूर्षु सद्मन् । सजूर्नावं स्वयशसं सचायोः ॥९॥

ऊर्ध्वा । यत् । ते । त्रेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् ।
सऽजूः । नावम् । स्वऽयशसम् । सचा । आयोः ॥ ९ ॥

वेङ्कट० ऊर्ध्वः यत् ते यज्ञार्थं भवति अग्निः त्रेताभवः[8] यज्ञस्य धूर्षु धिष्णियेषु[9] स्वे स्थाने । तदानीं मरुद्भिः सङ्गतस्त्वं मनुष्यस्य सहायः स्वयशसम् नावम् करोषि । यज्ञमागतोऽन्नेन युक्तं करोषीति ॥ ९ ॥

श्रिये ते पृश्निरुपसेचनी भूच्छ्रिये दर्विररेपाः । यया स्वे पात्रे सिञ्चस उत् ॥१०॥

श्रिये । ते । पृश्निः । उपऽसेचनी । भूत् । श्रिये । दर्विः । अरेपाः ।
यया । स्वे । पात्रे । सिञ्चसे । उत् ॥ १० ॥

वेङ्कट० श्रयणाय तव द्यौः उपसेचनीया भवति पर्वणि-पर्वणि[10] । श्रिये दर्विः[11] पृथिवी अपापा[12] भवति । यया त्वमुत्पादितं सोमं स्वस्मिन् आस्ये उत् सिञ्चसे इति ॥ १० ॥

शतं वा यदसुर्य प्रति त्वा सुमित्र इत्थास्तौद् दुर्मित्र इत्थास्तौत् ।
आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावो यद्दस्युहत्ये कुत्सवत्सम् ॥ ११ ॥

---

१-१. नास्ति वि[1]. † उभाजा वि[2] अ[1]. ‡-‡ मव वि[1] अ[1]. २-२. नास्ति मूको.
†-† सर्वस्मै ··· च हिरिह वि[2] अ[1]. ‡ हरिशब्दो वि[1] अ[1]. ३. °त्रुं मूको. ४. कुरु मूको.
५-५. वने मान्यो वि[1]; हन्यमान्यो वि[2]; हन्यमानो अ[1]. ६. यज्ञे मूको. ७. नास्ति मूको.
८. त्रेताभव वि[2] अ[1]; त्रेता वि[1]. ९. धिष्ण्येषु वि[1]. १०. पार्षति पार्षति मूको. ११. दर्वी मूको.
१२. वा मूको.

शतम् । वा । यत् । असुर्य । प्रति । त्वा । सुऽमित्रः । इत्था । अस्तौत् । दुःऽमित्रः । इत्था । अस्तौत् । आवः । यत् । दस्युऽहत्ये । कुत्सऽपुत्रम् । प्र । आवः । यत् । दस्युऽहत्ये । कुत्सऽवत्सम् ॥ ११ ॥

**वेङ्कट०** शतम् [1]मयि यत् अपि भवति सोमपात्रं तत्सर्वं त्वाम् प्रति भवति हे असुराणां हन्तः![1]। तं त्वामयं गुणेन सुमित्रः नाम्ना दुर्मित्रः इत्थम् अस्तौत्, अरक्षः[2] यस्माद्[3] युद्धे कुत्सपुत्रम्, प्रकर्षेण च आवः कुत्सवत्सम् इति ॥ ११ ॥

[4]इति अष्टमाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[4] ॥

माधवः पञ्चमाध्यायम् अष्टमे व्याकरोदिति ।
नदीमाश्रित्य निवसन् कावेरीं लोकमाश्रिताम् ॥ १ ॥

इति श्रीवेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके पञ्चमोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके पञ्चमोऽध्यायः ॥



१-१. मयि यं यमि वि[1]; मयि यद्यभि वि[2] अ[1]. २. रक्षो मूको. ३. यदस्मान् वि[1].
४-४. नास्ति मूको.

अथ षष्ठोऽध्यायः ।

वेङ्कट०

'उभा उ नूनं तद्' इति व्याचिख्यासति माधवः ।
ब्राह्मणोक्तेषु चार्थेषु वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

मन्त्राणां विनियुक्तानां ब्राह्मणानीह कानिचित् ।
तात्पर्येण वदन्त्यर्थांस्ते तदर्थास्तथैव नः ॥ २ ॥

'अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तः॑'[1] 'दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निः'[2] ।
'त्र॒यः कृ॑ण्वन्ति॒ भुव॑नेषु॒ रेतः॑'[3] 'वि॒धेम॑ ते पर॒मे जन्म॑न्नग्ने'[4] ॥ ३ ॥

'अग्न॒ आयूं॑षि पवसे'[5] 'श॒तं वो॑ अम्ब॒ धामा॑नि'[6] ।
'उ॒प॒प्र॒यन्तो॑ अध्व॒रम्'[7] 'तं त्वा॑ स॒मिद्भि॑रङ्गिरः'[8] ॥ ४ ॥

ऋचामासां ब्राह्मणेषु[9] विस्पष्टोऽर्थः प्रकीर्तितः ।
ऋग्भाष्येष्विव सर्वत्र[10] लिखितं ब्राह्मणं मया ॥ ५ ॥

क्रियाकारकसम्बन्धम् अनाश्रित्याथ कानिचित् ।
स्तुवन्ति प्रकृतान् मन्त्रान् श्रुतिसामान्यमात्रतः ॥ ६ ॥

ब्राह्मणान्यनुधावन्ति[11] तानि कर्मपरा नराः ।
ऋगर्थमनुधावन्ति क्रियाकारकतत्पराः ॥ ७ ॥

अत्र ब्राह्मणम्—"'विश्वे देवस्य नेतुः' इत्याह सावित्र्येतेन, 'मर्तो वृणीत सख्यम्' इत्याह पितृदेवत्यैतेन, 'विश्वे राय इषुध्यसि' इत्याह वैश्वदेव्येतेन, 'द्युम्नं वृणीत पुष्यसे', इत्याह पौष्ण्येतेन सा वा एषर्क् सर्वदेवत्या, यदेतयर्चा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति" (तै ६,१,२,५-६) इति। तथाश्वमेधे (माश १३,२,६,१) श्रूयते—"'युञ्जन्ति ब्रध्नमरुषश्चरन्तम्' इति। असौ वा आदित्यो ब्रध्नः" इत्यादिकं अध्वर्युभ्यः श्रोतव्यमिति।

ऋचः सर्वाः पावमान्यः श्रुतिसामान्यमात्रतः ।
संस्कृताः शाट्यायनके [12]बह्वृचश्चाध्वर्युभिः स्तुताः[12] ॥ ८ ॥

तथान्यार्था[13] ऋचः काश्चित् प्रस्तुते नमयन्ति च ।
'इन्द्रो॑ द॒धीचो॑ अ॒स्थभिः॑'[14] इति तत्र निदर्शनम् ॥ ९ ॥

अत्र ब्राह्मणम्—'प्रजापतिर्वाऽथर्वाऽग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतं ह वाव

---

१. ऋ ३,८,१. २. ऋ १०,४५,१ ३. ऋ ७,३३,७. ४. ऋ २,९,३. ५. ऋ ९,६६,१९. ६ ऋ १०,९७,२. ७. ऋ १,७४,१. ८. ऋ ६,१६,११. ९. तु. माश ६,१,४,३; ७,३,४,२७; ९,२,३,३९; तैब्रा १,४,३७,१; ३,६,१,१; जैब्रा २,२४१. १०. नास्ति मूको. ११. °वन्तः वि[1]. १२-१२. °युभिस्तु° वि[2]. १३. तथास्यार्था वि[2] अ[1]. १४. ऋ १,८४,१३.

तदृषिरभ्यनूवाच 'इन्द्रो दधीचो अस्थभिः'[1] इति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते, सात्माऽमुष्मिन्[2] लोके भवति य एवं वेद[3]'' ( तै ५,६,६,३ ) इति[4] ।

प्रजापतिरथर्वासीद् अग्निर्दध्यङ्ङजायत ।
इष्टकाश्च निदानेन तस्यास्थान्यभवन्निति ॥ १० ॥

अन्यार्थोऽप्यविरुद्धश्चेद्[5] इष्टेऽर्थे विनियुज्यते ।
'सर्वे नन्दन्ति यशसा'[6] स्यादत्तत्र निदर्शनम् ॥ ११ ॥

बृहस्पतिस्तु सामान्याद् अस्तौद्विद्वांसमेतया ।
ब्राह्मणे विनियुक्तैषा[7] सोमे विदुषि राजनि† ॥ १२ ॥

'' 'सर्वे नन्दन्ति यशसागतेन'[6] इत्यन्वाह । 'यशो वै सोमो राजा'' ( ऐब्रा १,१३ ) इत्यादि ब्राह्मणम् ।

त्रैशोकेन तृचेनास्तौद् ऐन्द्रेण प्रतिसत्रिणः ।
ऋषिरन्य इध्मवाहः 'आ घा ये अग्निमिन्धते'† ॥ १३ ॥

अत्र शाट्यायनकम्—'ऋषयो वै स्वर्गं लोकं यन्त इध्मवाहं समिद्धारं परेतमरण्य एकमजहुः । सोऽकामयतानूत्पतेयं स्वर्गं लोकं प्रतिसत्रिभिः सङ्गच्छेयेति । स ऐक्षत हन्त प्रतिसत्रिण[8] एव स्तवानि' ( जैब्रा ३,२७६ ) इत्यादि ।

अनुरूपं प्रकर्षेण सत्योऽर्थे इति निर्णयः ।
दर्शनादेव जानीमो रत्नवद् ब्राह्मणान्यपि ॥ १४ ॥ इति ।

[ १०६ ]

भूतांशः काश्यप ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः ।

उभा उं नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव ।
सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे ॥ १ ॥

उभौ । ऊँ इति । नूनम् । तत् । इत् । अर्थयेथे इति । वि । तन्वाथे इति । धियः । वस्त्रा । अपसाऽइव ।
सध्रीचीना । यातवे । प्र । ईम् । अजीगरिति । सुदिनाऽइव । पृक्षः । आ । तंसयेथे इति ॥१॥

वेङ्कट० भूतांशः काश्यपः । उभौ अपि क्षिप्रम् तत् एव कर्तुम् अर्थयेथे 'यदेतदेवोक्तम् । वि तन्वाथे† कर्माण्याश्चर्यभूतानि वस्त्राणि‡' कर्मणा इव तौ [10]सङ्गतौ भवन्तौ[10] यज्ञं प्रति यातुम् अयं स्वस्मात् स्थानात्

१. ऋ १,८४,१ . २-२. अथास्यामुष्मिक वि[2] अ[1]. ३. चिनोति वेंऋअ ४. नास्ति वि[1,2] अ[1].
५ अद्यार्थो° वि[2] अ[1]; अन्यार्थो विवि° वि[1]. ६ ऋ १०,७१,१०. ७. त्रुटितम् वि[2]; नास्ति अ[1]; ययत्तसेष्टा वि[1]. ८-८ नास्ति वि[1]. † ऋ ८,४५,१. ९-९. नास्ति वि[1]. † °न्वाते वि[2] अ[1].
‡ चित्राणि वि[2] अ[1]. १०-१०. स···वि[2] अ[1].

प्र [1]अजीगः निर्गमयति[1]। तौ[2] युवामभिमतानि सुदिनानि इव स्तोतृषु अन्नानि आ तंसयेथे इति ॥१॥

**उ॒ष्टारे॑व॒ फर्व॑रेषु श्रयेथे प्रायो॒गेव॑ श्वा॒त्र्या शा॒सु॒रेथः॑ ।**
**दू॒तेव॒ हि ष्ठो य॒शसा॑ जने॑षु॒ माप॑ स्थातं महि॒षेवा॑व॒पाना॑त् ॥ २ ॥**

उ॒ष्टारा॑ऽइव । फर्व॑रेषु । श्र॒ये॒थे॒ इति॑ । प्रा॒यो॒गाऽइ॑व । श्वा॒त्र्या॑ । शासुः॑ । आ । इ॒थः॑ ।
दू॒ताऽइ॑व । हि । स्थः । य॒शसा॑ । जने॑षु । मा । अप॑ । स्था॒त॒म् । म॒हि॒षाऽइ॑व । अ॒व॒ऽपाना॑त् ॥२॥

**वेङ्कट०** शिक्षितवहनौ निरूढौ [3]बलिनौ अनड्वाहौ इव[3] शीघ्रं स्तोतृषु श्रयेथे। प्रयुज्यमानौ इव चाबन्धजीवौ [4]अनड्वाहौ सुखनिमित्तौ[4] युवां स्तोतॄणां प्रजापश्वादिविषयं शासनम् आ गच्छतम्[5]। [6]दूतौ इव हि[6] भवथः युवां यशस्विनौ आह्वातव्यौ स्तोतृषु[7]। युवामस्मत्तः मा अप गच्छतम् [8]महिषौ इव उष्णतप्तौ[8] उदकाद् अतिपिपासिताविति ॥ २ ॥

**सा॒कं॒युजा॑ शकु॒नस्ये॑व प॒क्षा प॒श्वेव॑ चि॒त्रा यजु॒रा ग॑मिष्टम् ।**
**अ॒ग्निरि॑व देव॒योर्दी॑दि॒वांसा॒ परि॑ज्मानेव यजथः पुरु॒त्रा ॥ ३ ॥**

सा॒क॒म्ऽयुजा॑ । श॒कु॒नस्य॑ऽइव । प॒क्षा । प॒श्वाऽइ॑व । चि॒त्रा । यजुः॑ । आ । ग॒मि॒ष्ट॒म् ।
अ॒ग्निःऽइ॑व । दे॒व॒ऽयोः । दी॒दि॒ऽवांसा॑ । परि॑ज्मानाऽइव । य॒ज॒थः॒ । पु॒रु॒ऽत्रा ॥ ३ ॥

**वेङ्कट०** पतने [9]पक्षिणः पक्षौ इव[9] साकं युक्तौ युवां पशू इव कामप्रदौ पूजनीयौ यज्ञम् आ [10]गच्छतम्। तौ[10] युवाम् अग्निः इव दीप्यमानौ[11] यजमानस्य अध्वर्यू इव परितो गन्तारौ यजथः बहुषु जनपदेषु[12], यद्वा बहून् देवानिति ॥ ३ ॥

**आपी॑ वो अ॒स्मे पि॒तरे॑व पु॒त्रोग्रेव॑ रु॒चा नृ॒पती॑व तु॒र्यै ।**
**इ॒र्ये॑व पु॒ष्ट्यै कि॒रणे॑व भु॒ज्यै श्रु॒ष्टी॒वाने॑व॒ हव॒मा ग॑मिष्टम् ॥ ४ ॥**

आपी॒ इति॑ । वः॒ । अ॒स्मे इति॑ । पि॒तरा॑ऽइव । पु॒त्रा । उ॒ग्राऽइ॑व । रु॒चा । नृ॒पती॒ इ॒वेति॑ नृ॒पती॑ऽइव । तु॒र्यै ।
इ॒र्या॑ऽइव । पु॒ष्ट्यै । कि॒रणा॑ऽइव । भु॒ज्यै । श्रु॒ष्टी॒वाना॑ऽइव । ह॒व॑म् । आ । ग॒मि॒ष्ट॒म् ॥ ४ ॥

**वेङ्कट०** बन्धू[13] युवाम् अस्माकम् पितरौ इव पुत्राणाम्। तौ युवां तेजसोद्गूर्णौ सूर्याचन्द्रमसौ इव भवथः। राजानौ इव पातकक्रतां[14] हिंसायै समुपतिष्ठथः। स्वामिनौ[15] इव च स्तोतॄणाम् पुष्ट्यै। हस्तौ इव च भोगाय। तौ क्षिप्रगमनौ इव अश्वौ हवम् आ गच्छतम् ॥ ४ ॥

**वंस॑गेव पूष॒र्या॑ शि॒म्बाता॑ मि॒त्रेव॑ ऋ॒ता श॒तरा॒ शात॑पन्ता ।**
**वा॒जेवो॒च्चा वय॑सा घर्म्ये॒ष्ठा मेषे॑वे॒षा स॑प॒र्या॒३ पुरी॑षा ॥ ५ ॥**

---

१-१. °गश्निर्ग° मूको. २. तं मूको. ३-३. बलिनापसश्वाहाविव वि[2] अ[1]; बलिनावद्ध्वाहविव वि[1]. ४-४. °नस्नाहौ सुखनिमित्तौ वि[1]; त्रुटितम् वि[2] अ[1]. ५. गच्छता वि[2] अ[1]. ६-६ दूतावहि वि[2] अ[1]. ७. °पु···वि[2] अ[1]. ८-८. महिषाइवोष्मतप्ता वि[2] अ[1]; महिषाविवोष्णतप्तो वि[1]. ९-९. पक्षि···नित्र वि[2] अ[1]. १०-१०. °च्छत तो वि[2] अ[1]; °च्छवन्तौ वि[1]. ११. °मानो मूको. १२. नास्ति मूको. १३. बन्धुः मूको. १४. पपातवक्रुतां मूको. १५. स्वामिनाम् मूको.

वंसगाऽइव । पूषर्या । शिम्बाता । मित्राऽईव । ऋता । शतरा । शातपन्ता ।
वाजाऽइव । उच्चा । वयसा । घर्म्येऽस्था । मेषाऽइव । इषा । सपर्या । पुरीषा ॥ ५ ॥

वेङ्कट० वननीयगमनावृषभौ[1] इव पुष्टौ वोढारौ सखायौ इव सत्यकर्माणौ । 'शतरा। शातपन्ता' (निघ ३,६) इति द्वे सुखनामसु पठिते। सुखस्य कारकौ[2] सुखस्य रक्षकाविति[3] नूनं निर्वचनम् । अश्वौ इव उच्छ्रितौ प्रदित्सितेनान्नेन[4] सह प्रवर्ग्ये[5] तिष्ठन्तौ मेषौ इव द्यूतार्थम् अन्नेन परिचरणीयौ उदकवन्ताविति[6] ॥५॥

[7]इति अष्टमाष्टके षष्ठाध्याये प्रथमो वर्गः[7] ॥

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ ६ ॥

सृण्याऽइव । जर्भरी इति । तुर्फरीतू इति । नैतोशाऽइव । तुर्फरी इति । पर्फरीका ।
उदन्यजाऽईव । जेमना । मदेरू इति । ता । मे । जरायु । अजरम् । मरायु ॥ ६ ॥

वेङ्कट० सृणिरङ्कुशः, तदर्हौ[8] [9]मत्तौ इव[9] गजौ गात्राणि [10]मदात् चलयन्तौ[10] हिंसकौ शत्रूणाम् । जृम्भिर्गात्रविनामकर्मा, [11]तृफिर्हिंसाकर्मेत्याहुः । आयुधजीवनौ इव[11] हिंसकौ, आजिं प्रति शीघ्रं गच्छन्तौ । फरिर्गमनकर्मा । समुद्रजौ इव अश्वौ जयेन माद्यन्तौ तौ मम जरामरणस्वभावं शरीरम् अजरामरम् कुरुतमिति ॥ ६ ॥

पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।
ऋभू नापत् खरमज्रा खरज्रुर्वायुर्न पर्फरत् क्षयद्रयीणाम् ॥ ७ ॥

पज्राऽईव । चर्चरम् । जारम् । मरायु । क्षद्मऽइव । अर्थेषु । तर्तरीथः । उग्रा ।
ऋभू इति । न । आपत् । खरमज्रा । खरऽज्रुः । वायुः । न । पर्फरत् । क्षयत् । रयीणाम् ॥७॥

वेङ्कट० गमनशीलाऽसती इव पुनःपुनश्चरन्तम् [12]जारम् मर्त्यं[12] स्तोतारम् अभिगच्छथः[13] । उदकम् इव च प्रवणेषु उद्गूर्णौ । तौ दीप्तौ न आप्नोति शत्रुः । ईश्वरौ धनार्थं[14] स्तोतॄणां [15]गृहम् आगच्छथः[15], यथा वायुः शीघ्रं गच्छति ॥ ७ ॥

घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ्मनऋङ्गा मनन्या३ न जग्मी ॥ ८ ॥

---

१. वननीयं गमना° वि[2] अ[1]; कननीयगमनवृष° वि[1]. २. कारका वि[2] अ[1]; तारकौ वि[1]. ३. रक्षिताराविति वि[1]. ४. °तेऽन्नाय धनेन वि[1]. ५. प्रवेश्य वि[1]. ६. नास्ति वि[1]. ७-७. नास्ति मूको. ८. तर्हौ वि[1]; तद्दहौ वि[2] अ[1]. ९-९. मन्तोविव वि[1] अ[1]; मताविव वि[1]. १०-१०. चदार्चयन्तौ वि[1]. ११-११. °कर्मातुर्हिंसा कर्मेत्याहु तायुधजीविनाविव वि[1]. १२-१२ जारमर्त्यः वि[2] अ[1]. १३. °च्छत अ[1]. १४. धर्षार्थं वि[1]. १५-१५. हि नागच्छथो वि[2]; हिमागच्छथो अ[1].

घुर्माऽईव । मधुं । जुठरे । सुनेरू इति । भगेऽअविता । तुर्फरी इति । फारिवा । अरम् ।
पतराऽईव । चुचरा । चुन्द्रऽनिर्निक् । मनःऽऋङ्गा । मुनन्यां । न । जग्मी इति ॥ ८ ॥

वेङ्कट० तप्तौ इव महावीरौ मधु स्व-जठरे सम्भजन्तौ [1]भगेवितः इति[1] सङ्ग्रामनाम, धने गतिरत्र विद्यत इति, तत्र हिंसकौ पर्याप्तम् च गन्तारौ पक्षिणौ इव सञ्चरणशीलौ हिरण्यरूपौ मननीयस्तुतिकौ सम्मान्यौ इव च राजानौ [2]गच्छन्तावपि तौ[2] मनन्याविति ॥ ८ ॥

बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ॥ ९ ॥

बृहन्ताऽइव । गम्भरेषु । प्रतिऽस्थाम् । पादाऽइव । गाधम् । तरते । विदाथः ।
कर्णाऽइव । शासुः । अनु । हि । स्मराथः । अंशाऽइव । नः । भजतम् । चित्रम् । अप्नः ॥९॥

वेङ्कट० यथा दीर्घौ पादौ उदकेषु गच्छते पथिकाय पदनिधानयोग्यम् गाधम् स्थलं प्रयच्छतः, एवं युवामप्यप्रतिष्ठिताय प्रतिष्ठाम् प्रयच्छथः। आद्यपादस्य प्रपञ्चो द्वितीयः पादः[3]। कर्णौ इव च यजमानस्य शासनमुक्तम् अनु हि स्मराथः अनुशृणुथः। तथा सति पुत्रः पितुर्मृतस्य[4] यथा रिक्थांशं[5] भजते[6], तद्वद् अस्मदीयम् चित्रम् कर्म भजतम्[7] इति ॥ ९ ॥

आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे ।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात् सचेथे ॥ १० ॥

आरङ्गराऽइव । मधुं । आ । ईरयेथे इति । सारघाऽइव । गवि । नीचीनऽबारे ।
कीनाराऽइव । स्वेदम् । आऽसिस्विदाना । क्षामऽइव । ऊर्जा । सुयवसऽअत् । सचेथे इति ॥१०॥

वेङ्कट० यथा पर्याप्तं गिरन्तौ पुष्पेभ्यो भक्षयन्तौ मधु क्षौद्रपटले प्रेरयतः, एवं युवाम् अप्युदकम्[8] आ ईरयेथे। तदेवाह—सारघौ इव आदित्ये नीचीनद्वारे इति। कीनारौ कीनाशौ, तौ यथा श्रमात् स्वेदम् [9]आक्षरतः, एवं[9] वृष्ट्युदकम् आक्षरन्तौ, यथा कृशं पुरुषं पयसा शोभनस्य यवसस्याऽत्त्री गौः सेवते, तथा स्तोतारम् सचेथे इति ॥ १० ॥

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ११ ॥

ऋध्याम । स्तोमम् । सुनुयाम । वाजम् । आ । नः । मन्त्रम् । सऽरथा । इह । उप । यातम् ।
यशः । न । पक्वम् । मधुं । गोषु । अन्तः । आ । भूतऽअंशः । अश्विनोः । कामम् । अप्राः ॥११॥

वेङ्कट० समृद्धं कुर्याम स्तोमम् इमम्। भजेमहि अन्नम्। उप आ गच्छतम् अस्माकम् मन्त्रम् प्रति इह

१-१. भगदिति वि[2] अ[1]; भगेवितति वि[1]. २-२. °वपितरौ मूको. ३. नास्ति वि[2] अ[1]. ४. पितृमृ° वि[2] अ[1]. ५. °शो मूको. ६. भजेते वि[1]. ७. भाजत वि[2] अ[1]; भजनम् वि[1]. ८. °दके वि[1]. ९-९. °रते एवं वि[1]; °रतैवं वि[2] अ[1].

एकरथौ अन्नम् इव पयोलक्षणम् पक्कम् मादकम् पशुषु । आ-पूरितवान् अयम् भूतांशः अश्विनोः सकाशात् कामम् आत्मनीति ॥ ११ ॥

[1]इति अष्टमाष्टके षष्ठाध्याये द्वितीयो वर्गः[1] ॥

## [ १०७ ]

[1]दिव्य आङ्गिरसः, दक्षिणा वा प्राजापत्या ऋषिः । दक्षिणा दक्षिणादातारो वा देवता । त्रिष्टुप् छन्दः, चतुर्थी जगती[1] ।

आविरंभून्महि माघोनमेषां विश्वं जीवं तमसो निरमोचि ।
महि ज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि ॥ १ ॥

आविः । अभूत् । महि । माघोनम् । एषाम् । विश्वम् । जीवम् । तमसः । निः । अमोचि ।
महि । ज्योतिः । पितृऽभिः । दत्तम् । आ । अगात् । उरुः । पन्थाः । दक्षिणायाः । अदर्शि ॥

वेङ्कट० दक्षिणा प्राजापत्या । आत्मस्तवः[2] । आविर्भूतम् आसीत् एषाम् उदाराणां दातॄणाम् ऐन्द्रम् महत्त्वम् इन्द्र इव प्रयच्छन्तीति[3] । किं चैषां दक्षिणया[4] सर्वम् जीवम् भूतम् दारिद्र्यतमसः निर्मुक्तमासीत् । महत् च एषाम् ज्योतिः पितृभिः पूर्वैः दत्तम् आ-गतम् । सोऽयमेषु दृश्यते दक्षिणायाः [5]विस्तीर्णः मार्गः[5] ॥ १ ॥

उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥ २ ॥

उच्चा । दिवि । दक्षिणाऽवन्तः । अस्थुः । ये । अश्वऽदाः । सह । ते । सूर्येण ।
हिरण्यऽदाः । अमृतऽत्वम् । भजन्ते । वासःऽदाः । सोम । प्र । तिरन्ते । आयुः ॥ २ ॥

वेङ्कट० उच्चैः स्वर्गे दातारः तिष्ठन्ति । शिष्टं स्पष्टमिति ॥ २ ॥

दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणन्ति ।
अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः पृणन्ति ॥ ३ ॥

दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि । ते । पृणन्ति ।
अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया । बहवः । पृणन्ति ॥ ३ ॥

वेङ्कट० [6]देवप्रीणनम् अन्नदानम्[6] भवति, धनदानम् च देवप्रीणनम् । तदुभयम्[7] न कवारिभ्यः क्रियते कुत्सितगामिभ्योऽनाचारेभ्यः[8], नहि ते अभिमतं दानफलं प्रयच्छन्ति । अपि चान्ये मनुष्याः साधुभ्यः प्रदीयमानधनाः उपद्रवभयेन[9] बहवः प्रीयन्ते साधुभ्योऽपीति ॥ ३ ॥

---

१-१. नास्ति मूको. २. °स्तवम् वि[2] अ[1]. ३. °च्छतीति वि[2] अ[1]. ४. दक्षिणाया मूको. ५-५. विरतीर्णमार्गः वि[1]. ६-६. °नमद्दानै वि[1] अ[1]. ७. तदितरदुभय वि[2] अ[1]. ८. कुत्सितनादिभ्यो नावारेभ्यः वि[2] अ[1]; °नचारेभ्यः वि[1]. ९. °द्रवबलेन वि[2].

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः ।
ये पृणन्ति प्र च यच्छन्ति संगमे ते दक्षिणां दुहते सप्तमातरम् ॥ ४ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते । अभि । चक्षते । हविः ।
ये । पृणन्ति । प्र । च । यच्छन्ति । सम्ऽगमे । ते । दक्षिणाम् । दुहते । सप्तऽमातरम् ॥ ४ ॥

**वेङ्कट०** देवमनुष्यतिर्यक्षु प्राणात्मना वर्तमानम् शतधारम् वायुम् अर्चनीयम् सर्वज्ञम् नृणां क्षुधितानां द्रष्टारः ते अभि पश्यन्ति हविषा । ये अन्नेन तर्पयन्ति प्र यच्छन्ति च[1] धनानि भिक्षमाणस्य सङ्गमे, ते परत्र सप्तमातृकाम् दक्षिणाम् कामान्[2] दुहते । सप्त च मातरः 'तस्य वा अग्नेर्हिरण्यं[3] प्रति जुहुवुः[4]' इत्यनुवाकेऽध्वर्युभिराम्नाताः[5] ॥ ४ ॥

दक्षिणावान् प्रथमो हूत एति दक्षिणावान् ग्रामणीरग्रमेति ।
तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥ ५ ॥

दक्षिणाऽवान् । प्रथमः । हूतः । एति । दक्षिणाऽवान् । ग्रामऽनीः । अग्रम् । एति ।
तम् । एव । मन्ये । नृऽपतिम् । जनानाम् । यः । प्रथमः । दक्षिणाम् । आऽविवाय ॥ ५ ॥

**वेङ्कट०** प्रयतदक्षिणः प्रथममेव आहूतः[6] गच्छति संसदम् । दक्षिणावान् ग्रामणीः अग्रम् गच्छति । समानानाम् तम् एव मन्ये राजानम् जनानाम्, यः पूर्वमेव दक्षिणाम् आगमयति ॥ ५ ॥

[7]इति अष्टमाष्टके षष्ठाध्याये तृतीयो वर्गः[7] ॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम् ।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ६ ॥

तम् । एव । ऋषिम् । तम् । ऊँ इति । ब्रह्माणम् । आहुः । यज्ञऽन्यम् । सामऽगाम् । उक्थऽशासम् ।
सः । शुक्रस्य । तन्वः । वेद । तिस्रः । यः । प्रथमः । दक्षिणया । रराध ॥ ६ ॥

**वेङ्कट०** तम् एव देवा ऋष्यादिकं वदन्ति । सः अग्नेः तिस्रः तनूः लभते, यः प्रथमः दक्षिणया मनुष्यं[8] राधयति क्षुधितम्[9] । यज्ञस्य प्रणेतॄन् यजमानपञ्चमान् ऋत्विजः तानाहुरिति[10] ॥ ६ ॥

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् ।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥ ७ ॥

दक्षिणा । अश्वम् । दक्षिणा । गाम् । ददाति । दक्षिणा । चन्द्रम् । उत । यत् । हिरण्यम् ।
दक्षिणा । अन्नम् । वनुते । यः । नः । आत्मा । दक्षिणाम् । वर्म । कृणुते । विऽजानन् ॥७॥

---

१. नास्ति वि[1] अ[1]. २. कामं वि[1]. ३. °ग्ने हिर वि[2] अ[1]. ४. जहुवु वि[2] अ[1]. ५. °र्युरभिराम्नाता वि[2] अ[1]. ६. आभूतौ वि[2] अ[1]. ७-७. नास्ति मूको. ८. मनुष्या वि[1]. ९. क्षुमितं वि[2] अ[1]. १०. तमाहु° अ[1]; तामाहु° वि[2].

वेङ्कट० दक्षिणा सर्वमिदं दात्रे प्रयच्छति । तामिमां कवचम् करोति प्राज्ञः । [1]चर्म्म ह्लादकमिति[1] ॥ ७ ॥

न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः ।
इदं यद्विश्वं भुवनं स्वश्चैतत् सर्वं दक्षिणैभ्यो ददाति ॥ ८ ॥

न । भोजाः । मम्रुः । न । निऽअर्थम् । ईयुः । न । रिष्यन्ति । न । व्यथन्ते । ह । भोजाः ।
इदम् । यत् । विश्वम् । भुवनम् । स्वरिति स्वः । च । एतत् । सर्वम् । दक्षिणा । एभ्यः । ददाति ॥

वेङ्कट० न दातारः म्रियन्ते, न चापदम् गच्छन्ति, न न्यूनीभवन्ति, न च व्यथन्ते । यत् इदम् पार्थिवम् विश्वम् भुवनम् स्वर्गम् च, एतत् सर्वम् दक्षिणा एभ्यः भोजेभ्यः ददाति ॥८॥

भोजा जिग्युः सुरभिं योनिमग्रे भोजा जिग्युर्वध्वं या सुवासाः ।
भोजा जिग्युरन्तःपेयं सुराया भोजा जिग्युर्ये अहूताः प्रयन्ति ॥ ९ ॥

भोजाः । जिग्युः । सुरभिम् । योनिम् । अग्रे । भोजाः । जिग्युः । वध्वम् । या । सुऽवासाः ।
भोजाः । जिग्युः । अन्तःऽपेयम् । सुरायाः । भोजाः । जिग्युः । ये । अहूताः । प्रऽयन्ति ॥९॥

वेङ्कट० भोजाः जयन्ति सुगन्धम् योनिम् प्रथमम् । भोजाः जयन्ति वधूम्, या सुवस्त्रा भवति । [2]भोजाः जयन्ति अन्तःस्थितं[2] रसम् सुरायाः । क्षत्रियाः भोजाः जयन्ति दासान्, [3]ये अनाहूताः[3] कार्येषु प्रगच्छन्ति ॥ ९ ॥

भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या शुम्भमाना ।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥ १० ॥

भोजाय । अश्वम् । सम् । मृजन्ति । आशुम् । भोजाय । आस्ते । कन्या । शुम्भमाना ।
[4]भोजस्य । इदम् । पुष्करिणीऽइव । वेश्म[4] । परिऽकृतम् । देवमानाऽइव । चित्रम् ॥ १० ॥

वेङ्कट० भोजस्यारोहणार्थम् आशुम् अश्वम् पृष्ठे [5]सम् मृजन्ति[5] । भोजस्य भोगार्थम् आस्ते शरीरेण शोभमाना[6] वधूः । भोजस्य इदम् गृहम् भवति भोगाय पुष्करिणी[7] इव संस्कृतम् उपकरणैः देवविमानम्[8] इव पूजनीयम् ॥ १० ॥

भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः ।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता ॥ ११ ॥

भोजम् । अश्वाः । सुष्टुऽवाहः । वहन्ति । सुऽवृत् । रथः । वर्तते । दक्षिणायाः ।
भोजम् । देवासः । अवत । भरेषु । भोजः । शत्रून् । सम्ऽअनीकेषु । जेता ॥ ११ ॥

---

१-१. चन्द्रह्ला° वि[1] अ[1]. २-२ भोजायत्यन्तस्थितं वि[2] अ[1]; भोजा जयत्यन्तस्थितं वि[1]. ३-३. येनाभूता वि[1] अ[1]; येनाभूताः वि[1]. ४-४. अत्र या. (७,३) द्र. ५-५. समृज° मूको. ६. शोभनमाना मूको. ७. पुष्करणी वि[2] अ[1]; पुष्करीणी वि[1]. ८. संस्तुतदेवपिमानम् वि[1].

**वेङ्कट०** भोजम् अश्वाः सुष्ठुवोढारः सन्तः वहन्ति । सुवर्तमानः रथः गच्छति स्वर्गं[1] प्रदक्षिणायाः । भोजम् देवाः! रक्षत सङ्ग्रामेषु । भोजः शत्रून्[2] सङ्ग्रामेषु जेता भवत्विति ॥ ११ ॥

[3]इति अष्टमाष्टके षष्ठाध्याये चतुर्थो वर्गः[3] ॥

[ १०८ ]

[1]पणयोऽसुरा ऋषयः । सरमा देवता । २,४,६,८,१०,११ सरमा देवशुनी ऋषिका, पणयो देवता । त्रिष्टुप् छन्दः[1] ।

किमि॒च्छन्ती॑ स॒रमा॒ प्रेदमा॑नड् दू॒रे ह्यध्वा॒ जगु॑रिः परा॒चैः ।
का॒स्मेहि॑ति॒ः का परि॑तक्म्यासीत् कथं र॒साया॑ अत॒रः पयां॑सि ॥ १ ॥

किम् । इ॒च्छन्ती॑ । स॒रमा॑ । प्र । इ॒दम् । आ॒न॒ट् । दू॒रे । हि । अध्वा॑ । जगु॑रिः । प॒रा॒चैः ।
का । अ॒स्मेऽहि॑तिः । का । परि॑ऽतक्म्या । आ॒सी॒त् । कथम् । र॒सायाः॑ । अ॒त॒रः । पयां॑सि ॥१॥[4]

**वेङ्कट०** 'किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः तां[5] प्रोचुः सा तान् युग्मान्त्याभिरनिच्छन्ती प्रत्याचष्टे' ( ऋअ २,१०,१०८ ) ।

किम् इच्छन्ती सरमा इदम् प्राप्तवती । दूरे हि अयम् अध्वा गतः देवलोके पराचीनः यतस्त्वमागच्छसि । किं तव अस्मासु निहितम्, किं वा परिगन्तव्यम् आसीत् निहितम् । कथम् त्वं मध्ये वहन्त्याः रसायाः अतरः पयांसि ॥ १ ॥

इन्द्र॑स्य दू॒तीरि॑षि॒ता च॑रामि म॒ह इ॒च्छन्ती॑ पणयो नि॒धीन् वः॑ ।
अ॒ति॒ष्कदो॑ भि॒यसा॒ तन्न॑ आव॒त् तथा॑ र॒साया॑ अत॒रं पयां॑सि ॥ २ ॥

इन्द्र॑स्य । दू॒तीः । इ॒षि॒ता । च॒रा॒मि॒ । म॒हः । इ॒च्छन्ती॑ । प॒ण॒यः॒ । नि॒ऽधीन् । व॒ः । अ॒ति॒ऽस्कदः॑ । भि॒यसा॑ । तत् । न॒ः । आ॒व॒त् । तथा॑ । र॒सायाः॑ । अ॒त॒रम् । पयां॑सि ॥ २ ॥

**वेङ्कट०** [6]इन्द्रस्य दूती अतरम् पयांसि[6] ॥ २ ॥

की॒दृङ्ङिन्द्र॑ः सरमे॒ का दृ॑शी॒का यस्ये॒दं दू॒तीरस॑रः परा॒कात् ।
आ च॒ गच्छा॑न्मि॒त्रमे॑ना दधा॒माथा॒ गवां॒ गोप॑तिर्नो भवाति ॥ ३ ॥

की॒दृङ् । इन्द्रः॑ । स॒रमे॒ । का । दृ॒शी॒का । यस्य॑ । इ॒दम् । दू॒तीः । अस॑रः । प॒रा॒कात् । आ । च॒ । गच्छा॑त् । मि॒त्रम् । ए॒न॒ । द॒धा॒म॒ । अथ॑ । गवा॑म् । गोऽप॑तिः । न॒ः । भ॒वा॒ति॒ ॥३॥

**वेङ्कट०** कीदृशः इन्द्रः सरमे!, कीदृशम् वास्य[7] कार्येषु दर्शनम्, यस्य त्वम् इदम् [8]दूतीः असरः[8] दूरात् ।

---

१. नास्ति वि[1]. २. शत्रं वि[2] अ[1]. ३-३. नास्ति मूको. ४. या. (११,२५) व्याख्याता द्र. ५. नास्ति वि[1] ऋअ; तं वि[2] अ[1]. ६-६. नास्ति वि[2] अ[3]. ७. वात्रास्य वि[2] अ[1]. ८-८. °ती तुदपणयो निहितान् युष्मासु सोऽध्वास्मानक्षदति वि[2] अ[1].

इह आ गच्छति चेद्, अनेन[1] मैत्रीं वयं कुर्मः। अथ स इन्द्रः अस्माकम् गोपतिः भवत्विति पणीनामिन्द्रं जयार्थमानेतुमिच्छतां वचनमिति ॥ ३ ॥

नाहं तं वेद दभ्यं दभत् स यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् । दूतीः । असरम् । पराकात् ।
न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण । पणयः । शयध्वे ॥ ४ ॥

**वेङ्कट०** न अहम् तम् वेद्मि दम्भनीयम्। हिनस्ति सः, यस्य इदम् दूतीः असरम् पराकात्। न तम् इन्द्रं प्रच्छादयन्ति वहन्त्यः आपोऽपि। तथा सति तम् अतिसन्धातुमिच्छन्तो[2] यूयम् पणयः! इदानीमेव तेन हताः शयध्वे इति ॥ ४ ॥

इमा गावः सरमे या ऐच्छः परि दिवो अन्तान्त्सुभगे पतन्ती ।
कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् । सुऽभगे । पतन्ती ।
कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥५॥

**वेङ्कट०** इमाः ताः गावः सरमे!, याः त्वम् ऐच्छः दिवः परि अन्तात् सुभगे! अनु-पतन्ती। कः तव स्वभूतः[3] एनाः गाः अव सृजतु अयुध्वा । अपि च अस्माकम् आयुधानि इमानि [4]सन्ति तिग्मानि[4] ॥ ५ ॥

[5]इति अष्टमाष्टके षष्ठाध्याये पञ्चमो वर्गः[5] ॥

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः ।
अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ ६ ॥

**वेङ्कट०** असनीयानि दासपुत्रैः युष्माकम् पणयः! वचनानि भवन्तु। गतश्रीकाणाम् तथा असेवितव्याश्चाऽश्रिकाः तन्वः सन्तु। अधृष्टः चायम् इतः पूर्वम् अन्यः पुरप्रवेशमार्गः देवानामेतव्यो भवतु। बृहस्पतिः युष्मान् उभयानपि सत्यानृतयुक्तान् न क्षमत इति ॥ ६ ॥

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ ॥ ७ ॥

---

१. चेदनन वि[1]; वेनेन वि[2] अ[1]. २. °मनति° वि[2] अ[1]. ३. °भूता वि[1]. ४-४. सन्तीति-इमानि वि[1]; सन्तितमइमानि वि[2]; सन्ति तम इमानि अ[1]. ५-५. नास्ति मूको.

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः ।
रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥ ७ ॥

**वेङ्कट०** अयम् अस्माभिराहृतानां गवादीनाम् निधिः सरमे! यो[1] मेघबद्धो मेघाकारेण बलासुरेण निहितः गवादिभिः न्यृष्टः ह्रद इवोर्मिभिः। तम् चेमं निधिम् रक्षन्ति पणयः, ये सुगोपाः। रिक्तम् गवादिभिरिदं स्थानम् व्यर्थम् आ जगन्थ। अत्र शाट्यायनकम्—'अथ ह वै पणयो नामासुरा देवानां गोरक्षा आसुः। ताभिरहापातस्थुः। ता ह रसायां निरुध्य वलेनापिदधुः' ( जैब्रा २, ४४० ) इत्यादि ॥ ७ ॥

एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अङ्गिरसः । नवऽग्वाः ।
ते । एतम् । ऊर्वम् । वि । भजन्त । गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥८॥

**वेङ्कट०** आ [2]अगच्छन् अस्मिन् असुरकुले[2] मत्तोऽप्यन्ये ऋषयः सोमेन तीक्ष्णीकृताः अयास्यः आङ्गिरसः[3] अन्ये च सर्वे अङ्गिरसः नवग्वाः। ते चागतास्सन्त इमम् विस्तृतं गोसङ्घम् यथायथम् [4]वि अभजन् मनसा[4]। अथ अपि एतत् वचः पणयः वमन्त्येव अज्ञाः। गूढे निहिततेत्याख्याताऽनिघातत्वे कारणमुक्तमिति ॥ ८ ॥

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा । दैव्येन ।
स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

**वेङ्कट०** एवम् एव च[5] त्वम् सरमे! आजगन्थ दूरं देशं पीडिता दैव्येन बलेन उक्ताऽननुष्ठाने[6] घ्नन्ति देवा इति। ताम् [7]त्वाम् इदानीं[7] स्वसृस्थानीयाम् कुर्मः मा तत्र पुनः गाः। तुभ्यं चासाम् गवाम् भागम् सुभगे! वयम् भजाम इति। अत्र शाट्यायनकम्—'सर्पिः क्षीरमामिक्षां दधीत्येतदेवोपनिदधुः' ( जैब्रा २,४४१ ) इति ॥ ९ ॥

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन् यदायमपात इत पणयो वरीयः ॥ १० ॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आऽअयम् । अप । अतः । इत । पणयः । वरीयः ॥ १० ॥

---

१. ये वि[२] अ[१]; नास्ति वि[१]. २-२. °च्छन्नसुर वि[१] अ[१]. ३. अङ्गि° वि[२] अ[१]. ४-४. व्यभजमानसा वि[२] अ[१]. ५. नास्ति वि[१]. ६. °क्तानुष्ठ वि[१]. ७-७. °त्वामिति तदा वि[१].

वेङ्कट० न अहम् अनुजानामि युष्माकम् भ्रातृत्वम्, नापि मम स्वसृत्वम्। भवद्भिः तथा कृते सति इन्द्रः च जानाति अङ्गिरसः च घोराः। ते च माम् गोकामाः[१] प्रेषयामासुः यतः अहम् आयम्। तथा सति गास्त्यक्त्वा अप गच्छत अस्मात्स्थानाद् दूरम् पणयः! ॥ १० ॥

दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥

दूरम्। इत। पणयः। वरीयः। उत्। गावः। यन्तु। मिनतीः। ऋतेन।
बृहस्पतिः। याः। अविन्दत्। निऽगूळ्हाः। सोमः। ग्रावाणः। ऋषयः। च। विप्राः ॥११॥

वेङ्कट० दूरम् इत पणयः! उरुतरम् अन्यत्स्थानं प्रति। उत् गच्छन्तु पातालात् गावः शब्दायमानाः उदकेन, बृहस्पतिः याः[२] पुरा अविन्दत् निगूढाः सोमादयश्च मेधाविन इति ॥ ११ ॥

[३]इति अष्टमाष्टके षष्ठाध्याये षष्ठो वर्गः[३] ॥

[ १०९ ]

[१]जुहूर्ब्रह्मजाया, ब्राह्म ऊर्ध्वनाभा वा ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः, अन्त्ये अनुष्टुभौ[१]।

तेऽवदन् प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा।
वीळुहरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

ते। अवदन्। प्रथमाः। ब्रह्मऽकिल्बिषे। अकूपारः। सलिलः। मातरिश्वा।
वीळुऽहराः। तपः। उग्रः। मयःऽभूः। आपः। देवीः। प्रथमऽजाः। ऋतेन ॥ १ ॥

वेङ्कट० जुहूर्बृहस्पतेर्जाया[४] ऋषिः[५]। तां बृहस्पतिः सोमे राजनि न्यधात्। तां सोमः तस्मै यथासंविदं न प्रायच्छत्[६]। तत्रेदं सूक्तं प्रवृत्तम्। ते देवाः संवादम् अवदन्[७] प्रथमाः ब्रह्मकिल्बिषे समुद्रः। सलिलमयमिति वरुणमुक्तं मन्यन्ते। मातरिश्वा दृढक्रोधः घर्मः उद्गूर्णः सुखस्य भावयिता आपः च देव्यः प्रथममेव जनिताः सिसृक्षुणा ब्रह्मणेति ॥ १ ॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥

सोमः। राजा। प्रथमः। ब्रह्मऽजायाम्। पुनरिति। प्र। अयच्छत्। अहृणीयमानः।
अनुऽअर्तिता। वरुणः। मित्रः। आसीत्। अग्निः। होता। हस्तऽगृह्य। आ। निनाय ॥ २ ॥

वेङ्कट० सोमः राजा मुख्यः बृहस्पतेर्जायाम् पुनः अपि '[८]प्र अयच्छत् अक्रुध्यन्[८]' देवैरुक्तः। तत्र अनुगन्तारौ आस्ताम् मित्रावरुणौ। अग्निः ताम् होता हस्ते गृहीत्वा आ निनाय इति ॥ २ ॥

---

१. 'कामां वि[२] अ[१]. २. या मूको ३-३ नास्ति मूको. ४ जहु° मूको. ५. ऋषिं वि[२] अ[१]. ६. नास्ति वि[२] अ[१]; प्रायच्छत मूको. ७. समव° वि[२] अ[१]. ८-८. प्रायच्छन् क्रु° वि[१]; प्रायच्छत क्रु° वि[२] अ[१].

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन् ।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥

हस्तेन । एव । ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इयम् । इति । च । इत् । अवोचन् ।
न । दूताय । प्रऽह्ये । तस्थे । एषा । तथा । राष्ट्रम् । गुपितम् । क्षत्रियस्य ॥ ३ ॥

वेङ्कट० अस्याः आहितो वेषः हस्तेन एव ग्राह्यः । यस्मादियमाहिता परस्त्री परस्मिन्, तस्माद्धस्तेनैव नेतव्या । ब्राह्मणस्य जाया इयम् इति च देवाः संवादं कुर्वन्तः अब्रुवन् । सा च इयम् अस्माभिः प्रथमं प्रहिताय दूताय सोमेन राज्ञा विसृष्टा न तस्थे अग्रतः इहानयनार्थम् । तथा समर्पितायां तस्याम् क्षत्रियस्य[1] इन्द्रस्य राज्यम् गुपितम् अभवत्[2] । ब्राह्मणस्य जायां देवा अपहरन्तीति राष्ट्रं क्षुभितमासीदिति[3] ॥ ३ ॥

देवा एतस्यामवदन्त पूर्वे सप्तऋषयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥ ४ ॥

देवाः । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसे । ये । निऽसेदुः ।
भीमा । जाया । ब्राह्मणस्य । उपऽनीता । दुःऽधाम् । दधाति । परमे । विऽओमन् ॥ ४ ॥

वेङ्कट० देवाः एतस्याम् विषये सम्-अवदन्त पूर्वे सप्तऋषयः तपसे ये निषण्णाः । संवादप्रकारः—भीमा जाया ब्राह्मणस्य सोमेन उपनीता परमे व्योम्नि स्वर्गे दुर्धाम्[4] करोति । [5]दुर्धां दौस्थ्यमिति[5] ॥४॥

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद्बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् । भवति । एकम् । अङ्गम् ।
तेन । जायाम् । अनु । अविन्दत् । बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥५॥

वेङ्कट० भार्याऽलाभात् ब्रह्मचारी भवति बृहस्पतिः व्याप्नुवन्[6] व्याप्तव्यान् देवान् । सः चायम् बृहस्पतिः देवानाम् भवति मुख्यम् अङ्गम् सप्ताङ्गस्य राज्यस्य । तेन सोमेन नीताम् अयम् बृहस्पतिः हे देवाः! [7]जुह्वम् अलभत[7] इति[8] ॥ ५ ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ ६ ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत ।
राजानः । सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ ६ ॥

---

१. क्षत्रस्य वि[२] अ[१]. २. अभवन् वि[१]; अभवन्ति वि[२] अ[१]. ३. क्षुभितमा° वि[२] अ[१]; क्षभतमा° वि[१]. ४. दुग्धां मूको. ५-५. दुग्धामोस्थ्यम् वि[२] अ[१]; दुग्धामो दौस्थ्यम् वि[१]. ६. व्याप्तवान् वि[२] अ[१]. ७. °हम्नल° मूको. ८. °ति ब्रुवाणम् वि[२] अ[१].

वेङ्कट० क्षुभिते राष्ट्रे सर्वे सम्भूय बृहस्पतये सत्यम् अनुरुन्धन्तो जायां प्रायच्छन्निति ॥ ६ ॥

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥ ७ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वी । देवैः । निऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वाय । उरुऽगायम् । उप । आसते ॥ ७ ॥

वेङ्कट० पुनर्दत्त्वा ब्राह्मणजायाम्, कृत्वा च देवैः सह ब्राह्मणैः अपापम्, हविर्भूतं रसम् च[1] पृथिव्याः भक्त्वाय[2] देवा उरुकीर्तिं बृहस्पतिम् उपासते इति ॥ ७ ॥

[3]इति अष्टमाष्टके षष्ठाध्याये सप्तमो वर्गः[3] ॥

## [ ११० ]

[1]जमदग्निर्भार्गवः, जामदग्न्यो रामो वा ऋषिः। आप्रीसूक्तम् ( =१ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयो देवताः )† । त्रिष्टुप् छन्दः[1] ।

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥ १ ॥

सम्ऽइद्धः । अद्य । मनुषः । दुरोणे । देवः । देवान् । यजसि । जातऽवेदः ।
आ । च । वह । मित्रऽमहः । चिकित्वान् । त्वम । दूतः । कविः । असि । प्रऽचेताः ॥१॥[4]

वेङ्कट० जमदग्निः। समिद्धः अद्य मनुष्यस्य गृहे देवः देवान् यजसि जातवेदः!। तान्[5] आ वह च मित्राणां पूजयितः! प्राज्ञः त्वम्। त्वम् दूतः इति स्पष्टम् ॥ १ ॥

तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥ २ ॥

तनूऽनपात् । पथः । ऋतस्य । यानान् । मध्वा । सम्ऽअञ्जन् । स्वदय । सुऽजिह्व ।
मन्मानि । धीभिः । उत । यज्ञम् । ऋन्धन् । देवऽत्रा । च । कृणुहि । अध्वरम् । नः ॥ २ ॥[6]

वेङ्कट० हे तनूनपात्! मार्गान् यज्ञस्य यानान् आज्येन[7] समञ्जन् स्वादूकुरु सुज्वाल!। स्तोत्राणि कर्मभिः अपि च यज्ञम् समर्धयन् देवेषु च[8] कुरु अस्माकम् इमं यज्ञमिति ॥ २ ॥

---

१. नास्ति वि[1]. २. भक्त्वा यदि मूको. ३-३. नास्ति मूको. † तु. ऋ ७,२. ४. या. (८,५) व्याख्यानं द्र. ५. तानि वि[2] अ[1]. ६. अत्र या. (८,६) द्र. ७. तु. ऋ १,१८८,२; याज्ञेन मूको. ८. नास्ति वि[1].

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजीयान् ॥ ३ ॥

आऽजुह्वानः । ईड्यः । वन्द्यः । च । आ । याहि । अग्ने । वसुऽभिः । सऽजोषाः ।
त्वम् । देवानाम् । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥ ३ ॥[1]

**वेङ्कट०** आहूयमानः स्तुत्यः वन्दितव्यः च आ गच्छ अग्ने![2] वसुभिः सङ्गतः । त्वम् देवानाम् असि [3]महन्! आह्वाता[3] । सः एनान् देवान्[4] यज अस्माभिः प्रेषितः यष्टृतरः ॥ ३ ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ ४ ॥

प्राचीनम् । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ।
वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥ ४ ॥[1]

**वेङ्कट०** स्तरणवेलायां प्रागग्रम् बर्हिः पृथिव्याः[5] प्रदिशा प्राच्या दिशा संयुक्तं तत्र प्ररूढम् [6]आच्छादनाय अस्याः[6] पृथिव्याः [7]अध्वर्युभिः लूयते[7] पूर्वाह्णे । वि प्रथते च अत्यन्तम् उरुतरम् देवेभ्यः पृथिव्यै चास्यै सुखकरं सेवितमिति यास्कः ( तु. ८,९ ) ॥ ४ ॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ५ ॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः । शुम्भमानाः ।
देवीः । द्वारः । बृहतीः । विश्वम्ऽइन्वाः । देवेभ्यः । भवत । सुप्रऽअयनाः ॥ ५ ॥[1]

**वेङ्कट०** व्यापनवत्यः[8] उरुत्वेन वि श्रयन्ताम् पतिभ्यः इव[9] जायाः अङ्गानि शोभयन्त्यः । हे[9] देव्यः! द्वारः! बृहत्यः! विश्वमिन्वाः! । विश्वमाभिरेति । देवेभ्यः भवत सुप्रगमनाः ॥ ५ ॥

[10]इति अष्टमाष्टके षष्ठाध्याये अष्टमो वर्गः[10] ॥

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ । दिव्ये इति ।
योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे । अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥६॥[1]

---

१. ऋचः (३-६) यक्र. या. (८,८-११) व्याख्याताः द्र. २. अने वि[2] अ[1]; अन्ने अ[1]. ३-३. महद्वाता वि[1] अ[1]; महह्वाता वि[1]. ४. नास्ति वि[1]. ५-५. °थिव्यां वि[2] अ[1]. ६-६. °च्छादयन्नायास्याः मूको. ७-७. °भिर्लयः वि[1] अ[1]; अध्वभिरालास्तिर्यते वि[1]. ८, नवत्य मूको. ९. मे वि[1] अ[1]. १०-१०. नास्ति मूको.

**वेङ्कट०** आ-नि-षीदताम् सेष्मीयमाणे[1] यज्ञिये उपक्रान्ते नक्तोषसौ गृहे दिव्ये योषणे महत्यौ सुरोचने[2] अधि दधाने शुक्ररूपाम् श्रियम् तेजसोपरक्ते इति ॥ ६ ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ।
प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥[3]

**वेङ्कट०** दैव्यौ होतारौ प्रथमौ सुवाचौ कुर्वाणौ यज्ञम् मनुष्यस्य यजनाय[4] प्रचोदयन्तौ यज्ञेषु कर्मशीलौ प्राचीनम् ज्योतिः आदित्यं प्रदेशनेन दिशन्तौ प्रातरिति ॥ ७ ॥

आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥ ८ ॥

आ । नः । यज्ञम् । भारती । तूयम् । एतु । इळा । मनुष्वत् । इह । चेतयन्ती ।
तिस्रः । देवीः । बर्हिः । आ । इदम् । स्योनम् । सरस्वती । सुऽअपसः । सदन्तु ॥ ८ ॥[3]

**वेङ्कट०** आ यातु अस्माकम् यज्ञम् भारती क्षिप्रम् इळा च मनुष्यवत् इह चेतयमाना[5] । तिस्रः देव्यः बर्हिः इदम् सुखम् सरस्वती च सुकर्माणः आ सीदन्तु ॥ ८ ॥

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ ९ ॥

यः । इमे इति । द्यावापृथिवी इति । जनित्री इति । रूपैः । अपिंशत् । भुवनानि । विश्वा ।
तम् । अद्य । होतः । इषितः । यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥ ९ ॥[3]

**वेङ्कट०** यः इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैः समयोजयद् भूतानि च सर्वाणि, तम् अद्य होतः! प्रेषितः यष्टृतरः देवम् त्वष्टारम् इह यज विद्वान् ॥ ९ ॥

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ १० ॥

उपऽअवसृज । त्मन्या । सम्ऽअञ्जन् । देवानाम् । पाथः । ऋतुऽथा । हवींषि ।
वनस्पतिः । शमिता । देवः । अग्निः । स्वदन्तु । हव्यम् । मधुना । घृतेन ॥ १० ॥

**वेङ्कट०** उपावसृज वनस्पते! आत्मनैव[6] रसेन समञ्जन् देवानाम् अन्नम् काले-काले हवींषि[7] ।

---

१. धेष्मियं माणे वि[2]; धेष्मियमाणे अ[1]; सेष्मियमाणे वि[1]. २. रोचने वि[1] अ[1]. ३. ऋचः (७-९) यक्र. या. ( ८,१२-१४ ) व्याख्याताः द्र. ४. °जमानाय मूको. ५. चतायमाना वि[1]; चेतयमानाः वि[2] अ[1]. ६. त्वनेप मूको. ७. नास्ति वि[2] अ[1].

वनस्पतिप्रभृतयस्त्रयः हव्यम् मादकेन घृतेन स्वादूकुर्वन्तु। 'मधुना च घृतेन च' इति यास्कः (८,१७) ॥ १० ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥ ११ ॥

सद्यः । जातः । वि । अमिमीत । यज्ञम् । अग्निः । देवानाम् । अभवत् । पुरःऽगाः ।
अस्य । होतुः । प्रऽदिशि । ऋतस्य । वाचि । स्वाहाऽकृतम् । हविः । अदन्तु । देवाः ॥११॥

वेङ्कट० 'सद्यो जायमानो निरमिमीत यज्ञम्। अग्निर्देवानाम् अभवत् पुरोगामी। अस्य होतुः [1]प्रदिश्यृतस्य[1] वाच्यास्ये स्वाहाकृतं हविरदन्तु देवाः' इति यास्कः (८,२१) ॥ ११ ॥

[2]इति अष्टमाष्टके षष्ठाध्याये नवमो वर्गः[2] ॥

[ १११ ]

[3]वैरूपोऽष्टादंष्ट्र ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[3]।

मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः सन्ति नृणाम् ।
इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥१॥

मनीषिणः । प्र । भरध्वम् । मनीषाम् । यथाऽयथा । मतयः । सन्ति । नृणाम् ।
इन्द्रम् । सत्यैः । आ । ईरयाम । कृतेभिः । सः । हि । वीरः । गिर्वणस्युः । विदानः ॥ १ ॥

वेङ्कट० अष्टादंष्ट्रो[3] वैरूपः। हे मनीषिणः! प्र भरध्वम् स्तुतिम् यथायथा प्रज्ञाः भवन्ति नेतॄणां युष्माकम्। इन्द्रम् सत्यैः कर्मभिः आ गमयाम। सः हि वीरः स्तोतृकामः विद्वानिति ॥ १ ॥

ऋतस्य हि सदसो धीतिरद्यौत् सं गार्ष्टेयो वृषभो गोभिरानट् ।
उदतिष्ठत् तविषेणा रवेण महान्ति चित् सं विव्याचा रजांसि ॥२॥

ऋतस्य । हि । सदसः । धीतिः । अद्यौत् । सम् । गार्ष्टेयः । वृषभः । गोभिः । आनट् ।
उत् । अतिष्ठत् । तविषेण । रवेण । महान्ति । चित् । सम् । विव्याच । रजांसि ॥ २ ॥

वेङ्कट० सत्यकर्मण इन्द्रस्य यज्ञात् [4]स्तुतिः हि[4] द्योतते। सम् गच्छते[5] [6]सोऽयं गृष्टेः[6] पुत्रः वृषभः गोभिः इति स्तुतिभिः सङ्गच्छमानमिन्द्रमाह। उत् अतिष्ठत् [7]महता शब्देन[7], महान्ति च सम् व्याप्नोति उदकानीति ॥ २ ॥

इन्द्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत् सूर्याय ।
आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः ॥३॥

---

१-१. प्रनिश्मृतस्थ वि[1]; प्रदृश्युतस्य वि[2] अ[1]. २-२. नास्ति मूको. ३. अष्टादष्टो वि[2] अ. ४-४. स्तुतिभिरि वि[1]; स्तुतिभिरिह अ[1]. ५. नास्ति वि[1]. ६-६. सोऽग्र वि[2] अ[1]; सोयंगृष्टो वि[1] ७-७. मनसा ता शब्दे वि[2]; मनता अ[1].

इन्द्रः । किल । श्रुत्यै । अस्य । वेद । सः । हि । जिष्णुः । पथिऽकृत् । सूर्याय ।
आत् । मेनाम् । कृण्वन् । अच्युतः । भुवत् । गोः । पतिः । दिवः । सनऽजाः । अप्रतिऽइतः ॥

**वेङ्कट०** इन्द्रः किल श्रुतिम् जानाति अस्य दिवः सम्बन्धिनीम् । सः हि जेता मार्गकृत् सूर्यस्य । अपि [1]च मेनाम्[1] गर्जितशब्दम्[2] कुर्वन् अच्युतः[3] च भवति स्वर्गात् । पतिः दिवः [4]सनजाः पुरातनः[4] वृत्रशत्रुभिः अप्रतिगतः[5] ततश्च गर्जितशब्दं यथाऽवजानातीति ॥ ३ ॥

इन्द्रो॑ म॒ह्ना म॑ह॒तो अ॑र्ण॒वस्य॑ व्र॒ताम॑िना॒दङ्गि॑रोभिर्गृ॒णा॒नः ।
पु॒रूणि॑ चि॒न्नि त॑ताना॒ रजां॑सि दा॒धार॒ यो ध॒रुणं॑ स॒त्यता॑ता ॥४॥

इन्द्रः । म॒ह्ना । म॒ह॒तः । अ॒र्ण॒वस्य॑ । व्र॒ता । अ॒मि॒ना॒त् । अङ्गि॑रःऽभिः । गृ॒णा॒नः ।
पु॒रूणि॑ । चि॒त् । नि । त॒ता॒न॒ । रजां॑सि । दा॒धार॑ । यः । ध॒रुण॑म् । स॒त्यऽता॑ता ॥ ४ ॥

**वेङ्कट०** इन्द्रः महत्त्वेन महतः उदकवतो वृत्रस्य कर्माणि अमिनात् अङ्गिरोभिः स्तूयमानः । बहूनि च उदकानि [6]नीचीनानि अकरोद् वृत्रपरिवृतानि[6] । धारयति[7] यः उदकम् सत्यस्य विस्तारकः ॥४॥

इन्द्रो॑ दि॒वः प्र॑ति॒मानं॑ पृथि॒व्या विश्वा॑ वेद॒ सव॑ना॒ हन्ति॒ शुष्ण॑म् ।
म॒हीं चि॒द् द्यामात॑नो॒त् सूर्ये॑ण चा॒स्कम्भ॑ चि॒त् कम्भ॑नेन॒ स्कभी॑यान् ॥५॥

इन्द्रः । दि॒वः । प्र॒ति॒ऽमान॑म् । पृ॒थि॒व्याः । विश्वा॑ । वे॒द॒ । सव॑ना । हन्ति॑ । शुष्ण॑म् ।
म॒हीम् । चि॒त् । द्याम् । आ । अ॒त॒नो॒त् । सूर्ये॑ण । चा॒स्कम्भ॑ । चि॒त् । स्कम्भ॑नेन । स्कभी॑यान् ॥५॥

**वेङ्कट०** इन्द्रः द्यावापृथिव्योः प्रतिमानम् भवति, [8]विश्वानि च जानाति[8] सवनानि[9], हन्ति च शुष्णम्[10] असुरम्, महतीम् च दिवम् आ तनोति सूर्येण, स्कभ्नोति अन्तरिक्षेण तथा दिवः स्कभीयान् इति ॥ ५ ॥

[*]इति अष्टमाष्टके षष्ठाध्याये दशमो वर्गः[*] ॥

वज्रे॑ण॒ हि वृ॑त्र॒हा वृ॒त्रमस्त॒रदे॑वस्य॒ शूशु॑वानस्य॒ मा॒याः ।
वि धृ॑ष्णो॒ अत्र॑ धृष॒ता ज॑घ॒न्थाथा॑भवो मघवन् बा॒ह्वो॑जाः ॥६॥

वज्रे॑ण । हि । वृ॒त्र॒ऽहा । वृ॒त्रम् । अस्त॑रिति॑ । अदे॑वस्य । शूशु॑वानस्य । मा॒याः ।
वि । धृ॒ष्णो॒ इति॑ । अत्र॑ । धृ॒ष॒ता । ज॒घ॒न्थ॒ । अथ॑ । अ॒भ॒वः॒ । म॒घ॒ऽव॒न् । बा॒हुऽओ॑जाः ॥ ६ ॥

**वेङ्कट०** वज्रेण हि वृत्रहा वृत्रम् असुरं हतवानसि । असुरस्य प्रवर्धमानस्य नानाविधा मायाः वि जघन्थ धृष्णः अस्मिन् युद्धे[11] धृष्णेन[12] मनसा । अथ अभवः त्वम् मघवन्! बाह्वोजाः[13] ॥ ६ ॥

---

१-१. चेम…वि[2] अ[1]; चेमं वि[1]. २. वर्जित° वि[2] अ[1]. ३. अप्रत्युतः वि[2] अ[1]. ४-४. नास्ति मूको. ५. …प्रतः वि[1] अ[1]. ६-६. निचीना° वि[2] अ[1]; नीचान्यकरोद्वृतपरि° वि[1]. ७. सारयति वि[2] अ[1]. ८-८. विश्वा… वि[2] अ[1]. ९. संबनना वि[2]; संवनना अ[1]; संवनानि वि[1]. १०. शुष्कम् वि[2] अ[1]. ११. यज्ञे वि[1]. १२. धृष्टेन वि[1]. १३. पा वि[1].

सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् ।
आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद ॥७॥

सचन्त । यत् । उषसः । सूर्येण । चित्राम् । अस्य । केतवः । राम् । अविन्दन् ।
आ । यत् । नक्षत्रम् । ददृशे । दिवः । न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥७॥

**वेङ्कट०** सङ्गच्छन्ते यदा उषसः[1] सूर्येण, तदानीम् अस्य सूर्यस्य रश्मयः चित्राम् रातिम् लभन्ते। नक्षत्राणि तिरोभवन्ति। तत्र पुनःपुनरागच्छतः दिवः अद्धा[2] यस्मात् नक्षत्रम् न दृश्यते तस्माद् न कश्चित् तथाभावं वेत्ति। 'अमी य ऋक्षा निहितास उच्चा' ( ऋ १,२४,१० ) इत्युक्तम् ॥ ७ ॥

दूरं किल प्रथमा जग्मुरासामिन्द्रस्य याः प्रसवे सस्रुरापः ।
क्व स्विदग्रं क्व बुध्न आसामापो मध्यं क्व वो नूनमन्तः ॥ ८ ॥

दूरम् । किल । प्रथमाः । जग्मुः । आसाम् । इन्द्रस्य । याः । प्रऽसवे । सस्रुः । आपः ।
क्व । स्वित् । अग्रम् । क्व । बुध्नः । आसाम् । आपः । मध्यम् । क्व । वः । नूनम् । अन्तः ॥८॥

**वेङ्कट०** दूरम् किल प्रत्नाः जग्मुः आसाम् वहन्तीनाम् अपाम्, इन्द्रस्य याः प्रसवे सस्रुः आपः। क्व स्वित् अग्रम् क्व च[3] बुध्नः आसाम् भवति। हे आपः! युष्माकम् क्व मध्यम् भवति, क्व च अन्तः इति ॥ ८ ॥

सृजः सिन्धूँरहिना जग्रसानाँ आदिदेताः प्र विविज्रे जवेन ।
मुमुक्षमाणा उत या मुमुच्रेऽधेदेता न रमन्ते नितिक्ताः ॥ ९ ॥

सृजः । सिन्धून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेन ।
मुमुक्षमाणाः । उत । याः । मुमुच्रे । अध । इत् । एताः । न । रमन्ते । निऽतिक्ताः ॥ ९ ॥

**वेङ्कट०** अवाऽसृजः[4] सिन्धून् अहिना ग्रस्यमानान्। अनन्तरमेव एताः आपः प्रकर्षेण गच्छन्ति वेगेन। सन्निरुद्धाः याः[5] आपः मुमुक्षमाणाः भवन्ति, अपि च मुमुच्रे[6]। सम्प्रति एताः सर्वाः न क्वचित् रमन्ते धावन्त्येव नितरां तीक्ष्णीकृताः ॥ ९ ॥

सध्रीचीः सिन्धुमुशतीरिवायन्त्सनाज्जार आरितः पूर्भिदासाम् ।
अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इन्द्र पूर्वीः ॥ १० ॥

सध्रीचीः । सिन्धुम् । उशतीःऽइव । आयन् । सनात् । जारः । आरितः । पूःऽभित् । आसाम् ।
अस्तम् । आ । ते । पार्थिवा । वसूनि । अस्मे इति । जग्मुः । सूनृताः । इन्द्र । पूर्वीः ॥ १० ॥

---

१. उषस वि[1] अ[1]. २. अद्धो वि[1] अ[1]. ३. नास्ति वि[2] अ[1]. ४. त्रुटितम् वि[1] अ[1]. ५ नास्ति मूको ६ मुमुत्रे मूको.

**वेङ्कट०** सहाञ्चन्त्यः समुद्रम् गच्छन्ति कामयमानाः इव स्त्रियः । आसाम् अपां सनातनः सञ्जातशस्त्रः[1] पुरां भेत्ता इन्द्रो जरयिता । अस्मदीयम् गृहम् आ-गच्छन्तु तत्र स्वभूतानि [2]पार्थिवानि धनानि । अस्मान्[2] आगच्छन्तु उषसः बह्व्यः चिरञ्जीवेमेति ॥ १० ॥

[3]इति अष्टमाष्टके षष्ठाध्याये एकादशो वर्गः[3] ॥

## [ ११२ ]

[3]वैरूपो नभःप्रभेदन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[3] ।

इन्द्र पिब प्रतिकामं सुतस्य प्रातःसावस्तव हि पूर्वपीतिः ।
हर्षस्व हन्तवे शूर शत्रूनुक्थेभिष्टे वीर्या३ प्र ब्रवाम ॥ १ ॥

इन्द्र । पिब । प्रतिऽकामम् । सुतस्य । प्रातःऽसावः । तव । हि । पूर्वऽपीतिः ।
हर्षस्व । हन्तवे । शूर । शत्रून् । उक्थेभिः । ते । वीर्या । प्र । ब्रवाम ॥ १ ॥

**वेङ्कट०** नभःप्रभेदनो वैरूपः । इन्द्र ! पिब यथाकामम् सुतं सोमम् । प्रातःसवनेऽभिषुतः[4] सोमः तव हि पूर्वं पानम् । हृष्टो भव हन्तुम् शूर ! शत्रून् । उक्थेभिः इति स्पष्टम् ॥ १ ॥

यस्ते रथो मनसो जवीयानेन्द्र तेन सोमपेयाय याहि ।
तूयमा ते हरयः प्र द्रवन्तु येभिर्यासि वृषभिर्मन्दमानः ॥ २ ॥

यः । ते । रथः । मनसः । जवीयान् । आ । इन्द्र । तेन । सोमऽपेयाय । याहि ।
तूयम् । आ । ते । हरयः । प्र । द्रवन्तु । येभिः । यासि । वृषऽभिः । मन्दमानः ॥ २ ॥

**वेङ्कट०** निगदसिद्धा इति ॥ २ ॥

हरित्वता वर्चसा सूर्यस्य श्रेष्ठै रूपैस्तन्वं स्पर्शयस्व ।
अस्माभिरिन्द्र सखिभिर्हुवानः सध्रीचीनो मादयस्वा निषद्य ॥ ३ ॥

हरित्वता । वर्चसा । सूर्यस्य । श्रेष्ठैः । रूपैः । तन्वम् । स्पर्शयस्व ।
अस्माभिः । इन्द्र । सखिऽभिः । हुवानः । सध्रीचीनः । मादयस्व । निऽसद्य ॥ ३ ॥

**वेङ्कट०** अश्ववता तेजसा सुवीर्यस्य तव श्रेष्ठैः च रूपैः शरीरम् स्पर्शयस्व । अस्माभिः इन्द्र ! सखिभिः हूयमानः सहाञ्चनः अस्माभिः मादयस्व यज्ञे निषद्य इति[5] ॥ ३ ॥

यस्य त्यत् ते महिमानं मदेष्विमे मही रोदसी नाविविक्ताम् ।
तदोक आ हरिभिरिन्द्र युक्तैः प्रियेभिर्याहि प्रियमन्नमच्छ ॥ ४ ॥

---

१. °शस्त्रं वि[2] अ[1]. २. पापानि सहान्यस्माद् वि[2] अ[1]. ३-३. नास्ति मूको. ४. °तो हि मूको. ५. नास्ति वि[1].

यस्य । त्यत् । ते । महिमानम् । मदेषु । इमे इति । मही इति । रोदसी इति । न । अविविक्ताम् ।
तत् । ओकः । आ । हरिऽभिः । इन्द्र । युक्तैः । प्रियेभिः । याहि । प्रियम् । अन्नम् । अच्छ ॥४॥

**वेङ्कट०** यस्य तम् ते[1] महिमानम् मदेषु जनितम् इमे महत्यौ द्यावापृथिव्यौ न विविच्य जानीतः, स त्वम् तत् इदं स्थानम् आ याहि हरिभिः इन्द्र! युक्तैः प्रियैः प्रियम् हविः प्रति ॥ ४ ॥

यस्य शश्वत् पपिवाँ इन्द्र शत्रूननानुकृत्या रण्या चकर्थ ।
स ते पुरंधिं तविषीमियर्ति स ते मदाय सुत इन्द्र सोमः ॥ ५ ॥

यस्य । शश्वत् । पपिऽवान् । इन्द्र । शत्रून् । अननुऽकृत्या । रण्या । चकर्थ ।
सः । ते । पुरम्ऽधिम् । तविषीम् । इयर्ति । सः । ते । मदाय । सुतः । इन्द्र । सोमः ॥ ५ ॥

**वेङ्कट०** यं[2] सोमं पिबन् सर्वदा इन्द्र! शत्रून् प्रति अन्यैः अनुकर्तुमशक्यानि युद्धकर्माणि चकर्थ, सः ते प्रज्ञानम् बलम् च प्रेरयति, सः तव मदाय सुतः इन्द्र! सोमः ॥ ५ ॥

[3]इति अष्टमाष्टके षष्ठाध्याये द्वादशो वर्गः[3] ॥

इदं ते पात्रं सनवित्तमिन्द्र पिबा सोममेना शतक्रतो ।
पूर्ण आहावो मदिरस्य मध्वो यं विश्व इदभिहर्यन्ति देवाः ॥ ६ ॥

इदम् । ते । पात्रम् । सनऽवित्तम् । इन्द्र । पिब । सोमम् । एना । शतक्रतो इति शतऽक्रतो ।
पूर्णः । आऽहावः । मदिरस्य । मध्वः । यम् । विश्वे । इत् । अभिऽहर्यन्ति । देवाः ॥ ६ ॥

**वेङ्कट०** इदम् ते सोमपानसाधनम् पात्रम्, यत्ते चिरलब्धम् । इन्द्र! पिब सोमम्[4] अनेन पात्रेण शतक्रतो! । पूर्णः अयम् आहावः मदकरेण सोमेन, यम् [5]सर्वे एव[5] देवाः प्रेप्सन्ते आहावं त्वदनुचराः ॥ ६ ॥

वि हि त्वामिन्द्र पुरुधा जनासो हितप्रयसो वृषभ ह्वयन्ते ।
अस्माकं ते मधुमत्तमानीमा भुवन्त्सवना तेषु हर्य ॥ ७ ॥

वि । हि । त्वाम् । इन्द्र । पुरुधा । जनासः । हितऽप्रयसः । वृषभ । ह्वयन्ते ।
अस्माकम् । ते । मधुमत्ऽतमानि । इमा । भुवन् । सवना । तेषु । हर्य ॥ ७ ॥

**वेङ्कट०** वि ह्वयन्ते हि त्वाम् इन्द्र! अनेकधा जनाः निहितहविष्काः वर्षितः! । तथापि अस्माकम् इदानीं सवनानि ते[6] मधुमत्तमानि इमानि भवन्तु । तेषु सोमं पातुम् [7]इच्छ इति[7] ॥ ७ ॥

प्र त इन्द्र पूर्व्याणि प्र नूनं वीर्या वोचं प्रथमा कृतानि ।
सतीनमन्युरश्रथायो अद्रिं सुवेदनामकृणोर्ब्रह्मणे गाम् ॥ ८ ॥

---

१. तव वि[1]; त अ[1]. २. तं वि[1]. ३-३. नास्ति मूको. ४. नास्ति वि[1] अ[1]. ५-५. सर्वम् एवम् वि[1]. ६. त वि[2] अ[1]; नास्ति वि[1]. ७-७. इच्छन्तु वि[1].

प्र । ते । इन्द्र । पूर्व्याणि । प्र । नूनम् । वीर्या । वोचम् । प्रथमा । कृतानि ।
सतीनऽमन्युः । अश्रथयः । अद्रिम् । सुऽवेदनाम् । अकृणोः । ब्रह्मणे । गाम् ॥ ८ ॥

**वेङ्कट०** प्र ब्रवीमि तव इन्द्र! प्रत्नानि वीर्याणि[1] इदानीं प्रथमानि च कृतानि। एकः प्र पूरणः। स त्वम् उदकबुद्धिः अश्रथयः अद्रिम्। सुलभाम् गाम् कृणोषि ब्राह्मणाय स्तोत्रे गर्जितलक्षणामिति ॥ ८ ॥

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ॥ ९ ॥

नि । सु । सीद । गणऽपते । गणेषु । त्वाम् । आहुः । विप्रऽतमम् । कवीनाम् ।
न । ऋते । त्वत् । क्रियते । किम् । चन । आरे । महाम् । अर्कम् । मघऽवन् । चित्रम् । अर्च ॥

**वेङ्कट०** निषीद सुष्ठु गणपते! तेषां गणानां मध्ये। त्वाम् आहुः मेधावितमम् कवीनाम् मध्ये। त्वत् ऋते दूरे विदेशे न किञ्चित् कर्म यजमानैः क्रियते। स त्वं महद् अन्नम् चित्रम् मघवन्! अस्मभ्यं ब्रूहि इति ॥ ९ ॥

अभिख्या नो मघवन् नाधमानान्त्सखे बोधि वसुपते सखीनाम् ।
रणं कृधि रणकृत् सत्यशुष्माभक्ते चिदा भजा राये अस्मान् ॥ १० ॥

अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि । वसुऽपते । सखीनाम् ।
रणम् । कृधि । रणऽकृत् । सत्यऽशुष्म । अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ १० ॥

**वेङ्कट०** अभिदर्शनेन अस्मान् [2]मघवन्! याचमानान्[2] सखे! बुध्यस्व धनपते![3] सखीन्। युद्धम् कुरु युद्धकृत्! सत्यबल!। असेवितेऽपि सङ्ग्रामे प्रापय अस्मान् धनाय इति ॥ १० ॥

[4]इति अष्टमाष्टके षष्ठाध्याये त्रयोदशो वर्गः[4] ॥

## [ ११३ ]

[4]वैरूपः शतप्रभेदन ऋषिः। इन्द्रो देवता। जगती छन्दः, दशमी त्रिष्टुप्[4]।

तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम् ।
यदैत् कृण्वानो महिमानमिन्द्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥ १ ॥

तम् । अस्य । द्यावापृथिवी इति । सऽचेतसा । विश्वेभिः । देवैः । अनु । शुष्मम् । आवताम् ।
यत् । ऐत् । कृण्वानः । महिमानम् । इन्द्रियम् । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ १ ॥

---

१. वीराणि वि[3] अ[1]. २-२. °वन्नाचमानान् वि[3] अ[1]; °वन् याचमादान् वि[1]. ३. सवनते वि[3] अ[1].
४-४. नास्ति मूको.

**वेङ्कट०** शतप्रभेदनः[1] वैरूपः। तम् अस्य द्यावापृथिव्यौ सङ्गते विश्वैः देवैः अनु (अ?)रक्षताम् बलम्। यदा[2] आगच्छति क्षयं कुर्वाणः शत्रुवधेन महिमानम् इन्द्रियम् च, तदा सोमम् पीत्वा कर्मवान्[3] वर्धते ॥ १ ॥

तमस्य विष्णुर्महिमानमोजसांशुं दधन्वान् मधुनो वि रप्शते ।
देवेभिरिन्द्रो मघवा सयावभिर्वृत्रं जघन्वाँ अभवद्वरेण्यः ॥ २ ॥

तम् । अस्य । विष्णुः । महिमानम् । ओजसा । अंशुम् । दधन्वान् । मधुनः । वि । रप्शते ।
देवेभिः । इन्द्रः । मघऽवा । सयावऽभिः । वृत्रम् । जघन्वान् । अभवत् । वरेण्यः ॥ २ ॥

**वेङ्कट०** तम् अस्य यज्ञः महिमानम् बलेन सोमस्य पानीयं रसम् धारयन् विविधं स्तौति। यज्ञा एनं सोमरसं धारयन्तः[4] स्तुवन्तीत्यर्थः। शिष्टं स्पष्टमिति ॥ २ ॥

वृत्रेण यदहिना बिभ्रदायुधा समस्थिथा युधये शंसमाविदे ।
विश्वे ते अत्र मरुतः सह त्मनावर्धन्नुग्र महिमानमिन्द्रियम् ॥ ३ ॥

वृत्रेण । यत् । अहिना । बिभ्रत् । आयुधा । सम्ऽअस्थिथाः । युधये । शंसम् । आऽविदे ।
विश्वे । ते । अत्र । मरुतः । सह । त्मना । अवर्धन् । उग्र । महिमानम् । इन्द्रियम् ॥ ३ ॥

**वेङ्कट०** वृत्रेण यदा[5] आहन्त्रा धारयन् आयुधानि सह स्थितवानसि युद्धार्थम् अभिलषितम् आभिमुख्येन लब्धुम्। विश्वे ते अत्र मरुतः सङ्गता आत्मना एव अवर्धयन् उग्र! महिमानम् इन्द्रियम् च इति ॥ ३ ॥

जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणम् ।
अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ॥ ४ ॥

जज्ञानः । एव । वि । अबाधत । स्पृधः । प्र । अपश्यत् । वीरः । अभि । पौंस्यम् । रणम् ।
अवृश्चत् । अद्रिम् । अव । सऽस्यदः । सृजत् । अस्तभ्नात् । नाकम् । सुऽअपस्यया । पृथुम् ॥४॥

**वेङ्कट०** जायमानः एव वि अबाधत शत्रून्। प्र अभि अपश्यत् वीरः रणम् पुंस्त्वस्य निमित्तम्। अवृश्चत्[6] अद्रिम् मेघम्। अव सृजति च स्यन्दमाना अपः। धारयति[7] च नाकम् शोभनकर्मेच्छया विस्तीर्णम् ॥ ४ ॥

आदिन्द्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत ।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥ ५ ॥

आत् । इन्द्रः । सत्रा । तविषीः । अपत्यत । वरीयः । द्यावापृथिवी इति । अबाधत ।
अव । अभरत् । धृषितः । वज्रम् । आयसम् । शेवम् । मित्राय । वरुणाय । दाशुषे ॥ ५ ॥

---

१. शरप्रवेदनो वि[२]; शूरप्रवेदनो अ[१]. २. यथा वि[२] अ[१]. ३. मघवान् वि[२] अ[१]. ४. °यन्तं वि[२] अ[१]. ५. यथा अ[१]. ६. °श्चत् इति मूको. ७. °यसि मूको.

**वेङ्कट०** अनन्तरम् इन्द्रः सहैव महान्ति बलानि पतति। द्यावापृथिव्यौ च उरुतरम् अबाधत [1]व्यष्टभ्नाद् अन्तरिक्षेण[1]। अव भरति धृष्टः वज्रम् आयसम् सुखकरम् मित्रावरुणाभ्याम् प्रयच्छते यजमानाय इति ॥ ५ ॥

[2]इति अष्टमाष्टके षष्ठाध्याये चतुर्दशो वर्गः[2] ॥

इन्द्रस्यात्र तविषीभ्यो विरप्शिन ऋघायतो अरंहयन्त मन्यवे ।
वृत्रं यदुग्रो व्यवृश्चदोजसापो बिभ्रतं तमसा परीवृतम् ॥ ६ ॥

इन्द्रस्य । अत्र । तविषीभ्यः । विऽरप्शिनः । ऋघायतः । अरंहयन्त । मन्यवे ।
वृत्रम् । यत् । उग्रः । वि । अवृश्चत् । ओजसा । अपः । बिभ्रतम् । तमसा । परिऽवृतम् ॥६॥

**वेङ्कट०** [3]इन्द्रस्य अस्मिन् युद्धे[3] बलकरणार्थम् महान्तो मरुतः शत्रून् बाधमानस्य वेगम् [4]अकुर्वन् साहाय्यार्थं[4] क्रोधाय च, वृत्रम् यत् उद्गूर्णः [5]वि अवृश्चत्[5] बलेन उदकानि धारयन्तम् अन्धकारेण परिवृतम् इति ॥ ६ ॥

या वीर्याणि प्रथमानि कर्त्वा महित्वेभिर्यतमानौ समीयतुः ।
ध्वान्तं तमोऽव दध्वसे हत इन्द्रो मह्ना पूर्वहूतावपत्यत ॥ ७ ॥

या । वीर्याणि । प्रथमानि । कर्त्वा । महिऽत्वेभिः । यतमानौ । सम्ऽईयतुः ।
ध्वान्तम् । तमः । अव । दध्वसे । हते । इन्द्रः । मह्ना । पूर्वऽहूतौ । अपत्यत ॥ ७ ॥

**वेङ्कट०** या वीर्याणि प्रथमानि कर्तव्यानि आत्मनो महत्त्वानि उद्दिश्य यतमानौ[6] समीयतुः। तयोः वृत्रे हते ध्वंसकम् अन्धकारम् [7]अव-ध्वस्तमासीत्† । इन्द्रः महत्त्वेन पूर्वहूतौ स्तोतरि अगच्छत्[7] इति ॥ ७ ॥

विश्वे देवासो अध वृष्ण्यानि तेऽवर्धयन्त्सोमवत्या वचस्यया ।
रद्धं वृत्रमहिमिन्द्रस्य हन्मनाग्निर्न जम्भैस्तृष्वन्नमावयत् ॥ ८ ॥

विश्वे । देवासः । अध । वृष्ण्यानि । ते । अवर्धयन् । सोमऽवत्या । वचस्यया ।
रद्धम् । वृत्रम् । अहिम् । इन्द्रस्य । हन्मना । अग्निः । न । जम्भैः । तृषु । अन्नम् । आवयत् ॥

**वेङ्कट०** सर्वे देवाः वृत्रे हते तव वीर्याणि अवर्धयन् सोमयुक्तया स्तुत्या। वशं नीतम् वृत्रम् आहन्तारम्[8] इन्द्रस्य वज्रेण अग्निः इव ज्वालाभिः क्षिप्रम् अन्नम् अभक्षयद् आदित्यो मरुद्गणो वा इति ॥ ८ ॥

---

१-१. व्यष्टभ्नावन्ता रक्षेण वि[2]; व्यष्टभ्नावन्ती रक्षेण अ[1]; व्यष्टनादन्तरिक्षेण वि[1]. २-२. नास्ति मूको. ३-३. नास्ति वि[2] अ[1]. ४-४. अकुर्वन्···हार्यार्थम् वि[2] अ[1]; अकुर्वन् मायार्थम् वि[1]. ५-५. अपि अवश्यं वि[2] अ[1]; विवृश्चत् वि[1]. ६. °मानो मूको. ७-७. अवध्वबलकरणार्थं महान्तो नपूर्णाहूतौ स्तोतु गच्छत् वि[1]. † अवद्धाः तं वि[2]; अवद्धातं अ[1]. ८. आहान्तारम् मूको.

भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत ।
इन्द्रो धुनिं च चुमुरिं च दम्भयञ्छ्रद्धामनस्या शृणुते दभीतये ॥९॥

भूरि । दक्षेभिः । वचनेभिः । ऋक्वऽभिः । सख्येभिः । सख्यानि । प्र । वोचत ।
इन्द्रः । धुनिम् । च । चुमुरिम् । च । दम्भयन् । श्रद्धाऽमनस्या । शृणुते । दभीतये ॥ ९ ॥

वेङ्कट० भूरीणि प्रवृद्धैः वचनैः [1]मरुद्भिः सख्यानि[1] उद्दिश्य इन्द्रस्य सख्यानि प्र वोचत। इन्द्रः [2]धुनिम् च[2] चुमुरिम् च असुरौ दम्भयन् श्रद्धामनाः शृणोति अस्य दभीतेः स्तोत्रम्। प्रथमाया याजादेश इति ॥ ९ ॥

त्वं पुरूण्या भरा स्वश्व्या येभिर्मंसै निवचनानि शंसन् ।
सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य ॥१०॥

त्वम् । पुरूणि । आ । भर । सुऽअश्व्या । येभिः । मंसै । निऽवचनानि । शंसन् ।
सुऽगेभिः । विश्वा । दुःऽइता । तरेम । विदो इति । सु । नः । उर्विया । गाधम् । अद्य ॥१०॥

वेङ्कट० त्वम् बहूनि धनानि[3] आ भर शोभनाश्वसङ्घानि, यैः त्वां स्तौमि आभिमुख्येन वक्तव्यानि[4] तव वीर्याणि ब्रुवाणः। सुगैर्मार्गैः विश्वानि दुर्गाणि[5] वयम् तरेम। प्रयच्छ एव[6] सुष्ठु अस्मभ्यम् विस्तीर्णम्[7] गाधम् अद्य इति ॥ १० ॥

[8]इति अष्टमाष्टके षष्ठाध्याये पञ्चदशो वर्गः[8] ॥

[ ११४ ]

[9]वैरूपः सध्रिः, तापसो घर्मो वा ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः, चतुर्थी जगती[9]।

घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम ।
दिवस्पयो दिधिषाणा अवेषन् विदुर्देवाः सहसामानमर्कम् ॥ १ ॥

घर्मा । सम्ऽअन्ता । त्रिऽवृतम् । वि । आपतुः । तयोः । जुष्टिम् । मातरिश्वा । जगाम ।
दिवः । पयः । दिधिषाणाः । अवेषन् । विदुः । देवाः । सहऽसामानम् । अर्कम् ॥ १ ॥

वेङ्कट० सध्रिर्वैरूपः। घर्मौ सङ्गतान्तौ कञ्चन त्रिवृतम् वि आपतुः सूर्याग्नी वायुम्। तदेवोक्तम्— तयोः घर्मयोः सेवाम् वायुः जगाम इति। त इमे [9]त्रयः समुदिताः[9] द्युलोकाद् उदकम् धारयन्तः प्रेरयन्ति च। काले-काले लभन्ते च देवाः सामसहितम् अर्चनीयं[10] यज्ञम् इति ॥ १ ॥

---

१-१. °द्भिः ··· सख्या वि[2] अ[1]. २-२. त्रुटितम् वि[2] अ[1]. ३. निपतनानि वि[2] अ[1].
४. त्रुटितम् वि[2] अ[1]. ५. नास्ति वि[2] अ[1]. ६. इव मूको. ७. नास्ति वि[1]; विस्तीर्णा अ[1].
८-८. नास्ति मूको. ९-९ त्रयः···ताः मूको. १०. अर्चनीया वि[1] अ[1]; अर्हनीय वि[1].

तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः ।
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥ २ ॥

तिस्रः । देष्ट्राय । निःऽऋतीः । उप । आसते । दीर्घऽश्रुतः । वि । हि । जानन्ति । वह्नयः ।
तासाम् । नि । चिक्युः । कवयः । निऽदानम् । परेषु । याः । गुह्येषु । व्रतेषु ॥ २ ॥

**वेङ्कट०** नितरां रमयित्रीः तिस्रः [1]भूमीः इमे[1] देवाः उप आसते अभिमतस्य उदकस्य दानाय। दीर्घश्रवणाः वि जानन्ति हि वोढारः। ततश्च तासाम् निर्ऋतीनाम् निदानम् ब्रह्म[2] कवयः निश्चिन्वन्ति, यतः तानि [3]आकाशात्मकानि 'आकाशो[3] वै[4] लोकाः' इति। परेषु याः ता देवताः गुह्येषु कर्मसु ध्रियन्ते इति ( तु. ऋ ३,५४,५ ) ॥ २ ॥

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयम् ॥ ३ ॥

चतुःऽकपर्दा । युवतिः । सुऽपेशाः । घृतऽप्रतीका । वयुनानि । वस्ते ।
तस्याम् । सुऽपर्णा । वृषणा । नि । सेदतुः । यत्र । देवाः । दधिरे । भागऽधेयम् ॥ ३ ॥

**वेङ्कट०** चतुष्कपर्दा चतुःशिखण्डा युवतिः सुरूपा घृतावयवा प्रज्ञानानि वस्ते वेदिभूता भूमिः। तस्याम् सुपतनौ अग्निसूर्यौ[5] नि-षेदतुः, यस्यां त[6] एव देवाः दधिरे[7] भागधेयम् इति ॥ ३ ॥

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेळिह स उ रेळिह मातरम् ॥ ४ ॥

एकः । सुऽपर्णः । सः । समुद्रम् । आ । विवेश । सः । इदम् । विश्वम् । भुवनम् । वि । चष्टे ।
तम् । पाकेन । मनसा । अपश्यम् । अन्तितः । तम् । माता । रेळिह । सः । ऊँ इति । रेळिह । मातरम् ॥[8]

**वेङ्कट०** एकः सुपतनः सूर्यः, सः समुद्रम् आ विशति अन्तरिक्षम्। सः इदम् विश्वम् भुवनम् अभिपश्यति। तम्[9] पक्वप्रज्ञानेन[10] मनसा अपश्यम् अन्तितः। तम् माता रेळिह[11] माध्यमिका वाक्। सः च मातरम् [12]रेळिह इति[12] ॥ ४ ॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।
छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥ ५ ॥

सुऽपर्णम् । विप्राः । कवयः । वचःऽभिः । एकम् । सन्तम् । बहुधा । कल्पयन्ति ।
छन्दांसि । च । दधतः । अध्वरेषु । ग्रहान् । सोमस्य । मिमते । द्वादश ॥ ५ ॥

---

१-१. 'मीतिति मे वि[१]; °मीति मे वि[२]; °मी···मे अ[१]. २. ब्रह्मा वि[१]. ३-३. आकाश ···आकाशो वि[२] अ[१]; आकाश प्रषित आकाशे वि[३]; ४. नास्ति वि[१]. ५ अग्नि···वि[२] अ[१]. ६ स मूको. ७. नास्ति मूको. ८. ऋगेषा या. ( १०,४६ ) व्याख्याता द्र. ९. नास्ति वि[१]. १०. पक्षप्रज्ञेन वि[२]; पक्वप्रज्ञेन वि[१]. ११. त्रुटितम् वि[२] अ[१]. १२-१२. इळिहति मूको.

**वेङ्कट०** सुपतनं सूर्यम् मेधाविनः कवयः वाग्भिः [1]एकम् सन्तम्[1] बहुधा कल्पयन्ति अग्निं वायुं सूर्यं च। छन्दांसि च धारयन्तः यज्ञेषु सोमस्य द्वादश[2] ग्रहान् कुर्वन्ति। द्वादश भवन्ति ऋतुग्रहाः[3]। स च अयं सुपर्ण[4] ऋतुरूप इति ॥ ५ ॥

[5]इति अष्टमाष्टके षष्ठाध्याये षोडशो वर्गः[5] ॥

षट्त्रिंशाँश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आद्वादशम् ।
यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति ॥ ६ ॥

षट्ऽत्रिंशान् । च । चतुरः । कल्पयन्तः । छन्दांसि । च । दधतः । आद्वादशम् ।
यज्ञम् । विऽमाय । कवयः । मनीषा । ऋक्ऽसामाभ्याम् । प्र । रथम् । वर्तयन्ति ॥ ६ ॥

**वेङ्कट०** षट्त्रिंशान्[6] प्रातःप्रक्रमान्[7] चतुरः च शिखण्डान्[8] वेद्याम् कल्पयन्तः छन्दांसि च धारयन्तः आ द्वादशात् शस्त्रात् यज्ञम् विमाय कवयः[9] प्रज्ञया प्र वर्तयन्ति[10] ऋक्सामाभ्याम् तं यज्ञरथम् इति ॥ ६ ॥

चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयन्ति सप्त ।
आप्नानं तीर्थं क इह प्र वोचद्येन पथा प्रपिबन्ते सुतस्य ॥ ७ ॥

चतुःऽदश । अन्ये । महिमानः । अस्य । तम् । धीराः । वाचा । प्र । नयन्ति । सप्त ।
अप्नानम् । तीर्थम् । कः । इह । प्र । वोचत् । येन । पथा । प्रऽपिबन्ते । सुतस्य ॥ ७ ॥

**वेङ्कट०** अस्य रथस्य चतुर्दश अन्ये महिमानः सन्ति सप्त छन्दांसि सप्त अतिच्छन्दांसि। तम् रथम् धीराः वाचा प्र-णयन्ति सप्त वषट्कर्तारः। देवान् आप्नुवानम्[11] तीर्थम् कः इह प्र वोचत्, येन पथा प्रपिबन्ति[12] देवाः सुतम् इति च ॥ ७ ॥

सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित् तत् ।
सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ॥ ८ ॥

सहस्रधा । पञ्चऽदशानि । उक्था । यावत् । द्यावापृथिवी इति । तावत् । इत् । तत् ।
सहस्रधा । महिमानः । सहस्रम् । यावत् । ब्रह्म । विऽस्थितम् । तावती । वाक् ॥ ८ ॥

**वेङ्कट०** न केवलम् अग्निष्टोमः[13], बहुप्रकाराणि पञ्चदशस्तोत्रशस्त्रात्मकानि उक्थानि च[14] भवन्ति। यावत् इमे द्यावापृथिवी भवतः, तावत् [15]इत् वाचो[15] भवन्ति[16]। तदेवाह—वाचः महिमानः सहस्रम्[17] सहस्रधा भवन्ति[18]। किं बहुना, यावत् भवति विष्ठितम् ब्रह्म, [19]वाक् तावती[19] भवति[20] इति ॥ ८ ॥

---

१-१. त्रुटितम् मूको. २. त्रुटितम् मूको. ३. ऋतुः गृहाः मूको. ४. सुवर्ण मूको. ५-५. नास्ति मूको. ६. °त्रिंशात् मूको. ७. प्रक्रमां वि[2]; प्रक्रमं अ[1]. ८. °ण्डा मूको. ९. क मूको. १० °यति मूको. ११. °प्नुवाहं मूको. १२. प्रवियन्ति मूको. १३. अग्निष्टो वि[2]; अग्निष्टोम अ[1]. १४. नास्ति अ[1]. १५-१५. इदाचो मूको. १६. °वति मूको. १७. समुद्रं मूको. १८. °वति मूको. १९-१९. वाताभवति वि[2]; वाता मूको. २०. भवन्ति मूको.

कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।
कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥ ९ ॥

कः । छन्दसाम् । योगम् । आ । वेद । धीरः । कः । धिष्ण्याम् । प्रति । वाचम् । पपाद ।
कम् । ऋत्विजाम् । अष्टमम् । शूरम् । आहुः । हरी इति । इन्द्रस्य । नि । चिकाय । कः । स्वित् ॥ ९ ॥

**वेङ्कट०** कः **सर्वेषाम्** छन्दसाम् योगम् **आप्नोति**[1] धीरः । कः वा **अन्तरिक्ष्याम्** वाचम् प्रति **पतति**। [2]पतिः पदिना समः[2]। कम् वा **सप्तानाम्** ऋत्विजाम् अष्टमम्[3] शूरम् आहुः । कः वा इन्द्रस्य **अश्वौ** नि चिकाय इति । **सुपर्णः**[4] **इत्युत्तरम्** ॥ ९ ॥

भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।
श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥ १० ॥

भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु । युक्तासः । अस्थुः ।
श्रमस्य । दायम् । वि । भजन्ति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥

**वेङ्कट०** भूम्याः[5] **पर्यन्तम्** एके **रश्मयः** परि चरन्ति । रथस्य च [6]धूर्षु ते[6] युक्ताः तिष्ठन्ति । त इमे श्रमस्य **अपनोदाय** दायम्[7] **उदकम्** एभ्यः **मनुष्येभ्यः** वि भजन्ति, यदा नियन्ता[8] भवति **यज्ञगृहे** नि-हितः ॥ १० ॥

[9]इति अष्टमाष्टके षष्ठाध्याये सप्तदशो वर्गः[9] ॥

[ ११५ ]

[10]वार्ष्टिहव्य उपस्तुत ऋषिः । अग्निर्देवता । जगती छन्दः, अष्टमी त्रिष्टुप्, नवमी शक्वरी[10]।

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् ॥ १ ॥

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ । अपिऽएति । धातवे ।
अनूधाः । यदि । जीजनत् । अध । च । नु । ववक्ष । सद्यः । महि । दूत्यम् । चरन् ॥ १ ॥

**वेङ्कट०** उपस्तुतो वार्ष्टिहव्यः[10]। चित्रः खलु शिशोः तरुणस्य रश्मिः वहनशीलः, [11]अग्निः यः[11] शिशुः जातः मातरौ अपि (?) न गच्छति स्तनपानार्थम्, ऊधोवर्जिता माता यदि एनं जनयति[12]। अनन्तरम् [13]क्षिप्रम् ववक्ष महत् दूत्यम्[13] चरन् इति ॥ १ ॥

अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता ।
अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥ २ ॥

---

१. आपोल मूको. २-२ पतिवदिनासम मूको. ३. अष्टक मूको. ४. सुवर्ण मूको. ५. भूम्या मूको. ६-६ भूर्रर्षते मूको. ७. नास्ति मूको. ८. निर्यज्ञाय मूको. ९-९ नास्ति मूको. १०. वर्षिहव्यः मूको. ११-११. अग्नय: मूको. १२ जयति मूको. १३-१३. °प्रं···त्यं मूको.

अग्निः । ह । नाम॑ । धायि । दन् । अपः॒ऽत॑मः । सम् । यः । वना॑ । युवते॑ । भस्म॑ना । दता ।
अभिऽप्रमुरा॑ । जुह्वा॑ । सुऽअध्वरः । इनः । न । प्रोथ॑मानः । यव॑से । वृषा॑ ॥ २ ॥

**वेङ्कट०** अग्निः खलु निहितः दमयन् अरण्यं व्याप्ततमः, सम्-मिश्रयति यः अरण्यानि भस्मना दग्धेन । सः अयं अभिप्रमूर्छितया ज्वालया युक्तः सुयज्ञः यूथस्य स्वामी वृषभो गोयूथेषु इव आमुखशब्दं कुर्वन् भवति शुष्के यवसे इति ॥ २ ॥

तं वो॒ विं न द्रु॒षदं॑ दे॒वमन्ध॑स॒ इन्दुं॒ प्रोथ॑न्तं प्र॒वप॑न्तमर्ण॒वम् ।
आ॒सा वह्निं॒ न शो॒चिषा॑ विर॒प्शिनं॒ महि॑व्रतं॒ न स॒रज॑न्त॒मध्व॑नः ॥ ३ ॥

तम् । वः । विम् । न । द्रुऽसद॑म् । दे॒वम् । अन्ध॑सः । इन्दु॑म् । प्रोथ॑न्तम् । प्रऽवप॑न्तम् । अर्ण॒वम् ।
आ॒सा । वह्नि॑म् । न । शो॒चिषा॑ । वि॒ऽर॒प्शिन॑म् । महि॑ऽव्रतम् । न । स॒रज॑न्तम् । अध्व॑नः ॥ ३ ॥

**वेङ्कट०** तम् त्वां [1]पक्षिणम् इव[1] द्रुमे सीदन्तम् ईश्वरम् अन्नस्य दीप्तम् शब्दायमानम् अन्तरिक्षे इतस्ततः प्रवपन्तम् मेघम् आस्येन [2]अभिष्टुवते अनड्वाहम्[2] इव वाहकम्[3] शोचिषा महान्तम् महाकर्माणम् इव च अश्वम् मार्गान् गच्छन्तम् इति ॥ ३ ॥

वि यस्य॑ ते ज्र॒यसा॒नस्या॑जर॒ धक्षो॒र्न वाताः॒ परि॒ सन्त्यच्यु॑ताः ।
आ र॒ण्वासो॒ युयु॑धयो॒ न स॑त्व॒नं त्रि॒तं न॑शन्त॒ प्र शि॒षन्त॑ इ॒ष्टये॑ ॥ ४ ॥

वि । यस्य॑ । ते॒ । ज्र॒यसा॒नस्य॑ । अ॒ज॒र॒ । धक्षोः॑ । न । वाताः॑ । परि॑ । सन्ति॑ । अच्यु॑ताः ।
आ । र॒ण्वासः॑ । युयु॑धयः । न । स॒त्व॒नम् । त्रि॒तम् । न॒श॒न्त॒ । प्र । शि॒षन्तः॑ । इ॒ष्टये॑ ॥ ४ ॥

**वेङ्कट०** न वि परि भवन्ति यस्य ते अरण्ये वेगं कुर्वाणस्य हे अजर! दग्धुम् इच्छतः[4] प्रबलाः वाताः अन्यैः अच्युताः, न त्वाम् अन्यतो नयन्ति इत्यर्थः। तं त्वां यागार्थम् आभिमुख्येन प्राप्नुवन्ति रमणीयाः इव योद्धारं प्रतियोद्धारः त्रिस्थानम् अभिमतम् आशासानाः ॥ ४ ॥

स इद॒ग्निः कण्व॑तमः॒ कण्व॑सखा॒र्यः प॒रस्यान्त॑रस्य॒ तरु॑षः ।
अ॒ग्निः पा॑तु गृण॒तो अ॒ग्निः सू॒रीन॒ग्निर्द॑दातु॒ तेषा॒मवो॑ नः ॥ ५ ॥

सः । इत् । अ॒ग्निः । कण्व॑ऽतमः । कण्व॑ऽसखा । अ॒र्यः । पर॑स्य । अन्त॑रस्य । तरु॑षः ।
अ॒ग्निः । पा॒तु॒ । गृ॒ण॒तः । अ॒ग्निः । सू॒रीन् । अ॒ग्निः । द॒दा॒तु॒ । तेषा॑म् । अवः॑ । नः॒ ॥ ५ ॥

**वेङ्कट०** सः एव अग्निः मेधावितमः मेधाविसखिकः शत्रोः परस्य बाधकस्य तारकः। अग्निः रक्षतु स्तुवतः, अग्निः प्रज्ञान्[5]। अग्निः प्रयच्छतु तेषाम् अस्माकम् रक्षणमिति ॥ ५ ॥

[6]इति अष्टमाष्टके षष्ठाध्याये अष्टादशो वर्गः[6] ॥

१-१. पक्षिणो मूको. २-२. °ष्टुतोनड्वा° मूको. ३. साधकम् मूको. ४. इच्छन्तः मूको. ५. °ज्ञाम् मूको. ६-६. नास्ति मूको.

वाजिन्तमाय सह्यसे सुपित्र्य तृषु च्यवानो अनु जातवेदसे ।
अनुद्रे चिद्यो धृषता वरं सते महिन्तमाय धन्वनेदविष्यते ॥ ६ ॥

वाजिन्ऽतमाय । सह्यसे । सुऽपित्र्य । तृषु । च्यवानः । अनु । जातऽवेदसे ।
अनुद्रे । चित् । यः । धृषता । वरम् । सते । महिन्ऽतमाय । धन्वना । इत् । अविष्यते ॥६॥

वेङ्कट० [1]'बलवत्तमाय अत्यन्तमभिभवित्रे'[1] शोभनपितृप्राप्तस्वभाव! क्षिप्रम् अनुगच्छन् अनु-ब्रूहि स्तुतिम् जातवेदसे, निरुदके अपि देशे विद्यमानाय स्तोत्रे यः मेघम् धृषता[2] रश्मिना वरणीयमुदकं प्रयच्छति, तस्मै [3]'पूज्यतमाय अन्तरिक्षेणैव'[3] यथाकामं गच्छते इति ॥ ६ ॥

एवाग्निर्मर्तैः सह सूरिभिर्वसुः ष्टवे सहसः सूनरो नृभिः ।
मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि सन्ति मानुषान् ॥ ७ ॥

एव । अग्निः । मर्तैः । सह । सूरिऽभिः । वसुः । स्तवे । सहसः । सूनरः । नृऽभिः ।
मित्रासः । न । ये । सुऽधिताः । ऋतऽयवः । द्यावः । न । द्युम्नैः । अभि । सन्ति । मानुषान् ॥

वेङ्कट० एवम् मनुष्यैः प्राज्ञैः[4] सह वासयिता स्तुतः सहसः सम्बन्धी शोभनो नरः सहसस्पुत्रो नेतृभिः । सखायः इव ये कार्येषु सुनिहिताः सत्यकामाः रश्मयः इव यशोभिः अभि भवन्ति अन्यान् मानुषान्, तैस्सहेति ॥ ७ ॥

ऊर्जो नपात् सहसावन्निति त्वोपस्तुतस्य वन्दते वृषा वाक् ।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ८ ॥

ऊर्जः । नपात् । सहसाऽवन् । इति । त्वा । उपऽस्तुतस्य । वन्दते । वृषा । वाक् ।
त्वाम् । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ८ ॥

वेङ्कट० ऊर्जः पुत्र! बलवन्! इति त्वाम् उपस्तुतस्य मम वृषा[5] वन्दते वाक् । त्वाम् इति गतम् ( ऋ १,५३,११ ) इति ॥ ८ ॥

इति त्वाग्ने वृष्टिहव्यस्य पुत्रा उपस्तुतास ऋषयोऽवोचन् । तांश्च पाहि
गृणतश्च सूरीन् वषड्वषळित्यूर्ध्वासो अनक्षन् नमो नम इत्यूर्ध्वासो अनक्षन् ॥९॥

इति । त्वा । अग्ने । वृष्टिऽहव्यस्य । पुत्राः । उपऽस्तुतासः । ऋषयः । अवोचन् ।
तान् । च । पाहि । गृणतः । च । सूरीन् । वषट् । वषट् । इति । ऊर्ध्वासः । अनक्षन् । नमः । नमः ।
इति । ऊर्ध्वासः । अनक्षन् ॥ ९ ॥

---

१-१. °मात्य° मूको. २. धृष्टका मूको. ३-३. पूतमाया अन्त° मूको. ४. प्राज्ञ मूको. ५. वृष्णो मूको.

वेङ्कट० इत्थम् त्वाम् अग्ने! वृष्टिहव्यपुत्राः उपस्तुताः नाम ऋषयः अस्तुवन्। तान् च पाहि, तदर्थम् गृणतः च ऋत्विजः। त इमे [1]वषट् वषट् इति ब्रुवाणा[1] उन्मुखाः त्वां प्राप्नुवन्ति, नमः नमः इति च ब्रुवाणा इति ॥ ९ ॥

[2]इति अष्टमाष्टके षष्ठाध्याये एकोनविंशो वर्गः[2] ॥

[ ११६ ]

[2]स्थौरोऽग्नियुतः स्थौरोऽग्नियूपो वा ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[2]।

पिबा सोमं महत इन्द्रियाय पिबा वृत्राय हन्तवे शविष्ठ।
पिब राये शवसे हूयमानः पिब मध्वस्तृपदिन्द्रा वृषस्व ॥ १ ॥

पिब। सोमम्। महते। इन्द्रियाय। पिब। वृत्राय। हन्तवे। शविष्ठ।
पिब। राये। शवसे। हूयमानः। पिब। मध्वः। तृपत्। इन्द्र। आ। वृषस्व ॥ १ ॥

वेङ्कट० [3]अग्नियुतः स्थौरः[3]। पिब सोमम् महते इन्द्रियाय। पिब[4] वृत्रम्[5] हन्तुं बलवत्तम!। पिब अस्माकं बलाय धनाय च हूयमानः[6]। पिब सोमं तृप्यन् इन्द्र!, आ सिञ्चस्व जठरे[7] इति ॥ १ ॥

अस्य पिब क्षुमतः प्रस्थितस्येन्द्र सोमस्य वरमा सुतस्य।
स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥ २ ॥

अस्य। पिब। क्षुऽमतः। प्रऽस्थितस्य। इन्द्र। सोमस्य। वरम्। आ। सुतस्य।
स्वस्तिऽदाः। मनसा। मादयस्व। अर्वाचीनः। रेवते। सौभगाय ॥ २ ॥

वेङ्कट० अस्य आ पिब स्तुतिमतः प्रस्थितस्य इन्द्र! सोमस्य वरणीयं रसम् सुतस्य। स्वस्तेः[8] दाता मनसा[9] माद्य। अभिमुखो भव हविष्मते महां[10] सुधनत्वाय इति ॥ २ ॥

ममत्तु त्वा दिव्यः सोम इन्द्र ममत्तु यः सूयते पार्थिवेषु।
ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ॥ ३ ॥

ममत्तु। त्वा। दिव्यः। सोमः। इन्द्र। ममत्तु। यः। सूयते। पार्थिवेषु।
ममत्तु। येन। वरिवः। चकर्थ। ममत्तु। येन। निऽरिणासि। शत्रून् ॥ ३ ॥

वेङ्कट० तर्पयतु त्वा दिवि भवः सोमः इन्द्र!, ममत्तु च यः सूयते अस्मासु, ममत्तु येन त्वं धनम् करोषि, ममत्तु येन त्वं निबाधसे शत्रून् इति ॥ ३ ॥

---

१-१. वषध्व ··· ब्राह्मण मूको. २-२. नास्ति मूको. ३-३. अग्नियुतस्थौ मूको. ४. नास्ति मूको. ५. प्रवृ° मूको. ६. °मान मूको. ७. °रा मूको. ८. ध्वस्तेः मूको. ९. महता मूको. १०. इन्व्यं वि[2].

आ द्विबर्हा अमिनो यात्विन्द्रो वृषा हरिभ्यां परिषिक्तमन्धः ।
गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ॥ ४ ॥

आ । द्विऽबर्हाः । अमिनः । यातु । इन्द्रः । वृषा । हरिऽभ्याम् । परिऽसिक्तम् । अन्धः ।
गवि । आ । सुतस्य । प्रऽभृतस्य । मध्वः । सत्रा । खेदाम् । अरुशऽहा । आ । वृषस्व ॥४॥

**वेङ्कट०** आ यातु द्वयोः स्थानयोः परिवृढः हिंसारहितः इन्द्रः वृषा अश्वाभ्याम् परिषिक्तम् सोमम्[1] । गोः चर्मणि आभिमुख्येन सुतस्य अग्नौ प्रहुतस्य सोमस्य बहु खिद्यतां[2] यजमानां शत्रूणां हन्ता[3] आ सिञ्चस्व इति । रिशिः हिंसाकर्मा उकार [4]उपजनः उपसर्गस्य च ह्रस्वः[4] ॥ ४ ॥

नि तिग्मानि भ्राशयन् भ्राश्यान्यव स्थिरा तनुहि यातुजूनाम् ।
उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून् विगदेषु वृश्च ॥ ५ ॥

नि । तिग्मानि । भ्राशयन् । भ्राश्यानि । अव । स्थिरा । तनुहि । यातुऽजूनाम् ।
उग्राय । ते । सहः । बलम् । ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥ ५ ॥

**वेङ्कट०** नितरां दीपयन् आत्मीयानि तिग्मानि[5] आयुधानि शिलाशितानि कुर्वन् अव-ततज्यानि स्थिराणि[6] धनूंषि कुरु राक्षसानाम् । उद्गूर्णाय ते सहः बलम् च ददामि[7] । बलानि प्रतिगम्य तेषां शत्रूणाम् गदरहितेषु अङ्गेषु वृश्च इति ॥ ५ ॥

[8]इति अष्टमाष्टके षष्ठाध्याये विंशो वर्गः[8] ॥

व्यर्य इन्द्र तनुहि श्रवांस्योजः स्थिरेव धन्वनोऽभिमातीः ।
अस्मद्र्यग्वावृधानः सहोभिरनिभृष्टस्तन्वं वावृधस्व ॥ ६ ॥

वि । अर्यः । इन्द्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव । धन्वनः । अभिऽमातीः ।
अस्मद्र्यक् । ववृधानः । सहःऽभिः । अनिऽभृष्टः । तन्वम् । ववृधस्व ॥ ६ ॥

**वेङ्कट०** वि तनुहि स्वामी त्वम् इन्द्र! अन्नानि, बलेनेव स्थिरेण धनुषः सकाशाच्छ …[9] अभिमातीः इषुः । अस्मदभिमुखम् वर्धमानः बलैः अहिंसितः आत्मीयं शरीरम् हविषा वर्धयस्व ॥ ६ ॥

इदं हविर्मघवन् तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन् तुभ्यं पक्वो३ऽद्धीन्द्र पिब च प्रस्थितस्य ॥ ७ ॥

इदम् । हविः । मघऽवन् । तुभ्यम् । रातम् । प्रति । सम्ऽराट् । अहृणानः । गृभाय ।
तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । पक्वः । [10]अद्धि । इन्द्र । पिब । च । प्रऽस्थितस्य[10] ॥७॥

---

१. सोम मूको. २. विद्यतां मूको. ३. तु. ऋ ८,७७,३. ४-४. उपज …मूको ५. तिग्मानितिग्मानि मूको. ६. कुरु स्थिरा° मूको. ७. नास्ति मूको. ८-८. नास्ति मूको. ९. सकाशाच्छ … मूको. १०-१०. अत्र या. (७,६) द्र.

वेङ्कट० इदम् हविः मघवन्![1] तुभ्यम् दत्तम्। प्रति गृहाण सम्राट्! अक्रुध्यन्। तुभ्यम् सुतः सोमः मघवन्! । तुभ्यम् पक्वः[2] पुरोडाशः। भक्षय इन्द्र! पुरोडाशम्। पिब च प्रस्थितम् इति ॥ ७ ॥

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ॥ ८ ॥

[3]अद्धि । इत् । इन्द्र । प्रऽस्थिता । इमा । हवींषि । चनः । दधिष्व । पचता । उत । सोमम्[3] ।
प्रयस्वन्तः । प्रति । हर्यामसि । त्वा । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ८ ॥

वेङ्कट० [4]भक्षय एव इन्द्र![4] प्रस्थितानि इमानि हवींषि। अन्नम् धारय पक्वम्, अपि च सोमम्। हविष्मन्तो वयम् [5]प्रति कामयामहे त्वाम्[5]। सत्याः सन्तु यजमानस्य कामाः ॥ ८ ॥

प्रेन्द्राग्निभ्यां सुवचस्यामियर्मि सिन्धाविव प्रेरयं नावमर्कैः ।
अया इव परि चरन्ति देवा ये अस्मभ्यं धनदा उद्भिदश्च ॥ ९ ॥

प्र । इन्द्राग्निऽभ्याम् । सुऽवचस्याम् । इयर्मि । सिन्धौऽइव । प्र । ईरयम् । नावम् । अर्कैः ।
अयाःऽइव । परि । चरन्ति । देवाः । ये । अस्मभ्यम् । धनऽदाः । उत्ऽभिदः । च ॥ ९ ॥

वेङ्कट० प्र ईरयामि इन्द्राग्निभ्याम् सुष्टुतिम्[6]। सिन्धौ इव नावम् प्र ईरयामि इन्द्राग्नी स्तोत्रैः। रश्मयः इव परितः चरन्ति [4]देवाः, ये अस्मभ्यम्[4] धनस्य दातारः उद्भेत्तारः च कामानामिति ॥ ९ ॥

[4]इति अष्टमाष्टके षष्ठाध्याये एकविंशो वर्गः[4] ॥

## [ ११७ ]

[4]भिक्षुराङ्गिरस ऋषिः। धनान्नदानं देवता। त्रिष्टुप् छन्दः, प्रथमाद्वितीये जगत्यौ[4]।

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते ॥ १ ॥

न । वै । ऊँ इति । देवाः । क्षुधम् । इत् । वधम् । ददुः । उत । आशितम् । उप । गच्छन्ति । मृत्यवः ।
उतो इति । रयिः । पृणतः । न । उप । दस्यति । उत । अपृणन् । मर्डितारम् । न । विन्दते ॥१॥

वेङ्कट० भिक्षुः[7] आङ्गिरसो धनान्नदानं प्रशशंस। वयं क्षुधिता मृताः स्याम इति केचिन्न प्रयच्छन्ति। तत्रोक्तम्— न खलु देवाः क्षुधम् एव मनुष्याय मारकम् कल्पितवन्तः, अपि च सुहितम् उप गच्छन्ति नानाविधाः मृत्यवः। तस्माद् दातव्यम्[8]। अपि च प्रयच्छतः रयिः न कदाचित् अपैष्यति[9]। अपि च अप्रयच्छन्[10] आत्मनः सुखयितारम् न लभते ॥१॥

---

१. मघं मूको. २. पक्व मूको. ३-३. अत्र या. (६,१६) व्याख्यानं द्र. ४-४. नास्ति मूको. ५-५. प्रकामयामहे मूको. ६. सुष्टुर्कि मूको. ७. नवोद्भिक्षुः मूको. ८. यात° मूको. ९. तु ऋ ५, ५४,७ प्रभृ.; उपे° मूको. १०. °च्छति मूको.

य आध्राय चकमानाय पित्वोऽन्नवान्त्सन् रफितायोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरोतो चित् स मर्डितारं न विन्दते ॥ २ ॥

यः । आध्राय । चकमानाय । पित्वः । अन्नऽवान् । सन् । रफिताय । उपऽजग्मुषे ।
स्थिरम् । मनः । कृणुते । सेवते । पुरा । उतो इति । चित् । सः । मर्डितारम् । न । विन्दते ॥

वेङ्कट० यः आधारभूताय दरिद्राय कामयमानाय[1] अन्नानि स्वयम् अन्नवान् सन् शब्दायमानाय उपजग्मुषे नाहं प्रयच्छामीति [2]स्थिरम् मानसम् कुरुते, सेवते[2] भुङ्क्ते च ततः प्राक् स्वयम् अपि, च [3]सः मर्डितारम्[3] न लभते इति ॥ २ ॥

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय ।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ ३ ॥

सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय । चरते । कृशाय ।
अरम् । अस्मै । भवति । यामऽहूतौ । उत । अपरीषु । कृणुते । सखायम् ॥ ३ ॥

वेङ्कट० सः एव भोक्ता भवति, यः भुञ्जानः प्रतिग्रहीत्रे च ददाति [4]अन्नकामाय भिक्षाम्[4] चरते कृशाय । तद् दत्तम् अन्नम् अस्मै दात्रे पर्याप्तम् भवति यमस्य आह्वाने मरणे । अपि च अपरीषु अरातिषु[5] करोति [6]चात्मनः सखायम् स्वयम् उद्धर्तारम्[6] इति ॥ ३ ॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात् प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥ ४ ॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे । सचमानाय । पित्वः ।
अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति । पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥

वेङ्कट० न सः सखा भवति, यः न अन्नम् प्रयच्छति सख्ये सहजाताय अन्नार्थं सेवमानाय । सः अस्मात् अप प्र गच्छति लोकात्, न तत्र तस्य स्थानम् भवति । [7]काममप्रद एवास्मिन्[7] लोके प्रयच्छन्तम् अन्यम् अरममाणम् इच्छति । न रमते कदर्यो[8] दाने । कमप्यात्मनः[9] पृणन्तमिच्छति । यद्वा आसनलिप्सया गन्तव्यम् इच्छति[10] इति ॥ ४ ॥

पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥ ५ ॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् । अनु । पश्येत । पन्थाम् ।
ओ इति । हि । वर्तन्ते । रथ्याऽइव । चक्रा । अन्यम्ऽअन्यम् । उप । तिष्ठन्त । रायः ॥ ५ ॥

---

१. काम ··· मूको. २-२. स्थिरमान ते वेते वि[2]; स्थिरमान कुरुते वे ते अ[1]. ३-३ समर्थिता° मूको. ४-४. अन्नकामा···क्षां मूको. ५. रात्रिषु मूको. ६. चात्मानः···त्वायमद्धितारं मूको. ७-७. कामप्रमद विवा° मूको. ८. कळर्यो मूको. ९. कर्मात्मनः मूको १०. इच्छन्ति मूको.

वेङ्कट० प्रयच्छेत्[1] एव याचमानाय वृद्धोऽतिशयेन। दीर्घतमम् अनु पश्येत् पन्थानम्। तं[2] दर्शयन्ति आ वर्तन्ते हि धनानि रथ्यायाम् इव चक्राणि, तथा च अन्यम्-अन्यम्[3] उप तिष्ठन्ति[4] इति ॥ ५ ॥

[5]इति अष्टमाष्टके षष्ठाध्याये द्वाविंशो वर्गः[5] ॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ६ ॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि । वधः । इत् । सः । तस्य ।
न । अर्यमणम् । पुष्यति । नो इति । सखायम् । केवलऽअघः । भवति । केवलऽआदी ॥ ६ ॥

वेङ्कट० मोघम् अन्नम् लभते अप्रचेताः। सत्यम् अहम्[6] ब्रवीमि। वधः एव सः[6] तस्य भवति। सोऽयम् आत्मनः प्रदातारं देववर्गम् न पुष्यति न सखायम्। असाधारणपापः भवति स्वयमेव भुञ्जानः[7] ॥ ६ ॥

कृषन्नित् फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः ।
वदन् ब्रह्मावदतो वनीयान् पृणन्नापिरपृणन्तमभि ष्यात् ॥ ७ ॥

कृषन् । इत् । फालः । आशितम् । कृणोति । यन् । अध्वानम् । अप । वृङ्क्ते । चरित्रैः ।
वदन् । ब्रह्मा । अवदतः । वनीयान् । पृणन् । आपिः । अपृणन्तम् । अभि । स्यात् ॥ ७ ॥

वेङ्कट० कृषन् एव फालः पुरुषम् आशितम् करोति, न तु गृहे निक्षिप्तः। गच्छन् एव अध्वानम् संस्थापयति '[8]गन्तव्यम् पादैः[8]', न तु गृह आसीनः। वदन् एव वक्तव्यं ब्राह्मणः अवदतः अज्ञाद् अत्यन्तं सम्भजनीयः। एवं प्रयच्छन् बन्धुः अप्रयच्छन्तम्[9] अभि भवति इति ॥ ७ ॥

एकपाद् भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः ॥ ८ ॥

एकऽपात् । भूयः । द्विऽपदः । वि । चक्रमे । द्विऽपात् । त्रिऽपादम् । अभि । एति । पश्चात् ।
चतुःऽपात् । एति । द्विऽपदाम् । अभिऽस्वरे । सम्ऽपश्यन् । पङ्क्तीः । उपऽतिष्ठमानः ॥ ८ ॥

वेङ्कट० पुरुषे स्थितो वायुः एकपाद् अत्यन्तम् द्विपदः[10] प्रति वि क्रमते अशनार्थम्। द्विपात् च तम् त्रिपादम् प्राणं गच्छन्तम् पश्चात् अभि गच्छति। प्राणापानव्यानात्मकः त्रिपादुक्तः। अथर्व-ब्राह्मणं ( तु. गोब्रा १,२,८ ) द्रष्टव्यम्। चतुष्पात् चाभिगच्छति[11] समीपम् द्विपदाम् मनुष्याणाम् अनुस्वरणे कर्किताकारे(?) किं घासप्रदानार्थम् आह्वयतीति। [12]सम्पश्यन् गोयूथानि†[12], तत्र [13]गच्छन्नविकृतः[13] एति इति ॥ ८ ॥

---

१. प्रयत् मूको. २. तं पन्थानं अ[2]. ३. अन्नम् मूको. ४. तिष्ठान्ति मूको. ५-५. नास्ति मूको. ६. नास्ति अ[2]. ७. भुञ्जानम् मूको. ८-८. गन्तव्य··· मूको. ९. °च्छतम् मूको. १०. त्रुटितम् मूको. ११. पश्चा° मूको. १२-१२. °पश्य द्रोयू° मूको. † तु. माश १,२,३,७. १३-१३. गच्छन्नपि कुत मूको.

समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित् सन्तौ न समं पृणीतः ॥ ९ ॥

समौ । चित् । हस्तौ । न । समम् । विविष्टः । सम्ऽमातरा । चित् । न । समम् । दुहाते इति ।
यमयोः । चित् । न । समा । वीर्याणि । ज्ञाती इति । चित् । सन्तौ । न । समम् । पृणीतः ॥

**वेङ्कट०** समौ अपि हस्तौ कार्येषु न समम् व्याप्नुतः । तथा एकमातृके अपि धेनू न समम् क्षीरम् [1]दुहाते । यमयोः[1] चित् न समानि वीर्याणि । [2]एवम् एकपितृकावपि भवन्तौ[2] न समम् प्रयच्छतः इत्याश्चर्यमिति ॥ ९ ॥

[3]इति अष्टमाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[3] ॥

[ ११८ ]

[3]उरुक्षय आमहीयव ऋषिः । रक्षोहाऽग्निर्देवता । गायत्री छन्दः[3] ।

अग्ने हंसि न्य१त्रिणं दीद्यन्मर्त्येष्वा । स्वे क्षये शुचिव्रत ॥ १ ॥

अग्ने । हंसि । नि । अत्रिणम् । दीद्यत् । मर्त्येषु । आ । स्वे । क्षये । शुचिऽव्रत ॥ १ ॥

**वेङ्कट०** उरुक्षय आमहीयवः[4] । अग्ने ! नि हंसि राक्षसम् दीप्यमानः मर्त्येषु स्वे स्थाने शुचिकर्मन् ! ॥ १ ॥

उत्तिष्ठसि स्वाहुतो घृतानि प्रति मोदसे । यत् त्वा स्रुचः समस्थिरन् ॥ २ ॥

उत् । तिष्ठसि । सुऽआहुतः । घृतानि । प्रति । मोदसे । यत् । त्वा । स्रुचः । सम्ऽअस्थिरन् ॥

**वेङ्कट०** उत् तिष्ठसि स्वाहुतः[5], घृतानि च श्रद्दधासि, यदा त्वाम् स्रुचः सह गच्छन्ति ॥ २ ॥

स आहुतो वि रोचतेऽग्निरीळेन्यो गिरा । स्रुचा प्रतीकमज्यते ॥ ३ ॥

सः । आऽहुतः । वि । रोचते । अग्निः । ईळेन्यः । गिरा । स्रुचा । प्रतीकम् । अज्यते ॥ ३ ॥

**वेङ्कट०** सः अग्निः आहुतः वि रोचते स्तोतव्यः स्तुत्या । जुह्वा अस्य मुखम् अज्यते ॥ ३ ॥

घृतेनाग्निः समज्यते मधुप्रतीक आहुतः । रोचमानो विभावसुः ॥ ४ ॥

घृतेन । अग्निः । सम् । अज्यते । मधुऽप्रतीकः । आऽहुतः । रोचमानः । विभाऽवसुः ॥ ४ ॥

**वेङ्कट०** निगदसिद्धा । मादकमुखः मधुप्रतीकः इति ॥ ४ ॥

जरमाणः समिध्यसे देवेभ्यो हव्यवाहन । तं त्वा हवन्त मर्त्याः ॥ ५ ॥

जरमाणः । सम् । इध्यसे । देवेभ्यः । हव्यऽवाहन । तम् । त्वा । हवन्त । मर्त्याः ॥ ५ ॥

---

१-१. °हाते ··· यम° मूको. २-२. °व वमकपितृका च विभव° मूको. ३-३. नास्ति मूको.
४. °हीयव मूको. ५. स्वागुतः मूको.

**वेङ्कट०** स्तूयमानः सम् इध्यसे देवयागार्थम् हव्यवाहन ! । तम् त्वाम् हवन्ते मनुष्याः ॥ ५ ॥

[1]इति अष्टमाष्टके षष्ठाध्याये चतुर्विंशो वर्गः[1] ॥

तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत । अदाभ्यं गृहपतिम् ॥ ६ ॥

तम् । मर्ताः । अमर्त्यम् । घृतेन । अग्निम् । सपर्यत । अदाभ्यम् । गृहऽपतिम् ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा इति ॥ ६ ॥

अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह । गोपा ऋतस्य दीदिहि ॥ ७ ॥

अदाभ्येन । शोचिषा । अग्ने । रक्षः । त्वम् । दह । गोपाः । ऋतस्य । दीदिहि ॥ ७ ॥

**वेङ्कट०** ... ... ... ... ... ॥ ७ ॥

स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत् ॥ ८ ॥

सः । त्वम् । अग्ने । प्रतीकेन । प्रति । ओष । यातुऽधान्यः । उरुऽक्षयेषु । दीद्यत् ॥ ८ ॥

**वेङ्कट०** सः त्वम् अग्ने ! मुखेन प्रति दह यातुधानीः उरुक्षयेषु अस्मासु दीप्यमानः ॥ ८ ॥

तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे । यजिष्ठं मानुषे जने ॥ ९ ॥

तम् । त्वा । गीःऽभिः । उरुऽक्षयाः । हव्यऽवाहम् । सम् । ईधिरे । यजिष्ठम् । मानुषे । जने ॥

**वेङ्कट०** निगदसिद्धा इति ॥ ९ ॥

[1]इति अष्टमाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[1] ॥

## [ ११९ ]

[2]ऐन्द्रो लब ऋषिः । आत्मा (इन्द्रः) देवता । गायत्री छन्दः[2] ।

इति वा इति मे मनो गामश्वं सनुयामिति । कुवित् सोमस्यापामिति ॥ १ ॥

इति । वै । इति । मे । मनः । गाम् । अश्वम् । सनुयाम् । इति । कुवित् । सोमस्य । अपाम् । इति ॥

**वेङ्कट०** [2]लब ऐन्द्रः[2] । लब[3] आत्मानं तुष्टाव वैकुण्ठवत् प्रादुर्भूतेन्द्रभावः । इति च इति च मे मनः । कथम् इत्याह — गाम् अश्वम् च दद्याम् यजमानाय इति । ततोऽहं बहु सोमम् अपाम् इति ॥ १ ॥

प्र वाता इव दोधत उन्मा पीता अयंसत । कुवित् सोमस्यापामिति ॥ २ ॥

प्र । वाताःऽइव । दोधतः । उत् । मा । पीताः । अयंसत । कुवित् । सोमस्य । अपाम् । इति ॥ २ ॥

---

१-१. नास्ति मूको. २-२. पञ्च ऐन्द्रम् मूको. ३. नास्ति मूको.

वेङ्कट० [१]प्र उत्[१] यच्छन्ति माम् वाताः[२] इव वृक्षान् [३]कम्पयन्तः पीताः सोमाः[३] शत्रुषु इति ॥ २ ॥[४]

उन्मा पीता अयंसत रथमश्वा इवाशवः । कुवित् सोमस्यापामिति ॥ ३ ॥

उत् । मा । पीताः । अयंसत । रथम् । अश्वाःऽइव । आशवः । कुवित् । सोमस्य । अपाम् । इति ॥३॥

वेङ्कट० निगदसिद्धा इति ॥ ३ ॥

उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियम् । कुवित् सोमस्यापामिति ॥ ४ ॥

उप । मा । मतिः । अस्थित । वाश्रा । पुत्रम्ऽइव । प्रियम् । कुवित् । सोमस्य । अपाम् । इति ॥ ४ ॥

वेङ्कट० उप तिष्ठते माम् स्तुतिः[५] धेनुः इव पुत्रम्[६] वत्सम्[७] ॥ ४ ॥[८]

अहं तष्टेव वन्धुरं पर्यचामि हृदा मतिम् । कुवित् सोमस्यापामिति ॥ ५ ॥

अहम् । तष्टाऽइव । वन्धुरम् । परि । अचामि । हृदा । मतिम् । कुवित् । सोमस्य । अपाम् । इति ॥

वेङ्कट० ... ... ... ... ... ॥ ५ ॥

नहि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः । कुवित् सोमस्यापामिति ॥ ६ ॥

नहि । मे । अक्षिऽपत् । चन । अच्छान्त्सुः । पञ्च । कृष्टयः । कुवित् । सोमस्य । अपाम् । इति ॥६॥

वेङ्कट० नहि मे अक्षिपतनम् अपि सोढुं कामयन्ते पञ्च कृष्टयः ॥ ६ ॥

[९]इति अष्टमाष्टके षष्ठाध्याये षड्विंशो वर्गः[९] ॥

नहि मे रोदसी उभे अन्यं पक्षं चन प्रति । कुवित् सोमस्यापामिति ॥ ७ ॥

नहि । मे । रोदसी इति । उभे इति । अन्यम् । पक्षम् । चन । प्रति । कुवित् । सोमस्य । अपाम् । इति ॥

वेङ्कट० नहि मे द्यावापृथिव्यौ उभे [१०]अन्यम् पक्षम्[१०] प्रति भवतः[११] ॥ ७ ॥[१२]

अभि द्यां महिना भुवमभीऽइमां पृथिवीं महीम् । कुवित् सोमस्यापामिति ॥८॥

अभि । द्याम् । महिना । भुवम् । अभि । इमाम् । पृथिवीम् । महीम् । कुवित् । सोमस्य । अपाम् । इति ॥

वेङ्कट० महत्त्वेन द्यावापृथिव्यौ अभि भवामि[१३] इति ॥ ८ ॥

हन्ताहं पृथिवीमिमां नि दधानीह वेह वा । कुवित् सोमस्यापामिति ॥ ९ ॥

[१४]हन्त । अहम् । पृथिवीम् । इमाम् । नि । दधानि । इह । वा । इह । वा[१४] । कुवित् । सोमस्य । अपाम् । इति ॥

---

१-१. प्रेदद् मूको. २. यता मूको. ३-३. °न्तो वीतसोम मूको. ४. तु. ऋ १०,२३,४. ५. स्तुर्ति मूको. ६. पुत्र मूको. ७. वत्स मूको. ८. तु. ऋ १,९५,६. ९-९. नास्ति मूको. १०-१०. त्रुटितम् मूको. ११. °वत मूको. १२. तु. ऋ ६,३०,१. १३. भवनानि मूको. १४-१४. निगमोऽयं या. (१,४) द्र.

**वेङ्कट०** हन्त इति परम् अभिमुखीकरोति । अहम् पृथिवीम् इमाम् अस्मिन् देशे नि दधानि, यद्वा अस्मिन् इति मुखेन निर्दिशति ॥ ९ ॥[1]

ओषमित् पृथिवीमहं जङ्घनानीह वेह वा । कुवित् सोमस्यापामिति ॥ १० ॥

ओषम् । इत् । पृथिवीम् । अहम् । जङ्घनानि । इह । वा । इह । वा । कुवित् । सोमस्य । अपाम् । इति ॥

**वेङ्कट०** क्षिप्रम् एव पृथिवीम् इमाम् अहम् पादादिना जङ्घनानि इह वा इह वा इति ॥ १० ॥

दिवि मे अन्यः पक्षो३ऽधो अन्यमचीकृषम् । कुवित् सोमस्यापामिति ॥ ११ ॥

दिवि । मे । अन्यः । पक्षः । अधः । अन्यम् । अचीकृषम् । कुवित् । सोमस्य । अपाम् । इति ॥ ११ ॥

**वेङ्कट०** दिवि मे अन्यः पक्षः स्थितः । अधस्तात् अन्यम् पक्षं पृथिव्या धारणाय अचीकृषम् इति ॥ ११ ॥

अहमस्मि महामहोऽभिनभ्यमुदीषितः । कुवित् सोमस्यापामिति ॥ १२ ॥

अहम् । अस्मि । महाऽमहः । अभिऽनभ्यम् । उत्ऽईषितः । कुवित् । सोमस्य । अपाम् । इति ॥ १२ ॥

**वेङ्कट०** अहम् अस्मि महताम् अपि मंहनीयः कालचक्रस्य नभ्ये[2] उद्गत इति ॥ १२ ॥

गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः । कुवित् सोमस्यापामिति ॥ १३ ॥

गृहः । यामि । अरम्ऽकृतः । देवेभ्यः । हव्यऽवाहनः । कुवित् । सोमस्य । अपाम् । इति ॥ १३ ॥

**वेङ्कट०** हविषां ग्रहीता अग्निर्भूत्वाऽहं यज्ञगृहात् यामि स्तुतिभिरलङ्कृतः देवेभ्यः हव्यवाहनः इति ॥ १३ ॥

[3]इति अष्टमाष्टके षष्ठाध्याये सप्तविंशो वर्गः[3] ॥

अष्टमे षष्ठमध्यायं व्याकरोद् माधवाह्वयः ।
तीरमाश्रित्य निवसन् कावेर्या दक्षिणं सुखम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके षष्ठोऽध्यायः समाप्तः ॥

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके षष्ठोऽध्यायः ॥



---

१. अत्र या. ( १,४ ) द्र. २. = नभ्यम् अभीति । नह्य मूको. ३-३. नास्ति मूको.

## अथ सप्तमोऽध्यायः ।

**वेङ्कट०** 'तदिदास भुवनेषु' व्याचिख्यासति माधवः ।
ऋगर्थमवगन्तव्यम् आदितः सम्प्रदर्शयन् ॥ १ ॥

सूत्रकारैरनुक्तत्वात् केचिद् मन्त्रार्थवादयोः ।
[1]न ज्ञातव्योऽर्थ इत्याहुर्ज्ञातव्यश्चेद्वदन्ति ते[1] ॥ २ ॥

अत्र ब्रूमो लोकसिद्धः पदार्थोऽन्वय एव च ।
प्रमितस्य तथाऽर्थस्य क्रमः सूत्रैः प्रदर्श्यते ॥ ३ ॥

अर्थवादेष्वपि ननु विरोधोऽस्ति परस्परम् ।
समाधेयो बुद्धिमद्भिः सूत्रकृद्भिरुपेक्षितः ॥ ४ ॥

वदन्ति तत्र कवयः कर्तव्यांशपरा इमे ।
कल्पसूत्रकृतः सर्वे न तु ज्ञातव्यतत्पराः ॥ ५ ॥

ऋषिच्छन्दोदैवतानि ज्ञातव्यान्येव वैदिकैः ।
कल्पसूत्रैरनुक्तानि तथा मन्त्रार्थवादयोः ॥ ६ ॥

वेदार्थमवगन्तव्यम् ऋषिराह बृहस्पतिः ।
अविशेषेण सूक्तेन सूक्तं तच्च 'बृहस्पते'[2] ॥ ७ ॥

[3]अथापि मन्त्रः 'स्थाणुरयं भारहारः किलाभूत्'†[3] ।
'यदधीतमविज्ञातम्'[4] विशेषो नात्र कीर्तितः[5] ॥ ८ ॥

मन्त्रार्थवादैरपि च स्मार्ता धर्माः प्रकल्पिताः ।
तस्मान् मन्त्रार्थवादार्थौ ज्ञातव्योऽत्र प्रयत्नतः ॥ ९ ॥

**अत्र ब्राह्मणम्**—'मनुष्या वा ऋषिषूत्क्रामत्सु[6] देवानब्रुवन् को न ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन्[7] मन्त्रार्थचिन्ताभ्यूहम् अभ्यूळहम्[8] । तस्माद् यदेव[9] किंचानूचानोऽभ्यूहत्यार्षं तद्भवति' ( या १३,१२ ) इति ।

अपि च ब्राह्मणानीह मन्त्रानृग्भाष्यकारवत्[10] ।
उपादाय वदन्त्यर्थान् ज्ञानमेव प्रयोजनम् ॥ १० ॥

---

१-१. न ज्ञातवोर्थ इत्याहुर्ज्ञातज्ञातस्यश्चेद्वदन्ति ते वि[2] अ[1]. २. ऋ १०,७१,१. ३-३. मन्त्रो भवति स्थाणुरयं भारवाहः वेंऋअ; °पि…किलाभूत् वि[2] अ[1]. † या १,१८. ४. या १,१८. ५. °तम् वि[2] अ[1]. ६. ऋक्षूत्क्रामत्सु मूको. ७. °च्छस्तन् वि[2] अ[1]. ८. °भ्यौहं वि[2] अ[1]. ९. यदेव वि[2]. १०. °ष्यकर्मवित् अ[1].

तथा चेह निरुक्तानि मन्त्रान् व्याचक्षते स्फुटम् ।
स्वायंभुवो मनुश्चाह निघण्टूनामवेक्षणम् ॥ ११ ॥

'बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्'' ॥ १२ ॥

ऋषिच्छन्दोदैवतज्ञो[1] मन्त्रब्राह्मणवित्तथा ।
सकल्पाधीतैकवेदः कर्म कर्तुमिहार्हति ॥ १३ ॥

वेदावन्यौ च विज्ञेयौ याज्ञिकेभ्यः समासतः ।
क्षाजिहीर्षति यत्कर्म तस्य यौ प्रतिपादकौ ॥ १४ ॥

मन्त्रार्थवादसौक्ष्म्यज्ञः सर्ववेदज्ञ एव च ।
तत्तज्ज्ञानानुगुण्येन फलाधिक्येन युज्यते ॥ १५ ॥

स्वयं च पुरुषार्थोऽयं ब्राह्मणस्य विशेषतः ।
अङ्गोपाङ्गैः प्रयत्नेन यद्यर्थमवगच्छति ॥ १६ ॥

मनुः —[3]'ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथाऽपरे ।
तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथाऽपरे † ॥ १७ ॥

‡ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ।
¶हव्यानि तु यथान्यायं¶ सर्वेष्वेव चतुर्ष्वपि‡'[3] ॥ १८ ॥

'सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ १९ ॥

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ २० ॥

'वेदशास्त्रार्थतत्त्वज्ञो यत्र[4] तत्राश्रमे[4][5] वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥ २१ ॥

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ २२ ॥

तपो विद्या च विप्रस्य निःश्रेयसकरं[6] परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते'[7] ॥ २३ ॥ इति[8] ॥

---

१. मस्मृ ४,१९. २. °षिछ° वेंकअ. ३-३. मस्मृ ३,१३४-१३५. † तथैव च वि[2]. ‡-‡ नास्ति वेंकअ. ¶-¶ वेदार्थवित्सु हव्यानि (भव्यानि वि[2] अ[1].) मूको. ४-४. वेद…य° वि[2] अ[1]. ५. कुत्रा° वेंकअ. ६. नैश्रेय° वि[2] अ[1]; निश्रे° वेंकअ. ७. मस्मृ १२,१००-१०४. ८. इति कारिका समाप्ता मूको.

[ १२० ]

¹आथर्वणो बृहद्दिव ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः¹ ।

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १ ॥

तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः ।
सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यम् । विश्वे । मदन्ति । ऊमाः ॥ १ ॥

**वेङ्कट०** **बृहद्दिव आथर्वणः । अत्र शाट्यायनकम्**—" 'तदिदास भुवनेषु ज्येष्ठम्' इति प्रजापतिर्हि ²सः । प्रजापतिर्ह्येष भुवनेषु ज्येष्ठः । 'यतो जज्ञ उग्रस्त्वेषनृम्णः' इति इन्द्रो ह सः । 'सद्यो जज्ञानो नि रिणाति शत्रून्' इति सद्यो ह्येव स जज्ञानः सर्वा मृधो व्यहत । 'अनु यं विश्वे मदन्त्यूमाः' । इत्यृतवो वा ऊमास्त एवैनं तद् अनुमदन्ति" ( जैब्रा २,१४४ ) इति ॥ १ ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ २ ॥

ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसम् । दधाति ।
अविऽअनत् । च । विऽअनत् । च । सस्नि । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ २ ॥

**वेङ्कट०** **वर्धमानः वेगेन बहुबलः² शातयिता असुराय³ भयम् ददाति । तस्मै तुभ्यम्** ⁴अव्यनत् च व्यनत् च⁴ **सर्वम् प्रहरणे⁵** सम् नवन्त मदेषु जनितेषु । **अत्र शाट्यायनकम्**—'यच्च ह वै व्यनिति यच्च न तत्सर्वम् एतस्यैव श्रियै तत् स्थानम्' ( जैब्रा २,१४४ ) इति ॥२॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ ३ ॥

त्वे इति । क्रतुम् । अपि । वृञ्जन्ति । विश्वे । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः ।
स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि । योधीः ॥ ३ ॥

**वेङ्कट०** त्वे **क्रियमाणं कर्म समर्पयन्ति । व्याप्ते तु यत्** द्विः त्रिः च ये **अमी** भवन्ति ऊमाः । **अत्र शाट्यायनकम्**—"ऋतवो वा ऊमाः, त एवैते द्विस्त्रिर्भवन्ति । 'स्वादोः स्वादीयः स्वादुना सृजा सम्' इति प्रजा वै स्वादुः । प्रजायै या प्रजा सा स्वादोः स्वादु । 'अदः सु मधु मधुनाभि योधीः' इति प्रजा वै मधु । प्रजायै या प्रजा सा मधोर्मधु" ( जैब्रा २,१४४ ) इति । स्वादुना मधुना च पुत्रेण सह पौत्रम् अपि सम् सृज इति ॥ ३ ॥

---

१-१. नास्ति मूको. २. बल मूको. ३. मित्रावरुणामसुराय मूको. ४-४. अव्यपच्च नव्यच्च मूको. ५. तु. ऋ ५,३२,५;७.

इति॑ चि॒द्धि त्वा॒ धना॒ जय॑न्तं॒ मदे॑मदे अनु॒मद॑न्ति॒ विप्राः॑ ।
ओजी॑यो धृष्णो स्थि॒रमा त॑नुष्व॒ मा त्वा॑ दभन् यातु॒धाना॑ दु॒रेवाः॑ ॥४॥

इति॑ । चि॒त् । हि । त्वा॒ । धना॑ । जय॑न्तम् । मदे॑ऽमदे । अ॒नु॒ऽमद॑न्ति । विप्राः॑ ।
ओजी॑यः । धृ॒ष्णो॒ इति॑ । स्थि॒रम् । आ । त॒नु॒ष्व॒ । मा । त्वा॒ । द॒भ॒न् । या॒तु॒ऽधाना॑ः । दुः॒ऽएवाः॑ ॥

**वेङ्कट०** इति चित् हि त्वाम् धनानि जयन्तम् मदेमदे[1] तर्पयन्ति मेधाविनः। 'बलवत्तमम् धर्षक!'[2] स्थिरम् धनुः आ-ततज्यं कुरु। मा [3]त्वा हिंसिषुः[3] राक्षसाः दुष्टगमनाः ॥ ४ ॥

त्वया॑ व॒यं शा॑शद्महे॒ रणे॑षु प्र॒पश्य॑न्तो यु॒धेन्या॑नि॒ भूरि॑ ।
चो॒दया॑मि त॒ आयु॑धा॒ वचो॑भिः॒ सं ते॑ शिशामि॒ ब्रह्म॑णा॒ वयां॑सि ॥ ५ ॥

त्वया॑ । व॒यम् । शा॒श॒द्म॒हे॒ । रणे॑षु । प्र॒ऽपश्य॑न्तः । यु॒धेन्या॑नि । भूरि॑ ।
चो॒दया॑मि । ते॒ । आयु॑धा । वचः॑ऽभि । सम् । ते॒ । शि॒शा॒मि॒ । ब्रह्म॑णा । वयां॑सि ॥ ५ ॥

**वेङ्कट०** त्वया वयम् शातयामः शत्रून् रणेषु प्रपश्यन्तः योधनीयानि बहूनि बलानि। प्रेरयामि त्वदीयानि आयुधानि स्तुतिभिः। तीक्ष्णीकरोमि[4] च तव हवींषि मन्त्रेण इति ॥ ५ ॥

[5]इति अष्टमाष्टके सप्तमाध्याये प्रथमो वर्गः[5] ॥

स्तु॒षेय्यं॑ पुरु॒वर्प॑समृ॒भ्व॑मि॒नत॑ममा॒प्त्यमा॒प्त्याना॑म् ।
आ द॑र्षते॒ शव॑सा स॒प्त दानू॒न् प्र सा॑क्षते प्रति॒माना॑नि॒ भूरि॑ ॥ ६ ॥

स्तु॒षेय्य॑म् । पु॒रु॒ऽवर्प॑सम् । ऋ॒भ्व॑म् । इ॒नऽत॑मम् । आ॒प्त्यम् । आ॒प्त्याना॑म् ।
आ । द॒र्ष॒ते॒ । शव॑सा । स॒प्त । दानू॑न् । प्र । सा॒क्ष॒ते॒ । प्र॒ति॒ऽमाना॑नि । भूरि॑ ॥ ६ ॥[6]

**वेङ्कट०** स्तोतव्यम् बहुरूपम् महान्तम् ईश्वरतमम् आप्तव्यानाम् अतिशयेन आप्तव्यम् अहं स्तौमि। [7]यः स्वयम् आ दारयति[7] बलेन सप्त सिन्धून् उदकस्य दातॄन्। प्र सहते प्रतिमानभूतस्य आत्मनो बहूनि बलानि ॥ ६ ॥

नि तद्द॑धि॒षेऽव॑रं॒ परं॑ च॒ यस्मि॒न्नावि॒थाव॑सा दु॒रोणे॑ ।
आ मा॒तरा॑ स्थापयसे जि॒ग॒त्नू अत॑ इनोषि॒ कर्व॑रा पु॒रूणि॑ ॥ ७ ॥

नि । तत् । द॒धि॒षे॒ । अव॑रम् । पर॑म् । च॒ । यस्मि॑न् । आवि॑थ । अव॑सा । दु॒रोणे॑ ।
आ । मा॒तरा॑ । स्था॒प॒य॒से॒ । जि॒ग॒त्नू इति॑ । अतः॑ । इ॒नो॒षि॒ । कर्व॑रा । पु॒रूणि॑ ॥ ७ ॥

**वेङ्कट०** नियमेन धारयसि[8] तत्र अपरम् पुत्रादीन्, यस्मिन् गच्छसि अन्नेन सह यज्ञगृहे। तथा

---

१. °मदेन मूको. २-२. °तम धर्षकम् मूको. ३-३. त्वहिंसिः वि[२]. ४. °रोति मूको. ५-५. नास्ति मूको. ६. या. (११,२१) व्याख्याता द्र. ७-७. ये सायमादारयन्ति मूको. ८. °रयति मूको.

आ स्थापयसि गमनशीलौ अग्निसूर्यौ निर्मातारौ लोकस्य। अस्माद् अन्तरिक्षाद् व्याप्नोषि यज्ञकर्माणि बहूनि इति ॥ ७ ॥

इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥ ८ ॥

इमा । ब्रह्म । बृहत्ऽदिवः । विवक्ति । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजः । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ ८ ॥

**वेङ्कट०** इमानि ब्रह्माणि बृहद्दिवः अयम् ऋषिः ब्रवीति इन्द्राय बलम् उद्दिश्य मुख्यः सर्वस्य सम्भक्ता। महतः मेघस्य ईष्टे स्वयं दीप्तस्य। दुरः द्वाराणि मेघस्य विश्वाः अप वृणोति स्वभूताः ॥ ८ ॥

एवा महान् बृहद्दिवो अथर्वावोचत् स्वां तन्वमिन्द्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ॥ ९ ॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम् । इन्द्रम् । एव ।
स्वसारः । मातरिभ्वरीः । अरिप्राः । हिन्वन्ति । च । शवसा । वर्धयन्ति । च ॥ ९ ॥

**वेङ्कट०** एवम् महान् [1]बृहद्दिवः अथर्वपुत्र.[1] अस्तौत् स्वाम् एव तनुवम् आत्मभूतम् इन्द्रम्। स्वयं सरन्त्यः स्तुतयः अन्तरिक्षे भवन्त्यः [2]कल्याण्यः स्वस्मात्[2] स्थानाद् इन्द्रं प्रेरयन्ति च, वर्धयन्ति च वेगेन[3] इति ॥ ९ ॥

[4]इति अष्टमाष्टके सप्तमाध्याये द्वितीयो वर्गः[4] ॥

## [ १२१ ]

[5]हिरण्यगर्भः प्राजापत्य ऋषिः। कः ( प्रजापतिः ) देवता। त्रिष्टुप् छन्दः[5]।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥

हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ।
सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै । देवाय । हविषा । विधेम ॥ १ ॥[5]

**वेङ्कट०** हिरण्यगर्भः प्राजापत्यः। हिरण्मयस्य अण्डस्य गर्भभूतः सम्-भूतः अग्रे। सम्भूतश्च सर्वस्य भूतस्य एकः पतिः आसीत्। सः[6] धारयति पृथिवीम् अन्तरिक्षम्, अपि द्यावापृथिव्यौ। तस्मै देवाय हविषा परिचरणं कुर्म इति ॥ १ ॥

---

१-१. बृद्दिवेधर्वपुत्रो मूको. २-२ कल्याण्यस्वस्मात् मूको. ३. मेधेन अ[1]. ४-४. नास्ति मूको.
५. या. ( १०,२३ ) व्याख्याता द्र. ६. सा मूको.

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते । प्रऽशिषम् । यस्य । देवाः ।
यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम ॥ २ ॥

**वेङ्कट०** यः शरीरबलयोः दाता । यस्य च विश्वे मनुष्याः प्रशासनम् अनुतिष्ठन्ति, यस्य च देवाः । यस्य च छाया मृत्युः अमृतम् च भवति । येन आच्छादितो जीवति म्रियते च सा छाया इति ॥ २ ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् । राजा । जगतः । बभूव ।
यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः । कस्मै । देवाय । हविषा । विधेम ॥ ३ ॥

**वेङ्कट०** यः प्राणतः निमिषतः महत्त्वेन एकः एव राजा जगतः बभूव यः ईशे अस्य द्विपदः चतुष्पदः च इति ॥ ३ ॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥

यस्य । इमे । हिमऽवन्तः । महिऽत्वा । यस्य । समुद्रम् । रसया । सह । आहुः ।
यस्य । इमाः । प्रऽदिशः । यस्य । बाहू इति । कस्मै । देवाय । हविषा । विधेम ॥ ४ ॥

**वेङ्कट०** यस्य इमे हिमवन्तः पर्वताः महत्त्वेन तिष्ठन्ति । पर्वतेषु हिमं भूयिष्ठं भवति । यस्य अवयवभूतम् उदधिम् अनया पृथिव्या सह वदन्ति । यस्य इमाः प्रकृष्टा दिशः चतस्रः बाहू भवतः । पुनः यस्य इति पूरणम् ॥ ४ ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥

येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन । स्व१रिति स्वः । स्तभितम् । येन । नाकः ।
यः । अन्तरिक्षे । रजसः । विऽमानः । कस्मै । देवाय । हविषा । विधेम ॥ ५ ॥

**वेङ्कट०** येन द्यौः उद्गूर्णा पृथिवी च दृढा भवति । येन 'स्वः स्तभितम्'[1], येन च नाकः । यः च अन्तरिक्षे तेजसः निर्माता[2] ॥ ५ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये तृतीयो वर्गः[3] ॥

---

१-१. स्वस्तम्भितं मूको. २. नी···मूको. ३-३. नास्ति मूको.

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेताम् । मनसा । रेजमाने इति ।
यत्र । अधि । सूरः । उत्ऽइतः । विऽभाति । कस्मै । देवाय । हविषा । विधेम ॥ ६ ॥

वेङ्कट० यम् द्यावापृथिव्यौ रक्षणेन तस्य विष्टभ्यमाने त्राणार्थम् अभि पश्यतः[1] मनसा कम्पमाने । यस्मात् च लब्धतेजस्कः[2] उदितः सूर्यः विभाति ॥ ६ ॥

आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् । दधानाः । जनयन्तीः । अग्निम् ।
ततः । देवानाम् । सम् । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥ ७ ॥

वेङ्कट० आपः ह यदा बृहत्यः सर्वलोकम् अगच्छन् व्याप्ता अभवन् गर्भभूतम् इमं देवम् दधानाः अग्निम् च जनयन्त्यः विद्युद्रूपम्, तदा ताभ्योऽङ्गयः देवानाम् सर्वेषाम् एव स्वकार्येषु प्रेरकः कश्चित् सम् अवर्तत इति ॥ ७ ॥

यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥

यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षम् । दधानाः । जनयन्तीः । यज्ञम् ।
यः । देवेषु । अधि । देवः । एकः । आसीत् । कस्मै । देवाय । हविषा । विधेम ॥ ८ ॥

वेङ्कट० यः च आपः महत्त्वेन परिपश्यति दक्षम् आदित्यम् दधानाः जनयन्तीः च यज्ञम् । यः सर्वेषु देवेषु स्वयम् एकः देवः अभवत् ॥ ८ ॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवम् । सत्यऽधर्मा । जजान ।
यः । च । अपः । चन्द्राः । बृहतीः । जजान । कस्मै । देवाय । हविषा । विधेम ॥ ९ ॥

वेङ्कट० निगदसिद्धा इति ॥ ९ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १० ॥

---

१. °श्यते मूको. २. लब्धतेजतं मूको.

प्रजाऽपते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परि । ता । बभूव ।
यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ १० ॥[1]

**वेङ्कट०** प्रजापते ! न त्वत्तः अन्यः सर्वाणि एतानि जातानि भूतानि अरानिव नेमिः परि बभूव । यत्कामाः तुभ्यम् जुहुमः, तत् अस्माकम् अस्तु । वयम् स्याम पतयः रयीणाम् इति आशीः ॥१०॥

[2]इति अष्टमाष्टके सप्तमाध्याये चतुर्थो वर्गः[2] ॥

## [ १२२ ]

[2]चित्रमहा वासिष्ठ ऋषिः । अग्निर्देवता । जगती छन्दः, प्रथमापञ्चम्यौ त्रिष्टुभौ[2] ।

वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यम् ।
स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यम् ॥ १ ॥

वसुम् । न । चित्रऽमहसम् । गृणीषे । वामम् । शेवम् । अतिथिम् । अद्विषेण्यम् ।
सः । रासते । शुरुधः । विश्वऽधायसः । अग्निः । होता । गृहऽपतिः । सुऽवीर्यम् ॥ १ ॥

**वेङ्कट०** चित्रमहा[3] वासिष्ठः । वासयितारम् इव आदित्यम् विश्वदीप्तम् अग्निं स्तौमि वननीयम् सुखकरम् अतिथिम् यजमानानाम् अद्वेष्टव्यम् । सः प्रयच्छति शुरुधः[4] शुचो[5] रोधयित्रीः अपः विश्वस्य धर्त्रीः[6] अग्निः होता गृहपतिः सुवीर्यम् च ॥ १ ॥

जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान् वयुनानि सुक्रतो ।
घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्ननु व्रतम् ॥ २ ॥

जुषाणः । अग्ने । प्रति । हर्य । मे । वचः । विश्वानि । विद्वान् । वयुनानि । सुक्रतो इति सुऽक्रतो ।
घृतऽनिर्निक् । ब्रह्मणे । गातुम् । आ । ईरय । तव । देवाः । अजनयन् । अनु । व्रतम् ॥२॥

**वेङ्कट०** सेवमानः अग्ने ! प्रति कामय मदीयम् स्तोत्रम् विश्वानि जानन् प्रज्ञानानि [7]सुप्रज्ञ ! । हे[7] घृतनिर्णेजन ! ब्राह्मणाय गमनमार्गम् आ गमय प्रदर्शय, तव अनु जनयन्ति ऋत्विजः कर्म इति ॥ २ ॥

सप्त धामानि परियन्नमर्त्यो दाशद् दाशुषे सुकृते मामहस्व ।
सुवीरेण रयिणाग्ने स्वाभुवा यस्त आनट् समिधा तं जुषस्व ॥ ३ ॥

सप्त । धामानि । परिऽयन् । अमर्त्यः । दाशत् । दाशुषे । सुऽकृते । ममहस्व ।
सुऽवीरेण । रयिणा । अग्ने । सुऽआभुवा । यः । ते । आनट् । सम्ऽइधा । तम् । जुषस्व ॥३॥

**वेङ्कट०** सप्त स्थानानि[8] परिगच्छन् अमर्त्यः । अग्निः[9] च पृथिवी[10] च वायुः च अन्तरिक्षं च

---

१. ऋगेषा या. ( १०,४३ ) व्याख्याता द्र.　　२-२. नास्ति मूको.　　३. चित्रमाहा मूको.
४. सशुरुधः मूको.　　५. नास्ति मूको.　　६. °र्ता मूको.　　७-७. हे सुप्रज्ञ अ[1].　　८. धामानि अ[1].
९. अग्निम् मूको.　　१०. °वीं अ[1].

आदित्यः च द्यौः च चन्द्रमाः च इति तानि स्थानानि, 'सप्त वै शीर्षण्याः प्राणाः' (तै ५,१,७,१) इत्यपरम्। प्रयच्छन् यजमानाय सुकृते तम् अत्यन्तं पूजय। सुपुत्रेण धनेन अग्ने! शोभनाभवनेन[1] यः त्वां व्याप्नोति समिधा तम् सेवस्व इति ॥ ३ ॥

यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मन्त ईळते सप्त वाजिनम् ।
शृण्वन्तमग्निं घृतपृष्ठमुक्षणं पृणन्तं देवं पृणते सुवीर्यम् ॥ ४ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । हविष्मन्तः । ईळते । सप्त । वाजिनम् ।
शृण्वन्तम् । अग्निम् । घृतऽपृष्ठम् । उक्षणम् । पृणन्तम् । देवम् । पृणते । सुऽवीर्यम् ॥ ४ ॥

**वेङ्कट०** यज्ञस्य पताकास्थानीयम् मुख्यम् पुरोनिहितम् हविष्मन्तः याचन्ते सप्त वषट्कर्तारो बलिनम् अभिलषितम् शृण्वन्तम् अग्निम् घृतपृष्ठम् सेक्तारम् प्रयच्छन्तम् देवम् प्रयच्छते यजमानाय सुवीर्यम् पुत्रम् इति ॥ ४ ॥

त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व ।
त्वां मर्जयन् मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॥ ५ ॥

त्वम् । दूतः । प्रथमः । वरेण्यः । सः । हूयमानः । अमृताय । मत्स्व ।
त्वाम् । मर्जयन् । मरुतः । दाशुषः । गृहे । त्वाम् । स्तोमेभिः । भृगवः । वि । रुरुचुः ॥ ५ ॥

**वेङ्कट०** त्वम् दूतः प्रथमः वरणीयः। सः त्वम् हूयमानः अमृतत्वाय माद्य। त्वाम् पर्यचरन् स्तोतारः यजमानस्य गृहे। त्वाम् एव पुरा स्तोमैः भृगवः वि रुरुचुः ॥ ५ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये पञ्चमो वर्गः[2] ॥

इषं दुहन्त्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो ।
अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद्वर्तिर्यज्ञं परियन्त्सुक्रतूयसे ॥ ६ ॥

इषम् । दुहन् । सुऽदुघाम् । विश्वऽधायसम् । यज्ञऽप्रिये । यजमानाय । सुक्रतो इति सुऽक्रतो ।
अग्ने । घृतऽस्नुः । त्रिः । ऋतानि । दीद्यत् । वर्तिः । यज्ञम् । परिऽयन् । सुक्रतुऽयसे ॥ ६ ॥

**वेङ्कट०** अन्नम् दुहन् सुदोहाम् पृथिवीम् यज्ञेन तर्पयते यजमानाय सुप्रज्ञान![3] अग्ने! घृतरूपः त्रीणि सवनानि प्रति दीप्यमानः मार्गेण यज्ञम् परिगच्छन् सुकर्मा भवसि इति ॥ ६ ॥

त्वामिदस्या उषसो व्युष्टिषु दूतं कृण्वाना अयजन्त मानुषाः ।
त्वां देवा महयाय्याय वावृधुराज्यमग्ने निमृजन्तो अध्वरे ॥ ७ ॥

त्वाम् । इत् । अस्याः । उषसः । विऽउष्टिषु । दूतम् । कृण्वानाः । अयजन्त । मानुषाः ।
त्वाम् । देवाः । महयाय्याय । ववृधुः । आज्यम् । अग्ने । निऽमृजन्तः । अध्वरे ॥ ७ ॥

---

१. °भनो भव° मूको. २-२. नास्ति मूको. ३. सुप्रज्ञाने मूको.

**वेङ्कट०** त्वाम् एव अस्याः उषसः व्युच्छनेषु दूतम् कृण्वानाः अयजन्त मनुष्याः। त्वाम् एव देवाः मंहनीयाय कर्मणे वावृधुः[1] आज्यम् अग्ने! त्वयि निमृजन्तः यज्ञे ॥ ७ ॥

नि त्वा वसिष्ठा अह्वन्त वाजिनं गृणन्तो अग्ने विदथेषु वेधसः ।
रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

नि । त्वा । वसिष्ठाः । अह्वन्त । वाजिनम् । गृणन्तः । अग्ने । विदथेषु । वेधसः ।
रायः । पोषम् । यजमानेषु । धारय । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

**वेङ्कट०** नि अह्वयन्त त्वाम् वसिष्ठाः बलिनम् स्तुवन्तः अग्ने! यज्ञेषु विधातारः। स त्वं तेषु रायः पोषम् यजमानेषु धारय इति ॥ ८ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये षष्ठो वर्गः[2] ॥

[ १२३ ]

[2]वेनो भार्गव ऋषिः। वेनो देवता। त्रिष्टुप् छन्दः[2] ॥

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ १ ॥

अयम् । वेनः । चोदयत् । पृश्निऽगर्भाः । ज्योतिःऽजरायुः । रजसः । विऽमाने ।
इमम् । अपाम् । सम्ऽगमे । सूर्यस्य । शिशुम् । न । विप्राः । मतिऽभिः । रिहन्ति ॥ १ ॥[3]

**वेङ्कट०** वेनो भार्गवः। अयम् मध्यमस्थानः वेनः चोदयति पृश्निवर्णगर्भा[4] अपः, ज्योतिः यस्य जरायुस्थानीयं भवति, उदकस्य विमाने अन्तरिक्षे। इमम् अपाम् सङ्गमे सूर्यस्य स्वभूतेऽन्तरिक्षे वर्तमानम् शिशुम् इव पितरो घ्राणैः मेधाविनः [5]मतिभिः रिहन्ति[5] ॥ १ ॥

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः ॥ २ ॥

समुद्रात् । ऊर्मिम् । उत् । इयर्ति । वेनः । नभःऽजाः । पृष्ठम् । हर्यतस्य । दर्शि ।
ऋतस्य । सानौ । अधि । विष्टपि । भ्राट् । समानम् । योनिम् । अभि । अनूषत । व्राः ॥२॥

**वेङ्कट०** अन्तरिक्षात् उदकसङ्घम् उत् ईरयति वेनः नभसो जातः, तस्य अस्य पृष्ठम् स्पृहणीयस्य दृश्यते, उदकस्य समुच्छ्रिते विष्टब्धे देशे दीप्यमानः। तमिमम् अभिष्टुवन्ति सङ्घाः स्तुतीनाम् इति ॥ २ ॥

समानं पूर्वीरभि वावशानास्तिष्ठन् वत्सस्य मातरः सनीळाः ।
ऋतस्य सानावधि चक्रमाणा रिहन्ति मध्वो अमृतस्य वाणीः ॥ ३ ॥

---

१. पृथुः मूको. २-२. नास्ति मूको. ३. या. (१०,३९) व्याख्यातेषा ऋग् द्र. ४. प्रश्नि° मूको. ५-५. मतीभि···हन्ति मूको.

समानम् । पूर्वीः । अभि । वावशानाः । तिष्ठन् । वत्सस्य । मातरः । सऽनीळाः ।
ऋतस्य । सानौ । अधि । चक्रमाणाः । रिहन्ति । मध्वः । अमृतस्य । वाणीः ॥ ३ ॥

**वेङ्कट०** समानम् इमं बह्वयः अभि तिष्ठन्ति कामयमानाः तस्य अस्य वत्सस्य मातरः एकस्थानाः । उदकस्य आवासे क्रममाणाः मादकस्य उदकस्य लाभाय अधि रिहन्ति वेनं स्तुतिवाचः ॥ ३ ॥

जानन्तो रूपमकृपन्त विप्रा मृगस्य घोषं महिषस्य हि ग्मन् ।
ऋतेन यन्तो अधि सिन्धुमस्थुर्विदद्गन्धर्वो अमृतानि नाम ॥ ४ ॥

जानन्तः । रूपम् । अकृपन्त । विप्राः । मृगस्य । घोषम् । महिषस्य । हि । ग्मन् ।
ऋतेन । यन्तः । अधि । सिन्धुम् । अस्थुः । विदत् । गन्धर्वः । अमृतानि । नाम ॥ ४ ॥

**वेङ्कट०** वेनस्य रूपम् अवगच्छन्तः स्तुवन्ति विप्राः । वेनस्य गर्जितशब्दम् महतः [1]हि अभिगच्छन्ति[1] । यज्ञेन यन्तः अधि तिष्ठन्ति सिन्धुम् अपाम् । वेनः प्रयच्छति उदकानां धर्ता स्तोतॄणाम् अमरणसाधनानि उदकानि ॥ ४ ॥

अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन् ।
चरत्प्रियस्य योनिषु प्रियः सन्त्सीदत्पक्षे हिरण्यये स वेनः ॥ ५ ॥

अप्सराः । जारम् । उपऽसिष्मियाणा । योषा । बिभर्ति । परमे । विऽओमन् ।
चरत् । प्रियस्य । योनिषु । प्रियः । सन् । सीदत् । पक्षे । हिरण्यये । सः । वेनः ॥ ५ ॥

**वेङ्कट०** माध्यमिका वाक् जारम् उपस्मयमाना योषा बिभर्ति अन्तरिक्षे । सः अयम् वेनः चरति प्रियस्य आदित्यस्य स्वभूतेषु उदकेषु प्रियः सन् । सीदति च हिरण्मये आत्मीये पक्षे पक्षिरूपः पक्षौ अधितिष्ठति इति ॥ ५ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये सप्तमो वर्गः[2] ॥

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ६ ॥

नाके । सुऽपर्णम् । उप । यत् । पतन्तम् । हृदा । वेनन्तः । अभि । अचक्षत । त्वा ।
हिरण्यऽपक्षम् । वरुणस्य । दूतम् । यमस्य । योनौ । शकुनम् । भुरण्युम् ॥ ६ ॥

**वेङ्कट०** तृतीये लोके उप पतन्तम् सुपतनम् यदा त्वां हृदयेन कामयमानाः अभि पश्यन्ति हिरण्मयपक्षम् वरुणस्य दूतम् माध्यमिकस्य अग्नेः स्थाने शकुनिरूपम् भरणशीलम्, तदा स्तुवन्ति इति ॥ ६ ॥

---

१-१. भ्यभिग° मूको. २-२. नास्ति मूको.

ऊर्ध्वो गन्धर्वो अधि नाके अस्थात् प्रत्यङ् चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नाम जनत प्रियाणि ॥ ७ ॥

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । प्रत्यङ् । चित्रा । बिभ्रत् । अस्य । आयुधानि ।
वसानः । अत्कम् । सुरभिम् । दृशे । कम् । स्वः । न । नाम । जनत । प्रियाणि ॥ ७ ॥

वेङ्कट० उत्तिष्ठति वेनः गन्धर्वः नाके [1]प्रत्यङ् च वियति[1] उदकानि चित्राणि धारयन् । आच्छादयन् रूपम् सुगन्धम्[2] दर्शनार्थम् आदित्यः इव प्रियाणि उदकानि जनयति ॥ ७ ॥

द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ ८ ॥

द्रप्सः । समुद्रम् । अभि । यत् । जिगाति । पश्यन् । गृध्रस्य । चक्षसा । विऽधर्मन् ।
भानुः । शुक्रेण । शोचिषा । चकानः । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ८ ॥

वेङ्कट० द्रवणशीलः अन्तरिक्षम् यदा अभि गच्छति पश्यन् गृध्ररूपस्यात्मनः सूक्ष्मेण चक्षुषा विविधकर्माणि अन्तरिक्षे । वर्तमानः भानुः ज्वलता तेजसा दीप्यमानः तृतीये लोके करोति प्रियाणि उदकानि इति ॥ ८ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये अष्टमो वर्गः[3] ॥

## [ १२४ ]

[3]अग्निर्ऋषिः; १,५,८ अग्निवरुणसोमाः । १ अग्निर्देवता; २,७,८ वरुणः; ६ सोमः;
९ इन्द्रः । त्रिष्टुप् छन्दः; ७ जगती[3] ।

इमं नो अग्न उप यज्ञमेहि पञ्चयामं त्रिवृतं सप्ततन्तुम् ।
असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम आशयिष्ठाः ॥ १ ॥

इमम् । नः । अग्ने । उप । यज्ञम् । आ । इहि । पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ।
असः । हव्यऽवाट् । उत । नः । पुरःऽगाः । ज्योक् । एव । दीर्घम् । तमः । आ । अशयिष्ठाः ॥

वेङ्कट० अग्निवरुणसोमानाम् इतरेतरनिह्नवः[4] । उत्तमयेन्द्रम्[5] अस्तुवन्निति । तत्र अग्निं वरुण आह— इमम् अस्माकम् यज्ञम् उप आ गच्छ अग्ने ! धानादयः पञ्च हवींषि यस्य नियमनानि तम् सवनैः त्रिवृतम् छन्दोभिः सप्ततन्तुम् । भव यथापुरम् हव्यवाट् अपि चास्माकम् पुरोगाः । चिरम् एव इत्थं त्वम् अपक्रामन् दीर्घम् तमः आ अशयिष्ठाः इति ॥ १ ॥

---

१-१. प्रत्यञ्च क्षिपति मूको. २. सुगन्धः मूको. ३-३. नास्ति मूको. ४. °निह्नव मूको.
५. उत्तमिये° मूको.

अदे॑वाद् दे॒वः प्र॒चता॒ गुहा॒ यन् प्र॒पश्य॑मानो अमृत॒त्वमे॑मि ।
शि॒वं यत् सन्त॒मशि॑वो॒ जहा॑मि॒ स्वात् स॒ख्यादर॑णीं॒ नाभि॑मेमि ॥ २ ॥

अदे॑वात् । दे॒वः । प्र॒ऽचता॑ । गुहा॑ । यन् । प्र॒ऽपश्य॑मानः । अ॒मृ॒त॒ऽत्वम् । ए॒मि॒ ।
शि॒वम् । यत् । सन्त॑म् । अशि॑वः । जहा॑मि । स्वात् । स॒ख्यात् । अर॑णीम् । नाभि॑म् । ए॒मि॒ ॥२॥

**वेङ्कट०** इत्थम् स्तुतोऽग्निर्वदति — अदेवात् इति। असुरात् अहम् देवः शीघ्रेण गमनेन गुहायाम् गच्छंस्तत्र आवासस्थानम् प्रपश्यमानः अमृतत्वम् गच्छामि । न तु भूयोभूयः शाम्यामि असुरगृहेषु निविष्टः सोहम्। शिवम् सन्तम् यजमानं यदा अहम् अशिवः सेव्यमानः जहामि, तदानीम् स्वात् पुराणात् सख्यात् अरणीम् आत्मनः नाभिम् एमि इति ॥ २ ॥

पश्य॑न्न॒न्यस्या॒ अति॑थिं व॒याया॑ ऋ॒तस्य॒ धाम॒ वि मि॑मे पु॒रूणि॑ ।
शंसा॑मि पि॒त्रे असु॑राय॒ शेव॑मयज्ञि॒याद्य॒ज्ञियं॑ भा॒गमे॑मि ॥ ३ ॥

पश्य॑न् । अ॒न्यस्याः॑ । अति॑थिम् । व॒यायाः॑ । ऋ॒तस्य॑ । धाम॑ । वि । मि॒मे॒ । पु॒रूणि॑ ।
शंसा॑मि । पि॒त्रे । असु॑राय । शेव॑म् । अ॒य॒ज्ञि॒यात् । य॒ज्ञिय॑म् । भा॒गम् । ए॒मि॒ ॥ ३ ॥

**वेङ्कट०** अथ अन्यस्याः अश्वत्थशाखाया अरण्याः अतिथिम् श्रद्धेयं यजमानम् पश्यन् ततः प्रादुर्भूतो[1] यज्ञस्य बहूनि स्थानानि करोमि। शंसामि च पालयित्रे प्राज्ञाय सुखम्। अयज्ञियात्[2] यष्टारम् भजनीयम् एमि इति ॥ ३ ॥

ब॒ह्वीः समा॑ अकरम॒न्तर॑स्मि॒न्निन्द्रं॑ वृणा॒नः पि॒तरं॑ जहामि ।
अ॒ग्निः सोमो॒ वरु॑ण॒स्ते च्य॑वन्ते प॒र्याव॑र्द्रा॒ष्ट्रं तद॑वाम्या॒यन् ॥ ४ ॥

ब॒ह्वीः । समाः॑ । अ॒क॒र॒म् । अ॒न्तः । अ॒स्मि॒न् । इन्द्र॑म् । वृ॒णा॒नः । पि॒तर॑म् । ज॒हा॒मि॒ ।
अ॒ग्निः । सोमः॑ । वरु॑णः । ते । च्य॒व॒न्ते॒ । प॒रि॒ऽआव॑र्त् । रा॒ष्ट्रम् । तत् । अ॒वा॒मि॒ । आ॒ऽयन् ॥४॥

**वेङ्कट०** बहून् वत्सरान् अकरम् अस्मिन् अन्तः कर्माणि राष्ट्रे इन्द्रम् यज्ञेषु वृणानः। स्तुतः (?) अधुना पितरम् यजमानम् अश्रद्दधानम् जहामि। अथ परोक्षमाह— अस्माद् राष्ट्रात् अग्निः अहम् सोमः वरुणः च ते अमी गताः। गतेषु च एतेषु पर्यावृत्तम् आसीत् राष्ट्रम्। अथ तत् अहं पुनश्च आगच्छन् रक्षामि[3] इति ॥ ४ ॥

निर्मा॑या उ॒ त्ये असु॑रा अभूव॒न् त्वं च॑ मा वरुण॒ काम॒यासे॑ ।
ऋ॒तेन॑ राज॒न्ननृ॑तं विवि॒ञ्चन् मम॑ रा॒ष्ट्रस्याधि॑पत्य॒मेहि॑ ॥ ५ ॥

निः॒ऽमा॑याः । ऊँ॒ इति॑ । त्ये । असु॑राः । अ॒भू॒व॒न् । त्वम् । च॒ । मा॒ । व॒रु॒ण॒ । का॒म॒यासे॑ ।
ऋ॒तेन॑ । रा॒ज॒न् । अनृ॑तम् । वि॒ऽवि॒ञ्चन् । मम॑ । रा॒ष्ट्रस्य॑ । अधि॑ऽपत्यम् । आ । इ॒हि॒ ॥ ५ ॥

---

१. °ता मूको. २. नास्ति मूको. ३. अक्षामि मूको.

वेङ्कट० इत्थं निश्चित्य वरुणं च तम् आमन्त्रयते — निर्माया इति। इन्द्रेण[1] हताः ते असुराः निर्मायाः अभवन्। त्वम् च माम् वरुण! कामयसे। तथा सति सत्येन राजन्! अनृतकारिणं पुरुषम् विविञ्चन् मम राष्ट्रस्य अधिपत्यम् आ गच्छ इति॥ ५॥

'इति अष्टमाष्टके सप्तमाध्याये नवमो वर्गः' ॥

इ॒दं स्व॑रि॒दमिदा॑स वा॒मम॒यं प्र॑का॒श उ॒र्व१॒॑न्तरि॑क्षम्।
हना॑व वृ॒त्रं नि॒रेहि॑ सोम ह॒विष्ट्वा॒ सन्तं॑ ह॒विषा॑ यजाम॥ ६॥

इ॒दम्। स्व१॒॑रिति॑। इ॒दम्। इत्। आ॒स॒। वा॒मम्। अ॒यम्। प्र॒ऽका॒शः। उ॒रु। अ॒न्तरि॑क्षम्।
हना॑व। वृ॒त्रम्। निः॒ऽएहि॑। सो॒म॒। ह॒विः। त्वा॒। सन्त॑म्। ह॒विषा॑। य॒जा॒म॒॥ ६॥

वेङ्कट० अथ सोमं चामन्त्रयते — इदं स्वः इति। अयम् आदित्यः, अयम् आसीत् भजनीयः। अयम् च आदित्यस्य प्रकाशः। विस्तीर्णम् च आसीत् अन्तरिक्षम् अपगततमस्कम्। हनाव वृत्रम्। निर्गच्छ वृत्रात्[2] सोम!। हविः त्वा भवन्तम्[3] वयम् हविषा यजाम इति। एकस्मिन् बहुवचनम् इति॥ ६॥

क॒विः क॑वि॒त्वा दि॒वि रू॒पमास॑जद॒प्रभू॑ती वरु॑णो॒ निर॒पः सृ॑जत्।
क्षेमं॑ कृण्वा॒ना जन॑यो॒ न सिन्ध॑व॒स्ता अ॑स्य॒ वर्णं॒ शुच॑यो भरिभ्रति॥ ७॥

क॒विः। क॒वि॒ऽत्वा। दि॒वि। रू॒पम्। आ। अ॒स॒ज॒त्। अप्र॑ऽभूती। वरु॑णः। निः। अ॒पः। सृ॒ज॒त्।
क्षेम॑म्। कृ॒ण्वा॒नाः। जन॑यः। न। सिन्ध॑वः। ताः। अ॒स्य॒। वर्ण॑म्। शुच॑यः। भ॒रि॒भ्र॒ति॒॥ ७॥

वेङ्कट० अथ अग्नीषोमौ वरुणं स्तुतः — कविरिति। कविः वरुणः कवित्वेन दिवि नक्षत्राणि आ सजति[4]। अपि च अप्रादुर्भूतानि[5] निः गमयति[6] वरुणः उदकानि। रक्षाम् कुर्वाणाः जायाः इव सिन्धवः स्यन्दमानाः ताः अस्य शरीरम् शुचयः पोषयन्ति॥ ७॥

ता अ॑स्य॒ ज्येष्ठ॑मिन्द्रि॒यं स॑चन्ते॒ ता ई॒मा क्षे॑ति स्व॒धया॒ मद॑न्तीः।
ता ई॒ं वि॒शो॒ न राजा॑नं वृणा॒ना बी॑भ॒त्सुवो॒ अप॑ वृ॒त्राद॑तिष्ठन्॥ ८॥

ताः। अ॒स्य॒। ज्येष्ठ॑म्। इ॒न्द्रि॒यम्। स॒च॒न्ते॒। ताः। ई॒म्। आ। क्षे॒ति॒। स्व॒धया॑। मद॑न्तीः।
ताः। ई॒म्। विशः॑। न। राजा॑नम्। वृ॒णा॒नाः। बी॒भ॒त्सुवः॑। अप॑। वृ॒त्रात्। अ॒ति॒ष्ठ॒न्॥ ८॥

वेङ्कट० ताः अस्य प्रशस्यम् इन्द्रियम् सेवन्ते। ताः च अयं वरुणः आ निविशति बलेन माद्यन्तीः[7]। ताः एनम् विशः इव राजानम् वृणानाः वृत्रं बीभत्समानाः[8] तस्मात् वृत्रात् अप अतिष्ठन् इति॥ ८॥

---

१-१. नास्ति मूको. २. °त्रान् मूको. ३. वहन्तं मूको. ४. समजति मूको. ५. 'ता दि वि'; °ता अ'. ६. °यन्ति मूको. ७. °न्त्यन्तः मूको. ८. भीमत्समानाः मूको.

बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् ।
अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषा ॥ ९ ॥

बीभत्सूनाम् । सऽयुजम् । हंसम् । आहुः । अपाम् । दिव्यानाम् । सख्ये । चरन्तम् ।
अनुऽस्तुभम् । अनु । चर्चूर्यमाणम् । इन्द्रम् । नि । चिक्युः । कवयः । मनीषा ॥ ९ ॥

**वेङ्कट०** बीभत्सूनाम् अपां सहायम् हंसम् आहुः अपाम् दिव्यानाम्[1] सख्ये चरन्तम् अनुष्टुभम् अनु चर्चूर्यमाणम् । 'वाग्वाऽनुष्टुप् स वाचं प्रविश्याशयत्' ( ऐब्रा ३,१५ ) इति ब्राह्मणम् । तम् इन्द्रम् निश्चिन्वन्ति मेधाविनः प्रज्ञानेन ॥ ९ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये दशमो वर्गः[2] ॥

[ १२५ ]

[3]वाग् आम्भृणी ऋषिः । आत्मा देवता । त्रिष्टुप् छन्दः, द्वितीया जगती[3] ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः ।
अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥१॥

**वेङ्कट०** आम्भृणी वाग् आत्मानं तुष्टाव । आदितो द्वे निगदसिद्धे ॥ १ ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ॥ २ ॥

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् । उत । पूषणम् । भगम् ।
अहम् । दधामि । द्रविणम् । हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ २ ॥

**वेङ्कट०** [3]सोमः आहनाः[3] भवति ग्रावभिराहन्यत इति, यद्वा शत्रून् आहन्तीति । सुष्ठु प्रक्षति इति सुप्रावीः ॥ २ ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् ।
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

---

१. दीप्यानां मूको. २-२. नास्ति मूको. ३-३. °महननाः मूको.

वेङ्कट० अहम् ईशित्री सङ्गमयित्री धनानां जानती मुख्या यष्टव्यानाम्। ताम् माम् देवाः वि अदधुः बहुषु स्थानेषु दुन्दुभ्यादिषु। 'याऽग्नौ या रथन्तरे' (तैब्रा १,३,२,७) इति च ब्राह्मणम्। बहुस्थानाम् भूरि च स्वस्मिन् स्थाने आवेशयन्तीम् ॥ ३ ॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥

मया। सः। अन्नम्। अत्ति। यः। विऽपश्यति। यः। प्राणिति। यः। ईम्। शृणोति। उक्तम्।
अमन्तवः। माम्। ते। उप। क्षियन्ति। श्रुधि। श्रुत। श्रद्धिऽवम्। ते। वदामि ॥ ४ ॥

वेङ्कट० मया सः अन्नम् अत्ति, यः चक्षुषा विपश्यति, यः च प्राणिति, यः च इदम् उक्तम् शृणोति। अज्ञाः ते वृथा माम् उप निवसन्ति। शृणु श्रोतः! श्रद्धेयम् इदं तव अहम् वदामि इति ॥ ४ ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥

अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः। उत। मानुषेभिः।
यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि। तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम् ॥

वेङ्कट० अहं स्वयम् इत्यनयोरल्पो भेदः। अहम् एव स्वयम् इदम् वदामि सेवितम् देवैः मनुष्यैः च। यम् अहम् कामये[1], तम्-तम् अहम् उद्गूर्णम् करोमि, तम् ब्राह्मणम्, तम् द्रष्टारम्, तम् सुप्रज्ञम् इति ॥ ५ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये एकादशो वर्गः[2] ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥

अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति।
अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश ॥ ६ ॥

वेङ्कट० अहम् रुद्राय देवाय धनुः आ-ततज्यं करोमि ब्राह्मणानां द्वेष्टारम् हन्तव्यम् हन्तुम्। अहम् जनाय कलहं करोमि। अहम् द्यावापृथिवी आ विवेश इति ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

---

१. कामयते मूको. २-२. नास्ति मूको.

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे ।
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥७॥

**वेङ्कट०** अहम् प्रेरयामि आदित्यम् अस्य लोकस्य मूर्धनि । मम गृहम् उदकेषु अन्तरिक्षे । तत्र स्थितैव वि तिष्ठे सर्वाणि भुवनानि । अपि च '[1]अमूम् दिवम् शरीरेण[1]' उप स्पृशामि धारयितुम् इति ॥ ७ ॥

**अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।**
**परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥**

अहम् । एव । वातःऽइव । प्र । वामि । आऽरभमाणा । भुवनानि । विश्वा ।
परः । दिवा । परः । एना । पृथिव्या । एतावती । महिना । सम् । बभूव ॥ ८ ॥

**वेङ्कट०** अहम् एव अन्यैरप्रणीता वातः इव शीघ्रम् प्र गच्छामि संस्तम्भयन्ती[2] भुवनानि विश्वानि । द्यावापृथिव्योः परस्तात् एतावती अहं महत्त्वेन सम् बभूव विस्तृतेति ॥ ८ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये द्वादशो वर्गः[3] ॥

[ १२६ ]

[3]शैलूषिः कुल्मलबर्हिषो वामदेव्योंऽहोमुग् वा ऋषिः । विश्वे देवा देवता । उपरिष्टाद्-बृहती छन्दः, अष्टमी त्रिष्टुप्[3] ।

**न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।**
**सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विषः ॥ १ ॥**

न । तम् । अंहः । न । दुःऽइतम् । देवासः । अष्ट । मर्त्यम् ।
सऽजोषसः । यम् । अर्यमा । मित्रः । नयन्ति । वरुणः । अति । द्विषः ॥ १ ॥

**वेङ्कट०** कुल्मलबर्हिषः शैलूषिः[4] । न [5]तम् पापम्[5] न अपि उपद्रवः हे देवाः! व्याप्नोति मनुष्यम्, सङ्गताः यम् इमम् इमे देवाः द्वेष्टॄन् अति नयन्ति । आमन्त्रितस्य विद्यमानत्वमत्र इष्टम् इति ॥ १ ॥

**तद्धि वयं वृणीमहे वरुण मित्रार्यमन् ।**
**येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः ॥ २ ॥**

तत् । हि । वयम् । वृणीमहे । वरुण । मित्र । अर्यमन् ।
येन । निः । अंहसः । यूयम् । पाथ । नेथ । च । मर्त्यम् । अति । द्विषः ॥ २ ॥

**वेङ्कट०** तत् हि रक्षणम् वयम् वृणीमहे वरुणादयः!, येन यूयम् निः पाथ अंहसः, अति नयथ च मर्त्यम् शत्रूनिति ॥ २ ॥

---

१. °मूनिवंशरीण मूको. २. °यती मूको. ३-३. नास्ति मूको. ४. °शैलोष्णिः मूको. ५-५. कम्पावान् मूको.

ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा ।
नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः ॥ ३ ॥

ते । नूनम् । नः । अयम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
नयिष्ठाः । ऊँ इति । नः । नेषणि । पर्षिष्ठाः । ऊँ इति । नः । पर्षणि । अति । द्विषः ॥ ३ ॥

वेङ्कट० ते इदानीम् अस्माकम् रक्षणाय अयम् वरुणः मित्रः अर्यमा, यत इमे नेतृतमाः अस्माकम् नेतव्ये, तथा अतिशयेन पारयितारः[1] पारयितव्ये[2], अति नयन्तु द्विषः इति ॥ ३ ॥

यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा ।
युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः ॥ ४ ॥

यूयम् । विश्वम् । परि । पाथ । वरुणः । मित्रः । अर्यमा ।
युष्माकम् । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥ ४ ॥

वेङ्कट० यूयम् विश्वम् परि रक्षथ वरुणादयः । युष्माकम् सुखे प्रिये स्याम सुप्रणयनाः । अतितरेम च शत्रून् इति ॥ ४ ॥

आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा ।
उग्रं मरुद्भी रुद्रं हुवेमेन्द्रमग्निं स्वस्तयेऽति द्विषः ॥ ५ ॥

आदित्यासः । अति । स्रिधः । वरुणः । मित्रः । अर्यमा ।
उग्रम् । मरुत्ऽभिः । रुद्रम् । हुवेम । इन्द्रम् । अग्निम् । स्वस्तये । अति । द्विषः ॥ ५ ॥

वेङ्कट० अति नयन्तु उपक्षपयितॄन् इमे वरुणादयः आदित्याः । उद्गूर्णम् रुद्रम् च पुत्रैः मरुद्भिः सह हुवेम, तथा इन्द्राग्नी च अविनाशाय[3] । ते अति [4]नयन्तु अस्मान्[4] शत्रून् इति ॥ ५ ॥

नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः ॥ ६ ॥

नेतारः । ऊँ इति । सु । नः । तिरः । वरुणः । मित्रः । अर्यमा ।
अति । विश्वानि । दुःऽइता । राजानः । चर्षणीनाम् । अति । द्विषः ॥ ६ ॥

वेङ्कट० अस्मान् शत्रुभ्यः तिरः नेतारः कल्याणं वरुणादयः । विश्वानि दुरितानि अति नयन्तु चर्षणीनाम्[5] राजानः, अति नयन्तु च शत्रून् इति ॥ ६ ॥

शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा ।
शर्म यच्छन्तु सप्रथ आदित्यासो यदीमहे अति द्विषः ॥ ७ ॥

---

१. वरयिता° मूको. २. वारयि° मूको. ३. अविनाशय मूको. ४-४. °नयन्तोस्मान् मूको.
५. त्रुटितम् मूको.

शुनम् । अस्मभ्यम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
शर्म । यच्छन्तु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥ ७ ॥

**वेङ्कट०** **सुखम्** अस्मभ्यम् रक्षणाय वरुणादयः गृहम् प्र-यच्छन्तु विस्तीर्णम् आदित्याः, यदा एनान् याचामहे, अति नयन्तु च शत्रून् ॥ ७ ॥

यथा ह त्यद्वसवो गौर्यं चित् पदि षिताममुञ्चता यजत्राः ।
एवो ष्व१स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ८ ॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः ।
एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥

**वेङ्कट०** गतेति ( ऋ ४,१२,६ द्र. ) ॥ ८ ॥

[1]इति अष्टमाष्टके सप्तमाध्याये त्रयोदशो वर्गः[1] ॥

[ १२७ ]

[1]कुशिकः सौभरः रात्रिर्वा भारद्वाजी ऋषिः । रात्रिर्देवता । गायत्री छन्दः[1] ।

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अधि श्रियोऽधित ॥ १ ॥

रात्री । वि । अख्यत् । आऽयती । पुरुऽत्रा । देवी । अक्षऽभिः । विश्वाः । अधि । श्रियः । अधित ॥ १ ॥

**वेङ्कट०** कुशिकः सौभरः । रात्रिः[2] वि पश्यति आगता[3] बहून् देवी अक्षभिः नक्षत्रात्मकैः । सर्वाः च श्रियः[4] आत्मनि निधत्ते इति ॥ १ ॥

ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः । ज्योतिषा बाधते तमः ॥ २ ॥

आ । उरु । अप्राः । अमर्त्या । निऽवतः । देवी । उत्ऽवतः । ज्योतिषा । बाधते । तमः ॥ २ ॥

**वेङ्कट०** आ पूरयति उरु अन्तरिक्षम्[5] अमर्त्या निवतः च देवी उद्वतः च देशान्, [6]ज्योतिषा च बाधते[6] तमः ॥ २ ॥

निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते तमः ॥ ३ ॥

निः । ऊँ इति । स्वसारम् । अकृत । उषसम् । देवी । आऽयती । अप । इत् । ऊँ इति । हासते । तमः ॥

**वेङ्कट०** स्वसारम् उषसम् निष्-कृणोति देवी आगच्छन्ती, अप एव गमयति तमः ॥ ३ ॥

---

१-१. नास्ति मूको. २. रात्रिं मूको. ३. °गमिता मूको. ४. श्रीः मूको. ५. आन्तरि° मूको. ६-६. °षा बाधते च अ[1].

सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः ॥ ४ ॥

सा । नः । अद्य । यस्याः । वयम् । नि । ते । यामन् । अविक्ष्महि । वृक्षे । न । वसतिम् । वयः ॥ ४ ॥

**वेङ्कट०** सा नः अद्य भद्रं करोतु, यस्याः वयम् स्वभूताः तव आगमने सुखम् नि विशामहे, वृक्षे इव आवासं प्रति पक्षिणः ॥ ४ ॥

नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः । नि श्येनासश्चिदर्थिनः ॥ ५ ॥

नि । ग्रामासः । अविक्षत । नि । पत्ऽवन्तः । नि । पक्षिणः । नि । श्येनासः । चित् । अर्थिनः ॥५॥

**वेङ्कट०** नि अविशन्त मनुष्यसङ्घाः, नि च पद्वन्तः चतुष्पादः, नि च पक्षिणः, नि च श्येनाः निद्राऽर्थिनः ॥ ५ ॥

यावया वृक्यं वृकं यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ ६ ॥

यवय । वृक्यम् । वृकम् । यवय । स्तेनम् । ऊर्म्ये । अथ । नः । सुऽतरा । भव ॥ ६ ॥

**वेङ्कट०** पृथक् कुरु वृकीम् वृकम् च । पृथक् कुरु च स्तेनम् रात्रे! असत्तः । अथ अस्माकम् सुतरा भव इति ॥ ६ ॥

उप मा पेपिशत् तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ ७ ॥

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् । अस्थित । उषः । ऋणाऽइव । यातय ॥ ७ ॥

**वेङ्कट०** पिशिः आश्लेषकर्मा । माम् उप पेपिशत् तमः नैशम् । कृष्णम् तमः विशेषेण उत्तिष्ठति । हे उषः! तमः ऋणानि इव पृथक् कुरु । उषोरूपा च भवति रात्रिरन्ततः । तदभिप्रायाणि ज्योतिर्वचनानि इति ॥ ७ ॥

उप ते गाइवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ ८ ॥

उप । ते । गाःऽइव । आ । अकरम् । वृणीष्व । दुहितः । दिवः । रात्रि । स्तोमम् । न । जिग्युषे ॥ ८ ॥

**वेङ्कट०** उप आ करोमि स्तुतीः अहं तुभ्यम्[1] पशून् इव । ताः त्वम्[2] वृणीष्व दिवः दुहितः! । हे रात्रि! यथा जिग्युषे राज्ञे स्तोत्रम् उपकुर्वन्ति, तथा अहं च तुभ्यम् उपाकरम् इति ॥ ८ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये चतुर्दशो वर्गः[3] ॥

[ १२८ ]

[1]विहव्य आङ्गिरस ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः, नवमी जगती[1] ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥

---

१. °भ्यमहं मूको. २. त्वां मूको. ३-३. नास्ति मूको.

मम॑ । अग्ने॑ । वर्चः॑ । वि॒ऽह॒वेषु॑ । अ॒स्तु॒ । व॒यम् । त्वा॒ । इन्धा॑नाः । त॒न्व॑म् । पु॒षे॒म॒ ।
मह्य॑म् । न॒म॒न्ता॒म् । प्र॒ऽदिशः॑ । चत॑स्रः । त्वया॑ । अधि॑ऽअक्षेण । पृत॑नाः । ज॒ये॒म॒ ॥ १ ॥

**वेङ्कट०** विहव्य आङ्गिरसः । मम अग्ने! शारीरम् वर्चः तव विहवेषु भवतु । वयम् त्वाम् इन्धानाः शरीरम् अग्नेः पुषेम । मह्यम् नमन्ताम् मुख्या दिशः । त्वया अध्यक्षेण वयम् पृतनाः जयेम ॥ १ ॥

मम॑ दे॒वा वि॑ह॒वे स॑न्तु॒ सर्व॒ इन्द्र॑वन्तो म॒रुतो॒ विष्णु॑र॒ग्निः ।
मम॒ान्तरि॑क्षमु॒रुलो॑कमस्तु॒ मह्यं॒ वातः॑ पवतां॒ कामे॑ अ॒स्मिन् ॥ २ ॥

मम॑ । दे॒वाः । वि॒ऽह॒वे । स॒न्तु॒ । सर्वे॑ । इन्द्र॑ऽवन्तः । म॒रुतः॑ । विष्णुः॑ । अ॒ग्निः ।
मम॑ । अ॒न्तरि॑क्षम् । उ॒रुऽलो॑कम् । अ॒स्तु॒ । मह्य॑म् । वातः॑ । प॒व॒ता॒म् । कामे॑ । अ॒स्मिन् ॥ २ ॥

**वेङ्कट०** निगदसिद्धा । विस्तृतस्थानम् उरुलोकम् इति ॥ २ ॥

मयि॑ दे॒वा द्रवि॑ण॒मा य॑जन्तां॒ मय्या॒शीर॑स्तु॒ मयि॑ दे॒वहू॑तिः ।
दैव्या॒ होता॑रो वनुषन्त॒ पूर्वेऽरि॑ष्टाः स्याम त॒न्वा॑ सु॒वीराः॑ ॥ ३ ॥

मयि॑ । दे॒वाः । द्रवि॑णम् । आ । य॒ज॒न्ता॒म् । मयि॑ । आ॒ऽशीः । अ॒स्तु॒ । मयि॑ । दे॒वऽहू॑तिः ।
दैव्याः॑ । होता॑रः । व॒नु॒ष॒न्त॒ । पूर्वे॑ । अरि॑ष्टाः । स्या॒म॒ । त॒न्वा॑ । सु॒ऽवीराः॑ ॥ ३ ॥

**वेङ्कट०** मयि देवाः धनम् आ प्रयच्छन्तु । मयि आशीः अस्तु अभिलषितम्, मयि देवह्वानम् । दैव्याः होतारः अश्विप्रभृतयः पूर्वे सेवन्ताम् अस्मान् । अन्यूनाः भवेम शरीरेण सुपुत्राः ॥ ३ ॥

मह्यं॑ यजन्तु॒ मम॒ यानि॑ ह॒व्याकू॑तिः स॒त्या मन॑सो मे अस्तु ।
एनो॒ मा नि गां॑ कत॒मच्च॒नाहं विश्वे॑ देवासो॒ अधि॑ वोचता नः ॥ ४ ॥

मह्य॑म् । य॒ज॒न्तु॒ । मम॑ । यानि॑ । ह॒व्या । आऽकू॑तिः । स॒त्या । मन॑सः । मे॒ । अ॒स्तु॒ ।
एनः॑ । मा । नि । गा॒म् । क॒त॒मत् । च॒न । अ॒हम् । विश्वे॑ । दे॒वा॒सः॒ । अधि॑ । वो॒च॒त॒ । नः॒ ॥ ४ ॥

**वेङ्कट०** ते होतारो मदर्थम् यजन्तु मम यानि हवींषि । मम मनसः आकूतिः सत्या भवतु । पापम् अहम् कतमत् चन अपि मा नि गाम् । हे विश्वे देवाः! अधि वोचत अस्मान् इति ॥ ४ ॥

देवीः॑ षळुर्वीरु॒रु नः॑ कृणोत॒ विश्वे॑ देवास इ॒ह वी॑रयध्वम् ।
मा हा॑स्महि प्र॒जया॒ मा त॒नूभि॒र्मा र॑धाम द्विष॒ते सो॑म राजन् ॥ ५ ॥

देवीः॑ । षट् । उ॒र्वीः॑ । उ॒रु । नः॒ । कृ॒णो॒त॒ । विश्वे॑ । दे॒वा॒सः॒ । इ॒ह । वी॒र॒य॒ध्व॒म् ।
मा । हा॒स्म॒हि॒ । प्र॒ऽजया॑ । [1]मा । त॒नूभिः॑ । मा । र॒धा॒म॒ । द्वि॒ष॒ते । सो॒म॒ । रा॒ज॒न्[1] ॥ ५ ॥

---

१-१. निगमोऽयं या. ( १०,४० ) द्र.

**वेङ्कट०** हे द्युप्रभृतयः! देवीः! षट् उर्वीः! बहु अस्माकम् कृणुत। विश्वे देवाः! इह वीर्यम् कुरुत। मा वियुक्ता भवेम पुत्रेण अङ्गैः च। मा च वशं गच्छेम द्विषते सोम! राजन्! ॥ ५ ॥

[1]इति अष्टमाष्टके सप्तमाध्याये पञ्चदशो वर्गः[1] ॥

अग्ने॑ म॒न्युं प्र॑तिनु॒दन् परे॑षा॒मद॑ब्धो गो॒पाः परि॑ पाहि न॒स्त्वम् ।
प्र॒त्यञ्चो॑ यन्तु नि॒गुत॑ः पुन॒स्ते॒३॒॑ऽमैषां॑ चि॒त्तं प्र॒बुधां॒ वि नेशत् ॥ ६ ॥

अग्ने॑। म॒न्युम्। प्र॒ति॒ऽनु॒दन्। परे॑षाम्। अद॑ब्धः। गो॒पाः। परि॑। पा॒हि॒। न॒ः। त्वम्।
प्र॒त्यञ्चः॑। य॒न्तु॒। नि॒ऽगुत॑ः। पु॒न॒रिति॑। ते। अ॒मा। ए॒षा॒म्। चि॒त्तम्। प्र॒ऽबुधा॑म्। वि। ने॒श॒त् ॥

**वेङ्कट०** अग्ने! क्रोधम् प्रतिनुदन् शत्रूणाम् अहिंसितः गोपायिता परि रक्ष अस्मान् त्वम्। प्रतिमुखाः गच्छन्तु शत्रवः पुनः च ते। सह एषाम् चित्तम् प्रबुधानाम्[2] वि नश्यतु ॥ ६ ॥

धा॒ता धा॑तॄ॒णां भुव॑नस्य॒ यस्पति॑र्दे॒वं त्रा॒तार॑मभिमाति॒षाह॑म् ।
इ॒मं य॒ज्ञम॒श्विनो॒भा बृह॒स्पति॑र्दे॒वाः पा॑न्तु॒ यज॑मानं न्य॒र्थात् ॥ ७ ॥

धा॒ता। धा॒तॄ॒णाम्। भुव॑नस्य। यः। पति॑ः। दे॒वम्। त्रा॒तार॑म्। अ॒भि॒मा॒ति॒ऽसह॑म्।
इ॒मम्। य॒ज्ञम्। अ॒श्विना॑। उ॒भा। बृह॒स्पति॑ः। दे॒वाः। पा॒न्तु॒। यज॑मानम्। नि॒ऽअ॒र्थात् ॥ ७ ॥

**वेङ्कट०** कर्ता कर्तॄणाम् अपि भुवनस्य यः पतिः तम् देवम् सवितारम् त्रातारम् शत्रूणाम् अभिभवितारम् स्तौमि। इमम् यष्टारम् यजमानम् अश्विप्रभृतयः देवाः रक्षन्तु अनर्थात् इति ॥ ७ ॥

उ॒रु॒व्यचा॑ नो महि॒षः शर्म॑ यंसद॒स्मिन् हवे॑ पुरुहू॒तः पु॑रु॒क्षुः ।
स न॑ः प्र॒जायै॑ हर्यश्व मृळ॒येन्द्र॒ मा नो॑ रीरिषो॒ मा परा॑ दाः ॥ ८ ॥

उ॒रु॒ऽव्यचा॑ः। न॒ः। म॒हि॒षः। शर्म॑। यं॒स॒त्। अ॒स्मिन्। हवे॑। पु॒रु॒ऽहू॒तः। पु॒रु॒ऽक्षुः।
सः। न॒ः। प्र॒ऽजायै॑। ह॒रि॒ऽअ॒श्व॒। मृ॒ळ॒य॒। इन्द्र॑। मा। न॒ः। रि॒रि॒षः॒। मा। परा॑। दा॒ः ॥ ८ ॥

**वेङ्कट०** बहुव्याप्तिः अस्मभ्यम् महान् गृहम् प्रयच्छतु अस्मिन् ह्वाने पुरुहूतः इन्द्रो बहुस्तुतिः। सः अस्माकम् प्रजायै हर्यश्व! सुखम् उत्पादय। इन्द्र! मा अस्मान् हिंसीः, मा च परित्याक्षीः[3] ॥ ८ ॥

ये न॑ः स॒पत्ना॒ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान् ।
वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चे॒त्तार॑मधिरा॒जम॑क्रन् ॥ ९ ॥

ये। न॒ः। स॒ऽपत्ना॑ः। अप॑। ते। भ॒व॒न्तु॒। इ॒न्द्रा॒ग्नि॒ऽभ्या॑म्। अव॑। बा॒धा॒म॒हे॒। तान्।
वस॑वः। रु॒द्राः। आ॒दि॒त्याः। उ॒प॒रि॒ऽस्पृश॑म्। मा॒। उ॒ग्रम्। चे॒त्तार॑म्। अ॒धि॒ऽरा॒जम्। अ॒क्र॒न् ॥

---

१-१. नास्ति मूको. २. °बुदानां वि°. ३. परित्या° मूको.

षड् जाता भूता प्रथमजर्तस्य षडु सामानि षडहं

षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवीः षडुर्वीः।

(प्रथमजर्तस्य) प्रथम प्रकटित सत्यनियम के नियन्ता परमेश्वर के (भूता=भूतानि) सत्पदार्थ (षड्, जाता=जातानि) ६ उत्पन्न ... (षड्, उ, सामानि) ६ ही साम हैं, जोकि (षडहम्) ६ दिनों के [यज्ञ] का (वहन्ति) वहन करते हैं, उसे चलाते या सम्पूर्ण करते हैं। (षड्योगम्) जिस के आगे ६ जुते हुए हैं ऐसे (सीरम्) हल के (अनु) अनुसार (सामसाम) प्रत्येक सम्बन्धी एक-एक साम है, (षड्) ६ हैं (द्यावापृथिवी) द्यौ- और पृथिवियां, (षड् उर्वीः) और ६ विस्तृत दिशाएं हैं,- (आहुः) ऐसा कहते हैं।

[प्रलयकाल में परमेश्वर सृष्ट्युत्पादन से रहित था। सृष्ट्युत्पादन के नियमानुसार जब पुनः सृष्ट्युत्पादन का काल आया तब प्रथम-प्रकट हुए सत्य नियम के अनुसार परमेश्वर निज कामना पूर्वक सृष्ट्युत्पादन में प्रवृत्त होता है। प्रथम ६ भूत अर्थात् सत्पदार्थ पैदा हुए। वे हैं, (१) साम्यावस्था वाली प्रकृति से प्रकृति का विषमरूपा होना, (२) आकाश, (३) वायु, (४) अग्निः, (५) आपः, (६) पृथिवी। ६ साम हैं बृहत्, रथन्तर, यज्ञायज्ञिय, वामदेव्य, वैरूप, वैराज (मन्त्र ४)। षडहम्= षड्रात्र यज्ञ (अथर्व. ११।६।१६)। सीरम्; "सीराः नदीनाम" (निघं. १।१३)। महर्षि दयानन्द, यजु. (१२।६७, ६८) की व्याख्या में, "सीराः" द्वारा "नाड़ियां" अभिप्रेत मानते हैं" और लिखते हैं कि "जैसे योगी नाड़ियों में परमेश्वर को समाधियोग से प्राप्त होते हैं, वैसे ही कृषिकर्म द्वारा सुखों को प्राप्त होवें" (यजु. १२।६७)। इस से प्रतीत होता है कि महर्षि दयानन्द, यजुर्वेद के इन मन्त्रों में, कृषि-तथा-योगाभ्यास, इन द्विविध अर्थों को स्वीकृत करते हैं। इस अभिप्राय में "षड् योग" का अभिप्राय है पांच ज्ञानेन्द्रियों और छठे मन को योगयुक्त, समाधियुक्त करना। और साथ-साथ परमेश्वर की स्तुतिपरक सामगानों का भी गान करना। निघण्टु में सीराः का अर्थ "नदी" कहा है, और श्वेता. उप. में इन्द्रियों को "स्रोतांसि" कहा है (अध्याय २। कण्डिका ८)। इस प्रकार स्रोतांसि और नदियां यहां पर्याय-वाची शब्द हैं। द्युलोक त्रिविध है। दृश्यमान द्युलोक, स्वर्ग, और नाक। "येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः (यजु. ३२।६) में उग्रा द्यौः, स्वः, तथा नाकः पदों द्वारा द्यौः का त्रैविध्य प्रदर्शित किया है, और (यजु. ३१।१६) में "यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः" द्वारा "नाक" में, पहुँचे हुए साध्यों अर्थात् योग के साधनों द्वारा सिद्ध योगियों की स्थिति भी दर्शाई है। पृथिवी भी त्रिविधा है। समुद्र, स्थल, तथा पर्वतरूप में, अथवा पृथिवी का ऊपर का पार्थिव स्तर, इस के नीचे जलीय स्तर, जिस की कि सूचना कूपजलों तथा चश्मों द्वारा ज्ञात होती है, तथा इस के भी नीचे आग्नेय स्तर, जिस की कि सूचना ज्वालामुखी पर्वतों की अग्नियों, तथा गर्म चश्मों द्वारा ज्ञात होती है। षडुर्वीः, ६ विस्तृत दिशाएँ हैं पूर्व, दक्षिण, पश्चिम, उत्तर, ध्रुवा तथा ऊर्ध्वा।

वेङ्कट० ये अस्माकम् सपत्नाः ते अप[1] भवन्तु। तान् वयम् इन्द्राग्निभ्याम् अव बाधामहे। वस्वादयः[2] माम् उपरिस्पृशम् संजातानाम् उद्गूर्णम् ज्ञातारम् अधिराजम् च कुर्वन्तु इति ॥ ९॥

[3]इति अष्टमाष्टके सप्तमाध्याये षोडशो वर्गः[3] ॥

## [ १२९ ]

[3]प्रजापतिः परमेष्ठी ऋषिः। भाववृत्तं देवता। त्रिष्टुप् छन्दः[3]।

नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥ १ ॥

न। असत्। आसीत्। नो इति। सत्। आसीत्। तदानीम्। न। आसीत्। रजः। नो इति। विऽओम। परः। यत्। किम्। आ। अवरीवरिति। कुह। कस्य। शर्मन्। अम्भः। किम्। आसीत्। गहनम्। गभीरम् ॥ १ ॥

वेङ्कट० प्रजापतिः परमेष्ठी। भावानां वृत्तं प्रतिपाद्यं महाप्रलयावस्थायाम्। असच्छब्दः कारणवचनः। सच्छब्दः कार्यवचनः। अयं परिदृश्यमानः कार्यवर्गः कारणवर्गश्च न अभूत्। असच्छब्दः प्राणवचन इति। अत्र वाजसनेयकम्—'असद्वा इदम् अग्र आसीत्। तदाहुः किं तदसद् आसीदित्यृषयो वाऽव तेऽग्रेऽसदासीत् तदाहुः के त ऋषय इति प्राणा वा ऋषयः' ( माश ६,१,१,१ ) इति। नो सदासीत् इत्ययं लोको न च अन्तरिक्षं न च परः परस्ताद् यद् भवति तदपि इति। यद्वा सच्छब्देन अन्तरिक्षम् उक्तम्। 'सद् इव अन्तरिक्षम्' इति ब्राह्मणम्। किम् तदानीम् भूतम् इदं सर्वम् आच्छादयामास, क्व वा तत् स्थितम्, कस्य वा गृहे। अम्भः च तदानीम् कीदृशम् आसीत् गहनम् गभीरम् इदानीं दृश्यमानम् इति ॥ १ ॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥ २ ॥

[4]न। मृत्युः। आसीत्। अमृतम्। न। तर्हि[4]। न। रात्र्याः। अह्नः। आसीत्। प्रऽकेतः। आनीत्। अवातम्। स्वधया। तत्। एकम्। तस्मात्। ह। अन्यत्। न। परः। किम्। चन। आस ॥ २ ॥

वेङ्कट० मृत्युः न आसीत् न अपि अमृतम्। न च रात्र्याः अह्नः आसीत् प्रकेतः। अहोरात्रविभागो नासीत्। अजीवद् वातवर्जितम् स्वधया तत् एकम्। तस्मात् परम् तदानीम् न किम् च आसीत् अन्यत् इति। अत्र शाट्यायनकम्—'तस्मिन्नसति सति न कस्मिंश्चन सत्यृतं ज्योतिष्मद् उदप्लवत, सत्यं ज्योतिष्मद्

१. नास्ति मूको. २. सत्वादयो मूको. ३-३. नास्ति मूको. ४-४. या. (७,३) निगमोऽयं द्र.

उदप्लवत, तपो ज्योतिष्मद् उपप्लवत। तद् यद् ऋतम् इति वाक् सा, यत् सत्यम् इति प्राणः सः, यत्तप इति मनस्तत्। तेषामन्नम् एव ज्योतिरासीत्' ( जैब्रा ३,३६० ) इति ॥ २ ॥

तम॑ आसी॒त् तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त् तप॑स॒स्तन्म॑हि॒नाजा॑य॒तैक॑म् ॥ ३ ॥

तम॑ः । आ॒सी॒त् । तम॑सा । गू॒ळ्हम् । अग्रे॑ । अ॒प्र॒ऽके॒तम् । स॒लि॒लम् । सर्व॑म् । आ॒ः । इ॒दम् ।
तु॒च्छ्येन॑ । आ॒भु । अपि॑ऽहितम् । यत् । आसी॑त् । तप॑सः । तत् । म॒हि॒ना । अ॒जा॒य॒त । एक॑म् ॥

**वेङ्कट०** अथ तमः आसीत् इति प्रकृत्यभिप्रायम् आहुः। तेन तमसा गूळ्हम् इदम् सर्वम् अग्रे अप्रज्ञातम् आसीत्। ईदृशम् इति वक्तुम् न आसीद् इति। तदुक्तं मनुना (१,५)— 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्' इति। ततः सलिलम् इदम् आसीत् सर्वम्। तुचिः क्षुदिना समानकर्मा। क्षोदनीयेन मृत्युना उदकेन यत् महो[1] ब्रह्म अपिहितम् आसीत्, तस्मात् ब्रह्मणः तपसः महिम्ना एकम् भूतम् अजायत। तदिदं मन इत्याहुः ॥ ३ ॥

काम॒स्तदग्रे॒ सम॑वर्त॒ताधि॒ मन॑सो॒ रेत॑ः प्रथ॒मं यदासी॑त् ।
स॒तो बन्धु॒मस॑ति॒ निर॑विन्दन् हृ॒दि प्र॒तीष्या॑ क॒वयो॑ मनी॒षा ॥ ४ ॥

काम॑ः । तत् । अग्रे॑ । सम् । अ॒व॒र्त॒त । अधि॑ । मन॑सः । रेत॑ः । प्र॒थ॒मम् । यत् । आसी॑त् ।
स॒तः । बन्धु॑म् । अस॑ति । निः । अ॒वि॒न्द॒न् । हृ॒दि । प्र॒ति॒ऽइष्य॑ । क॒वय॑ः । म॒नी॒षा ॥ ४ ॥

**वेङ्कट०** ब्रह्मणः तदानीम् अग्रे कश्चित् कामः सम् अवर्तत[2], मनसः रेतः प्रथमम् यत् आसीत् इति। सतः बन्धुम् असति निः अविन्दन् हृदि अन्विष्य कवयः इदानीन्तनाः प्रज्ञानेन इति ॥ ४ ॥

ति॒र॒श्चीनो॒ वित॑तो र॒श्मिरे॑षाम॒धः स्वि॑द॒ासी३दु॒परि॑ स्विदासी३त् ।
रे॒तो॒धा आ॑सन् महि॒मान॑ आसन्त्स्व॒धा अ॒वस्ता॒त् प्रय॑तिः प॒रस्ता॑त् ॥ ५ ॥

ति॒र॒श्चीन॑ः । वि॒ऽत॑तः । र॒श्मिः । ए॒षा॒म् । अ॒धः । स्वि॒त् । आ॒सी३त् । उ॒परि॑ । स्वि॒त् ।
आ॒सी३त् । रे॒तः॒ऽधाः । आ॒स॒न् । म॒हि॒मान॑ः । आ॒स॒न् । स्व॒धा । अ॒वस्ता॑त् । प्र॒ऽय॑तिः । प॒रस्ता॑त् ॥

**वेङ्कट०** एषाम् दिवि स्थितानां देवानाम् इतोमुखः विततः रश्मिः भवति। सोऽयं रश्मिः एषाम् अधस्तात् किं लब्धव्यम्[3] आसीत् अपि वा उपरि इति प्रश्नः। तथा जलस्य प्रदातारो भवन्ति देवाः महिमवन्तश्च। उदकम् अधस्ताद् गच्छति, यजमानानां प्रदानम्[4] उपरि। येन देवाः महिमानः भवन्ति। तदिदं सर्वं किङ्कृतम् इति प्रश्नः ॥ ५ ॥

को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑च॒त् कुत॒ आजा॑ता कुत॑ इ॒यं विसृ॑ष्टिः ।
अ॒र्वाग्दे॒वा अ॒स्य वि॒सर्ज॑ने॒नाथा॒ को वे॑द॒ यत॑ आब॒भूव॑ ॥ ६ ॥

---

१. महं वि[2]. २. अवर्ततेत अ[1]. ३. °ऽधम् वि[2]; °ब्धव्यम् अ[1]. ४. प्रदानानाम् मूको.

कः । अद्धा । वेद । कः । इह । प्र । वोचत् । कुतः । आऽजाता । कुतः । इयम् । विऽसृष्टिः ।
अर्वाक् । देवाः । अस्य । विऽसर्जनेन । अथ । कः । वेद । यतः । आऽबभूव ॥ ६ ॥

**वेङ्कट०** कः सत्यम् इह जानाति । कः वा इह अस्माकम्[1] प्र ब्रवीति — कुतः इयम् विसृष्टिः इति, तदिदं कुतः आजाता इत्यस्य विशदवचनम् — अर्वाक् काले देवाः च आसन् अस्य ब्रह्मणः विसर्जनेन पितुः इव पुत्राः । अथ कः जानाति प्राक्कालीनम् यतः आबभूव इति ॥ ६ ॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ ७ ॥

इयम् । विऽसृष्टिः । यतः । आऽबभूव । यदि । वा । दधे । यदि । वा । न ।
यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् । सः । अङ्ग । वेद । यदि । वा । न । वेद ॥७॥

**वेङ्कट०** इयम् विसृष्टिः यतः आबभूव, तदसौ जानाति । तथा विसृष्टं सर्वम् यदि वा[2] स स्रष्टा धारयति यदि वा न, तच्च स एव जानाति । यः[3] अस्य सर्वजगतः अधिद्रष्टा परमे व्योम्नि स्थितः सूर्यः, सः इदम् अङ्ग जानाति यदि वा न वा इति ॥ ७ ॥

[4]इति अष्टमाष्टके सप्तमाध्याये सप्तदशो वर्गः[4] ॥

## [ १३० ]

[4]यज्ञः प्राजापत्य ऋषिः । भाववृत्तं देवता । त्रिष्टुप् छन्दः, प्रथमा जगती[4] ।

यो यज्ञो विश्वतस्तन्तुभिस्तत एकशतं देवकर्मेभिरायतः ।
इमे वयन्ति पितरो य आययुः प्र वयाप वयेत्यासते तते ॥ १ ॥

यः । यज्ञः । विश्वतः । तन्तुऽभिः । ततः । एकऽशतम् । देवऽकर्मेभिः । आऽयतः ।
इमे । वयन्ति । पितरः । ये । आऽययुः । प्र । वय । अप । वय । इति । आसते । तते ॥ १ ॥

**वेङ्कट०** यज्ञः प्राजापत्यः । यः यज्ञः सर्वतः तन्तुभिः छन्दोभिः ततः, यावत् एकशतविधादिकं[5] दीप्त-कर्मभिः पुरुषैः आयतः दीर्घीकृतः, तम् इमे पितरः वयन्ति ये आगच्छन्ति । किञ्च ते वि-तते तस्मिन् यज्ञे प्र वयत अप वयत इति चर्त्विजो ब्रुवाणाः आसते इति । प्रवाणं दीर्घतन्तु-विस्तार इति ॥ १ ॥

पुमाँ एनं तनुत उत् कृणत्ति पुमान् वि तत्ने अधि नाके अस्मिन् ।
इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥ २ ॥

पुमान् । एनम् । तनुते । उत् । कृणत्ति । पुमान् । वि । तत्ने । अधि । नाके । अस्मिन् ।
इमे । मयूखाः । उप । सेदुः । ऊँ इति । सदः । सामानि । चक्रुः । तसराणि । ओतवे ॥ २ ॥

१. °कम् इह मूको. २. न मूको. ३. ये मूको. ४-४. नास्ति मूको. ५. °शतविधा-दिकम् मूको.

**वेङ्कट०** तम् इमं यज्ञम् प्रथमम् पुमान् तनुते, ततः उत् कृणत्ति च संस्थितम्। पुमान् एव वि-स्तारयति अस्मिन् नाके। तत्र इमे मयूखाः भूत्वा सदः उप सीदन्ति इति छन्दोभिप्रायमाहुः। सामानि च अकुर्वन् [1]तिर्यक्तन्तूनि ओतुम्[1] इति ॥ २ ॥

कासी॑त् प्र॒मा प्र॑ति॒मा किं नि॒दान॒माज्यं॒ किमा॑सीत् परि॒धिः क आ॑सीत् ।
छन्दः॒ किमा॑सी॒त् प्रउ॑गं॒ किमु॒क्थं यद्दे॒वा दे॒वमय॑जन्त॒ विश्वे॑ ॥ ३ ॥

का। आसी॒त्। प्र॒ऽमा। प्र॒ति॒ऽमा। किम्। नि॒ऽदान॑म्। आज्य॑म्। किम्। आसी॒त्। प॒रि॒ऽधिः। कः।
आसी॒त्। छन्दः॑। किम्। आसी॒त्। प्र॒उ॑गम्। किम्। उ॒क्थम्। यत्। दे॒वाः। दे॒वम्। अय॑जन्त। विश्वे॑ ॥

**वेङ्कट०** यदा साध्याः देवाः परम् देवम् अयजन्त, तदा तस्य यज्ञस्य प्रमाप्रभृतयः [2]के आसन्निति[2]। तत्र प्रमा उपक्रमः, प्रतिमा प्रमाणम् अग्निष्टोमोक्थादिकम्, निदानम् कारणम् कामः। शिष्टं स्पष्टमिति ॥ ३ ॥

अ॒ग्नेर्गा॑य॒त्र्य॑भवत् स॒युग्वो॒ष्णिह॑या सवि॒ता सं ब॑भूव ।
अ॒नु॒ष्टुभा॒ सोम॑ उ॒क्थैर्मह॑स्वा॒न् बृह॒स्पते॑र्बृह॒ती वाच॑मावत् ॥ ४ ॥

अ॒ग्नेः। गा॒य॒त्री। अ॒भ॒व॒त्। स॒ऽयुग्वा॑। उ॒ष्णिह॑या। स॒वि॒ता। सम्। ब॒भू॒व।
अ॒नु॒ऽस्तुभा॑। सोमः॑। उ॒क्थैः। मह॑स्वान्। बृ॒ह॒स्पतेः॑। बृ॒ह॒ती। वाच॑म्। आ॒व॒त् ॥ ४ ॥

**वेङ्कट०** 'चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग् भूत्वैतां श्रियम् आरोहन्। यस्यामेत एतर्हि प्रतिष्ठिताः' (ऐब्रा ८,६) इत्युक्तम्। अग्नेः गायत्री अभवत् सहयोक्त्री तेन सङ्गता इति। उष्णिक्छन्दसा सविता सम् बभूव, अनुष्टुभा सोमः, उक्थैः महस्वान् इन्द्र इति वदन्ति। बृहस्पतेः वाक्यम् बृहती अगच्छद् इति ॥ ४ ॥

वि॒राण्मि॒त्रावरु॑णयोरभि॒श्रीरिन्द्र॑स्य त्रि॒ष्टुबि॒ह भा॒गो अह्नः॑ ।
विश्वा॑न् दे॒वाञ्जग॒त्या वि॑वेश॒ तेन॑ चाक्लृप्र ऋष॑यो मनु॒ष्याः॑ ॥ ५ ॥

वि॒ऽराट्। मि॒त्रावरु॑णयोः। अ॒भि॒ऽश्रीः। इन्द्र॑स्य। त्रि॒ऽस्तुप्। इ॒ह। भा॒गः। अह्नः॑।
विश्वा॑न्। दे॒वान्। जग॑ती। आ। वि॒वे॒श॒। तेन॑। चा॒क्लृ॒प्रे॒। ऋष॑यः। म॒नु॒ष्याः॑ ॥ ५ ॥

**वेङ्कट०** विराट् एतयोः अभिसम्भर्त्री। इन्द्रस्य त्रिष्टुप् छन्दसां विभागे भागः आसीत् यज्ञस्य। जगती विश्वान् देवान् आ विवेश। तेन अनेन यज्ञेन क्लृप्ता अभवन् ऋषयः सन्तः मनुष्याः इति ॥ ५ ॥

चा॒क्लृ॒प्रे तेन॒ ऋष॑यो मनु॒ष्या॑ य॒ज्ञे जा॒ते पि॒तरो॑ नः पुरा॒णे ।
पश्य॑न् मन्ये॒ मन॑सा॒ चक्ष॑सा॒ तान् य इ॒मं य॒ज्ञमय॑जन्त॒ पूर्वे॑ ॥ ६ ॥

चा॒क्लृ॒प्रे। तेन॑। ऋष॑यः। म॒नु॒ष्याः॑। य॒ज्ञे। जा॒ते। पि॒तरः॑। नः॒। पु॒रा॒णे।
पश्य॑न्। म॒न्ये॒। मन॑सा। चक्ष॑सा। तान्। ये। इ॒मम्। य॒ज्ञम्। अय॑जन्त। पूर्वे॑ ॥ ६ ॥

---

१-१. °न्तुनो मूको. २-२. कासन्निति अ[1].

वेङ्कट० कलशा आसन् तेन यज्ञेन ऋषयः मनुष्याः यज्ञे जाते अस्माकम् पितरः प्रत्ने[1] काले। पश्यन् जानामि मनोमयेन चक्षुषा तान् अहम्, ये इमम् यज्ञम् अयजन्त पूर्वे इति ॥ ६ ॥

सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो३ न रश्मीन् ॥ ७ ॥

सहऽस्तोमाः । सहऽछन्दसः । आऽवृतः । सहऽप्रमाः । ऋषयः । सप्त । दैव्याः ।
पूर्वेषाम् । पन्थाम् । अनुऽदृश्य । धीराः । अनुऽआलेभिरे । रथ्यः । न । रश्मीन् ॥ ७ ॥

वेङ्कट० स्तोमैः छन्दोभिः प्रमाभिश्च सहिता आवर्तन्त ऋषयः सप्त दिवि भवाः। तेषाम् पूर्वेषाम् पन्थानम् अनुदृश्य[2] प्राज्ञाः तान् अन्वारभन्ते कर्मभिः यथा सारथयः रश्मीन् इति। निरूपणीयं वृद्धैः सूक्तम् इति ॥ ७ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये अष्टादशो वर्गः[3] ॥

[ १३१ ]

[1]सुकीर्तिः काक्षीवत ऋषिः । इन्द्रो देवता; ४,५ अश्विनौ । त्रिष्टुप् छन्दः, चतुर्थ्यनुष्टुप्[1] ।

अप प्राच इन्द्र विश्वाँ अमित्रानपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम ॥ १ ॥

अप । प्राचः । इन्द्र । विश्वान् । अमित्रान् । अप । अपाचः । अभिऽभूते । नुदस्व ।
अप । उदीचः । अप । शूर । अधराचः । उरौ । यथा । तव । शर्मन् । मदेम ॥ १ ॥

वेङ्कट० सुकीर्तिः काक्षीवतः। सर्वतोदिक्कम् अमित्रान् [4]अभिभूते! अप[4] नुदस्व, यथा त्वया दत्ते विस्तृते सुखे वयम् मदेम इति ॥ १ ॥

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २ ॥

कुवित् । अङ्ग । यवऽमन्तः । यवम् । चित् । यथा । दान्ति । अनुऽपूर्वम् । विऽयूय ।
इहऽइह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिम् । न । जग्मुः ॥ २ ॥

वेङ्कट० बहु अङ्ग इन्द्र! यवमन्तः यवम् अनुक्रमेण लूत्वा यथा प्रयच्छन्ति याचमानेभ्यः, तथा त्वम् अस्माकम् इह च इह च कृणु भोजनानि एषाम्[5], ये [6]बर्हिषः नमोवृक्तिम्[6] न गच्छन्ति[7]। नमोवृक्तिः[8] देवपूजार्थम् [9]हि छेदनम्[9] इति। अयजमानानाम्[10] धनमाच्छिद्य प्रयच्छ इति ॥ २ ॥

---

१. प्रश्ने मूको. २. अनुदिश्य मूको. ३-३. नास्ति मूको. ४-४. °त्रायमेतप° मूको. ५. एषा मूको. ६. इदिषोनामावृत्तिं मूको. ७. यच्छति मूको. ८. वृत्तिः मूको. ९-९. इच्छेद° मूको. १०. °मानान् वि[2].

नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।
गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ॥ ३ ॥

नहि । स्थूरि । ऋतुऽथा । यातम् । अस्ति । न । उत । श्रवः । विविदे । समऽगमेषु ।
'गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः' ॥ ३ ॥

वेङ्कट० नहि स्थूलं धान्यम् ऋतुषु यातम् अस्माकं प्राप्तम् अस्ति, न अपि च अन्नम् लभ्यते आढय-सङ्गमेषु । ततः इन्द्रम् बलिनं कुर्म इत्याह गव्यन्तः[2] इति ॥ ३ ॥

युवं सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥४॥

युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ।
विऽपिपाना । शुभः । पती इति । इन्द्रम् । कर्मऽसु । आवतम् ॥ ४ ॥

वेङ्कट० युवम् सुरामम् अश्विनौ! । सुरामशब्दः सुराशब्दपर्यायः । विपिपानौ शुभः पती! नमुचौ आसुरे हन्यमाने सहायभूतौ इन्द्रम् कर्मसु अरक्षतम् ॥ ४ ॥

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥

पुत्रमऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुरामम् । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥ ५ ॥

वेङ्कट० पुत्रम् इव पितरौ अश्विनौ उभौ इन्द्र! अरक्षतम् कवित्वैः कर्मभिः च। यदा त्वम् मघवन्![3] सुराम् वि अपिबः प्रज्ञाभिः, तदानीं त्वाम्[4] अश्विनौ सरस्वती च अभिषज्यन् सौत्रामण्याम् इति ॥ ५ ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ६ ॥

वेङ्कट० गतेति ( ऋ ६,४७,१२ द्र. ) ॥ ६ ॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ॥ ७ ॥

---

६-१. = ऋ ४,१७,१६. २. गन्तव्यं त मूको ३. मघवान् मूको. ४ त्वम् मूको.

तस्यं । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ।
सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥

वेङ्कट० गतेति ( ऋ ६,४७,१३ द्र. ) ॥ ७ ॥

[1]इति अष्टमाष्टके सप्तमाध्याये एकोनविंशो वर्गः[1] ॥

[ १३२ ]

[1]शकपूतो नार्मेध ऋषिः । मित्रावरुणौ देवता, आद्याया द्युभूम्यश्विनः । विराड्रूपा छन्दः;
१ न्यङ्कुसारिणी; २,६ प्रस्तारपङ्क्ती; ७ महासतोबृहती[1] ।

ई॒जा॒नमिद् द्यौर्गू॒र्तावसुरीजा॒नं भूमि॑र॒भि प्र॑भू॒षणि॑ ।
ई॒जा॒नं दे॒वाव॒श्विना॑व॒भि सु॒म्नैर॑वर्धताम् ॥ १ ॥

ई॒जा॒नम् । इत् । द्यौः । गू॒र्तऽव॑सुः । ई॒जा॒नम् । भूमिः । अ॒भि । प्र॒ऽभू॒षणि॑ ।
ई॒जा॒नम् । दे॒वौ । अ॒श्विनौ॑ । अ॒भि । सु॒म्नैः । अ॒व॒र्ध॒ता॒म् ॥ १ ॥

वेङ्कट० शकपूतो नार्मेधः[2] । ईजानम् एव द्यौः उद्गूर्णधना अभि-वर्धयति । ईजानम् एव भूमिः अभि-वर्धयति प्रभुत्वभजनेच्छया[3] । ईजानम् देवौ अश्विनौ अभि वर्धयतः सुखैः ॥ १ ॥

ता वां॑ मित्रावरुणा धारयत्क्षिती सुषु॒म्नेषि॑त॒त्वता॑ यजामसि ।
यु॒वोः क्रा॒णाय॑ स॒ख्यैर॒भि ष्या॑म र॒क्षसः॑ ॥ २ ॥

ता । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । धा॒र॒यत्क्षि॑ती॒ इति॑ धा॒र॒यत्ऽक्षि॑ती । सु॒ऽसु॒म्ना । इ॒षि॒त॒त्वता॑ । य॒जा॒म॒सि॒ ।
यु॒वोः । क्रा॒णाय॑ । स॒ख्यैः । अ॒भि । स्या॒म॒ । र॒क्षसः॑ ॥ २ ॥

वेङ्कट० तौ वाम् मित्रावरुणौ ! ध्रियमाणमनुष्यौ[4] सुसुखौ धनस्य इष्टत्वेन यजामः[5] । युवयोः कर्म कुर्वाणाय क्रियमाणैः सख्यैः अभि भवेम रक्षांसि इति[6] ॥ २ ॥

अधा॑ चि॒न्नु यद्दिधि॑षामहे वाम॒भि प्रि॒यं रेक्ण॒ः पत्य॑मानाः ।
द॒द्वाँ वा यत् पुष्य॑ति॒ रेक्ण॒ः सम्वा॑र॒न् नकि॑रस्य म॒घानि॑ ॥ ३ ॥

अध॑ । चि॒त् । नु । यत् । दिधि॑षामहे । वा॒म् । अ॒भि । प्रि॒यम् । रेक्णः॑ । पत्य॑मानाः ।
द॒द्वान् । वा॒ । यत् । पुष्य॑ति । रेक्णः॑ । सम् । ऊँ इति॑ । आ॒र॒न् । नकिः॑ । अ॒स्य॒ । म॒घानि॑ ॥३॥

वेङ्कट० सम्प्रति यत् वाम् वयं कर्मभिः धारयितुमिच्छामः भवद्भ्यां दत्तम् प्रियम् धनम्

१-१. नास्ति मूको. २. नामधेयः मूको. ३. °नेच्छयाम् मूको. ४. °मानुषौ वि[2].
५. यजमानो मूको. ६. इत्यर्थः अ[1].

अभि-गच्छन्तः। तेषाम् अस्माकं धनं केचन शत्रवो[1] न मनसा गच्छन्ति। यः वा मत्तोऽन्यो युवयोः प्रदाता पुष्णाति धनं तस्य च इति ॥ ३ ॥

असावन्यो असुर सूयत द्यौस्त्वं विश्वेषां वरुणासि राजा।
मूर्धा रथस्य चाकन् नैतावतैनसान्तकध्रुक् ॥ ४ ॥

असौ। अन्यः। असुर। सूयत। द्यौः। त्वम्। विश्वेषाम्। वरुण। असि। राजा।
मूर्धा। रथस्य। चाकन्। न। एतावता। एनसा। अन्तकऽध्रुक् ॥ ४ ॥

वेङ्कट० असौ अन्यः मित्रः असुर![2] दीप्तः असूयत[3] जनयित्र्या। त्वम् च भवसि विश्वेषाम् वरुण! राजा[4]। सोऽयं वरुणः रथस्य मूर्धा अग्रे प्रादुर्भावम् न कामयते[5] पापकारिणः स्वल्पेनापि पापेन अन्तकानां द्रोग्धा। हिंसका अन्तका इति ॥ ४ ॥

अस्मिन्त्स्वे३तच्छकपूत एनो हिते मित्रे निगतान् हन्ति वीरान्।
अवोर्वा यद्धात् तनूष्ववः प्रियासु यज्ञियास्ववा ॥ ५ ॥

अस्मिन्। सु। एतत्। शकऽपूते। एनः। हिते। मित्रे। निऽगतान्। हन्ति। वीरान्।
अवोः। वा। यत्। धात्। तनूषु। अवः। प्रियासु। यज्ञियासु। अर्वा ॥ ५ ॥

वेङ्कट० अस्मिन् शकपूते मयि स्थितम् इदं पापम् मम हितकारिणि सति मित्रे देवे अभिमुखमागतान् शत्रून् सुष्ठु हन्ति, यदा रक्षकयोः मित्रावरुणयोः प्रियेषु यष्टव्येषु शरीरेषु अन्नं हविर्निदधाति[6] तयोः अभिगन्ता अयम् ऋषिः इति ॥ ५ ॥

युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि।
अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥ ६ ॥

युवोः। हि। माता। अदितिः। विऽचेतसा। द्यौः। न। भूमिः। पयसा। पुपूतनि।
अव। प्रिया। दिदिष्टन। सूरः। निनिक्त। रश्मिऽभिः ॥ ६ ॥

वेङ्कट० युवयोः हि माता अदितिः हे विशिष्टप्रज्ञानौ! आदित्य इव भूमिः[7], या[8] सारेण जगत् पुनाति। रूपसिद्धिः छान्दसी। तदेवाह — सेयं प्रियाणि अव दिशति, सुवीर्या या आत्मनः रश्मिभिः शोधयति इति। वर्षकर्मणा स्तौति मातरम् इति ॥ ६ ॥

युवं ह्यप्नराजावसीदतं तिष्ठद्रथं न धूर्षदं वनर्षदम्।
ता नः कणूकयन्तीर्नृमेधस्त्रे अंहसः सुमेधस्त्रे अंहसः ॥ ७ ॥

---

१. तत्र वो मूको. २. तु. ऋ २,२७,१०; २८,७; ७,३६,२ प्रभृ.; नास्ति मूको. ३. असतूयते मूको. ४. राजा असि मूको. ५. कारयते मूको. ६. °धात मूको. ७. °मिः इव मूको. ८. यः मूको.

युवम् । हि । अप्नऽराजौ । असीदतम् । तिष्ठत् । रथम् । नः । धूःऽसदम् । वनऽसदम् ।
ताः । नः । कणुकऽयन्तीः । नृऽमेधः । तत्रे । अंहसः । सुऽमेधः । तत्रे । अंहसः ॥ ७ ॥

वेङ्कट० युवाम् हि कर्मणां राजानौ असीदतम् । तौ[१] भवन्तौ आतिष्ठति च अयम् ऋषिः रथम् इव दृढायां धुरि सीदन्तम्[१] दृढकाष्ठ आधारभूते स्थितम् । ताः अस्मान् कामयमानाः प्रजाः नृमेधपुत्रः सुमेधाः शकपूतः शत्रोः परिरक्षितवान् इति ॥ ७ ॥

[३]इति अष्टमाष्टके सप्तमाध्याये विंशो वर्गः[३] ॥

## [ १३३ ]

[१]सुदाः पैजवन ऋषिः । इन्द्रो देवता । शक्करी छन्दः, ४-६ महापङ्क्तयः, ७ त्रिष्टुप्[१] ।

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् संगे समत्सु वृत्रहास्माकं बोधि चोदिता
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥

प्रो इति । सु । अस्मै । पुरःऽरथम् । इन्द्राय । शूषम् । अर्चत ।
अभीके । चित् । ऊँ इति । लोकऽकृत् । सम्ऽगे । समत्ऽसु । वृत्रऽहा । अस्माकम् । बोधि ।
चोदिता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ १ ॥

वेङ्कट० सुदाः पैजवनः । प्र [४]अर्चत स्तोतारः! रथस्य पुरः अस्मै[४] इन्द्राय प्रियकरं स्तोत्रम्[५] । स त्वम् इन्द्रः सङ्ग्रामे स्थानस्य कर्ता कलहेषु[६] इतरेतरसङ्गे उपद्रवस्य हन्ता अस्माकम् एव स्तोत्रं बुध्यस्व चोदिता[७] । गच्छन्तु अन्येषां शत्रूणाम् धन्वसु स्थिताः ज्याकाः[८], विच्छिन्ना भवन्तु इति ॥ १ ॥

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥

त्वम् । सिन्धून् । अव । असृजः । अधराचः । अहन् । अहिम् ।
अशत्रुः । इन्द्र । जज्ञिषे । विश्वम् । पुष्यसि । वार्यम् । तम् । त्वा । परि । स्वजामहे । नभन्ताम् ।
अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ २ ॥

वेङ्कट० त्वम् सिन्धून् इमं लोकं [९]प्रति अव[९] असृजः अधोमुखान्, अहिम् च हतवानसि । अशत्रुः च भवसि इन्द्र!, विश्वम् च पुष्यसि वरणीयं धनम् । तम्[१०] त्वा वयम् परि स्वजामहे इति ॥ २ ॥

---

१-१. ते मूको. २. निषीदन्तम् अ[१]. ३-३. नास्ति मूको. ४-४. आर्चौ रथित् सष्टि अस्मै मूको. ५. त्रुटितम् मूको. ६. °हेर्षु मूको. ७. चोदका मूको. ८. ज्यर्थाका मूको. ९-९. प्र उपा मूको. १०. तत् मूको.

वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु नभन्तामन्यकेषां
ज्याका अधि धन्वसु ॥ ३ ॥

वि । सु । विश्वाः । अरातयः । अर्यः । नशन्त । नः । धियः । अस्ता । असि । शत्रवे । वधम् ।
यः । नः । इन्द्र । जिघांसति । या । ते । रातिः । ददिः । वसु । नभन्ताम् । अन्यकेषाम् ।
ज्याकाः । अधि । धन्वऽसु ॥ ३ ॥

वेङ्कट० वि नश्यन्तु अस्माकम् अभिगन्त्र्यः सर्वा एव अरातयः अनर्थं ध्यायन्त्यः[1] । त्वम् अस्ता असि शत्रवे वज्रम्, यः अस्मान् इन्द्र! जिघांसति । यत् तव दानम् वसु[2] प्रयच्छसि[3], [4]तद् अस्मासु[4] भवति ॥ ३ ॥

यो न इन्द्राभितो जनो वृकायुरादिदेशति ।
अधस्पदं तमीं कृधि विबाधो असि सासहिर्नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥४॥

यः । नः । इन्द्र । अभितः । जनः । वृकऽयुः । आऽदिदेशति । अधःऽपदम् । तम् । ईम् ।
कृधि । विऽबाधः । असि । ससहिः । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥४॥

वेङ्कट० यः अस्मान् इन्द्र! अभितः जनः अस्माकं[5] धनस्य आदानम् इच्छन् आदिदेशति गच्छति मोषार्थमाह्वयन्[6], [7]तम् एनम्[7] अधस्पदम् कुरु । शत्रोः त्वं भवसि अभिभविता ॥ ४ ॥

यो न इन्द्राभिदासति सनाभिर्यश्च निष्ट्यः ।
अव तस्य बलं तिर महीव द्यौरध त्मना नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥५॥

यः । नः । इन्द्र । अभिऽदासति । सऽनाभिः । यः । च । निष्ट्यः । अव । तस्य । बलम् ।
तिर । महीऽइव । द्यौः । अध । त्मना । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥५॥

वेङ्कट० यः अस्मान् इन्द्र! उपक्षपयति ज्ञातिः, यः च [8]निष्ट्यः अन्यः[8], तस्य बलम् विनाशय महती द्यौः यथा आत्मना अन्यत् सर्वम् अधः करोति ॥ ५ ॥

वयमिन्द्र त्वायवः सखित्वमा रभामहे ।
ऋतस्य नः पथा नयाति विश्वानि दुरिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥६॥

वयम् । इन्द्र । त्वाऽयवः । सखिऽत्वम् । आ । रभामहे । ऋतस्य । नः । पथा । नय । अति ।
विश्वानि । दुःऽइता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ६ ॥

---

१. ध्यायन्तः वि[२]. २. नास्ति अ[१]. ३. °च्छति वि[१]. ४-४. तदास्मा° मूको. ५. अस्मान् मूको.
६. °मह्व° मूको. ७-७. तमेवमेनम् अ[१]. ८-८. निषेष्ठान्यः मूको.

वेङ्कट० वयम् इन्द्र! त्वत्कामाः तव सखित्वम् [1]वृक्षं शाखाः[1] इव आ रभामहे। सत्यस्य मार्गेण अस्मान् अति नय विश्वानि दुरितानि ॥ ६ ॥

अस्मभ्यं सु त्वमिन्द्र तां शिक्ष या दोहते प्रति वरं जरित्रे ।
अच्छिद्रोध्नी पीपयद्यथा नः सहस्रधारा पयसा मही गौः ॥ ७ ॥

अस्मभ्यम् । सु । त्वम् । इन्द्र । ताम् । शिक्ष । या । दोहते । प्रति । वरम् । जरित्रे ।
अच्छिद्रऽऊध्नी । पीपयत् । यथा । नः । सहस्रऽधारा । पयसा । मही । गौः ॥ ७ ॥

वेङ्कट० अस्मभ्यम् सुष्ठु त्वम् इन्द्र! ताम् गां प्रयच्छ, या प्रति दोहते कामम् स्तोत्रे । विच्छिन्नोधस्का न भवति सर्वदा [2]दोहनात् या सा अच्छिद्रोध्नी[2]। सा सहस्रधारा महती गौः यथा अस्मान् पयसा[3] वर्धयति, तथा प्रयच्छ इति ॥ ७ ॥

[4]इति अष्टमाष्टके सप्तमाध्याये एकविंशो वर्गः[4] ॥

8242

[ १३४ ]

[4]१-५,६ ( पूर्वार्धस्य ) मान्धाता यौवनाश्वः, ६ ( उत्तरार्धस्य )-७ गोधा ऋषिका । इन्द्रो देवता । महापङ्क्तिश्छन्दः, ७ पङ्क्तिः[4] ।

उभे यदिन्द्र रोदसी आपप्राथोषाइव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥१॥

उभे इति । यत् । इन्द्र । रोदसी इति । आऽपप्राथ । उषाःऽइव । महान्तम् । त्वा । महीनाम् ।
सम्ऽराजम् । चर्षणीनाम् । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥१॥

वेङ्कट० मान्धाता यौवनाश्वः[5]। अन्त्यामधर्द्धां[6] गोधाऽपश्यत्। उभे यत् इन्द्र! द्यावापृथिव्यौ आपूरयसि[7] उषाः इव, तदा प्रातः महताम् अपि महान्तम्[8] त्वाम् सम्राजम् मनुष्याणाम् देवी भद्रा[3] जनित्री जनयति ॥ १ ॥

अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरम् ।
अधस्पदं तमीं कृधि यो अस्माँ आदिदेशति देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥२॥

अव । स्म । दुःऽहनायतः । मर्तस्य । तनुहि । स्थिरम् । अधःऽपदम् । तम् । ईम् । कृधि । यः ।
अस्मान् । आऽदिदेशति । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥२॥

वेङ्कट० अव तनुहि दुष्टं हननम् इच्छतः[9] मनुष्यस्य स्थिरम् धनुः इति ॥ २ ॥

---

१. विश्वशाखा मूको. २-२. दोहनद्यान्वाच्छिद्रोग्नी मूको. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. °नाश्वं मूको. ६. °मध्यद्धां मूको. ७. अपू° अ'. ८. महान्तः मूको. ९. इच्छन्तः मूको.

अव त्या बृहतीरिषो विश्वश्चन्द्रा अमित्रहन् ।
शचीभिः शक्र धूनुहीन्द्र विश्वाभिरूतिभिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥३॥

अव । त्याः । बृहतीः । इषः । विश्वऽचन्द्राः । अमित्रऽहन् । शचीभिः । शक्र । धूनुहि । इन्द्र । विश्वाभिः । ऊतिऽभिः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥

वेङ्कट० अव धूनुहि तानि महान्ति अन्नानि सर्वेषां ह्लादकानि अमित्राणां हन्तः! प्रज्ञाभिः शक! इन्द्र![1] सर्वैः च रक्षणैः ॥ ३ ॥

अव यत् त्वं शतक्रतविन्द्र विश्वानि धूनुषे ।
रयिं न सुन्वते सचा सहस्रिणीभिरूतिभिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥४॥

अव । यत् । त्वम् । शतक्रतो इति शतऽक्रतो । इन्द्र । विश्वानि । धूनुषे । रयिम् । न । सुन्वते । सचा । सहस्रिणीभिः । ऊतिऽभिः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥४॥

वेङ्कट० अव धूनुषे यदा त्वम् शतक्रतो! इन्द्र! व्याप्तानि उदकानि धनम् इव सुन्वते यजमानाय सह[2] बहुसङ्ख्यैः पालनैः, तदानीम् देवी भद्रा जनित्री जनयति इति। यद्वा यत् इति यः इत्यर्थः ॥ ४ ॥

अव स्वेदाइवाभितो विष्वक् पतन्तु दिद्यवः ।
दूर्वायाइव तन्तवो व्यस्मदेतु दुर्मतिर्देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥५॥

अव । स्वेदाःऽइव । अभितः । विष्वक् । पतन्तु । दिद्यवः । दूर्वायाःऽइव । तन्तवः । वि । अस्मत् । एतु । दुःऽमतिः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥५॥

वेङ्कट० अव पतन्तु शरीरात् स्वेदाः इव अभितः विष्वक् तव आयुधानि। यथा दूर्वायाः शाखा विगच्छन्ति, तथा अस्मत्तः वि एतु दुर्मतिः ॥ ५ ॥

दीर्घं ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः ।
पूर्वेण मघवन् पदाजो वयां यथा यमो देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥६॥

दीर्घम् । हि । अङ्कुशम् । यथा । शक्तिम् । बिभर्षि । मन्तुऽमः । पूर्वेण । मघऽवन् । पदा । अजः । वयाम् । यथा । यमः । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ ६ ॥

वेङ्कट० यथा हस्तिपकः दीर्घम् अङ्कुशम् बिभर्ति, एवं त्वम् हि प्रज्ञावन्! शक्तिम् बिभर्षि। तथा यथा अजः[3] पूर्वेण पादेन[4] शाखाम् आयच्छति[5], तथा शत्रून् आयच्छः इति। आख्याता-नुदात्तत्वमत्र दृष्टम्। वाक्यं च अदृष्टपूर्वम् इति ॥ ६ ॥

---

1. इन्द्रः मूको. 2. सुह्रायो मूको. 3. अजं मूको. 4. वादेन मूको. 5 यच्छति मूको.

नकिर्देवा मिनीमसि नकिरा योपयामसि मन्त्रश्रुत्यं चरामसि ।
पक्षेभिरपिकक्षेभिरत्राभि सं रभामहे ॥ ७ ॥

नकिः । देवाः । मिनीमसि । नकिः । आ । योपयामसि । मन्त्रऽश्रुत्यम् । चरामसि ।
पक्षेभिः । अपिऽकक्षेभिः । अत्र । अभि । सम् । रभामहे ॥ ७ ॥

वेङ्कट० हे देवाः! भवतां व्रतं न हिंस्मः । नैव आ योपयामः । आयोपनं सदसतोः मिश्रणम् । किन्तु भवद्विषयस्य स्तोत्रस्य श्रवणमेव सदा चरामः । पक्षाः पादाः, [1]अपिकक्षाः अंसाः†[1], तैः उभयैः युक्ताः अस्मिन् लोके अभिलषितम् सम् रभामहे इति ॥ ७ ॥

[1]इति अष्टमाष्टके सप्तमाध्याये द्वाविंशो वर्गः[1] ॥

[ १३५ ]

[1]कुमारो यामायन ऋषिः । यमो देवता । अनुष्टुप् छन्दः[1] ।

यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥ १ ॥

यस्मिन् । वृक्षे । सुऽपलाशे । देवैः । सम्ऽपिबते । यमः ।
अत्र । नः । विश्पतिः । पिता । पुराणान् । अनु । वेनति ॥ १ ॥

वेङ्कट० कुमारो यामायनः । यस्मिन् वृक्षे सुपलाशे देवैः सह यमः आदित्यः पार्थिवं रसं पिबति इति संवत्सरं वृक्षम् आह । अत्र अस्माकम् विशां पतिः जनकः वैवस्वतो यमः पुराणान् देवान् अनु कामयते । निरुक्तं द्रष्टव्यम् ( १२,२९ ) इति ॥ १ ॥

पुराणाँ अनुवेनन्तं चरन्तं पापयामुया । असूयन्नभ्यचाकशं तस्मा अस्पृहयं पुनः ॥२॥

पुराणान् । अनुऽवेनन्तम् । चरन्तम् । पापया । अमुया ।
असूयन् । अभि । अचाकशम् । तस्मै । अस्पृहयम् । पुनरिति ॥ २ ॥

वेङ्कट० पुराणान् देवान् अनुकामयमानम् चरन्तम् च पापया अनया बुद्ध्या, यया प्राणिनो मारयति, तम् अहम् असूयन् अभि अचाकशम्, तस्मै अस्पृहयम् च पुनः ॥ २ ॥

यं कुमार नवं रथमचक्रं मनसाकृणोः । एकेषं विश्वतः प्राञ्चमपश्यन्नधि तिष्ठसि ॥३॥

यम् । कुमार । नवम् । रथम् । अचक्रम् । मनसा । अकृणोः ।
एकऽईषम् । विश्वतः । प्राञ्चम् । अपश्यन् । अधि । तिष्ठसि ॥ ३ ॥

वेङ्कट० अपश्यन् अधि तिष्ठसि बलमहत्तया प्राग् अधिष्ठानाद् अपश्यन् आरोहसि[2] इति ॥ ३ ॥

---

१-१ नास्ति मूको. † तु. वें. ऋ ४,४०,४. २. °रोहति मूको.

यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि । तं सामानु प्रावर्तत समितो नाव्याहितम् ॥४॥

यम् । कुमार । प्र । अवर्तयः । रथम् । विप्रेभ्यः । परि ।
तम् । साम । अनु । प्र । अवर्तत । सम् । इतः । नावि । आऽहितम् ॥ ४ ॥

**वेङ्कट०** यम् कुमार![1] परि प्र आवर्तयसि रथम् मेधाविभ्यः स्तोतृभ्यः कृते, तम् रथं तेषां विप्राणाम् साम इतोमुखम् सम् अनु प्र वर्तयति माध्यमिकायां वाचि आहितम् इति ॥ ४ ॥

कः कुमारमजनयद्रथं को निरवर्तयत् ।
कः स्वित् तदद्य नो ब्रूयादनुदेयी यथाभवत् ॥ ५ ॥

कः । कुमारम् । अजनयत् । रथम् । कः । निः । अवर्तयत् ।
कः । स्वित् । तत् । अद्य । नः । ब्रूयात् । अनुऽदेयी । यथा । अभवत् ॥ ५ ॥

**वेङ्कट०** कः इमम् कुमारम् अजनयत् । कः वा रथम् इमं कालात्मकम् निः अवर्तयत् । कः स्वित् तत् अद्य अस्माकम् ब्रूयात् यथा[2] अस्य स्वसा अनुदेयी यमी अभवत् इति ॥ ५ ॥

यथाभवदनुदेयी ततो अग्रमजायत । पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतम् ॥६॥

यथा । अभवत् । अनुऽदेयी । ततः । अग्रम् । अजायत ।
पुरस्तात् । बुध्नः । आऽततः । पश्चात् । निःऽअयनम् । कृतम् ॥ ६ ॥

**वेङ्कट०** यथा अभवत् अनुदेयी यमस्य स्वसा तथा[3] तस्मात् एव स्थितात् अग्रम् अजायत इति यमम् आह । पुरस्तात् बुध्नः यमः आततः पश्चात् अनुदेय्या निरयणम् कृतम् इति । प्रथमम् यमो जातः [4]ततः स्मृता यमीति[4] नूनम् अर्थः ॥ ६ ॥

इदं यमस्य सादनं देवमानं यदुच्यते ।
इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृतः ॥ ७ ॥

इदम् । यमस्य । सदनम् । देवऽमानम् । यत् । उच्यते ।
इयम् । अस्य । धम्यते । नाळीः । अयम् । गीःऽभिः । परिऽकृतः ॥ ७ ॥

**वेङ्कट०** इदम् यमस्य गृहम् देवमानम् इति यत्[5] उच्यते अन्तरिक्षम् । 'देवानां माने प्रथमा अतिष्ठन्' (ऋ १०,२७,२३) इति उक्तम् । इयम् यमस्य प्रेर्यते स्तुतिः । नाळीति [6]वाङ्नाम (तु. निघ १,११) । अयम्[6] स्तुतिभिः अलङ्कृतः ॥ ७ ॥

[7]इति अष्टमाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[7] ॥

---

१. कुमारं मूको. २. यदा मूको. ३. तदा मूको. ४-४. तत स्मृतो यमिति मूको. ५. यदि मूको. ६-६. वाङ्गामयं मूको. ७-७. नास्ति मूको.

[ १३६ ]

[1]१ जूतिः, २ वातजूतिः, ३ विप्रजूतिः, ४ वृषाणकः, ५ करिक्रतः, ७ एतशः, ६ ऋष्यशृङ्गः ( एते वातरशना मुनयः) ऋषिः । केशिनः (अग्नि-सूर्य-वायवः) देवता । अनुष्टुप् छन्दः[1] ।

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥ १ ॥

केशी । अग्निम् । केशी । विषम् । केशी । बिभर्ति । रोदसी इति ।
केशी । विश्वम् । स्वः । दृशे । केशी । इदम् । ज्योतिः । उच्यते ॥ १ ॥

वेङ्कट० [2]जूतिर्वातजूतिर्विप्रजूतिर्वृषाणकः करिक्रत एतश[2] ऋष्यशृङ्गश्च वातरशनपुत्राः प्रत्यृचमृषयः । केशिदैवतम्[3] । केशाः रश्मयः, तद्वान् केशी, स सर्वमिदम् बिभर्ति इति । विषम् उदकम् । 'केशीदं सर्वमिदमभिविपश्यति[4] । केशीदं ज्योतिरुच्यत इत्यादित्यमाह' इति यास्कः ( १२,२६ ) ॥१॥

मुनयो वातरशनाः पिशङ्गा वसते मला ।
वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत ॥ २ ॥

मुनयः । वातऽरशनाः । पिशङ्गा । वसते । मला ।
वातस्य । अनु । ध्राजिम् । यन्ति । यत् । देवासः । अविक्षत ॥ २ ॥

वेङ्कट० मुनयः अमी वातरशनाः [5]पिशङ्गानि मलिनानि[5] आच्छादयन्ति तपस्तप्यमानाः । ते इमे वातस्य प्रेरकम् आदित्यम् अनु गच्छन्ति, यत्र रश्मयो निविष्टा इति ॥ २ ॥

उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम् ।
शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ॥ ३ ॥

उत्ऽमदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयम् ।
शरीरा । इत् । अस्माकम् । यूयम् । मर्तासः । अभि । पश्यथ ॥ ३ ॥

वेङ्कट० उद्धर्षिताः मौनेयेन केशिना वयम् वातान् आ-स्थिताः[6] । शरीराण्येव अस्माकम्[7] यूयम् हे मर्त्याः![8] अभि पश्यथ यानि वातान् अनुप्रविश्य वर्तन्त इति ॥ ३ ॥

अन्तरिक्षेण पतति विश्वा रूपावचाकशत् । मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥४॥

अन्तरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् ।
मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. ज्यूतिर्वातज्यूतिर्विप्रजूतिर्विषाङ्कणः करिक्रतैतश मूको. ३. केश° मूको. ४. °मभिप° मूको. ५-५. पिशङ्गा निर्मलानि मूको. ६. आधिता वि[2]; आधिता अ[1]. ७. °स्माका मूको. ८. मत्ताः मूको.

**वेङ्कट०** अन्तरिक्षेण पतति[1] विश्वानि रूपाणि अवपश्यन् मन्ता सर्वस्य देवस्य सुकृतं कर्तुम् निहितः सखा केशीति ॥ ४ ॥

वातस्याश्वो वायोः सखाथो देवेषितो मुनिः ।
उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ॥ ५ ॥

वातस्य । अश्वः । वायोः । सखा । अथो इति । देवऽइषितः । मुनिः ।
उभौ । समुद्रौ । आ । क्षेति । यः । च । पूर्वः । उत । अपरः ॥ ५ ॥

**वेङ्कट०** गच्छतः केशिनः अश्वः वायोः सखा भवति शीघ्रगः अपि च अयम् मुनिः केशी सर्वैर्देवैः प्रेषितः । सोऽयम् उभौ समुद्रौ आ क्षेति, यः पूर्वः, यः च अपरः । समुद्राद् उदेति समुद्रं प्रविशतीति ॥ ५ ॥

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन् ।
केशी केतस्य विद्वान्त्सखा स्वादुर्मदिन्तमः ॥ ६ ॥

अप्सरसाम् । गन्धर्वाणाम् । मृगाणाम् । चरणे । चरन् ।
केशी । केतस्य । विद्वान् । सखा । स्वादुः । मदिन्ऽतमः ॥ ६ ॥

**वेङ्कट०** अप्सरसाम् गन्धर्वाणाम् अन्येषाम् मृगाणाम् च चरणे चरन् केशी जानन् सर्वं ज्ञेयम् सखा स्वादयिता उदकस्य मदिन्तमः ॥ ६ ॥

वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनंनमा ।
केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह ॥ ७ ॥

वायुः । अस्मै । उप । अमन्थत् । पिनष्टि । स्म । कुनंनमा ।
केशी । विषस्य । पात्रेण । यत् । रुद्रेण । अपिबत् । सह ॥ ७ ॥

**वेङ्कट०** वायुः अस्मै रसम् उप गमयति । [2]तं रसम्[2] पिनष्टि कुनंनमा नाम देवता या पापकारिणो नमयसि । तां[3] माध्यमिकां वाचं मन्यन्ते । यदा अयम् केशी पात्रेण अभिषुतं सोमोदकं हुतम् पिबति रुद्रेण सह इति ॥ ७ ॥

[4]इति अष्टमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[4] ॥

## [ १३७ ]

[4]१ भरद्वाजः, २ कश्यपः, ३ गोतमः, ४ अत्रिः, ५ विश्वामित्रः, ६ जमदग्निः, ७ वसिष्ठ ऋषिः । विश्वे देवा देवता । अनुष्टुप् छन्दः[4] ।

उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥१॥

---

१. पतत मूको. २-२. तरसं मूको. ३. तं मूको. ४-४. नास्ति मूको.

उत । देवाः । अवऽहितम् । देवाः । उत् । नयथ । पुनरिति ।
उत । आगः । चक्रुषम् । देवाः । देवाः । जीवयथ । पुनरिति ॥ १ ॥

**वेङ्कट०** सप्तर्षयः पृथग् ऋषयः । अपि च हे देवाः! अधस्ताद् निहितम् पुनः च उत् नयथ दरिद्रम् आढ्यं कुरुथ । अपि च पापम् कृतवन्तम् अपापं कुरुथ हे देवाः! । किं च देवाः! मुमूर्षुम् पुनः जीवयथ इति ॥ १ ॥

द्वाविमौ वातौ वात आ सिन्धोरा परावतः ।
दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥ २ ॥

द्वौ । इमौ । वातौ । वातः । आ । सिन्धोः । आ । पराऽवतः ।
दक्षम् । ते । अन्यः । आ । वातु । परा । अन्यः । वातु । यत् । रपः ॥ २ ॥

**वेङ्कट०** द्वौ इमौ वातौ गच्छतः । तत्र कश्चित् सिन्धोः आ याति प्राचीनात् समुद्रात्, अपरः परावतः अपरस्मात् समुद्राद् इति वातद्वयमाह[1] । तयोः अन्यः बलम् ते[2] आ गमयतु । अथ अन्यः यत् मम पापम् तद् अपगमयतु इति ॥ २ ॥

आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ ३ ॥

आ । वात । वाहि । भेषजम् । वि । वात । वाहि । यत् । रपः ।
त्वम् । हि । विश्वऽभेषजः । देवानाम् । दूतः । ईयसे ॥ ३ ॥

**वेङ्कट०** आ वाहि पुरोवात! भेषजम् । वि गमय पश्चाद्वात! यत् मयि पापम् । त्वम् हि सर्वस्य भेषजम्, देवानाम् दूतः च सञ्चरसि इति ॥ ३ ॥

आ त्वागमं शन्तातिभिरथो अरिष्टतातिभिः ।
दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥ ४ ॥

आ । त्वा । अगमम् । शन्तातिऽभिः । अथो इति । अरिष्टतातिऽभिः ।
दक्षम् । ते । भद्रम् । आ । अभार्षम् । परा । यक्ष्मम् । सुवामि । ते ॥ ४ ॥

**वेङ्कट०** आ गच्छामि त्वाम् सुखकरीभिरोषधीभिः[3] अपि च अविनाशकरीभिः[4] । बलम्[5] तव भजनीयम् आ हरामि, परा सुवामि च यक्ष्मम् इति केचन भिषज्यन्तो ददृशुः नूनं सूक्तम् इति ॥ ४ ॥

त्रायन्तामिह देवास्त्रायतां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥ ५ ॥

त्रायन्ताम् । इह । देवाः । त्रायताम् । मरुताम् । गणः ।
त्रायन्ताम् । विश्वा । भूतानि । यथा । अयम् । अरपाः । असत् ॥ ५ ॥

---

१. वाद्वातमाह मूको. २. म मूको. ३. °करोभिरो° मूको. ४. °कारीभिः मूको. ५. बलवन् मूको.

**वेङ्कट०** त्रायन्ताम् ··· ··· ··· ··· ··· ॥ ५ ॥

आप इद्वा उं भेषजीरापो अमीवचातनीः ।
आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥ ६ ॥

आपः । इत् । वै । ऊँ इति । भेषजीः । आपः । अमीवऽचातनीः ।
आपः । सर्वस्य । भेषजीः । ताः । ते । कृण्वन्तु । भेषजम् ॥ ६ ॥

**वेङ्कट०** आपः ··· ··· ··· ·· ··· ॥ ६ ॥

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥ ७ ॥

हस्ताभ्याम् । दशऽशाखाभ्याम् । जिह्वा । वाचः । पुरःऽगवी ।
अनामयित्नुऽभ्याम् । त्वा । ताभ्याम् । त्वा । उप । स्पृशामसि ॥ ७ ॥

**वेङ्कट०** हस्ताभ्याम् दशाङ्गुलिभ्याम् वाचः पुरोगमयिन्या जिह्वया सहिता मन्त्रम् उच्चारयन्तः आरोग्यस्य कर्तृभ्याम् ताभ्याम् त्वा उप स्पृशामः। त्वा इत्येकं पूरणम् ॥ ७ ॥

[1]इति अष्टमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[1] ॥

## [ १३८ ]

[1]अङ्ग औरव ऋषिः । इन्द्रो देवता । जगती छन्दः[1] ॥

तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् ।
यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः ॥ १ ॥

तव । त्ये । इन्द्र । सख्येषु । वह्नयः । ऋतम् । मन्वानाः । वि । अदर्दिरुः । वलम् ।
यत्र । दशस्यन् । उषसः । रिणन् । अपः । [2]कुत्साय । मन्मन् । अह्यः । च । दंसयः[2] ॥ १ ॥

**वेङ्कट०** अङ्ग औरवः । तव एते इन्द्र ! सख्येषु वह्नयः मरुतः उदकम् श्रद्दधानाः वि अदर्दिरुः मेघम्, यदा प्रयच्छन् वृत्रेण तिरोहिताः उषसः मनुष्येभ्यः प्रेरयंश्च उदकानि कुत्सप्रीत्यर्थम् मायाः च रक्षसां व्यनाशयः[2] ॥ १ ॥

अवासृजः प्रस्वः श्वञ्चयो गिरीनुदाज उस्रा अपिबो मधु प्रियम् ।
अवर्धयो वनिनो अस्य दंससा शुशोच सूर्य ऋतजातया गिरा ॥ २ ॥

अव । असृजः । प्रऽस्वः । श्वञ्चयः । गिरीन् । उत् । आजः । उस्राः । अपिबः । मधु । प्रियम् ।
अवर्धयः । वनिनः । अस्य । दंससा । शुशोच । सूर्यः । ऋतऽजातया । गिरा ॥ २ ॥

---

१-१. नास्ति मूको. २-२. अविनाशयः मूको.

वेङ्कट० अव असृजः उदकानि क्षिप्रगमनानि, [१]मेघेभ्यः उत् आजः च गाः[१] पणिभिरपहृताः, अपिबः च प्रियम् सोमम्, अवर्धयः च वृक्षान्। कुत्सस्य कर्मणा सूर्यः च प्रजज्वाल यज्ञे जनितया स्तुत्या त्वया अपनीते तमसि ॥ २ ॥

वि सूर्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्यः ।
दृळ्हानि पिप्रोरसुरस्य मायिन इन्द्रो व्यास्यच्चकृवाँ ऋजिश्वना ॥ ३ ॥

वि । सूर्यः । मध्ये । अमुचत् । रथम् । दिवः । विदत् । दासाय । प्रतिऽमानम् । आर्यः ।
दृळ्हानि । पिप्रोः । असुरस्य । मायिनः । इन्द्रः । वि । आस्यत् । चकृऽवान् । ऋजिश्वना ॥

वेङ्कट० वि अमुचत् दिवः मध्ये रथम् सूर्यः त्वया अपनीते चक्रे। 'यत्रोत बाधितेभ्यश्चक्रं कुत्साय' ( ऋ ४,३०,४ ) इत्युक्तम्। अलभत कुत्सः प्रतिमानभूतं त्वाम् आत्मनः शत्रवे। दृळ्हानि पुराणि च पिप्रोः[२] असुरस्य मायावतः इन्द्रः[३] [४]वि आस्यत्[४] कुर्वन् कर्माणि ऋजिश्वना[५] ॥ ३ ॥

अनाधृष्टानि धृषितो व्यास्यन्निधीँरदेवाँ अमृणदयास्यः ।
मासेव सूर्यो वसु पुर्यमा ददे गृणानः शत्रूँरशृणाद्विरुक्मता ॥ ४ ॥

अनाधृष्टानि । धृषितः । वि । आस्यत् । निऽधीन् । अदेवान् । अमृणत् । अयास्यः ।
मासाऽइव । सूर्यः । वसु । पुर्यम् । आ । ददे । गृणानः । शत्रून् । अशृणात् । विरुक्मता ॥४॥

वेङ्कट० अन्यैः अनाधृष्टानि धृष्टः वि आस्यत् शत्रूणां पुराणि। तथा गुहायां निहितान् अदेवान् अमृद्नात्[६] शत्रुभिः यसितुमशक्यः। यथा मासान् सूर्यः आदत्ते तथा च अयं शत्रुपुरस्थम् वसु आ दत्ते। स्तूयमानः शत्रून् हिनस्ति विरोचनवता आयुधेन ॥ ४ ॥

अयुद्धसेनो विभ्वा विभिन्दता दाशद्वृत्रहा तुज्यानि तेजते ।
इन्द्रस्य वज्रादबिभेदभिश्नथः प्राक्रामच्छुन्ध्यूरजहादुषा अनः ॥ ५ ॥

अयुद्धऽसेनः । विऽभ्वा । विऽभिन्दता । दाशत् । वृत्रऽहा । तुज्यानि । तेजते ।
इन्द्रस्य । वज्रात् । अबिभेत् । अभिऽश्नथः । प्र । अक्रामत् । शुन्ध्यूः । अजहात् । उषाः । अनः ॥

वेङ्कट० शत्रुभिः अयुध्यमानाऽऽत्मसेनः महता विभिन्दता आयुधेन प्रयच्छन् धनानि वृत्रहा हिंस्यानि तनूकरोति। इन्द्रस्य वज्रात् बिभेति अभिबाधमानात् उषाः प्र अक्रामत् च शोधयित्री, तथा आत्मीयम् [७]अनः च अजहात्[७] इति। तदुक्तम् 'एतदस्या अनः शये' ( ऋ ४,३०,११ ) इति ॥ ५ ॥

---

१-१. °भ्योदोश्च मूको. २. प्रोः मूको. ३. नास्ति अ[१]. ४-४. यास्यात् मूको. ५. ऋ··· मूको. ६. अमृत्नात् मूको. ७-७. अनश्च्यजहात् मूको.

एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञम् ।
मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता ॥ ६ ॥

एता । त्या । ते । श्रुत्यानि । केवला । यत् । एकः । एकम् । अकृणोः । अयज्ञम् ।
मासाम् । विऽधानम् । अदधाः । अधि । द्यवि । त्वया । विऽभिन्नम् । भरति । प्रऽधिम् । पिता ॥

**वेङ्कट०** एतानि तानि तव श्रोतव्यानि सर्वाणि, यस्मात् त्वम् एकः सन् यज्ञरहितम्[1] असुरम् एकम् [2]असहायम् अकृणोः[2] । तथा मासानाम्[3] विधातारं चन्द्रमसम् दिवि अदधाः । त्वया विभिन्नम् चक्रप्रधिम्[4] बिभर्ति पिता सूर्यः ॥ ६ ॥

[5]इति अष्टमाष्टके सप्तमाध्याये षड्विंशो वर्गः[5] ॥

[ १३९ ]

[5]देवगन्धर्वो विश्वावसुर्ऋषिः । सविता देवता, ४-६ आत्मा । त्रिष्टुप् छन्दः[5] ।

सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाँ अजस्रम् ।
तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥ १ ॥

सूर्यऽरश्मिः । हरिऽकेशः । पुरस्तात् । सविता । ज्योतिः । उत् । अयान् । अजस्रम् ।
तस्य । पूषा । प्रऽसवे । याति । विद्वान् । सम्ऽपश्यन् । विश्वा । भुवनानि । गोपाः ॥ १ ॥

**वेङ्कट०** विश्वावसुर्देवगन्धर्वः । सरणशीलरश्मिः हरिवर्णकेशः पुरस्तात् सविता अजस्रम् ज्योतिः उत् अयच्छत् । तस्य प्रसवे पूषा याति जानन् संपश्यन् विश्वानि भूतानि गोपायिता ॥ १ ॥

नृचक्षा एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् ।
स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥ २ ॥

नृऽचक्षाः । एषः । दिवः । मध्ये । आस्ते । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ।
सः । विश्वाचीः । अभि । चष्टे । घृताचीः । अन्तरा । पूर्वम् । अपरम् । च । केतुम् ॥ २ ॥

**वेङ्कट०** नृणां द्रष्टा एषः दिवः मध्ये आस्ते आपूरयन् द्यावापृथिव्यौ अन्तरिक्षम् च । सः विश्वमञ्चन्तीः दिशः अभि चष्टे द्रुतघृतमञ्चन्तीः स्रुचश्च । अत्र वाजसनेयकम्—"स्रुचश्चैतद्वेदीश्चाह 'अन्तरा पूर्वमपरं च केतुम्' इत्यन्तरेमं च लोकममुं चेत्येतत्" ( माश ९, २, ३, १७ ) इति ॥ २ ॥

रायो बुध्नः संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे धनानाम् ॥ ३ ॥

---

१. यज्ञेरहितम् मूको. २-२. °य कृणोः मूको. ३. त्रुटितम् मूको. ४. °प्रधिं मूको.
५-५. नास्ति मूको.

रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । विश्वा । रूपा । अभि । चष्टे । शचीभिः ।
देवःऽइव । सविता । सत्यऽधर्मा । इन्द्रः । न । तस्थौ । सम्ऽअरे । धनानाम् ॥ ३ ॥[१]

**वेङ्कट०** धनस्य मूलम् सङ्गमनः च वसूनाम् रश्मीनां विश्वानि रूपाणि अभि पश्यति प्रज्ञाभिः देवः इव सविता सत्यकर्मा, इन्द्रः इव[२] च तिष्ठति सङ्ग्रामे धनलाभाय इति ॥ ३ ॥

विश्वावसुं सोम गन्धर्वमापो ददृशुषीस्तदृतेना व्यायन् ।
तदन्ववैदिन्द्रो रारहाण आसां परि सूर्यस्य परिधीँरपश्यत् ॥ ४ ॥

विश्वऽवसुम् । सोम । गन्धर्वम् । आपः । ददृशुषीः । तत् । ऋतेन । वि । आयन् ।
तत् । अनुऽअवैत् । इन्द्रः । ररहाणः । आसाम् । परि । सूर्यस्य । परिऽधीन् । अपश्यत् ॥ ४ ॥

**वेङ्कट०** [३]सावित्रं महोऽमुष्मिन्[३] ॥ ४ ॥

विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वो रजसो विमानः ।
यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥ ५ ॥

विश्वऽवसुः । अभि । तत् । नः । गृणातु । दिव्यः । गन्धर्वः । रजसः । विऽमानः ।
यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म । धियः । हिन्वानः । धियः । इत् । नः । अव्याः ॥

**वेङ्कट०** विश्वावसुः अभि तत् नः गृणातु अन्तरिक्षे भवः[४] [५]गन्धर्वः उदकस्य[५] निर्माता — यत् सत्यम्, यत् च तत् सत्यं वयम् न जानीमः । कर्माणि क्षमानुषाणि प्रेरयन् अस्माकम् अपि कर्माणि अव्याः ॥ ५ ॥

सस्निमविन्दच्चरणे नदीनामपावृणोद् दुरो अश्मव्रजानाम् ।
प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम् ॥ ६ ॥

[६]सस्निम् । अविन्दत् । चरणे । नदीनाम्[६] । अप । अवृणोत् । दुरः । अश्मऽव्रजानाम् ।
प्र । आसाम् । गन्धर्वः । अमृतानि । वोचत् । इन्द्रः । दक्षम् । परि । जानात् । अहीनाम् ॥६॥

**वेङ्कट०** व्याप्तसङ्घानाम्[७] नदीनाम् । अथ आसाम् नदीनाम् उदकानि मनुष्येभ्यः प्र अवोचद् विश्वावसुः इन्द्रः च उदकेन प्रवृद्धम् परि जानाति मेघानाम् मध्ये मेघम् इति ॥ ६ ॥

[८]इति अष्टमाष्टके सप्तमाध्याये सप्तविंशो वर्गः[८] ॥

[ १४० ]

[१]अग्निः पावक ऋषिः । अग्निर्देवता । सतोबृहती छन्दः, १-२ विष्टारपङ्क्ती, ६ उपरिष्टाज्ज्योतिः[१] ।

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥ १ ॥

---

१. पादशः तु. ऋ १,९६,६;१०,१३६,४;३४,८. २. नास्ति मूको. ३-३. °त्रमहामु° वि[१,२]; °त्रमिहामु° अ.[१]. ४. नास्ति मूको. ५-५. °र्वकरेकस्य मूको. ६-६. निगमोऽयं या. (५,१) द्र. ७. व्याप्त° इस्यतः पूर्वं त्रुटितमिव भाष्यं द्र. ८-८. नास्ति मूको.

अग्ने । तव । श्रवः । वयः । महि । भ्राजन्ते । अर्चयः । विभावसो इति विभाऽवसो ।
बृहद्भानो इति बृहत्ऽभानो । शवसा । वाजम् । उक्थ्यम् । दधासि । दाशुषे । कवे ॥ १ ॥

**वेङ्कट०** अग्निः पावकः । वयःशब्दः पक्षिवचनः । अत्र वाजसनेयकम्—"'अग्ने तव श्रवो वयः' इति, धूमो वा अस्य श्रवो वयः स ह्येनममुष्मिँल्लोके श्रावयति, 'महि भ्राजन्ते अर्चयो विभावसो' इति, महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतद्, 'बृहद्भानो शवसा वाजमुक्थ्यम्' इति, बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येतद्, 'दधासि दाशुषे कवे' इति, यजमानो वै दाश्वान् दधासि यजमानाय कव इत्येतत्" ( माश ७,३,१,२९ ) इति ॥ १ ॥

पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ २ ॥

पावकऽवर्चाः । शुक्रऽवर्चाः । अनूनऽवर्चाः । उत् । इयर्षि । भानुना ।
पुत्रः । मातरा । विऽचरन् । उप । अवसि । पृणक्षि । रोदसी इति । उभे इति ॥ २ ॥

**वेङ्कट०** शोधकतेजस्कः ज्वलत्तेजस्कः अन्यूनतेजस्कः उत् दीप्यसे भानुना । पुत्रः स द्यावापृथिव्यौ विचरन् उप रक्षसि, पूरयसि 'तेजसा उभे[१] द्यावापृथिव्याविति । 'धूमेनामूं पूरयति वृष्टयेमाम्' ( तु. माश ७,३,१,३० ) इति वाजसनेयकम् ॥ २ ॥

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ ३ ॥

ऊर्जः । नपात् । जातऽवेदः । सुशस्तिऽभिः । मन्दस्व । धीतिऽभिः । हितः ।
त्वे इति । इषः । सम् । दधुः । भूरिऽवर्पसः । चित्रऽऊतयः । वामऽजाताः ॥ ३ ॥

**वेङ्कट०** अन्नस्य पुत्र! जातवेदः![२] सुष्टुतिभिः[३] हृष्टो भव कर्मभिः निहितः । त्वयि हवींषि सम् दधति[४] बहुरूपाः चित्ररक्षणाः वामजननाः[५] ॥ ३ ॥

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिं क्रतुम् ॥ ४ ॥

इरज्यन् । अग्ने । प्रथयस्व । जन्तुऽभिः । अस्मे इति । रायः । अमर्त्य ।
सः । दर्शतस्य । वपुषः । वि । राजसि । पृणक्षि । सानसिम् । क्रतुम् ॥ ४ ॥

**वेङ्कट०** अत्र वाजसनेयकम्—'मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्येतत्' ( माश ७,३,१,३२ ) इति । अस्मासु धनानि अमर्त्य! । सः[६] दर्शनीयस्य वपुषः वि राजसि । सम्पर्चय भजनीयम् कर्म । 'सनातनं क्रतुम्' ( माश ७,३,१,३२ ) इति वाजसनेयकम् इति ॥ ४ ॥

---

१-१. तेजसोते मूको. २. जातः मूको. ३. सुष्टुति मूको. ४. दर्शय मूको. ५. वामरजनाः अ[१].
६. सन् मूको.

इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिम् ॥ ५ ॥

इष्कर्तारम् । अध्वरस्य । प्रऽचेतसम् । क्षयन्तम् । राधसः । महः ।
रातिम् । वामस्य । सुऽभगाम् । महीम् । इषम् । दधासि । सानसिम् । रयिम् ॥ ५ ॥

**वेङ्कट०** संस्कर्तारम् अध्वरस्य प्रकृष्टज्ञानम् निवसन्तम् महतः धनस्य प्रदानाय, 'राधसि महतीत्यतेत्' ( माश ७,३,१,३३ ) इति वाजसनेयकम्, स्तौमि इति शेषः । स त्वं वननीयस्य सुखस्य दात्रीम् शोभनजननाम् महतीम् इषम् नि-दधासि सनातनम्[१] च रयिम् इति ॥ ५ ॥

ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ ६ ॥

ऋतऽवानम् । महिषम् । विश्वऽदर्शतम् । अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः ।
श्रुत्ऽकर्णम् । सप्रथःऽतमम् । त्वा । गिरा । दैव्यम् । मानुषा । युगा ॥ ६ ॥

**वेङ्कट०** सत्यवन्तम् महान्तम् विश्वस्य दर्शनीयम् अग्निम् यज्ञाय पुरः दधिरे जनाः । श्रुत्कर्णम्[२] सर्वतः पृथुतमम्[३] त्वा गिरा दैव्यम्[४] मानुषाणि युक्तानि भूतानि हवन्त इति ॥ ६ ॥

[५]इति अष्टमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[५] ॥

## [ १४१ ]

[१]अग्निस्तापस ऋषिः । विश्वे देवा देवता । अनुष्टुप् छन्दः[१] ।

अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव ।
प्र नो यच्छ विशस्पते धनदा असि नस्त्वम् ॥ १ ॥

अग्ने । अच्छ । वद । इह । नः । प्रत्यङ् । नः । सुऽमनाः । भव ।
प्र । नः । यच्छ । विशः । पते । धनऽदाः । असि । नः । त्वम् ॥ १ ॥

**वेङ्कट०** अग्निः तापसः । अग्ने! अभि-वद इह अस्माकम् अभ्युदयम् । अभिमुखः अस्माकम् सुमनाः भव । प्र यच्छ अस्मभ्यम् धनम् विशाम् पते! । धनदः भव अस्माकम् त्वम् इति ॥ १ ॥

प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवाः प्रोत सूनृता रायो देवी ददातु नः ॥ २ ॥

---

१. °तरं मूको. २. श्रुत्कर्णम् मूको. ३. °तरं मूको. ४. देव्यम् मूको. ५-५. नास्ति मूको.

प्र । नः । यच्छतु । अर्यमा । प्र । भर्गः । प्र । बृहस्पतिः ।
प्र । देवाः । प्र । उत । सूनृता । रायः । देवी । ददातु । नः ॥ २ ॥

**वेङ्कट०** एते धनानि अस्मभ्यम् प्रयच्छन्तु । सूनृता प्रियसत्यवाग्रूपा देवी इति ॥ २ ॥

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।
आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ३ ॥

सोमम् । राजानम् । अवसे । अग्निम् । गीःऽभिः । हवामहे ।
आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ ३ ॥

**वेङ्कट०** निगदसिद्धेति ॥ ३ ॥

इन्द्रवायू बृहस्पतिं सुहवेह हवामहे ।
यथा नः सर्व इज्जनः संगत्यां सुमना असत् ॥ ४ ॥

इन्द्रवायू इति । बृहस्पतिम् । सुऽहवा । इह । हवामहे ।
यथा । नः । सर्वः । इत् । जनः । सम्ऽगत्याम् । सुऽमनाः । असत् ॥ ४ ॥

**वेङ्कट०** स्वाह्वानौ[1] इन्द्रवायू बृहस्पतिम् च इह हवामहे । यथा अस्माकम् सर्वः एव जनः सङ्गमने सुमनाः भवति, तथा अमी कुर्वन्तु इति ॥ ४ ॥

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ॥ ५ ॥

अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ।
वातम् । विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् ॥ ५ ॥

**वेङ्कट०** स्तोतः![2] अर्यमादीन् दानाय चोदय इति ॥ ५ ॥

त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देवतातये रायो दानाय चोदय ॥ ६ ॥

त्वम् । नः । अग्ने । अग्निऽभिः । ब्रह्म । यज्ञम् । च । वर्धय ।
त्वम् । नः । देवऽतातये । रायः । दानाय । चोदय ॥ ६ ॥

**वेङ्कट०** त्वम् अस्माकम् अग्ने! अन्यैः अग्निभिः अन्नम् ( तु. निघ २,७ ) यज्ञम् च वर्धय । त्वम् अस्माकम् यज्ञाय धनानि प्रेरय दानाय इति ॥ ६ ॥

[3]इति अष्टमाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः[3] ॥

---

१. स्वह्वानौ मूको. २. स्तोता मूको. ३-३. नास्ति मूको.

## [ १४२ ]

[1]शार्ङ्गा ऋषयः ( १-२ जरिता, ३-४ द्रोणः, ५-६ सारिसृक्तः, ७-८ स्तम्बमित्रः )। अग्निर्देवता।
त्रिष्टुप् छन्दः; १,२ जगत्यौ; ७,८ अनुष्टुभौ[1] ।

अयमग्ने जरिता त्वे अभूदपि सहसः सूनो नह्य१न्यदस्त्याप्यम् ।
भद्रं हि शर्म त्रिवरूथमस्ति त आरे हिंसानामप दिद्युमा कृधि ॥ १ ॥

अयम् । अग्ने । जरिता । त्वे इति । अभूत् । अपि । सहसः । सूनो इति । नहि । अन्यत् । अस्ति । आप्यम् ।
भद्रम् । हि । शर्म । त्रिऽवरूथम् । अस्ति । ते । आरे । हिंसानाम् । अप । दिद्युम् । आ । कृधि ॥

वेङ्कट० जरिता, द्रोणः, सारिसृक्तः स्तम्बमित्रः इति शार्ङ्गाः[2] द्व्यृचाः। मन्दपालोऽपुत्रः[3] स्वर्गं लोकमलभमानः[4] इमं लोकमागत्य तानुत्पादयामास[5] इति इतिहासः। खाण्डवे दावेन परिवृतास्तेऽग्निं स्तुवन्ति। अयम् अग्ने! जरिता त्वयि अपि भवतु सहसः पुत्र!। नहि अन्यत् अस्य अस्ति ज्ञातेयम्। भद्रम् हि [6]भवनम् त्रिछदिष्कम्[6] अस्ति ते। स त्वं दूरे कुरु दीप्तिम् अस्मान् हिंसन्तीम् त्वदीयाम्[7] इति ॥ १ ॥

प्रवत् ते अग्ने जनिमा पितूयतः साचीव विश्वा भुवना न्यृञ्जसे ।
प्र सप्तयः प्र सनिषन्त नो धियः पुरश्चरन्ति पशुपा इव त्मना ॥ २ ॥

प्रऽवत् । ते । अग्ने । जनिम । पितुऽयतः । साचीऽइव । विश्वा । भुवना । नि । ऋञ्जसे ।
प्र । सप्तयः । प्र । सनिषन्त । नः । धियः । पुरः । चरन्ति । पशुपाःऽइव । त्मना ॥ २ ॥

वेङ्कट० प्रगमनवत् तव अग्ने! जन्म प्रादुर्भावः अन्नवतः[8]। साची इव विश्वानि आरण्यानि भूतानि प्रसाधयसि। प्र भजन्ते अस्माकम् बुद्धयः त्वदीयाः[9] सप्तयः[10] बडवाः। एकः प्र-शब्दः पूरकः। तव पुरस्तात् ताः चरन्ति गोपालाः इव आत्मना एव ॥ २ ॥

उत वा उ परि वृणक्षि बप्सद्बहोरग्न उलपस्य स्वधावः ।
उत खिल्या उर्वराणां भवन्ति मा ते हेतिं तविषीं चुक्रुधाम ॥ ३ ॥

उत । वै । ऊँ इति । परि । वृणक्षि । बप्सत् । बहोः । अग्ने । उलपस्य । स्वधाऽवः ।
उत । खिल्याः । उर्वराणाम् । भवन्ति । मा । ते । हेतिम् । तविषीम् । चुक्रुधाम ॥ ३ ॥

वेङ्कट० अपि च परि वृणक्षि[11] बलवन्! अग्ने! भक्षयन् बहुलम् तृणजातम्। अपि च त्वया भवन्ति[12] उर्वराणाम् सस्यसम्पन्नानां भूमीनाम् खिल्याः रूक्षा[13] देशाः। [14]मा ते तां[14] प्रवृद्धाम् ज्वालाम् चुक्रुधाम इति ॥ ३ ॥

---

१-१. नास्ति मूको. २. गार्गाः मूको. ३-३. °पालोः पुत्र मूको. ४. लभमानः मूको. ५. चनुत्पा° मूको. ६-६. मगच्छन्ति छदि° मूको. ७. °यम् मूको. ८. अन्नतव मूको. ९. तदीयाः मूको. १०. सप्त मूको. ११. पृच्छसि मूको. १२. भवति मूको. १३. ऋक्षा मूको. १४-१४. मात्रेत वि[2]; मात्रेतव् अ[1].

यदुद्वतो निवतो यासि बप्सत् पृथगेषि प्रगर्धिनीव सेना ।
यदा ते वातो अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥४॥

यत् । उत्ऽवतः । निऽवतः । यासि । बप्सत् । पृथक् । एषि । प्रगर्धिनीऽइव । सेना ।
यदा । ते । वातः । अनुऽवाति । शोचिः । वप्ताऽइव । श्मश्रु । वपसि । प्र । भूम ॥ ४ ॥

**वेङ्कट०** यत् उद्वतः निवतः च यासि भक्षयन्, तथा त्वम् पृथक् गच्छसि शत्रून् प्रकर्षेण अभिकाङ्क्षयन्ती[1] इव सेना, यदा ते वातः अनुगच्छति तेजः, तदानीं [2]त्वं भूमिम् प्र वपसि[2] वप्ता इव श्मश्रूणीति ॥ ४ ॥

प्रत्यस्य श्रेणयो ददृश्र एकं नियानं बहवो रथासः ।
बाहू यदग्ने अनुमर्मृजानो न्यङ्ङुत्तानामन्वेषि भूमिम् ॥ ५ ॥

प्रति । अस्य । श्रेणयः । ददृश्रे । एकम् । निऽयानम् । बहवः । रथासः ।
बाहू इति । यत् । अग्ने । अनुऽमर्मृजानः । न्यङ् । उत्तानाम् । अनुऽएषि । भूमिं ॥ ५ ॥

**वेङ्कट०** प्रति दृश्यन्ते अस्य श्रेणयः, एकमार्गम् बहवः रथाः अभिगच्छन्ति, बाहुभ्याम् यदा[3] त्वम् अग्ने! भूमिम् अनुमर्मृजानः न्यङ् उत्तानाम् अनुगच्छसि भूमिम् इति ॥ ५ ॥

उत् ते शुष्मा जिहतामुत् ते अर्चिरुत् ते अग्ने शशमानस्य वाजाः ।
उच्छ्वञ्चस्व नि नम वर्धमान आ त्वाद्य विश्वे वसवः सदन्तु ॥ ६ ॥

उत् । ते । शुष्माः । जिहताम् । उत् । ते । अर्चिः । उत् । ते । अग्ने । शशमानस्य । वाजाः ।
उत् । श्वञ्चस्व । नि । नम । वर्धमानः । आ । त्वा । अद्य । विश्वे । वसवः । सदन्तु ॥ ६ ॥

**वेङ्कट०** उत् जिहताम् तव शोषकरा रश्मयः, एवम् अर्चिः। उत् जिहताम् च तव अग्ने! चलतः बलानि। स त्वम् उत् श्वञ्चस्व नि नम च अरण्ये वर्धमानः। आ सीदन्तु त्वाम् अद्य विश्वे वसवः ॥ ६ ॥

अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
अन्यं कृणुष्वेतः पन्थां तेन याहि वशाँ अनु ॥ ७ ॥

अपाम् । इदम् । निऽअयनम् । समुद्रस्य । निऽवेशनम् ।
अन्यम् । कृणुष्व । इतः । पन्थाम् । तेन । याहि । वशान् । अनु ॥ ७ ॥

**वेङ्कट०** अपाम् इदम् न्ययनम् अस्तु समुद्रस्य च निवेशनम्, यत्र वयं वर्तामहे। अन्यम् कुरु इतः पन्थानम्। तेन पथा गच्छ कान्तान् वनस्पतीन् प्रति ॥ ७ ॥

---

१. °ङ्क्षयव मूको. २-२. त्वं ··· मूको. ३. यथा मूको.

आर्यने ते परार्यणे दूर्वा रोहन्तु पुष्पिणीः । ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ॥८॥

आऽअर्यने । ते । पराऽअर्यने । दूर्वाः । रोहन्तु । पुष्पिणीः ।

ह्रदाः । च । पुण्डरीकाणि । समुद्रस्य । गृहाः । इमे ॥ ८ ॥

**वेङ्कट०** अस्मिन् देशे यत्र त्वम् आगच्छसि, यतो वा परागच्छसि, तत्र दूर्वाः रोहन्तु पुष्पवत्यः, तथा ह्रदाः च सन्तु, तत्र[1] पुण्डरीकाणि च। समुद्रस्य गृहाः इमे भवन्तु। इति आत्मीयस्य देशस्याऽदाहम् आशास्त इति ॥ ८ ॥

[2]इति अष्टमाष्टके सप्तमाध्याये त्रिंशो वर्गः[2] ॥

व्याख्यत् सप्तममध्यायम् अष्टके माधवोऽष्टमे ।
चोलेषु निवसन् ग्रामे गोमत्यार्यैः समावृते ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके सप्तमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये अष्टमाष्टके सप्तमोऽध्यायः ॥



१. त्रे मूको. २-२. नास्ति मूको.

अथ अष्टमोऽध्यायः

**वेङ्कट०** 'त्यं चिदत्रिम्' अथाध्यायं व्याचिख्यासति माधवः।
वेदार्थस्य परार्थेभ्यो वैशेष्यं सम्प्रदर्शयन् ॥ १ ॥

बहुयोजनविस्तीर्णा बहुयोजनमायताः।
समुद्रमध्ये तिष्ठन्ते द्वीपा बाह्याभ्यधिष्ठिताः[1] ॥ २ ॥

धर्मबुद्ध्याऽनुतिष्ठन्ति ते स्वधर्मान् प्रयत्नतः।
तदागमानां प्रामाण्यम् आचारात् किं न कल्प्यते ॥ ३ ॥

आप्तप्रणीततामेते यदि वाऽपौरुषेयताम्[2]।
वैदिकाः कल्पयन्त्येवं किं न बाह्येषु कल्प्यते ॥ ४ ॥

उच्यते वर्णविभ्रष्टाः प्रविशन्त्यधुनाऽपि च।
बौद्धेषु ते न चास्मासु तेनार्वाक्कालिका इमे[3] ॥ ५ ॥

तदुक्तम्—'या वेदबाह्याः स्मृतयो [4]याश्च काश्च[4] कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ ६ ॥

उत्पद्यन्ते च्यवन्ते[5] च यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च' ॥ ७ ॥ (मस्मृ १२,९५;९६) इति।

किञ्च—आगोपालं विप्रथितः प्रादुर्भावो महात्मनः।
विप्रलोपाय धर्मस्य वक्तायं भगवान् हरिः ॥ ८ ॥

इतिहासपुराणानां कर्तारो लोकसम्मताः।
अहैतुकास्तत्त्वपराः सर्वे वेदं समाश्रिताः ॥ ९ ॥

मन्वादयश्चाऽऽप्ततमा बहवो वेदमाश्रिताः।
पाञ्चरात्रे पाशुपते वेदा अङ्गीकृतास्तथा ॥ १० ॥

सर्वेषु जनपदेषु शब्दा येऽत्र समाहिताः।
कुर्वन्तो लक्षणं तेषां वेदाङ्गत्वेन चक्रिरे ॥ ११ ॥

आतिष्ठन्ति[6] ज्योतिषोक्तं बाह्याः सर्वे प्रयत्नतः।
वेदशेषतया तच्च सम्प्रणीतं महर्षिभिः ॥ १२ ॥

---

१. बाह्यैरधि° वेंऋअ.    २. वापौरु° मूको.    ३. तुमे वि[१] अ[१].    ४-४. याः काश्चन वेंऋअ.
५. व्यथन्ते मूको.    ६. अनुति° वि[१].

राजानः सम्प्रणेतारो मार्गं वैदिकमास्थिताः ।
चातुर्वर्ण्यपराः सर्वे न त्वन्यं मार्गमाश्रिताः[1] ॥ १३ ॥

किञ्चाऽऽर्याः सङ्गता [2]बौद्धैर्न राजन्ते[2] गतप्रभाः ।
तस्मान्न वेदसदृशम् अन्यत् किञ्चन विद्यते ॥ १४ ॥

आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव च ।
उपवेदान् वदन्त्येतान् ऋषयः सुश्रुतादयः ॥ १५ ॥

यत्तु[3] द्वीपेषु बौद्धानां बहुत्वं सम्प्रदर्शितम् ।
तत्र ब्रूमोऽधर्मपरा बहवो द्वीपवासिनः ॥ १६ ॥

[4]भूयांसः स्त्रीपरास्तत्र[4] स्तेयहिंसापरास्तथा ।
[5]बहुत्वाद् देवनपराः सुरापानादितत्पराः ॥ १७ ॥

तस्मात्तत्रत्य आचारः केनचित् सम्प्रवर्तितः ।
इदानीमपि तत्रत्यैः स आचारोऽनुवर्त्यते[5] ॥ १८ ॥

[6]किञ्चाग्निवायुसूर्येषु प्रत्यक्षेष्वेव वैदिकाः ।
निर्वाहं कर्मजगतः[8] स्तुतिं कर्म च कुर्वते ॥ १९ ॥

अपि चाङ्गैरुपाङ्गैश्च वेदा युक्ताः स्वरैरपि ।
पश्यन्तस्तानिमान् प्राज्ञा नान्यं मार्गमुपासते[6] ॥ २० ॥ इति[7] ॥

## [ १४३ ]

[9]अत्रिः साङ्ख्य ऋषिः । अश्विनौ देवता । अनुष्टुप् छन्दः[9] ।

त्यं चि॒दत्रि॑मृत॒जुर॒मर्थ॒मश्वं॒ न यात॑वे । क॒क्षीव॑न्तं॒ यदी॒ पुना॒ रथं॒ न कृ॑णु॒थो नव॑म् ॥१॥

त्यम् । चि॒त् । अत्रि॑म् । ऋ॒त॒ऽजुर॑म् । अर्थ॑म् । अश्व॑म् । न । यात॑वे ।
क॒क्षीव॑न्तम् । यदि॑ । पु॒न॒रिति॑ । रथ॑म् । न । कृ॒णु॒थः । नव॑म् ॥ १ ॥

**वेङ्कट॰** अत्रिः साङ्ख्यः । तम् च एनम् अत्रिम् सत्येन जीर्णं कुरुतम् अभिलषितम् अर्थम् यातुम् अश्वम् इव समर्थम् । पुनर्नवं कुरुतमित्यर्थः । कक्षीवन्तम् ऋषिं युवाम् यदि पुनः अपि नवम् अकुरुतं जीर्णम् इव रथम् इति ॥ १ ॥

---

१. °मास्थिताः वेंऋअ. २-२. °र्नरास्ते ते वि[2] अ[1]. ३. यत्तद् वि[2] अ[1]. ४-४. °सस्त्रिपुरा° वि[2] अ[1]. ५-५. बहुत्वादेव न सता त्वदाचारोऽनुवर्त्यते वि[2] अ[1]. ६-६. नास्ति वि[2] अ[1]. ७. नास्ति वि[1]; इति कारिका अ[1]. ८. कर्षज° मूको. ९-९. नास्ति मूको.

त्यं चिदश्वं न वाजिनमरेणवो यमत्नत। दृळ्हं ग्रन्थिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥२॥

त्यम् । चित् । अश्वम् । न । वाजिनम् । अरेणवः । यम् । अत्नत ।
दृळ्हम् । ग्रन्थिम् । न । वि । स्यतम् । अत्रिम् । यविष्ठम् । आ । रजः ॥ २ ॥

**वेङ्कट०** तम् इमम् अश्वम् इव बलिनम् कक्ष्याभिः अरेणवः यम् जराभिः ततवन्तः[1] बबन्धुः[2], तम् इमं जराबद्धं दृढम् इव ग्रन्थिम् वि मुञ्चतम् अत्रिम्[3] युवतमम्, आ गच्छतु तेजः ॥ २ ॥

नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः। अथा हि वां दिवो नरा पुनः स्तोमो न विशसे ।३।

नरा । दंसिष्ठौ । अत्रये । शुभ्रा । सिसासतम् । धियः ।
अथ । हि । वाम् । दिवः । नरा । पुनरिति । स्तोमः । न । विऽशसे ॥ ३ ॥

**वेङ्कट०** नेतारौ! अत्यन्तं [4]दर्शनीयौ! युवां[4] मह्यम् अत्रये शोभमानौ[5] सम्भक्तुम् इच्छतम्[6] स्तुतीः। अथ हि युवयोः दीप्तः अयं नरौ! पुनः आयुषो मध्ये स्तोता मृत्योः न विशसनाय भवति ॥ ३ ॥

चिते तद्वां सुराधसा रातिः सुमतिरश्विना ।
आ यन्नः सदने पृथौ समने पर्षथो नरा ॥ ४ ॥

चिते । तत् । वाम् । सुऽराधसा । रातिः । सुऽमतिः । अश्विना ।
आ । यत् । नः । सदने । पृथौ । समने । पर्षथः । नरा ॥ ४ ॥

**वेङ्कट०** प्रज्ञानाय[7] आसीत् तदानीम् युवयोः हे सुधनौ! दानम् सुमतिः च अश्विनौ!। [8]आ पर्षथः[8] यदा अस्मान् गृहे विस्तीर्णे सङ्ग्रामे च [9]नरौ! युवाम्[9] ॥ ४ ॥

युवं भुज्युं समुद्र आ रजसः पार ईङ्खितम् ।
यातमच्छा पतत्रिभिर्नासत्या सातये कृतम् ॥ ५ ॥

युवम् । भुज्युम् । समुद्रे । आ । रजसः । पारे । ईङ्खितम् ।
यातम् । अच्छ । पतत्रिऽभिः । नासत्या । सातये । कृतम् ॥ ५ ॥

**वेङ्कट०** युवाम् भुज्युम्[10] तौग्र्यम् उदधौ उदकस्य पारणे[11] भयेन कम्पमानम् अभ्ययातम्[12] नौभिः। अपि च तम् नासत्यौ! गृहस्य भजनाय कृतम् इति ॥ ५ ॥

आ वां सुम्नैः शंयू इव मंहिष्ठा विश्ववेदसा ।
समस्मे भूषतं नरोत्सं न पिप्युषीरिषः ॥ ६ ॥

---

१. तनित° मूको. २. बन्धुः मूको. ३. अतिम् मूको. ४-४. युवयोर्यो मूको. ५. °मानेन मूको ६. इच्छत मूको. ७. प्रज्ञाता मूको. ८-८. आतिवर्षथः मूको. ९-९. नरो··· मूको. १०. भुज्यम् मूको. ११. वारणे मूको. १२. अत्यया° मूको.

आ । वाम् । सुम्नैः । शंयूइवेति शंयूऽईव । मंहिष्ठा । विश्वंऽवेदसा ।
सम् । अस्मे इति । भूषतम् । नरा । उत्सम् । न । पिप्युषीः । इषः ॥ ६ ॥

**वेङ्कट०** सम् आ भवतम् युवाम् सुखैः बार्हस्पत्यौ इव। शंयू-द्विवचनम् अश्विनोः द्वित्वकृतम्। दातृतमौ! सर्वधनौ! अस्मान्, कूपम् इव पूरयन्त्यः आपः ॥ ६ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये प्रथमो वर्गः[1] ॥

## [ १४४ ]

[1]सुपर्णः तार्क्ष्यपुत्र ऋषिः, ऊर्ध्वकृशनो यामायनो वा । इन्द्रो देवता । गायत्री छन्दः, द्वितीया बृहती, पञ्चमी सतोबृहती, षष्ठी विष्टारपङ्क्तिः[1] ।

अयं हि ते अमर्त्य इन्दुरत्यो न पत्यते । दक्षो विश्वायुर्वेधसे ॥ १ ॥

अयम् । हि । ते । अमर्त्यः । इन्दुः । अत्यः । न । पत्यते । दक्षः । विश्वऽआयुः । वेधसे ॥ १ ॥

**वेङ्कट०** सुपर्णः तार्क्ष्यपुत्रः । अयम् ते अमर्त्यः इन्दुः अश्वः इव गच्छति वृद्धः सर्वान्न. विधात्रे ॥१॥

अयमस्मासु काव्य ऋभुर्वज्रो दास्वते ।
अयं बिभर्त्यूर्ध्वकृशनं मदमृभुर्न कृत्व्यं मदम् ॥ २ ॥

अयम् । अस्मासु । काव्यः । ऋभुः । वज्रः । दास्वते ।
अयम् । बिभर्ति । ऊर्ध्वऽकृशनम् । मदम् । ऋभुः । न । कृत्व्यम् । मदम् ॥ २ ॥

**वेङ्कट०** अयम् अस्मासु इन्दुः अभिषुतः स्तोतव्यः, दीप्तम् इव आयुधम् इन्द्राय बो भवति। अयम् धावति अभिषववेलायाम् उच्छ्रितहिरण्यम् रसम् कर्मण्यम् आदित्यः इव उदकमिति ॥२॥

घृषुः श्येनाय कृत्वन आसु स्वासु वंसगः । अव दीधेदहीशुवः ॥ ३ ॥

घृषुः । श्येनाय । कृत्वने । आसु । स्वासु । वंसगः । अव । दीधेत् । अहीशुवः ॥ ३ ॥

**वेङ्कट०** घर्षणशीलः सोमः श्येनाय आहरणं कुर्वते [2]आसु अन्तरीक्ष्यासु[2] स्वासु अप्सु स्थितः वननीयगमनः अव दीधेत् अवदीप्तवान् [3]अहीशुवः अहिनाम्नः असुरस्य[3] बाधितुः इन्द्रस्यार्थम् इति ॥ ३ ॥

यं सुपर्णः परावतः श्येनस्य पुत्र आभरत् । शतचक्रं योऽह्यो वर्तनिः ॥ ४ ॥

यम् । सुऽपर्णः । पराऽवतः । श्येनस्य । पुत्रः । आ । अभरत् । शतऽचक्रम् । यः । अह्यः । वर्तनिः ॥

**वेङ्कट०** यम् सुपर्णः [4]दूरात् दिवः[4] श्येनस्य पुत्रः आ जहार। यः च सोमो बहुचक्रम्[5] आत्मरथं सर्वदा वर्तयति। उत्तरत्र सम्बन्धः ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. आस्यन्त° मूको ३-३ अभिशुवो ⋯ सुर य मूको. ४-४. °रादिव मूको. ५. °चक्राम् मूको.

यं ते॑ श्ये॒नश्चारु॑मवृ॒कं प॒दाभ॑रदरु॒णं मा॒नमन्ध॑सः ।
ए॒ना वयो॒ वि ता॒र्यायु॑र्जी॒वसं॑ ए॒ना जा॑गार ब॒न्धुता॑ ॥ ५ ॥

यम् । ते॒ । श्ये॒नः । चारु॑म् । अ॒वृ॒कम् । प॒दा । आ । अभ॑रत् । अ॒रु॒णम् । मा॒नम् । अन्ध॑सः ।
ए॒ना । वयः॑ । वि । ता॒रि॒ । आयुः॑ । जी॒वसे॑ । ए॒ना । जा॒गा॒र॒ । ब॒न्धुता॑ ॥ ५ ॥

वेङ्कट० यम् तव इन्द्र! श्येनः चारुम् हिंसारहितम् दिवः सोमम्[1] पद्भयाम् आहृतवान् अरुणवर्णम् [2]अन्नस्य यागद्वारा[2] निर्मातारम् । अनेन सोमेन [3]वि तारि अस्मभ्यम्[3] अन्नम् आयुः जीवनाय । अनेनैव जागर्ति बन्धुसमूहः ॥ ५ ॥

ए॒वा तदिन्द्र॒ इन्दु॑ना दे॒वेषु॑ चिद्धारयाते॒ महि॒ त्यजः॑ ।
क्रत्वा॒ वयो॒ वि ता॒र्यायुः॑ सुक्रतो॒ क्रत्वा॒यम॒स्मदा सु॒तः ॥ ६ ॥

ए॒व । तत् । इन्द्रः॑ । इन्दु॑ना । दे॒वेषु॑ । चि॒त् । धा॒र॒या॒ते॒ । महि॑ । त्यजः॑ ।
क्रत्वा॑ । वयः॑ । वि । ता॒रि॒ । आयुः॑ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो । क्रत्वा॑ । अ॒यम् । अ॒स्मत् । आ । सु॒तः ॥

वेङ्कट० एवम् तम् इन्द्रः सोमेन स्तोतृषु धारयति महान्तम्[4] त्यजः धनस्य[5] त्यागम् । कर्मणा त्वया अन्नम् आयुः च सुप्रज्ञ! स्तोतृषु उक्तम् (?)। कर्मणा अयम् च सोमः अस्मासु अभिषुत इति ॥ ६ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये द्वितीयो वर्गः[6] ॥

[ १४५ ]

[1]इन्द्राणी ऋषिः । सपत्नीबाधनम् (उपनिषत्) देवता । अनुष्टुप् छन्दः, षष्ठी पङ्क्तिः[1] ।

इ॒मां ख॑ना॒म्योष॑धिं वी॒रुधं॒ बल॑वत्तमाम् ।
यया॑ स॒पत्नीं॒ बाध॑ते॒ यया॑ संवि॒न्दते॒ पति॑म् ॥ १ ॥

इ॒माम् । ख॒ना॒मि॒ । ओष॑धिम् । वी॒रुध॑म् । बल॑वत्ऽतमाम् ।
यया॑ । स॒ऽपत्नी॑म् । बाध॑ते । यया॑ । स॒म्ऽवि॒न्दते॑ । पति॑म् ॥ १ ॥

वेङ्कट० इन्द्राणी । इमाम् [7]खनित्रेण खनामि[7] ओषधिम्, या इयं वीरुत् बलवत्तमा भवति । यया सपत्नीम् बाधते सपत्नी, यया च संलभते पतिम् इति ॥ १ ॥

उत्ता॑नपर्णे॒ सुभ॑गे॒ देव॑जूते॒ सह॑स्वति ।
स॒पत्नीं॑ मे॒ परा॑ धम॒ पतिं॑ मे॒ केव॑लं कुरु ॥ २ ॥

---

१. श्येनः मूको. २-२. अन्नं ··· मूको. ३-३. वितार्यम् मूको. ४. मह मूको. ५. धनन्य· मूको. ६-६. नास्ति मूको. ७-७. खनामि खनित्रेण अ[1].

उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति ।
सऽपत्नीम् । मे । परा । धम । पतिम् । मे । केवलम् । कुरु ॥ २ ॥

**वेङ्कट०** उत्तानपर्णे! कल्याणि! देवैः प्रेरिते! बलवति! सपत्नीम् मे परा धम, पतिम् मे असाधारणम्[1] कुरु ॥ २ ॥

उत्तराहमुत्तर उत्तरेदुत्तराभ्यः । अथा सपत्नी या ममाधरा साधराभ्यः ॥ ३ ॥

उत्ऽतरा । अहम् । उत्ऽतरे । उत्ऽतरा । इत् । उत्ऽतराभ्यः ।
अथ । सऽपत्नी । या । मम । अधरा । सा । अधराभ्यः ॥ ३ ॥

**वेङ्कट०** उत्तरा अहम् भूयासं हे उद्भित्तरे!, उत्तरा एव उत्तराभ्यः । अथ सपत्नी या मम, सा अधरा[2] भवतु अधराभ्यः अपीति ॥ ३ ॥

नह्यस्या नाम गृभ्णामि नो अस्मिन् रमते जने ।
परामेव परावतं सपत्नीं गमयामसि ॥ ४ ॥

नहि । अस्याः । नाम । गृभ्णामि । नो इति । अस्मिन् । रमते । जने ।
पराम् । एव । पराऽवतम् । सऽपत्नीम् । गमयामसि ॥ ४ ॥

**वेङ्कट०** नहि अस्याः सपत्न्याः[3] अहम् नाम गृह्णामि, संवासात् न च इयम् अस्मिन् जने रमताम् । अपि च पराम् एव परावतम् दूरात् दूरम् सपत्नीम् गमयामः ॥ ४ ॥

अहमस्मि सहमानाथ त्वमसि सासहिः ।
उभे सहस्वती भूत्वी सपत्नीं मे सहावहै ॥ ५ ॥

अहम् । अस्मि । सहमाना । अथ । त्वम् । असि । ससहिः ।
उभे इति । सहस्वती इति । भूत्वी । सऽपत्नीम् । मे । सहावहै ॥ ५ ॥

**वेङ्कट०** अहम् अस्मि शत्रूणाम् अभिभवित्री, त्वम् च भवसि सासहिः । उभे सहस्वत्यौ भूत्वा मदीयाम् सपत्नीम् अभिभवाव इति ॥ ५ ॥

उप तेऽधां सहमानामभि त्वाधां सहीयसा ।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥ ६ ॥

उप । ते । अधाम् । सहमानाम् । अभि । त्वा । अधाम् । सहीयसा ।
माम् । अनु । प्र । ते । मनः । वत्सम् । गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥ ६ ॥

---

१. साधा° मूको. २. अधारा मूको ३. सपत्न्य मूको.

**वेङ्कट०** उप दधामि सह पते! ते सहमानाम् इमां पाठाम्। अभि दधामि त्वाम् अभिभावुकेन मनसा। माम् अनु प्र गच्छतु तव मनः वत्सम् गौः इव मार्गेण इव च उदकमिति ॥ ६ ॥

[१]इति अष्टमाष्टके अष्टमाध्याये तृतीयो वर्गः[१] ॥

[ १४६ ]

[१]ऐरम्मदो देवमुनिर्ऋषिः। अरण्यानी देवता। अनुष्टुप् छन्दः[१]।

अर॑ण्या॒न्यर॑ण्यान्य॒सौ या प्रेव॒ नश्य॑सि ।
कथा ग्राम॒ं न पृ॑च्छसि॒ न त्वा॒ भीरि॑व विन्दती३ँ ॥ १ ॥

अर॑ण्यानि । अर॑ण्यानि । अ॒सौ । या । प्रऽइ॑व । नश्य॑सि ।
क॒था । ग्राम॑म् । न । पृ॒च्छ॒सि॒ । न । त्वा॒ । भीःऽइ॑व । वि॒न्द॒ती३ँ ॥ १ ॥[२]

**वेङ्कट०** देवमुनिः ऐरम्मदः। हे अरण्यानि! या[३] असौ त्वम् अरण्यानि वनानि [४]प्राची इव[४] प्राप्नोषि, सा त्वम् आत्मनो निवासाय कथम् ग्रामम् न पृच्छसि — क विद्यते ग्राम इति। तत्र विस्मयः। न त्वा नूनम् भीः विन्दति[५] इव इति ॥ १ ॥

वृ॒षा॒र॒वाय॒ वद॑ते॒ यदु॒पाव॑ति चिच्चि॒कः । आ॒घा॒टिभि॑रिव धा॒वय॑न्नरण्या॒निर्म॑हीयते ॥२॥

वृ॒ष॒ऽर॒वाय॑ । वद॑ते । यत् । उ॒प॒ऽअव॑ति । चि॒च्चि॒कः ।
आ॒घा॒टिभिः॑ऽइव । धा॒वय॑न् । अ॒र॒ण्या॒निः । म॒ही॒य॒ते ॥ २ ॥

**वेङ्कट०** वृषरवनाम्ने पक्षिणे शब्दायमानाय तमुद्दिश्य यदा उपगच्छति चिच्चिकः। स नूनम् अस्मिन् शब्दायमाने तम् अनुगच्छति। तदानीम् आघाटिभिः आहन्यमानैर्वाद्यैः परान् धावयन् [६]राजा इव[६] अरण्यानिः पूज्यते तथा प्रतिभातीति ॥ २ ॥

उ॒त गाव॑इवा॒दन्त्यु॒त वेश्मे॑व दृश्यते ।
उ॒तो अ॑रण्या॒निः सा॒यं श॑क॒टीरि॑व सर्जति ॥ ३ ॥

उ॒त । गावः॑ऽइव । अ॒द॒न्ति॒ । उ॒त । वेश्म॑ऽइव । दृ॒श्य॒ते॒ ।
उ॒तो इति॑ । अ॒र॒ण्या॒निः । सा॒यम् । श॒क॒टीः॑ऽइव । स॒र्ज॒ति॒ ॥ ३ ॥

**वेङ्कट०** अपि गावः इव मृगाः[७] सस्यानि अदन्ति। अपि च क्वचित् वेश्म इव कल्याणम् दृश्यते। अपि च अरण्यानिः सायम् शकटीः [८]वि सृजति[८] इव ग्रामं प्रति गच्छन्तीः[९] शरान् इव धानुष्कः ॥ ३ ॥

गाम॒ङ्गैष आ ह्व॑यति॒ दार्व॒ङ्गैषो अपा॑वधीत् । वस॑न्नरण्या॒न्यां सा॒यमक्रु॑क्ष॒दिति॑ मन्यते ॥४॥

---

१-१. नास्ति मूको. २. ऋगेषा या. ( ९,२९-३० ) व्याख्याता द्र. ३. यः मूको.
४-४ पराचीव या. ५. विदन्ति मूको. ६-६. आजेव मूको. ७. मुग्राः मूको. ८-८. व्यसृ° मूको.
९. °च्छति मूको.

गाम् । अङ्ग । एषः । आ । ह्वयति । दारु । अङ्ग । एषः । अप । अवधीत् ।
वसन् । अरण्यान्याम् । सायम् । अक्रुक्षत् । इति । मन्यते ॥ ४ ॥

**वेङ्कट०** ग्रामं प्रति गमनाय गाम् चरन्तीम् क्षिप्रम् अयम् आ ह्वयति । अथ अपरः शीघ्रं गन्तुमिच्छन् इन्धनम् क्षिप्रम् अपहन्ति छिनत्ति । ततश्च वसन् अरण्यान्याम् सायम् अत्क्रोशति इति मन्यते ॥ ४ ॥

न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥ ५ ॥

न । वै । अरण्यानिः । हन्ति । अन्यः । च । इत् । न । अभिऽगच्छति ।
स्वादोः । फलस्य । जग्ध्वाय । यथाऽकामम् । नि । पद्यते ॥ ५ ॥

**वेङ्कट०** न खलु अरण्यानिः स्वयं कञ्चन हन्ति, अन्यः चेत् सिंहव्याघ्रादिकः ताम् न अभिगच्छति । स्वादुरसम् फलम् भक्षयित्वा यथाकामम् पुरुषः तत्र शेते इति ॥ ५ ॥

आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम् । प्राहं मृगाणां मातरमरण्यानिमशंसिषम् ॥ ६ ॥

आञ्जनगन्धिम् । सुरभिम् । बहुऽअन्नाम् । अकृषिऽवलाम् ।
प्र । अहम् । मृगाणाम् । मातरम् । अरण्यानिम् । अशंसिषम् ॥ ६ ॥

**वेङ्कट०** [1]गन्धवद् अत्रैककुदम्[1] [2]आञ्जनं भवति[2] । आञ्जनगन्धिम् सुरभिम् गन्धवतीम् बह्वन्नाम् अकुर्वतीं[3] कर्षणम् प्र अशंसिषम् अहम् मृगाणाम् मातरम् अरण्यानिम् इति ॥ ६ ॥

[4]इति अष्टमाष्टके अष्टमाध्याये चतुर्थो वर्गः[4] ॥

## [ १४७ ]

[4]सुवेदाः शैरीषिर्ऋषिः । इन्द्रो देवता । गती छन्दः, पञ्चमी त्रिष्टुप्[4] ।

श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्वृत्रं नय विवेरपः ।
उभे यत्त्वा भवतो रोदसी अनु रेजते शुष्मात् पृथिवी चिदद्रिवः ॥ १ ॥

श्रत् । ते । दधामि । प्रथमाय । मन्यवे । अहन् । यत् । वृत्रम् । नर्यम् । विवेः । अपः ।
उभे इति । यत् । त्वा । भवतः । रोदसी इति । अनु । रेजते । शुष्मात् । पृथिवी । चित् । अद्रिऽवः ॥

**वेङ्कट०** [5]सुवेदाः शैरीषिः[5] । श्रत् दधामि त्वदीयम् प्रथमम्[6] क्रोधम् — हतवान् असि यत् मेघम् नृहितम्, अलम्भयः च उदकानि, यत् च त्वाम् अनु भवतः अभिलषितसिद्ध्यर्थं द्यावा[7]पृथिव्यौ । कम्पते बलात् पृथिवी अपि वज्रिन्! इति[7] ॥ १ ॥

---

१-१. °वहैकक° मूको. २-२. भवत्यांजन अ[1]. ३. °र्वन्ती मूको. ४-४. नास्ति मूको.
५-५. सवेदा शैलुषीः मूको. ६. प्रश्नं मूको. ७. °थिव्यौ···पृथिमविपत्तिनिति मूको.

त्वं मायाभिरनवद्य मायिनं श्रवस्यता मनसा वृत्रमर्दयः ।
त्वामिन्नरो वृणते गविष्टिषु त्वां विश्वासु हव्यास्विष्टिषु ॥२॥

त्वम् । मायाभिः । अनवद्य । मायिनम् । श्रवस्यता । मनसा । वृत्रम् । अर्दयः ।
त्वाम् । इत् । नरः । वृणते । गोऽइष्टिषु । त्वाम् । विश्वासु । हव्यासु । इष्टिषु ॥ २ ॥

**वेङ्कट०** त्वम् मायाभिः प्रशस्य![1] मायिनम् अन्नमिच्छता मनसा मेघम् अर्दितवान्[2] असि । त्वाम् एव मनुष्याः वृणते उदकेच्छासु[3], त्वाम् विश्वेषु च हवनार्हेषु यज्ञेषु इति ॥ २ ॥

ऐषु चाकन्धि पुरुहूत सूरिषु वृधासो ये मघवन्नानशुर्मघम् ।
अर्चन्ति तोके तनये परिष्टिषु मेधसाता वाजिनमह्रये धने ॥३॥

आ । एषु । चाकन्धि । पुरुऽहूत । सूरिषु । वृधासः । ये । मघऽवन् । आनशुः । मघम् ।
अर्चन्ति । तोके । तनये । परिष्टिषु । मेधऽसाता । वाजिनम् । अह्रये । धने ॥ ३ ॥

**वेङ्कट०** आ कामयस्व स्तुतिम् एषु स्तोतृषु पुरुहूत!, प्रवृद्धाः ये मघवन्! यज्ञम् प्राप्नुवन्ति, स्तुवन्ति च त्वां पुत्रपौत्रधनार्थम्[4] धनस्य पर्येषणेषु यज्ञे बलिनम् अह्रीकम्[5] धनम् प्राप्तुम् इति ॥ ३ ॥

स इन्नु रायः सुभृतस्य चाकनन्मदं यो अस्य रंह्यं चिकेतति ।
त्वावृधो मघवन् दाश्वध्वरो मक्षू स वाजं भरते धना नृभिः ॥ ४ ॥

सः । इत् । नु । रायः । सुऽभृतस्य । चाकनत् । मदम् । यः । अस्य । रंह्यम् । चिकेतति ।
त्वाऽवृधः । मघऽवन् । दाशुऽअध्वरः । मक्षु । सः । वाजम् । भरते । धना । नृऽभिः ॥ ४ ॥

**वेङ्कट०** सः एव धनम् पूर्णम् कामयते सोमम् यः अस्य वेगनिमित्तम् प्रज्ञापयति । त्वावृधः मघवन्! दत्तहविष्कः शीघ्रम् सः अन्नम् बिभर्ति धनानि च दासैः ॥ ४ ॥

त्वं शर्धाय महिना गृणान उरु कृधि मघवञ्छग्धि रायः ।
त्वं नो मित्रो वरुणो न मायी पित्वो न दस्म दयसे विभक्ता ॥ ५ ॥

त्वम् । शर्धाय । महिना । गृणानः । उरु । कृधि । मघऽवन् । शग्धि । रायः ।
त्वम् । नः । मित्रः । वरुणः । न । मायी । पित्वः । न । दस्म । दयसे । विऽभक्ता ॥ ५ ॥

**वेङ्कट०** त्वम् अस्माभिः बलार्थम् महत्त्वेन स्तूयमानः बहु अस्माकं कुरु । मघवन्! प्रयच्छ मित्रावरुणौ इव प्राज्ञः धनम् । इदानीम् अन्नम् प्रयच्छ दर्शनीय! विभक्ता इति ॥ ५ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये पञ्चमो वर्गः[6] ॥

---

१. °स्यं मूको. २. मुदि° मूको. ३. °क व्यच्छा° मूको. ४. °पौत्रं धना° मूको ५. अंहतम् मूको. ६-६. नास्ति मूको.

[ १४८ ]

[1]पृथुर्वैन्य ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

सुष्वाणास इन्द्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य चाकन्त्मना तना सनुयाम त्वोताः ॥ १ ॥

सुस्वानासः । इन्द्र । स्तुमसि । त्वा । ससऽवांसः । च । तुविऽनृम्ण । वाजम् ।
आ । नः । भर । सुवितम् । यस्य । चाकन् । त्मना । तना । सनुयाम । त्वाऽऊताः ॥ १ ॥

वेङ्कट० [1]पृथुर्वैन्यः ।[1] सोममभिषुण्वन्तः इन्द्र! त्वाम् स्तुमः प्रयच्छन्तः च बहुबल! हविः । आ हर अस्माकम् कल्याणं धनम्, यत्[2] त्वं कामयसे प्रदातुम् । आत्मना पुत्रेण च लभेमहि धनं त्वया रक्षिताः ॥ १ ॥

ऋष्वस्त्वमिन्द्र शूर जातो दासीर्विशः सूर्येण सह्याः ।
गुहा हितं गुह्यं गूळ्हमप्सु बिभृमसि प्रस्रवणे न सोमम् ॥ २ ॥

ऋष्वः त्वम् । इन्द्र । शूर । जातः । दासीः । विशः । सूर्येण । सह्याः ।
गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । बिभृमसि । प्रऽस्रवणे । न । सोमम् ॥ २ ॥

वेङ्कट० ··· ··· । गुहायाम् निहितम् अत एव गुह्यम् गूढम् उदकेषु भरामः[3] तुभ्यम् सोमम् प्रस्रवणे इव उदकमिति ॥ २ ॥

अर्यो वा गिरो अभ्यर्च विद्वानृषीणां विप्रः सुमतिं चकानः ।
ते स्याम ये रणयन्त सोमैरेनोत तुभ्यं रथोळ्ह भक्षैः ॥ ३ ॥

अर्यः । वा । गिरः । अभि । अर्च । विद्वान् । ऋषीणाम् । विप्रः । सुऽमतिम् । चकानः ।
ते । स्याम । ये । रणयन्त । सोमैः । एना । उत । तुभ्यम् । रथऽओळ्ह । भक्षैः ॥ ३ ॥

वेङ्कट० ईश्वरः इव स्तुतीः[4] अभि पूजय जानन् ऋषीणाम् मेधावी सुष्टुतिम् कामयमानः । ते वयम् स्याम ये त्वाम् अरीरमन् सोमैः अनेन स्तोत्रेण । अपि च तुभ्यम् रथेन उह्यमान! भक्षैः च दीप्तिं कुर्मः इति ॥ ३ ॥

इमा ब्रह्मेन्द्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः ।
तेभिर्भव सक्रतुर्येषु चाकन्नुत त्रायस्व गृणत उत स्तीन् ॥ ४ ॥

इमा । ब्रह्म । इन्द्र । तुभ्यम् । शंसि । दाः । नृऽभ्यः । नृणाम् । शूर । शवः ।
तेभिः । भव । सऽक्रतुः । येषु । चाकन् । उत । त्रायस्व । गृणतः । उत । स्तीन् ॥ ४ ॥

---

१-१. नास्ति मूको. २. य मूको. ३. हरा° मूको. ४. स्तुतिः वि[2]; स्तुतिम् अ[1].

वेङ्कट० इमानि स्तोत्राणि इन्द्र! तुभ्यम् अहम् अशंसिषम्। देहि नेतॄणाम् अस्माकं स्वभूतेभ्यः नृभ्यः बलम् शूर!। तैः च भव सकर्मा येषु स्तुतिं कामयसे। अपि च त्रायस्व स्तुवतः अपि च तेषां गृहान् इति ॥ ४ ॥

श्रुधी हवमिन्द्र शूर पृथ्या उत स्तवसे वेन्यस्यार्कैः ।
आ यस्ते योनिं घृतवन्तमस्वारूर्मिर्न निम्नैर्द्रवयन्त वक्वाः ॥ ५ ॥

श्रुधि । हवम् । इन्द्र । शूर । पृथ्याः । उत । स्तवसे । वेन्यस्य । अर्कैः ।
आ । यः । ते । योनिम् । घृतऽवन्तम् । अस्वाः । ऊर्मिः । न । निम्नैः । द्रवयन्त । वक्वाः ॥५॥

वेङ्कट० श्रुधि ह्वानम् इन्द्र! शूर! पृथेः[1]। अपि च स्तूयसे, वैन्यः, पृथिः तस्य[2] स्तोत्रैः। यः पृथिः आ स्वरति अभिष्टुवति तत्र उदकवन्तम् योनिम्। तस्य स्तुतयः ऊर्मयः इव निम्ने द्रवन्ति इति ॥ ५ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये षष्ठो वर्गः[3] ॥

[ १४९ ]

[3]अर्चन् हैरण्यस्तूप ऋषिः। सविता देवता। त्रिष्टुप् छन्दः[3]।

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥ १ ॥

सविता । यन्त्रैः । पृथिवीम् । अरम्णात् । अस्कम्भने । सविता । द्याम् । अदृंहत् ।
अश्वम्ऽइव । अधुक्षत् । धुनिम् । अन्तरिक्षम् । अतूर्ते । बद्धम् । सविता । समुद्रम् ॥ १ ॥[4]

वेङ्कट० अर्चन् हैरण्यस्तूपः। सविता यमनसाधनैः तेजोभिः पृथिवीम् स्वे स्थाने अरमयत। अपि वा अस्कम्भने अन्तरिक्षे सविता द्याम् अदृंहत्। अश्वमिव युद्धे धनानि अधुक्षत् उदकानि मेघम् अन्तरा निवसन्तम् अपि च अतीरे बद्धम् ॥ १ ॥

यत्रा समुद्रः स्कभितो व्यौनदपां नपात् सविता तस्य वेद ।
अतो भूरत आ उत्थितं रजोऽतो द्यावापृथिवी अप्रथेताम् ॥ २ ॥

यत्र । समुद्रः । स्कभितः । वि । औनत् । अपाम् । नपात् । सविता । तस्य । वेद ।
अतः । भूः । अतः । आ । उत्थितम् । रजः । अतः । द्यावापृथिवी इति । अप्रथेताम् ॥ २ ॥

वेङ्कट० अस्मात् एव [5]द्यावापृथिव्यौ अप्रथेताम्[5] इति ॥ २ ॥

पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूना ।
सुपर्णो अङ्ग सवितुर्गरुत्मान् पूर्वो जातः स उ अस्यानु धर्म ॥ ३ ॥

---

१. पृथ मूको. २. नास्ति मूको. ३-३. नास्ति मूको. ४. ऋगेषा या. ( १०,३२ ) व्याख्याता द्र. ५-५. द्यावावप्रथे' मूको.

पश्चा । इदम् । अन्यत् । अभवत् । यजत्रम् । अमर्त्यस्य । भुवनस्य । भूना ।
सुऽपर्णः । अङ्ग । सवितुः । गरुत्मान् । पूर्वः । जातः । सः । ऊँ इति । अस्य । अनु । धर्म ॥३॥

**वेङ्कट०** प्रातः सविता प्रादुर्भवति, पश्चात् इदम् अन्यत् देवजातम् अमर्त्यस्य भावयितुः सवितुः महत्त्वेन भवति। तत्र सवितुः सुपतनः आदित्यश्च[1] गरणवान् अङ्ग पूर्वः जातः। सः च अस्य सवितुः अनु गच्छति कर्मेति ॥ ३ ॥

गावइव ग्रामं यूयुधिरिवाश्वान् वाश्रेव वत्सं सुमना दुहाना ।
पतिरिव जायामभि नो न्येतु धर्ता दिवः सविता विश्ववारः ॥ ४ ॥

गावःऽइव । ग्रामम् । युयुधिःऽइव । अश्वान् । वाश्राऽइव । वत्सम् । सुऽमनाः । दुहाना ।
पतिःऽइव । जायाम् । अभि । नः । नि । एतु । धर्ता । दिवः । सविता । विश्वऽवारः ॥ ४ ॥

**वेङ्कट०** गवादय इव ग्रामादीन् अस्मान् सविता अभि गच्छतु इति ॥ ४ ॥

हिरण्यस्तूपः सवितर्यथा त्वाऽऽङ्गिरसो जुह्वे वाजे अस्मिन् ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥ ५ ॥

हिरण्यऽस्तूपः । सवितः । यथा । त्वा । आङ्गिरसः । जुह्वे । वाजे । अस्मिन् ।
एव । त्वा । अर्चन् । अवसे । वन्दमानः । सोमस्यऽइव । अंशुम् । प्रति । जागर । अहम् ॥५॥[2]

**वेङ्कट०** हे सवितः! यथा त्वाम् अङ्गिरसः आहूतवन्तः, एवम् आहूतवान् अस्मिन् अन्ने तदर्थं मम पिता हिरण्यस्तूपः। एवम् त्वाम् पुत्रः अर्चन् अपि रक्षणाय वन्दमानः सोमस्य इव अंशुम् प्रति जागर्मि अहम्, अभितः स्तौमि इति ॥ ५ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये सप्तमो वर्गः[3] ॥

## [ १५० ]

[1]मृळीको वासिष्ठ ऋषिः। अग्निर्देवता। बृहती छन्दः, ४-५ उपरिष्टाज्ज्योतिषी, चतुर्थी जगती वा[1]।

समिद्धश्चित् समिध्यसे देवेभ्यो हव्यवाहन ।
आदित्यै रुद्रैर्वसुभिर्न आ गहि मृळीकाय न आ गहि ॥ १ ॥

सम्ऽइद्धः । चित् । सम् । इध्यसे । देवेभ्यः । हव्यऽवाहन ।
आदित्यैः । रुद्रैः । वसुऽभिः । नः । आ । गहि । मृळीकाय । नः । आ । गहि ॥ १ ॥

**वेङ्कट०** मृळीको वासिष्ठः। समिद्धः अपि सन् भूयःभूयः सम् इध्यसे देवार्थम् हव्यवाहन!। आदित्यादिभिः सह अस्मान् आ गच्छ सुखयितुम् इति ॥ १ ॥

---

१. तु. ऋ १,१६४,४६; °त्मान् मूको. २. या (१०.३३) व्याख्यानं द्र. ३-३. नास्ति मूको.

इमं यज्ञमिदं वचो जुजुषाण उपागहि ।
मर्तासस्त्वा समिधान हवामहे मृळीकाय हवामहे ॥ २ ॥

इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि ।
मर्तासः । त्वा । सम्ऽइधान । हवामहे । मृळीकाय । हवामहे ॥ २ ॥

**वेङ्कट०** इदम् हविः इमाम् च स्तुतिम् सेवमानः उपागच्छ[1] । मनुष्याः त्वाम् समिध्यमान ! हवामहे कल्याणाय सुखाय इति ॥ २ ॥ तिस्र उत्तरा निगदसिद्धाः ।

त्वामु जातवेदसं विश्ववारं गृणे धिया ।
अग्ने देवाँ आ वह नः प्रियव्रतान् मृळीकाय प्रियव्रतान् ॥ ३ ॥

त्वाम् । ऊँ इति । जातऽवेदसम् । विश्वऽवारम् । गृणे । धिया ।
अग्ने । देवान् । आ । वह । नः । प्रियऽव्रतान् । मृळीकाय । प्रियऽव्रतान् ॥ ३ ॥

**वेङ्कट०** धीः प्रज्ञा, तया स्तौमि ॥ ३ ॥

अग्निर्देवो देवानामभवत् पुरोहितोऽग्निं मनुष्या३ ऋषयः समीधिरे ।
अग्निं महो धनसातावहं हुवे मृळीकं धनसातये ॥ ४ ॥

अग्निः । देवः । देवानाम् । अभवत् । पुरःऽहितः । अग्निम् । मनुष्याः । ऋषयः । सम् । ईधिरे ।
अग्निम् । महः । धनऽसातौ । अहम् । हुवे । मृळीकम् । धनऽसातये ॥ ४ ॥

**वेङ्कट०** अग्निम् महः महान्तम् धनलाभाय युद्धाय वा ॥ ४ ॥

अग्निरत्रिं भरद्वाजं गविष्ठिरं प्रावन्नः कण्वं त्रसदस्युमाहवे ।
अग्निं वसिष्ठो हवते पुरोहितो मृळीकाय पुरोहितः ॥ ५ ॥

अग्निः । अत्रिम् । भरत्ऽवाजम् । गविष्ठिरम् । प्र । आवत् । नः । कण्वम् । त्रसदस्युम् । आऽहवे ।
अग्निम् । वसिष्ठः । हवते । पुरःऽहितः । मृळीकाय । पुरःऽहितः ॥ ५ ॥

**वेङ्कट०** अग्निः अत्र्यादीन् अरक्षत् अस्मदीयः । तं वसिष्ठपुत्रः केनचित् राज्ञा पुरोहितः हवते सुखार्थम् इति ॥ ५ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये अष्टमो वर्गः[2] ॥

## [ १५१ ]

[1]श्रद्धा कामायनी ऋषिका । श्रद्धा देवता । अनुष्टुप् छन्दः[2] ।

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ १ ॥

---

१. उपगच्छ मूको. २-२. नास्ति मूको.

श्रद्धयां । अग्निः । सम् । इध्यते । श्रद्धयां । हूयते । हविः ।
श्रद्धाम् । भर्गस्य । मूर्धनि । वचसा । आ । वेदयामसि ॥ १ ॥[1]

वेङ्कट० श्रद्धा [2]कामायनी । श्राद्धम्[2] । श्रद्धया अग्निः सम् इध्यते । श्रद्धया हविः साधु हूयते । श्रद्धाम् भागधेयस्य प्रधानाऽङ्गे अवस्थिताम् वचसा आ वेदयामः परेषां ब्रूम इति ॥ १ ॥

प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥ २ ॥

प्रियम् । श्रद्धे । ददतः । प्रियम् । श्रद्धे । दिदासतः ।
प्रियम् । भोजेषु । यज्वऽसु । इदम् । मे । उदितम् । कृधि ॥ २ ॥

वेङ्कट० ते श्रद्धे! इदं[3] मदीयं वचनम् । श्रद्धे! प्रयच्छतः प्रदित्सतः च प्रियम् कुरु । प्रियम् भोजकेषु यजमानेषु, प्रियम् अस्माकम् उदितम् कुरु श्रद्धां रचय ताम् इति ॥ २ ॥

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥ ३ ॥

यथा । देवाः । असुरेषु । श्रद्धाम् । उग्रेषु । चक्रिरे ।
एवम् । भोजेषु । यज्वऽसु । अस्माकम् । उदितम् । कृधि ॥ ३ ॥

वेङ्कट० ... ... ... ... ... ॥ ३ ॥

श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥ ४ ॥

श्रद्धाम् । देवाः । यजमानाः । वायुऽगोपाः । उप । आसते ।
श्रद्धाम् । हृदय्यया । आऽकूत्या । श्रद्धया । विन्दते । वसु ॥ ४ ॥

वेङ्कट० श्रद्धाम् देवाः यजमानाः वायुरक्षिताः उप आसते । श्रद्धाम् एव हार्दे अभिलाषे जाते उपासते । श्रद्धया एव विन्दते धनम् इति ॥ ४ ॥

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ ५ ॥

श्रद्धाम् । प्रातः । हवामहे । श्रद्धाम् । मध्यंदिनम् । परि ।
श्रद्धाम् । सूर्यस्य । निऽम्रुचि । श्रद्धे । श्रत् । धापय । इह । नः ॥ ५ ॥

---

१. ऋगेषा या. (९,३१) व्याख्याता द्र. २-२. ᳚य ... श्राद्ध वि᳚; कामयाग्निः ... श्रां मूको.
३. इमं मूको.

वेङ्कट० प्रातः मध्यन्दिने सायम् च श्रद्धाम् एव हवामहे। श्रद्धे! अस्मान्[1] भोजेषु श्रद्धापय इति ॥५॥

[2]इति अष्टमाष्टके अष्टमाध्याये नवमो वर्गः[2] ॥

[ १५२ ]

[3]शासो भारद्वाज ऋषिः। इन्द्रो देवता। अनुष्टुप् छन्दः[3]।

शास इत्था महाँ अस्यमित्रखादो अद्भुतः।
न यस्य हन्यते सखा न जीयते कदा चन ॥ १ ॥

शासः। इत्था। महान्। असि। अमित्रऽखादः। अद्भुतः।
न। यस्य। हन्यते। सखा। न। जीयते। कदा। चन ॥ १ ॥

वेङ्कट० शासो भारद्वाजः। शासिता त्वं [3]सत्यमेव महान्[3] असि अमित्राणां भक्षयिता आश्चर्यभूतः, न यस्य हन्यते परैः सखा, न[4] च जीयते कदा चन इति ॥ १ ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥ २ ॥

स्वस्तिऽदाः। विशः। पतिः। वृत्रऽहा। विऽमृधः। वशी।
वृषा। इन्द्रः। पुरः। एतु। नः। सोमऽपाः। अभयम्ऽकरः ॥ २ ॥

वेङ्कट० अविनाशस्य दाता[5] प्रजापतिः वृत्रहा विशेषेण बाधकः स्वतन्त्रः। वृषा इन्द्रः इति स्पष्टम् ॥ २ ॥

वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥ ३ ॥

वि। रक्षः। वि। मृधः। जहि। वि। वृत्रस्य। हनू इति। रुज।
वि। मन्युम्। इन्द्र। वृत्रऽहन्। अमित्रस्य। अभिऽदासतः ॥ ३ ॥

वेङ्कट० वि जहि रक्षः[6]। वि जहि च मृधः। वि रुज च शत्रोः हनू। वि जहि क्रोधम् इन्द्र! वृत्रहन्! अमित्रस्य अभिक्षपयतः ॥ ३ ॥

वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।
यो अस्माँ अभिदासत्यधरं गमया तमः ॥ ४ ॥

वि। नः। इन्द्र। मृधः। जहि। नीचा। यच्छ। पृतन्यतः।
यः। अस्मान्। अभिऽदासति। अधरम्। गमय। तमः ॥ ४ ॥

---

१. मां मूको. २-२. नास्ति मूको. ३-३. °त्यमेबमहम् मूको. ४. नः मूको, ५. दातः मूको. ६. रिक्षः मूको.

**वेङ्कट०** 'प्रतिपक्षिणो राजानो मृध.' इति **बोधायनः**। वि जहि इन्द्र! **अस्माकम्** मृधः, नीचा यच्छ **सङ्ग्रामं कर्तुमिच्छतः**। अधरम् तमः **तम्** गमय, यः अस्मान् **अभिक्षपयति** इति ॥ ४ ॥

अपेन्द्र द्विषतो मनोऽप जिज्यासतो वधम् ।
वि मन्योः शर्म यच्छ वरीयो यवया वधम् ॥ ५ ॥

अप । इन्द्र । द्विषतः । मनः । अप । जिज्यासतः । वधम् ।
वि । मन्योः । शर्म । यच्छ । वरीयः । यवय । वधम् ॥ ५ ॥

**वेङ्कट०** अप जहि इन्द्र! द्विषतः मनः। अप जहि च जेतुमिच्छतः आयुधम्। वि यच्छ[1] **उपगमय माम् अभिमन्यमानस्य सुखम्**। **उरुतरम् आत्मीयं वज्रम्** यवय विसृज इति ॥ ५ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये दशमो वर्गः[2] ॥

## [ १५३ ]

[2]देवजामय इन्द्रमातर ऋषिकाः। इन्द्रो देवता। गायत्री छन्दः[2]।

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । भेजानासः सुवीर्यम् ॥ १ ॥

ईङ्खयन्तीः । अपस्युवः । इन्द्रम् । जातम् । उप । आसते । भेजानासः । सुऽवीर्यम् ॥ १ ॥

**वेङ्कट०** **देवजामय इन्द्रमातरः। पुत्रम् इव इतस्ततः चलयन्त्यः कर्म इच्छन्त्यः लालनम् इन्द्रम्** जातम् उप आसते **सेवमानाः** सुवीर्यम् ॥ १ ॥

त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन् वृषेदसि ॥ २ ॥

त्वम् । इन्द्र । बलात् । अधि । सहसः । जातः । ओजसः । त्वम् । वृषन् । वृषा । इत् । असि ॥

**वेङ्कट०** त्वम् इन्द्र! बलात् अधि-जातः, **तथा सहमानात्** ओजसः च। त्वम् वृषन्! **वृषा इव भवसि कामानाम्** ॥ २ ॥

त्वमिन्द्रासि वृत्रहा व्य१न्तरिक्षमतिरः । उद् द्यामस्तभ्ना ओजसा ॥ ३ ॥

त्वम् । इन्द्र । असि । वृत्रऽहा । वि । अन्तरिक्षम् । अतिरः । उत् । द्याम् । अस्तभ्नाः । ओजसा ॥ ३ ॥

**वेङ्कट०** त्वम् इन्द्र! असि वृत्रहा। **वि-स्तारितवानसि** अन्तरिक्षम्। **दिवम् च** उत् अस्तभ्नाः **बलेन** ॥३॥

त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः । वज्रं शिशान ओजसा ॥ ४ ॥

त्वम् । इन्द्र । सऽजोषसम् । अर्कम् । बिभर्षि । बाह्वोः । वज्रम् । शिशानः । ओजसा ॥ ४ ॥

**वेङ्कट०** त्वम् इन्द्र! **सङ्गतम् अर्चनीयम् धारयसि** बाह्वोः वज्रम् **तीक्ष्णीकुर्वन् बलेन** ॥ ४ ॥

---

१. गच्छ मूको. २-२. नास्ति मूको.

त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा । स विश्वा भुव आभवः ॥ ५ ॥

त्वम् । इन्द्र । अभिऽभूः । असि । विश्वा । जातानि । ओजसा । सः । विश्वाः । भुवः । आ । अभवः ॥ ५ ॥

**वेङ्कट०** त्वम् इन्द्र! अभिभवसि विश्वानि जातानि बलेन । सः त्वम् विश्वाः भूमीः आ भवसि अरान् इव नेमिः ॥ ५ ॥

'इति अष्टमाष्टके अष्टमाध्याये एकादशो वर्गः' ॥

[ १५४ ]

'यमी वैवस्वती ऋषिका । भाववृत्तं देवता । अनुष्टुप् छन्दः' ।

सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति ताँश्चिदेवापि गच्छतात् ॥ १ ॥

सोमः । एकेभ्यः । पवते । घृतम् । एके । उप । आसते ।
येभ्यः । मधु । प्रऽधावति । तान् । चित् । एव । अपि । गच्छतात् ॥ १ ॥

**वेङ्कट०** यमी । भाववृत्तम् । मृताः पुरुषा यान्-यान् यमेन प्रणीता गच्छन्ति नानाविधैः कर्मभिः । तत् यमाय यमी स्वसा कथयामास । तदिदं भाववृत्तं नाम सूक्तं वैश्वदेवं मेने शौनकः ( तु० बृदे ८,५९ ), यामम्[2] अपरे मन्यन्त इति । सोमः एकेभ्यः पवते यष्टृभ्यः । अथ अपरे घृतम् उप आसते । तथा अपरेभ्यः मधु प्रधावति, तांस्तान् पश्चात् मृतोऽपि कर्मभिः अपि गच्छति, गच्छ त्वम् इति वेति ॥ १ ॥

तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्ताँश्चिदेवापि गच्छतात् ॥ २ ॥

तपसा । ये । अनाधृष्याः । तपसा । ये । स्वः । ययुः ।
तपः । ये । चक्रिरे । महः । तान् । चित् । एव । अपि । गच्छतात् ॥ २ ॥

**वेङ्कट०** तपसा ये भवन्ति अनाधृष्टाः, तपसा ये स्वर्गम् गताः, तपः ये कृतवन्तः महत्, तान् चित् एव अपि गच्छतात् ॥ २ ॥

ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात् ॥ ३ ॥

ये । युध्यन्ते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः ।
ये । वा । सहस्रऽदक्षिणाः । तान् । चित् । एव । अपि । गच्छतात् ॥ ३ ॥

---

१-१. नास्ति मूको. २. याम् मुको.

वेङ्कट० निगदसिद्धेति ॥ ३ ॥

ये चित् पूर्वं ऋतसाप ऋतावान ऋतावृधः ।
पितृन् तपस्वतो यम ताँश्चिदेवापि गच्छतात् ॥ ४ ॥

ये । चित् । पूर्वे । ऋतऽसापः । ऋतऽवानः । ऋतऽवृधः ।
पितृन् । तपस्वतः । यम । तान् । चित् । एव । अपि । गच्छतात् ॥ ४ ॥

वेङ्कट० ये चित् पूर्वे तपस्पृशः सत्यवन्तः सत्येन वृद्धाः, तान् पितृन् तपस्वतः[1] यम! अपि गच्छतात्[2] ॥ ४ ॥

सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन् तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ ५ ॥

सहस्रऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ ५ ॥

वेङ्कट० बहुप्रणयनाः कवयः ये रक्षन्ति सूर्यम्, तान् ऋषीन् तपस्वतः इति ॥ ५ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये द्वादशो वर्गः[3] ॥

[ १५५ ]

[1]शिरिम्बिठो भारद्वाज ऋषिः । अलक्ष्मीघ्नं देवता, द्वितीयातृतीययोर्ब्रह्मणस्पतिः, पञ्चम्या विश्वे देवाः । अनुष्टुप् छन्दः[1] ।

अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ १ ॥

अरायि । काणे । विऽकटे । गिरिम् । गच्छ । सदान्वे ।
शिरिम्बिठस्य । सत्वऽभिः । तेभिः । त्वा । चातयामसि ॥ १ ॥

वेङ्कट० कात्यायनः—'अरायि शिरिम्बिठो भारद्वाजोऽलक्ष्मीघ्नं द्वितीयातृतीये ब्राह्मणस्पत्ये, अन्त्या वैश्वदेवी' ( ऋअ २,१०,१५५ ) । ज्ञातिदेवत्या वेति । अदानशीले! अक्ष्णा काणे! विक्रान्तगतिके! पर्वतम् गच्छ सदा शब्दकारिणि! । शिरिम्बिठस्य मम तैः कर्मभिः त्वाम् नाशयामः । निरुक्तं ( ६,३० ) द्रष्टव्यम् इति ॥ १ ॥

चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी ।
अराय्यं ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि ॥ २ ॥

---

१. तपस्यतः मूको २ °गच्छन्ती मूको. ३-३. नास्ति मूको.

चत्तो इति । इतः । चत्ता । अमुतः । सर्वाः । भ्रूणानि । आरुषी ।
अराय्यम् । ब्रह्मणः । पते । तीक्ष्णऽशृङ्ग । उत्ऽऋषन् । इहि ॥ २ ॥

वेङ्कट० निरस्ता अस्मात् लोकात्, निरस्ता च अमुतः। सर्वाणि भ्रूणानि गतवती यानि भूतानि जगत् बिभ्रति तेषु सर्वेषु स्थिता। अतश्च ताम् अप्रदात्रीम् ब्रह्मणः पते! [1]तीक्ष्णशृङ्ग! उद्भिन्दन्[2] गच्छ इति ॥ २ ॥

अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् ।
तदा रभस्व दुर्हणो तेन गच्छ परस्तरम् ॥ ३ ॥

अदः । यत् । दारु । प्लवते । सिन्धोः । पारे । अपुरुषम् ।
तत् । आ । रभस्व । दुर्हनो इति दुःऽहनो । तेन । गच्छ । परःऽतरम् ॥ ३ ॥

वेङ्कट० एतत् यत् दारु प्लवते[3] समुद्रस्य पारे नेतृपुरुषरहितम्, तत् त्वम् आ रुहस्व अलक्ष्मि![4] दुर्मुखि!, तेन गच्छ दूरम् इति ॥ ३ ॥

यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः । हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥४॥

यत् । ह । प्राचीः । अजगन्त । उरः । मण्डूरऽधाणिकीः ।
हताः । इन्द्रस्य । शत्रवः । सर्वे । बुद्बुदऽयाशवः ॥ ४ ॥

वेङ्कट० यदा खलु यूयम् इन्द्रस्य उरसः निर्गताः असुरान् प्रति प्राचीः अगच्छत हे मण्डूरधाणिकीः![5] मदकरयोनिकाः![6]। स्त्रियो हि भूत्वा निरगच्छन्नलक्ष्म्यः। तदानीम् हताः इन्द्रस्य शत्रवः सर्वे जलबुद्बुदयशस्काः ॥ ४ ॥

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥ ५ ॥

परि । इमे । गाम् । अनेषत । परि । अग्निम् । अहृषत ।
देवेषु । अक्रत । श्रवः । कः । इमान् । आ । दधर्षति ॥ ५ ॥

वेङ्कट० परितः नयन्ति इमे अलक्ष्मीविनाशार्थम् गाम् गृहे ज्ञातयः। परि हरन्ति च अग्निम्। देवेषु च कुर्वन्ति हविः। कः इमान् आ धर्षयति ॥ ५ ॥

[7]इति अष्टमाष्टके अष्टमाध्याये त्रयोदशो वर्गः[7] ॥

## [ १५६ ]

[1]केतुराग्नेय ऋषिः। अग्निर्देवता। गायत्री छन्दः[1]।

अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनंधनम् ॥ १ ॥

---

१. < आरिवस्-(<√ ऋ [ तु. टि. वैप १ ]). २-२. °श्नीमिन्द° मूको. ३. प्लव ··· ते मूको. ४. लक्ष्मि मूको. ५. °रधाणि किं मूको. ६. °कां योनि° मूको. ७-७. नास्ति मूको.

अग्निम् । हिन्वन्तु । नः । धियः । सप्तिम् । आशुम्ऽइव । आजिषु । तेन । जेष्म । धनम्ऽधनम् ॥ १ ॥

**वेङ्कट०** केतुराग्नेयः । अग्निम् प्रेरयन्तु अस्माकम् कर्माणि सरणशीलम् इव अश्वम् युद्धेषु । तेन जयेम सर्वं धनम् इति ॥ १ ॥

यया गा आकरामहे सेनयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥ २ ॥

यया । गाः । आऽकरामहे । सेनया । अग्ने । तव । ऊत्या । ताम् । नः । हिन्व । मघत्तये ॥ २ ॥

**वेङ्कट०** यया पशून् आकुर्मः सेनया अग्ने! तव रक्षणेन रक्षितया, ताम् अस्माकम् प्रेरय धनलाभाय ॥ ॥ २ ॥

आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् । अङ्धि खं वर्तया पणिम् ॥ ३ ॥

आ । अग्ने । स्थूरम् । रयिम् । भर । पृथुम् । गोऽमन्तम् । अश्विनम् ।
अङ्धि । खम् । वर्तय । पणिम् ॥ ३ ॥

**वेङ्कट०** आ भर अग्ने! स्थूलम् रयिम् विस्तीर्णम् गवाश्वयुक्तम् । व्यक्तं कुर्वन् अन्तरिक्षम् तमोऽभिभूतं स्वतेजसा भ्रमय पणिम् इति ॥ ३ ॥

अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः ॥ ४ ॥

अग्ने । नक्षत्रम् । अजरम् । आ । सूर्यम् । रोहयः । दिवि । दधत् । ज्योतिः । जनेभ्यः ॥ ४ ॥

**वेङ्कट०** अजरम् नक्षत्रम् सूर्यम् च अग्ने! त्वम् दिवि आ रोहयः प्रयच्छन् ज्योतिः मनुष्येभ्यः ॥४॥

अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधा स्तोत्रे वयो दधत् ॥ ५ ॥

अग्ने । केतुः । विशाम् । असि । प्रेष्ठः । श्रेष्ठः । उपस्थऽसत् ।
बोध । स्तोत्रे । वयः । दधत् ॥ ५ ॥

**वेङ्कट०** अग्ने! प्रज्ञापकः विशाम् भवसि प्रियतमः प्रशस्यतमः समीपे सीदन् । स्तोत्रे मह्यम् अन्नम् प्रयच्छन् भवामीति बुध्यस्व इति ॥ ५ ॥

'इति अष्टमाष्टके अष्टमाध्याये चतुर्दशो वर्गः' ॥

[ १५७ ]

'भुवन आप्त्य ऋषिः, साधनो वा भौवनः । विश्वे देवा देवता । द्विपदा त्रिष्टुप् छन्दः' ।

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ॥ १ ॥

इमा । नु । कम् । भुवना । सीसधाम । इन्द्रः । च । विश्वे । च । देवाः ॥ १ ॥

---

१-१. नास्ति मूको.

वेङ्कट० भुवन आप्त्यः। इमानि क्षिप्रम् भुवनानि वयं साधयामः। अस्माकम् इन्द्रः च विश्वे च देवाः तानि साधयन्तु इति ॥ १ ॥

यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लपाति ॥ २ ॥

यज्ञम्। च। नः। तन्वम्। च। प्रऽजाम्। च। आदित्यैः। इन्द्रः। सह। चीक्लृपाति ॥२॥

वेङ्कट० यज्ञम् शरीरम् पुत्रम् च अस्माकम् इन्द्रः आदित्यैः सह कल्पयतु इति ॥ २ ॥

आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्ववि॒ता तनूनाम् ॥ ३ ॥

आदित्यैः। इन्द्रः। सऽगणः। मरुत्ऽभिः। अस्माकम्। भूतु। अविता। तनूनाम् ॥ ३ ॥

वेङ्कट० आदित्यैः मरुद्भिः च इन्द्रः सहितः अस्माकम् भवतु रक्षिता अङ्गानाम् ॥ ३ ॥

हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः ॥ ४ ॥

हत्वाय। देवाः। असुरान्। यत्। आयन्। देवाः। देवऽत्वम्। अभिऽरक्षमाणाः ॥ ४ ॥

वेङ्कट० असुरान् हत्वा यदा देवाः देवत्वम् गता जगत् अभिरक्षमाणाः। उत्तरत्र सम्बन्धः ॥ ४ ॥

प्रत्यञ्चमर्कमनयञ्छचीभिरादित् स्वधामिषिरां पर्यपश्यन् ॥ ५ ॥

प्रत्यञ्चम्। अर्कम। अनयन्। शचीभिः। आत्। इत्। स्वधाम्। इषिराम्। परि। अपश्यन् ॥

वेङ्कट० तदानीम् अभिमुखम् आदित्यम् अनयन् प्रज्ञाभिः। अनन्तरम् एव उदकम् च गमनशीलम् परि अपश्यन् इति ॥ ५ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये पञ्चदशो वर्गः[1] ॥

[ १५८ ]

[1]चक्षुः सौर्य ऋषिः। सूर्यो देवता। गायत्री छन्दः, द्वितीया स्वराट्[1]।

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः ॥ १ ॥

सूर्यः। नः। दिवः। पातु। वातः। अन्तरिक्षात्। अग्निः। नः। पार्थिवेभ्यः ॥ १ ॥

वेङ्कट० चक्षुः सौर्यः। दिवः रक्षणम् तत्रत्येभ्यो रक्षणम् इति ॥ १ ॥

जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति। पाहि नो दिद्युतः पतन्त्याः ॥२॥

जोष। सवितः। यस्य। ते। हरः। शतम्। सवान्। अर्हति। पाहि। नः। दिद्युतः। पतन्त्याः ॥२॥

वेङ्कट० सेवस्व अस्मान् सवितः!, यस्य तव स्वभूतम् हरः तेजो बहून् सोमान् अर्हति। पाहि अस्मान् आयुधात् पततः शत्रोः ॥ २ ॥

---

१-१. नास्ति मूको.

चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः ॥ ३ ॥

चक्षुः । नः । देवः । सविता । चक्षुः । नः । उत । पर्वतः । चक्षुः । धाता । दधातु । नः ॥ ३ ॥

**वेङ्कट०** एते अस्मभ्यम् चक्षुः प्रयच्छन्तु इति ॥ ३ ॥

चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम ॥ ४ ॥

चक्षुः । नः । धेहि । चक्षुषे । चक्षुः । विऽख्यै । तनूभ्यः । सम् । च । इदम् । वि । च । पश्येम ॥४॥

**वेङ्कट०** चक्षुः अस्माकम् देहि दर्शनाय । चक्षुः पुत्रेभ्यः च विशेषेण दर्शनाय । सम् च वि च इदम् जगत् वयम् पश्येम इति ॥ ४ ॥

सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसः ॥ ५ ॥

सुऽसन्दृशम् । त्वा । वयम् । प्रति । पश्येम । सूर्य । वि । पश्येम । नृऽचक्षसः ॥ ५ ॥

**वेङ्कट०** सुष्ठु सम्पश्यन्तम् त्वाम् वयम् प्रति पश्येम सूर्य । विविधम् च पश्येम लौकिकानां नृणां द्रष्टारः ॥ ५ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये षोडशो वर्गः[1] ॥

[ १५९ ]

[1]पौलोमी शची ऋषिः । सैव देवता । अनुष्टुप् छन्दः[1] ।

उदसौ सूर्यो अगादुदयं मामको भगः । अहं तद्विद्वला पतिमभ्यसाक्षि विषासहिः ॥१॥

उत् । असौ । सूर्यः । अगात् । उत् । अयम् । मामकः । भगः ।
अहम् । तत् । विद्वला । पतिम् । अभि । असाक्षि । विऽससहिः ॥ १ ॥

**वेङ्कट०** पौलोमी शची आत्मानं तुष्टाव । उत् अगात् अयम् सूर्यः जगति । तथा मामकः च अयम् भगः सौभाग्यम् । अहम् तत् सौभाग्यं लभमाना पतिम् अभि प्राप्नुयाम् अभिभवन्ती सपत्नीः ॥१॥

अहं केतुरहं मूर्धाहमुग्रा विवाचनी । ममेदनु क्रतुं पतिः सेहानाया उपाचरेत् ॥२॥

अहम् । केतुः । अहम् । मूर्धा । अहम् । उग्रा । विऽवाचनी ।
मम । इत् । अनु । क्रतुम् । पतिः । सेहानायाः । उपऽआचरेत् ॥ २ ॥

**वेङ्कट०** अहम् ध्वजभूता । अहम् उच्छ्रिता । अहम् उद्गूर्णा प्रियाणाम् विवाचनी । मम एव प्रज्ञानम् अनु उपाचरति पतिः सपत्नीः सहमानायाः ॥ २ ॥

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् ।
उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः ॥ ३ ॥

---

१-१. नास्ति मूको.

मम॑ । पु॒त्राः । श॒त्रु॒ऽहनः॑ । अथो॒ इति॑ । मे॒ । दु॒हि॒ता । वि॒ऽराट् ।
उ॒त । अ॒हम् । अ॒स्मि॒ । स॒म्ऽज॒या । पत्यौ॑ । मे॒ । श्लोकः॑ । उ॒त्ऽत॒मः ॥ ३ ॥

**वेङ्कट०** मम पुत्राः शत्रूणां हन्तारः। अपि च मम दुहिता विराट्। अपि च अहम् अस्मि सम्यग् जेत्री। पत्यौ मे श्लोकः उत्तमः भवति ऋषिभिः कृतः ॥ ३ ॥

येनेन्द्रो॑ ह॒विषा॑ कृ॒त्व्यभ॑वद् द्यु॒म्न्यु॑त्त॒मः । इ॒दं तद॑क्रि देवा असप॒त्ना किला॑भुवम् ॥४॥
येन॑ । इन्द्रः॑ । ह॒विषा॑ । कृ॒त्वी । अभ॑वत् । द्यु॒म्नी । उ॒त्ऽत॒मः ।
इ॒दम् । तत् । अ॒क्रि॒ । दे॒वाः॒ । अ॒स॒प॒त्ना । किल॑ । अ॒भु॒व॒म् ॥ ४ ॥

**वेङ्कट०** येन इन्द्रः हविषा कर्मवान् अभवत् यशस्वी च उत्तमः, इदम् तत् क्रियते हविः देवाः!। तत्र प्रयोजनम् — सपत्नीरहिता अहम् अभवम् इति ॥ ४ ॥

अ॒स॒प॒त्ना स॑पत्न॒घ्नी जय॑न्त्यभि॒भूव॑री। आवृ॑क्षम॒न्यासा॑ं वर्चो॑ राधो॒ अस्थे॑यसामिव ॥५॥
अ॒स॒प॒त्ना । स॒प॒त्न॒ऽघ्नी । जय॑न्ती । अ॒भि॒ऽभूव॑री ।
आ । अ॒वृ॒क्ष॒म् । अ॒न्यासा॑म् । वर्चः॑ । राधः॑ । अस्थे॑यसाम्ऽइव ॥ ५ ॥

**वेङ्कट०** सपत्नीरहिता सपत्नीनां हन्त्री जयन्ती अभिभवनशीला आ वृश्चामि अन्यासाम् सपत्नीनाम् तेजः, यथा धनम् अस्थेयसाम् आवृश्चन्ति स्थेयांसः ॥ ५ ॥

सम॑जैषमि॒मा अ॒हं स॒पत्नी॑रभि॒भूव॑री । यथा॒हम॒स्य वी॒रस्य॑ वि॒राजा॑नि॒ जन॑स्य च ॥६॥
सम् । अ॒जै॒ष॒म् । इ॒माः । अ॒हम् । स॒ऽपत्नीः॑ । अ॒भि॒ऽभूव॑री ।
यथा॑ । अ॒हम् । अ॒स्य । वी॒रस्य॑ । वि॒ऽराजा॑नि । जन॑स्य । च॒ ॥ ६ ॥

**वेङ्कट०** सम् अजैषम् इमाः अहम् सपत्नीः अभिभवन्ती च, यथा अहम् अस्य वीरस्य इन्द्रस्य विराजानि जनस्य च लौकिकस्य ॥ ६ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये सप्तदशो वर्गः[1] ॥

## [ १६० ]

[1]पूरणो वैश्वामित्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

ती॒व्रस्या॒भिव॑यसो अ॒स्य पा॑हि सर्व॒र॒था वि हरी॑ इ॒ह मु॑ञ्च ।
इन्द्र॒ मा त्वा॒ यज॑मानासो अ॒न्ये नि री॑रम॒न् तुभ्य॑मि॒मे सु॒तासः॑ ॥ १ ॥
ती॒व्रस्य॑ । अ॒भिऽव॑यसः । अ॒स्य । पा॒हि॒ । स॒र्व॒ऽर॒था । वि । ह॒री इति॑ । इ॒ह । मु॒ञ्च॒ ।
इन्द्र॑ । मा । त्वा॒ । यज॑मानासः । अ॒न्ये । नि । री॒र॒म॒न् । तु॒भ्य॑म् । इ॒मे । सु॒तासः॑ ॥ १ ॥

---

१-१. नास्ति मूको.

वेङ्कट० पूरणो वैश्वामित्रः। तीव्ररसम् अभिगतान्नम् अमुम् पिब। सर्वस्य आध्याने गन्तारौ अश्वौ इह वि मुञ्च। अवशिष्टं स्पष्टम् इति ॥ १ ॥

तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयन्ति।
इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम् ॥ २ ॥

तुभ्यम्। सुताः। तुभ्यम्। ऊँ इति। सोत्वासः। त्वाम्। गिरः। श्वात्र्याः। आ। ह्वयन्ति।
इन्द्र। इदम्। अद्य। सवनम्। जुषाणः। विश्वस्य। विद्वान्। इह। पाहि। सोमम् ॥ २ ॥

वेङ्कट० तुभ्यम् अभिषुताः, तुभ्यम् एव अभिषोतव्याः। त्वाम् स्तोतारः सुखस्य उत्पादकाः आ ह्वयन्ति। शिष्टं स्पष्टम् इति ॥ २ ॥

य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति।
न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥ ३ ॥

यः। उशता। मनसा। सोमम्। अस्मै। सर्वऽहृदा। देवऽकामः। सुनोति।
न। गाः। इन्द्रः। तस्य। परा। ददाति। प्रऽशस्तम्। इत्। चारुम्। अस्मै। कृणोति ॥३॥

वेङ्कट० यः कामयमानेन मनसा सोमम् अस्मै सर्वेण हृदयेन देवमिन्द्रं कामयमानः सुनोति, तस्य पशून् इन्द्रः परस्मै शत्रवे न परा ददाति। प्रशस्तम् एव अस्मै कल्याणम् करोति ॥३॥

अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान् न सुनोति सोमम्।
निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ॥ ४ ॥

अनुऽस्पष्टः। भवति। एषः। अस्य। यः। अस्मै। रेवान्। न। सुनोति। सोमम्।
[1]निः। अरत्नौ। मघऽवा। तम्। दधाति[1]। ब्रह्मऽद्विषः। हन्ति। अननुऽदिष्टः ॥ ४ ॥

वेङ्कट० प्रस्पष्टकर्मा भवति अयम् इन्द्रः अस्य, यः अस्मै धनवान् अपि न अभिषुणोति सोमम्। निः दधाति निरुक्तौ सन्धौ मघवा तम्[2] राजवर्जिते देशे[3], यद्वा रमणीयधनवर्जिते, कर्मद्विषः हन्ति अप्रचोदितः ॥ ४ ॥

अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ।
आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ॥ ५ ॥

अश्वऽयन्तः। गव्यन्तः। वाजयन्तः। हवामहे। त्वा। उपऽगन्तवै। ऊँ इति।
आऽभूषन्तः। ते। सुऽमतौ। नवायाम्। वयम्। इन्द्र। त्वा। शुनम्। हुवेम ॥ ५ ॥

वेङ्कट० अश्वम् गाम् अन्नम् च इच्छन्तः त्वाम् इह उपगन्तुम् हवामहे। अभिभवितुमिच्छन्तः तव सुमतौ नवायाम् वयम् इन्द्र! त्वाम् सुखकरम् हुवेम इति ॥ ५ ॥

[4]इति अष्टमाष्टके अष्टमाध्याये अष्टादशो वर्गः[4] ॥

---

१-१. तु. तै २,५,७,५ तत्रत्यञ्च भास्करभाष्यं द्र. २. नास्ति मूको. ३. वाशे मूको. ४-४. नास्ति मूको.

[ १६१ ]

[1]प्राजापत्यो यक्ष्मनाशन ऋषिः। इन्द्राग्नी राजयक्ष्मघ्नं वा देवता। त्रिष्टुप् छन्दः, पञ्चमी अनुष्टुप् [1]।

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ १ ॥

मुञ्चामि। त्वा। हविषा। जीवनाय। कम्। अज्ञातऽयक्ष्मात्। उत। राजऽयक्ष्मात्।
ग्राहिः। जग्राह। यदि। वा। एतत्। एनम्। तस्याः। इन्द्राग्नी इति। प्र। मुमुक्तम्। एनम् ॥

वेङ्कट० यक्ष्मनाशनः प्राजापत्यः। सूक्तं राजयक्ष्मघ्नम्। मुञ्चामि त्वा हुतेन हविषा जीवितुम् अज्ञातव्याधेः[2] अपि च राजयक्ष्मणः। यदि अपि एनम् ग्राहिः निर्ऋतिः स्वयमेव एतत् जग्राह, तस्याः इन्द्राग्नी! प्र मुमुक्तम् एनम् इति ॥ १ ॥

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥ २ ॥

यदि। क्षितऽआयुः। यदि। वा। पराऽइतः। यदि। मृत्योः। अन्तिकम्। निऽइतः। एव।
तम्। आ। हरामि। निःऽऋतेः। उपऽस्थात्। अस्पार्षम्। एनम्। शतऽशारदाय ॥ २ ॥

वेङ्कट० यदि क्षीणायुः, यदि अपि इतः परेतः, यदि अपि मृत्योः अन्तिकम् नीतः एव, तम् आ हरामि निर्ऋतेः उपस्थात्। अस्पार्षम् एनम् अनेकसंवत्सराय जीविताय। स्पृणोतिः आकर्षणकर्मा इति। 'स्परैवै देवा आदित्यं स्वर्गं लोकम् अस्पारयन्' (तैब्रा १,२,४,३) इति ब्राह्मणम् ॥ २ ॥

सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥ ३ ॥

सहस्रऽअक्षेण। शतऽशारदेन। शतऽआयुषा। हविषा। आ। अहार्षम्। एनम्।
शतम्। यथा। इमम्। शरदः। नयाति। इन्द्रः। विश्वस्य। दुःऽइतस्य। पारम् ॥ ३ ॥

वेङ्कट० बहुसूर्यदर्शनाद् बहुचक्षुष्केण[3] शतशारदेन अत एव शतजीवितेन हूयमानेन हविषा आ हरामि एनम्, यथा एनम् शतम् शरदः नयति इन्द्रः विश्वस्य दुरितस्य पारम् इति ॥ ३ ॥

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ ४ ॥

शतम्। जीव। शरदः। वर्धमानः। शतम्। हेमन्तान्। शतम्। ऊँ इति। वसन्तान्।
शतम्। इन्द्राग्नी इति। सविता। बृहस्पतिः। शतऽआयुषा। हविषा। इमम्। पुनः। दुः ॥४॥

---

१-१. नास्ति मूको. २. अज्ञाताव्या° मूको. ३. बहुचक्षुषेण मूको.

**वेङ्कट०** शतम् जीव। बहुधा उक्तिः तात्पर्येण कृता। हेमन्ताद्युपलक्षितशतशरद आयुः इमे देवाः पुनः प्रयच्छन्तु इति ॥ ४ ॥

आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ ५ ॥

आ। अहार्षम्। त्वा। अविदम्। त्वा। पुनः। आ। अगाः। पुनःऽनव।
सर्वऽअङ्ग। सर्वम्। ते। चक्षुः। सर्वम्। आयुः। च। ते। अविदम् ॥ ५ ॥

**वेङ्कट०** आ-हृतवान् अस्मि त्वाम् यक्ष्मणः। लब्धवान् अस्मि त्वाम्। मुमूर्षुः त्वम् पुनः आ अगाः पुनर्नव![1]। यः[2] पुनः नवोऽभवत् स पुनर्नवः। सर्वाङ्ग! सकलम् ते चक्षुः आसीत्। सर्वम् च तव आयुः अविदम्[3] देवेभ्यो लब्धवान् अस्मि इति ॥ ५ ॥

[4]इति अष्टमाष्टके अष्टमाध्याये एकोनविंशो वर्गः[4] ॥

## [ १६२ ]

[4]ब्राह्मो रक्षोहा ऋषिः। रक्षोहा देवता। अनुष्टुप् छन्दः[4]।

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ १ ॥

ब्रह्मणा। अग्निः। सम्ऽविदानः। रक्षःऽहा। बाधताम्। इतः।
अमीवा। यः। ते। गर्भम्। दुःऽनामा। योनिम्। आऽशये ॥ १ ॥

**वेङ्कट०** रक्षोहा ब्राह्मः। गर्भस्रावे प्रायश्चित्तम्। ब्राह्मणेन अग्निः सङ्गतः रक्षोहा बाधताम् इतः राक्षसम्, यः ते गर्भम् कुत्सितनामा योनिम् आशेते अधितिष्ठति। गर्भो गृह्णातीति, योनिः [4]यौति इति[4] ॥ १ ॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ २ ॥

यः। ते। गर्भम्। अमीवा। दुःऽनामा। योनिम्। आऽशये।
अग्निः। तम्। ब्रह्मणा। सह। निः। क्रव्यऽअदम्। अनीनशत् ॥ २ ॥

**वेङ्कट०** यः तव गर्भम् अमीवा दुर्णामा[5] योनिम् आवृत्य शेते, अग्निः तम् क्रव्यादम् ब्राह्मणेन सह निर्-णाशयतु इति ॥ २ ॥

यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम्।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ ३ ॥

---

१. नास्ति मूको. २. यत् मूको. ३. अविन्दन् मूको. ४-४. नास्ति मूको. ५. =पापनामा क्रिमिरिति या. ( ६,१२ ).

यः । ते । हन्ति । पतयन्तम् । निऽसत्स्नुम् । यः । सरीसृपम् ।
जातम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ३ ॥

वेङ्कट० यः ते अमीवा हन्ति पतयन्तम् गर्भम् अन्तर्निषीदन्तम् सर्पणशीलम् इति अवस्थाः क्रमेण कथिताः । यः[1] ते जातम् जिघांसति, तम् इतः नाशयामः ॥ ३ ॥

यस्त ऊरू विहरत्यन्तरा दंपती शये ।
योनिं यो अन्तरारेळिह तमितो नाशयामसि ॥ ४ ॥

यः । ते । ऊरू इति । विऽहरति । अन्तरा । दम्पती इति दम्ऽपती । शये ।
योनिम् । यः । अन्तः । आऽरेळिह । तम् । इतः । नाशयामसि ॥ ४ ॥

वेङ्कट० यः ते ऊरू विहरति विस्तारयति, अन्तरा च दम्पत्योः[2] शेते हिंसितुम् । यः च योनौ निषिक्ते रेतसि अन्तः प्रविश्य आरेळिह इति ॥ ४ ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ५ ॥

यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ५ ॥

वेङ्कट० एतेषु अन्यतमम् अधिष्ठाय यः त्वाम् उप निपद्यते इति ॥ ५ ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ६ ॥

यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ।
प्रजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ६ ॥

वेङ्कट० यः त्वाम् स्वप्नेन तमसा च मोहयित्वा निपद्यते इति ॥ ६ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये विंशो वर्गः[3] ॥

## [ १६३ ]

[3]विवृहा काश्यप ऋषिः । यक्ष्मनाशनं देवता । अनुष्टुप् छन्दः[3] ।

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ १ ॥

---

१. जातं य यो वि[3]; यो जातं यः अ[1]. २. इद० मूको. ३-३. नास्ति मूको

अक्षीभ्याम् । ते । नासिकाभ्याम् । कर्णाभ्याम् । छुबुकात् । अधि ।
यक्ष्मम् । शीर्षण्यम् । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ १ ॥

**वेङ्कट०** विवृहा काश्यपः। सर्वाणि अङ्गानि व्याप्य तिष्ठन्तम् यक्ष्मम् ततस्ततः वि वृहामि। शिरोऽन्तर्वर्ति मांसं मस्तिष्कः ॥ १ ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ २ ॥

ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ २ ॥

**वेङ्कट०** कण्ठस्था नाड्यो ग्रीवाः। अवशिष्टानि चाङ्गानि अभिधानविद्भ्योऽवगन्तव्यानि। निगदसिद्धान्वयं सूक्तमिति ॥ २ ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥ ३ ॥

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । हृदयात् । अधि ।
यक्ष्मम् । मतस्नाभ्याम् । यक्नः । प्लाशिऽभ्यः । वि । वृहामि । ते ॥ ३ ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥ ४ ॥

ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । श्रोणिऽभ्याम् । भासदात् । भंससः । वि । वृहामि । ते ॥ ४ ॥

मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ५ ॥

मेहनात् । वनम्ऽकरणात् । लोमऽभ्यः । ते । नखेऽभ्यः ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ५ ॥

अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥

अङ्गात्ऽअङ्गात् । लोम्नःऽलोम्नः । जातम् । पर्वणिऽपर्वणि ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ६ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये एकविंशो वर्गः[1] ॥

---

१-१. नास्ति मूको

[ १६४ ]

[1]प्रचेता आङ्गिरस ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः, तृतीया त्रिष्टुप्, अन्त्या पङ्क्तिः[1] ।

अपेहि मनसस्पतेऽप क्राम परश्चर ।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥ १ ॥

अप । इहि । मनसः । पते । अप । क्राम । परः । चर ।
परः । निःऽऋत्यै । आ । चक्ष्व । बहुधा । जीवतः । मनः ॥ १ ॥

**वेङ्कट०** प्रचेता आङ्गिरसः । दुःस्वप्नघ्नम् । अप गच्छ शीघ्रम् इतः त्वम्[2] मनसः पते!, अप क्राम, परः चर, परस्तात् स्थितायाः निर्ऋत्याः आ चक्ष्व । कामैः बहुधा भवति जीवतः मनः । तं मा हिंसीः इति ब्रूहि इति आत्मानं याचते इति ॥ १ ॥

भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् ।
भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥ २ ॥

भद्रम् । वै । वरम् । वृणते । भद्रम् । युञ्जन्ति । दक्षिणम् ।
भद्रम् । वैवस्वते । चक्षुः । बहुऽत्रा । जीवतः । मनः ॥ २ ॥

**वेङ्कट०** भजनीयम् धनम् मनसा वृणते[3], भद्रम् च अश्वम्[4] रथे युञ्जन्ति, यः कामान् समर्धयति । भद्रम् च चक्षुः कुर्वन्ति वैवस्वते परलोकनीताः कल्याणम् अनुतिष्ठन्ति । इत्थं बहुषु विनिहितम् जीवतः मनः इति ॥ २ ॥

यदाशसा निःशसाभिशसोपारिम जाग्रतो यत् स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु ॥ ३ ॥

यत् । आऽशसा । निःऽशसा । अभिऽशसा । उपऽआरिम । जाग्रतः । यत् । स्वपन्तः ।
अग्निः । विश्वानि । अप । दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु ॥ ३ ॥

**वेङ्कट०** यत् आशंसनेन निश्शंसनेन अभिशंसनेन च परविषयैः उपगतवन्तः जाग्रतः यत् स्वपन्तः[5] च, तानि विश्वानि दुष्कृतानि अग्निः अस्मत्तः आरे अप करोतु अप्रियाणि अस्माकम् इति ॥ ३ ॥

यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि ।
प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥ ४ ॥

यत् । इन्द्र । ब्रह्मणः । पते । अभिऽद्रोहम् । चरामसि ।
प्रऽचेताः । नः । आङ्गिरसः । द्विषताम् । पातु । अंहसः ॥ ४ ॥

**वेङ्कट०** यद् वयम् अभिद्रोहम् इन्द्र! कर्मणः पते! चरामः, तथाऽपि अस्मान् प्रकृष्टज्ञानः अग्निः द्विषताम् आहन्तुः आयुधात् रक्षतु ॥ ४ ॥

---

१-१. नास्ति मूको. २. तं मूको. ३. प्रणते मूको. ४. अश्वं च मूको. ५. °पतः मूको.

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् । जाग्रत्ऽस्वप्नः । सम्ऽकल्पः ।
पापः । यम् । द्विष्मः । तम् । सः । ऋच्छतु । यः । नः । द्वेष्टि । तम् । ऋच्छतु ॥ ५ ॥

वेङ्कट० जितवन्तः[1] वयम्, अद्य लब्धवन्तः च अभिलषितम्, अभूम च अपापाः । [2]जाग्रत्स्वप्नः सङ्कल्पः[2] जाग्रतः सुखदुःखविषयः सङ्कल्पः स्वप्नो रात्रौ भवति इत्यस्मिन्नर्थे शब्दोऽयम् । सः पापः स्वप्नः यम् वयम् द्विष्मः तम् सः ऋच्छतु, यः च अस्मान् द्वेष्टि तम् ऋच्छतु इति ॥ ५ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये द्वाविंशो वर्गः[2] ॥

## [ १६५ ]

[2]नैर्ऋतः कपोत ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[2] ।

देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदम् । आऽजगाम ।
तस्मै । अर्चाम । कृणवाम । निःऽकृतिम् । शम् । नः । अस्तु । द्विऽपदे । शम् । चतुःऽपदे ॥१॥

वेङ्कट० कपोतो नैर्ऋतः । 'कपोतोपहतौ प्रायश्चित्तम्, वैश्वदेवम्' ( ऋअ २,१०,१६५ ) । हे देवाः! कपोतः [3]देवैः प्रेषितः यत् इच्छन् अनर्थम्[3] दूतः निर्ऋत्याः इदम् गृहम् आजगाम, तं स्तुमः, कुर्मः च निष्कृतिम् । तथा सति शम् अस्माकम् अस्तु द्विपदे, शम् चतुष्पदे ॥ १ ॥

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥ २ ॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहेषु ।
अग्निः । हि । विप्रः । जुषताम् । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥

वेङ्कट० शिवः कपोतः युष्माभिः प्रेषितः अस्माकम् अस्तु अपापः हे देवाः! शकुनः गृहेषु । अग्निः हि मेधावी जुषताम् हविः अस्माकम् । अथ अस्मान् इयम् आहन्त्री पक्षिणी कपोती परि-वर्जयतु ॥ २ ॥

हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥ ३ ॥

---

१. जीवन्तः मूको. २-२. नास्ति मूको. ३-३. यदिच्छन्नर्थं देवैः प्रेषितः अ[1].

हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्याम् । पदम् । कृणुते । अग्निऽधाने ।
शम् । नः । गोभ्यः । च । पुरुषेभ्यः । च । अस्तु । मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥

वेङ्कट० हेतिः पक्षिणी न हिनस्तु अस्मान्। सा इयम् अस्माकम् आष्ट्र्याम् भूम्याम् पदम् कृणुते। याऽष्टुम्[1] अर्हति कर्षणाय सा तथोक्ता तस्याम् अनर्थं सूचयति। एवम् अग्निधाने च यज्ञे। शम् इति स्पष्टम्। यद्वा आष्ट्र्याम् अग्निशरणे[2] चास्ते इति ॥ ३ ॥

यदुलूको वदति मोघमेतद्यत् कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत् तस्मै यमाय नमो अस्तु मृत्यवे ॥ ४ ॥

यत् । उलूकः । वदति । मोघम् । एतत् । यत् । कपोतः । पदम् । अग्नौ । कृणोति ।
यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ४ ॥

वेङ्कट० यत् उलूकः वदति मोघम् एतत् भवतु, यत् च कपोतः पदम् अग्नौ कृणोति। यस्य दूतः इति स्पष्टम् ॥ ४ ॥

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम् ।
संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात् पतिष्ठः ॥ ५ ॥

ऋचा । कपोतम् । नुदत । प्रऽनोदम् । इषम् । मदन्तः । परि । गाम् । नयध्वम् ।
सम्ऽयोपयन्तः । दुःऽइतानि । विश्वा । हित्वा । नः । ऊर्जम् । प्र । पतात् । पतिष्ठः ॥ ५ ॥

वेङ्कट० मन्त्रेण कपोतम् नुदत प्रणोद्यम् इष्टाम् गाम् तर्पयन्तः घासैः तां गृहम् परि-णयध्वम् संयोपयन्तः विश्वानि दुरितानि। त्यक्त्वा अस्माकम् अन्नम् प्र गच्छतु[3] पतिष्ठः[4] कपोत इति ॥ ५ ॥

[5]इति अष्टमाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[5] ॥

[ १६६ ]

[5]ऋषभो वैराजः, ऋषभः शाक्वरो वा ऋषिः। सपत्नघ्नं देवता। अनुष्टुप् छन्दः, पञ्चमी महापङ्क्तिः[5]।

ऋषभं मा समानानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥ १ ॥

ऋषभम् । मा । समानानाम् । सऽपत्नानाम् । विऽससहिम् ।
हन्तारम् । शत्रूणाम् । कृधि । विऽराजम् । गोऽपतिम् । गवाम् ॥ १ ॥

वेङ्कट० ऋषभो वैराजः। सपत्नघ्नम्। हे मनो! माम् समानानाम् श्रेष्ठम्, सपत्नानाम् अभिभवितारम्, हन्तारम् च शत्रूणाम् कुरु, प्रभुम् गवाम् च स्वामिनम् इति ॥ १ ॥

---

१. यष्टुम् मूको. २. अग्निकरणे मूको. ३. यच्छतु मूको. ४. वसिष्ठः मूको.
५-५. नास्ति मूको.

अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः ।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥ २ ॥

अहम् । अस्मि । सपत्नऽहा । इन्द्रःऽइव । अरिष्टः । अक्षतः ।
अधः । सऽपत्नाः । मे । पदोः । इमे । सर्वे । अभिऽस्थिताः ॥ २ ॥

**वेङ्कट०** अहम् अस्मि सपत्नानां हन्ता इन्द्रः इव च अन्यूनः शस्त्रैः च अक्षतः । तस्य मम पादयोः अधस्तात् इमे सर्वे सपत्नाः मया अधिष्ठिताः इति ॥ २ ॥

अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया ।
वाचस्पते नि षेधेमान् यथा मदधरं वदान् ॥ ३ ॥

अत्र । एव । वः । अपि । नह्यामि । उभे इति । आर्त्नी इवेत्यार्त्नीऽइव । ज्यया ।
वाचः । पते । नि । सेध । इमान् । यथा । मत् । अधरम् । वदान् ॥ ३ ॥

**वेङ्कट०** अत्र एव मम पादयोः अधस्तात् युष्मान् अपि नह्यामि, यथा धनुषः आर्त्नी उभे ज्या विनह्यति[1] । हे वाचः पते! मनो! नि-षेध इमान् सपत्नान्, यथा अमी मत्तः अधरम् एव वक्तव्येषु वदेयुः ॥ ३ ॥

अभिभूरहमागमं विश्वकर्मेण धाम्ना ।
आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥ ४ ॥

अभिऽभूः । अहम् । आ । अगमम् । विश्वऽकर्मेण । धाम्ना ।
आ । वः । चित्तम् । आ । वः । व्रतम् । आ । वः । अहम् । सम्ऽइतिम् । ददे ॥ ४ ॥

**वेङ्कट०** अभिभवन् अहम् आ-गच्छामि वैश्वकर्मणेन तेजसा मानसेन, आ ददे च तेजसा युष्माकम् चित्तादीनीति, मया समनसः सकर्माण एकीभूताश्च यथा यूयं स्यात इति ॥ ४ ॥

योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥ ५ ॥

योगऽक्षेमम् । वः । आऽदाय । अहम् । भूयासम् । उत्ऽतमः । आ । वः । मूर्धानम् । अक्रमीम् ।
अधःऽपदात् । मे । उत् । वदत । मण्डूकाःऽइव । उदकात् । मण्डूकाः । उदकात्ऽइव ॥ ५ ॥

**वेङ्कट०** अप्राप्तस्य प्राप्तिः योगः, क्षेमो रक्षा, तद् उभयम् आदाय युष्माकं रक्षकः अहम् भूयासम् उत्तमः, आक्रमिषम् च युष्माकम् मूर्धानम् । मम अधस्पदं शयानाः उत् वदत, यथा उदके शयानाः मण्डूकाः तत उद्वदन्ति, न तु तीर उत्तीर्णाः । मण्डूकाः उदकादिव[2] इति पूरणम् ॥ ५ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[3] ॥

---

१. °ह्यनि मूको. २. अत्र या. ( १०,१६ ) द्र. ३-३. नास्ति मूको.

[ १६७ ]

[1]विश्वामित्र-जमदग्नी ऋषी । इन्द्रो देवता, ३ सोमवरुणबृहस्पत्यनुमति-मघवद्धातृविधातारः । जगती छन्दः[1] ।

तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि ।
त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः ॥ १ ॥

तुभ्य॑ । इदम् । इन्द्र । परि॑ । सिच्यते । मधु॑ । त्वम् । सुतस्य॑ । कलश॑स्य । राजसि ।
त्वम् । रयिम् । पुरुऽवीराम् । ऊँ इति॑ । नः । कृधि । त्वम् । तपः॑ । परिऽतप्य॑ । अजयः । स्व१रिति॑ स्वः॑ ॥

वेङ्कट० विश्वामित्रजमदग्नी । तुभ्यम् इदम् इन्द्र! पात्रेषु परि-षिच्यते मधु । त्वम् सुतेन पूर्णस्य कलशस्य ईशिषे । त्वम् धनम् बहुपुत्रम् अस्माकं कुरु । त्वम् तपः परितप्य, चान्द्रायणादिकं तपः, तत् कृत्वा अजयः[2] स्वर्गम् इति ॥ १ ॥

स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप ।
इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे ॥ २ ॥

स्वः॒ऽजित॑म् । महि॑ । मन्दानम् । अन्ध॑सः । हवा॑महे । परि॑ । शक्रम् । सुतान् । उप॑ ।
इमम् । नः । यज्ञम् । इह । बोधि । आ । गहि । स्पृध॑ः । जय॑न्तम् । मघऽवा॑नम् । ईमहे ॥२॥

वेङ्कट० स्वर्गस्य जेतारम् सोमेन अत्यन्तं तृप्यन्तम् परि हवामहे[3] शक्रम् सुतान् सोमान् प्रति । इमम् अस्माकम् यज्ञम् इह बुध्यस्व । आ गच्छ स्पर्धमानान् शत्रून् । जयन्तम् मघवानम् अपेक्षितं याचामहे ॥ २ ॥

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि ।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥ ३ ॥

सोम॑स्य । राज्ञः॑ । वरु॑णस्य । धर्म॑णि । बृहस्पतेः॑ । अनु॑ऽमत्याः । ऊँ इति॑ । शर्म॑णि ।
तव॑ । अहम् । अद्य । मघऽवन् । उप॑ऽस्तुतौ । धातः॑ । विधा॑तरिति॒ विऽधा॑तः । कलशा॑न् । अभक्षयम् ॥

वेङ्कट० सोमस्य राज्ञः वरुणस्य कर्मणि तथा बृहस्पतेः अनुमत्याः च सुखे[4] [5]यज्ञगृहे वा[5] तव च अहम् अद्य मघवन्! उपस्तुतौ वर्तमानः[6] धातः! विधातः! कलशान् सोमपूर्णान् भक्षितवान् अस्मि ॥ ३ ॥[7]

प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे ।
सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥ ४ ॥

---

१-१. नास्ति मूको. २. °जय मूको. ३. भवा° मूको. ४. सुख मूको. ५-५. स गृहे यजे मूको. ६. वर्धमानः मूको. ७. अत्र या. (११,१२) द्र.

प्रऽसूतः । भक्षम् । अकरम् । चरौ । अपि । स्तोमम् । च । इमम् । प्रथमः । सूरिः । उत् । मृजे । सुते । सातेन । यदि । आ । अगमम् । वाम् । प्रति । विश्वामित्रजमदग्नी इति । दमे ॥ ४ ॥

**वेङ्कट०** प्रसूतः भक्षम् अपि अहम् अकरम् अस्मिन् ते [1]चरौ चरणीये चरुणा वा युक्ते यज्ञे[1], स्तोमम् च इमम्[2] मुख्यः सूरिः उत् मृजे स्वीकरोमि । अभिषुते सोमे दानाय यदि आ गच्छेयम्, वाम् तदानीं हे विश्वामित्रजमदग्नी ! प्रति-ष्ठापयामि गृहे इति, त्वम् इन्द्र ! ब्रूहीति वाक्यशेषः ॥४॥

[3]इति अष्टमाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[3] ॥

## [ १६८ ]

[1]अनिलो वातायन ऋषिः । वायुर्देवता । त्रिष्टुप् छन्दः[1] ।

**वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः ।**
**दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥ १ ॥**

वातस्य । नु । महिमानम् । रथस्य । रुजन् । एति । स्तनयन् । अस्य । घोषः ।
दिविऽस्पृक् । याति । अरुणानि । कृण्वन् । उतो इति । एति । पृथिव्याः । रेणुम् । अस्यन् ॥१॥

**वेङ्कट०** अनिलो वातायनः । वातस्य क्षिप्रम् महिमानम् रंहितुः[4] प्रब्रवीमि — भञ्जन् वृक्षान् एति स्तनयन् अस्य घोषः । दिवं स्पृशन् गच्छति तत्र अरुणानि रजांसि कृण्वन् । अपि च[5] गच्छति पृथिव्याः पांसुम् क्षिपन् इति ॥ १ ॥

**सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः ।**
**ताभिः सयुक् सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥ २ ॥**

सम् । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनम् । गच्छन्ति । समनम् । न । योषाः ।
ताभिः । सऽयुक् । सऽरथम् । देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥ २ ॥

**वेङ्कट०** वातम्[6] अनु सम् प्र ईरयन्ति नियुतः, आ-गच्छन्ति च एनम् समनम् इव पतिं स्त्रियः । ताभिः संयुक्तः सरथम् देवः गच्छति अस्य विश्वस्य भुवनस्य राजा । यद्वा आपः विष्ठाः[7] इति ॥ २ ॥

**अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।**
**अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥ ३ ॥**

अन्तरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् । चन । अहरिति ।
अपाम् । सखा । प्रथमऽजाः । ऋतऽवा । क्व । स्वित् । जातः । कुतः । आ । बभूव ॥ ३ ॥

---

१-१. वाते मूको; सा. अनु पूरितः पाठः द्र. २. इमा मूको. ३-३. नास्ति मूको. ४. रहितु मूको. ५. न मूको ६. प्रैरते वा° मूको. ७. दिष्ठाः मूको.

वेङ्कट० अन्तरिक्षे मार्गैः गच्छन् न नि[1] विशते कस्मिंश्चिद् अपि दिवसे। अपाम् सखा प्रथमः सत्यः। सोऽयम् क्व स्वित् जातः, कुतः च आ वाति ॥ ३ ॥

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥ ४ ॥

आत्मा। देवानाम्। भुवनस्य। गर्भः। यथाऽवशम्। चरति। देवः। एषः।
घोषाः। इत्। अस्य। शृण्विरे। न। रूपम्। तस्मै। वाताय। हविषा। विधेम ॥ ४ ॥

वेङ्कट० प्राणभूतः सर्वेषाम् देवानाम् त्रैलोक्यस्य गर्भभूतः उदकस्य वा यथाकामम् गच्छति देवः एषः। घोषाः एव अस्य श्रूयन्ते, न रूपम्। तस्मै वाताय हविषा विधेम ॥ ४ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये षड्विंशो वर्गः[2] ॥

[ १६९ ]

[3]शबरः काक्षीवत ऋषिः। गावो देवता। त्रिष्टुप् छन्दः[3]।

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥ १ ॥

मयःऽभूः। वातः। अभि। वातु। उस्राः। ऊर्जस्वतीः। ओषधीः। आ। रिशन्ताम्।
पीवस्वतीः। जीवऽधन्याः। पिबन्तु। अवसाय। पत्ऽवते। रुद्र। मृळ ॥ १ ॥

वेङ्कट० शबरः[3] काक्षीवतः। सुखस्य भावयिता[4] वातः अस्माकम् उस्राः अभि वातु। ताः च उस्राः रसवतीः ओषधीः दन्तैः आ-च्छिन्दन्तु[5] भक्षयन्तु। अपि च पयस्वतीः अस्मान् जीवयन्तीः[6] अपः[7] पिबन्तु। हे रुद्र! पादवते अन्नाय त्वं सुखम् उत्पादय इति प्रस्थापयन् आह। निरुक्तं (१,१७) द्रष्टव्यम् इति ॥ १ ॥

याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ २ ॥

याः। सऽरूपाः। विऽरूपाः। एकऽरूपाः। यासाम्। अग्निः। इष्ट्या। नामानि। वेद।
याः। अङ्गिरसः। तपसा। इह। चक्रुः। ताभ्यः। पर्जन्य। महि। शर्म। यच्छ ॥ २ ॥

वेङ्कट० याः गोत्वेनैकरूपाः, इतरेतरम् विरूपाः, अथापि सास्नालाङ्गूलादिना[8] एकरूपाः, यासाम् अग्निः एष्टव्यानि नामानि वेत्ति, याः च अङ्गिरसः दिवि स्थिता महता तपसा इह अस्मिन् लोके चक्रुः, ताभ्यः पर्जन्य! महत् सुखम् प्र-यच्छ ॥ २ ॥

---

१. नास्ति मूको.  २-२. नास्ति मूको.  ३. दवहराः मूको.  ४ भावैता मूको.  ५. °न्दतु मूको.  ६. °यन्ती मूको.  ७. उपः मूको.  ८. ···दिना मूको.

या देवेषु तन्व१मैरयन्त यासां सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ ३ ॥

याः । देवेषु । तन्वम् । ऐरयन्त । यासाम् । सोमः । विश्वा । रूपाणि । वेद ।
ताः । अस्मभ्यम् । पयसा । पिन्वमानाः । प्रजाऽवतीः । इन्द्र । गोऽस्थे । रिरीहि ॥ ३ ॥

**वेङ्कट०** याः देवेषु **आत्मीयं पयोदधिकृतरूपं** शरीरम् प्रेरयन्ति, यासाम् च सोमः विश्वानि रूपाणि वेत्ति, ताः अस्मभ्यम् पयसा क्षरन्तीः वत्सवतीः इन्द्र! गोष्ठे प्रयच्छ इति ॥ ३ ॥

प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाकुस्तासां वयं प्रजया सं सदेम ॥ ४ ॥

प्रजाऽपतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृऽभिः । सम्ऽविदानः ।
शिवाः । सतीः । उप । नः । गोऽस्थम् । आ । अकुरित्यकः । तासाम् । वयम् । प्रऽजया । सम् । सदेम ॥

**वेङ्कट०** प्रजापतिः मह्यम् एताः **रममाणः** विश्वैः देवैः पितृभिः **च सहितः** संविदम् वा [1]कुर्वन् शिवाः सतीः उप आ[1] **करोतु** नः गोष्ठम् । तासाम् वयम् प्रजया सम् **गच्छेमहि**[2] ॥ ४ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये सप्तविंशो वर्गः[3] ॥

[ १७० ]

[3]विभ्राट् सौर्य ऋषिः । सूर्यो देवता । जगती छन्दः, अन्त्या आस्तारपङ्क्तिः[3] ।

विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ १ ॥

विऽभ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञऽपतौ । अविऽह्रुतम् ।
वातऽजूतः । यः । अभिऽरक्षति । त्मना । प्रऽजाः । पुपोष । पुरुधा । वि । राजति ॥ १ ॥

**वेङ्कट०** **विभ्राट् सूर्यपुत्रः । विभ्राजमानः** बृहत् पिबतु **सोममयम्** मधु आयुः[4] **धारयन् यजमाने अहिंसितम् । वातप्रेरितः**[5] यः अभिरक्षति **आत्मना एव, सोऽयम्** प्रजाः **पोषयति बहुधा च** वि राजति **इति** ॥ १ ॥

विभ्राड् बृहत् सुभृतं वाजसातमं धर्मन् दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥

---

१-१. कुर्वन्नवा मूको. २. °महि पुनर्न इति पूरणम् मूको. ३-३. नास्ति मूको. ४. वायुः मूको. ५. °रितं वि[2].

विऽभ्राट् । बृहत् । सुऽभृतम् । वाजऽसातमम् । धर्मन् । दिवः । धरुणे । सत्यम् । अर्पितम् ।
अमित्रऽहा । वृत्रऽहा । दस्युहन्ऽतमम् । ज्योतिः । जज्ञे । असुरऽहा । सपत्नऽहा ॥ २ ॥

वेङ्कट० विभ्राजमानम् बृहत् सुसम्भृतम् अन्नसातमम्[1] धर्मन्[2] दिवः उदके सत्यम् अर्पितम् अमित्रहा उपद्रवहा अतिशयेनोपक्षपयितॄणां हिंसकम् ज्योतिः अजायत असुरहा सपत्नहा[3] इति सूर्यम् आह[4] ॥२॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ३ ॥

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्ऽतमम् । विश्वऽजित् । धनऽजित् । उच्यते । बृहत् ।
विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतम् ॥ ३ ॥

वेङ्कट० इदम् श्रेष्ठम् ज्योतिषाम् ज्योतिः उत्तमम् विश्वजित् धनजित् च कीर्त्यते बृहत् । विश्वस्य राजकम् तेजः महत् सूर्यः सर्वेषां दर्शनाय विस्तीर्णम् प्रथयति तथा सहः ओजः बलं च अच्युतम्[5] एषाम् ॥ ३ ॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥ ४ ॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ।
येन । इमा । विश्वा । भुवनानि । आऽभृता । विश्वऽकर्मणा । विश्वदेव्यऽवता ॥ ४ ॥

वेङ्कट० विभ्राजन् माम् ज्योतिषा[6] स्वर्गात् अगच्छः त्वम्, यः त्वं दिवं रोचयसि । येन च त्वया इमानि विश्वानि भुवनानि उदकानि आहृतानि लोका वा आधृताः[7] सन्धृताः सर्वस्य कर्त्रा[8] सर्वदेवहितकर्मयुक्तेन[9] इति ॥ ४ ॥

[10]इति अष्टमाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[10] ॥

## [ १७१ ]

[10]इटो भार्गवः ऋषिः । इन्द्रो देवता । गायत्री छन्दः[10] ।

त्वं त्यमिटतो रथमिन्द्र प्रावः सुतावतः । अशृणोः सोमिनो हवम् ॥ १ ॥

त्वम् । त्यम् । इटतः । रथम् । इन्द्र । प्र । आवः । सुतऽवतः । अशृणोः । सोमिनः । हवम् ॥ १ ॥

वेङ्कट० [11]इटो भार्गवः[11] । त्वम् त्यम् इटनामधेयस्य[12] मम रथम् इन्द्र! प्र अरक्षः अभिषुतसोमस्य । अशृणोः च सोमवतः मम ह्वानम् इति ॥ १ ॥

---

१. °तम मूको. २. तु. वें. ऋ ५,१५,२; नास्ति मूको. ३. सपद्रहा मूको. ४. °हम् मूको. ५. अल्प मूको. ६. ज्योतिः मूको. ७. सधृताः मूको. ८. कर्ता मूको. ९. °दैन हि तद् क° मूको. १०-१०. नास्ति मूको. ११-११. इटं भार्गविः मूको. १२. इटं नाम° मूको.

त्वं मखस्य दोधतः शिरोऽव त्वचो भरः । अगच्छः सोमिनो गृहम् ॥ २ ॥

त्वम् । मखस्य । दोधतः । शिरः । अव । त्वचः । भरः । अगच्छः । सोमिनः । गृहम् ॥ २ ॥

**वेङ्कट०** त्वम् यज्ञस्य बाधकस्य शिरः अव भरः अवाहरः[1] रक्षसः।[2] 'घ्नन्तः कृष्णामप त्वचम्' ( ऋ ९,४१,१ ) इति उक्तम्। अगच्छः च सोमिनः गृहम् इति ॥ २ ॥

त्वं त्यमिन्द्र मर्त्यमास्त्रबुध्नाय वेन्यम् । मुहुः श्रथ्ना मनस्यवे ॥ ३ ॥

त्वम् । त्यम् । इन्द्र । मर्त्यम् । आस्त्रऽबुध्नाय । वेन्यम् । मुहुः । श्रथ्नाः । मनस्यवे ॥ ३ ॥

**वेङ्कट०** त्वम् तम् इन्द्र! मनुष्यम् आस्त्रबुध्नाय राज्ञे वेन्यम् नाम शत्रुं मुहुर्मुहुः अश्नथयः स्तुतीरिच्छते ॥ ३ ॥

त्वं त्यमिन्द्र सूर्यं पश्चा सन्तं पुरस्कृधि । देवानां चित्तिरो वशम् ॥ ४ ॥

त्वम् । त्यम् । इन्द्र । सूर्यम् । पश्चा । सन्तम् । पुरः । कृधि । देवानाम् । चित् । तिरः । वशम् ॥

**वेङ्कट०** त्वम् त्यम् इन्द्र! सूर्यम् पश्चात् सन्तम् पुनः च पुरतः कुरु। स्तोतॄणां च कामम् तिरः कुरु प्राप्तं कुरु इति। तिर इति प्राप्तस्य नाम ( तु. या ३,२० ) इत्युक्तम् ॥ ४ ॥

[3]इति अष्टमाष्टके अष्टमाध्याये एकोनात्रिंशो वर्गः[3] ॥

[ १७२ ]

[1]संवर्त आङ्गिरस ऋषिः। उषा देवता। द्विपदा विराट् छन्दः[1]।

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ १ ॥

आ । याहि । वनसा । सह । गावः । सचन्त । वर्तनिम् । यत् । ऊधःऽभिः ॥ १ ॥

**वेङ्कट०** संवर्त आङ्गिरसः। आ-गच्छ धनेन सह, गावः सेवन्ते यदा तदाहस्थानम् (?) ऊधभिः पूर्णपयस्कैः सहिताः ॥ १ ॥

आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥ २ ॥

आ । याहि । वस्व्या । धिया । मंहिष्ठः । जारयत्ऽमखः । सुदानुऽभिः ॥ २ ॥

**वेङ्कट०** आ याहि प्रशस्तया बुद्ध्या दातृतमः जीर्यमाणयज्ञः[4] शोभमदानैः[5] सहेति द्वाभ्याम् उषसि आगतायाम् आत्मानम् एव यज्ञार्थम् आह्वयति ॥ २ ॥

पितुभृतो न तन्तुमित् सुदानवः प्रति दध्मो यजामसि ॥ ३ ॥

---

१. अवहरः मूको. २. तु. ऋ २,२०,६. ३-३. नास्ति मूको. ४. °यज्ञाः मूको. ५. शोभनैः मूको.

पितुऽभृतः । न । तन्तुम् । इत् । सुऽदानवः । प्रति । दध्मः । यजामसि ॥ ३ ॥

वेङ्कट० पितृभृतः अन्नवन्तः यथा प्रजातन्तुम् प्रति सन्दधति, तथा वयं सुदानाः दैव्यम् एव तन्तुम् प्रति दध्मः, यजामः इत्यर्थः ॥ ३ ॥

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥ ४ ॥

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता ॥ ४ ॥

वेङ्कट० उषाः स्वसुः रात्रेः अप सम् वर्तयति वर्तमानम् तमः शोभनेन प्रादुर्भावेन इति ॥ ४ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये त्रिंशो वर्गः[1] ॥

## [ १७३ ]

[1]ध्रुव आङ्गिरस ऋषिः । राजा देवता । अनुष्टुप् छन्दः[1] ।

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ १ ॥

आ । त्वा । अहार्षम् । अन्तः । एधि । ध्रुवः । तिष्ठ । अविऽचाचलिः ।
विशः । त्वा । सर्वाः । वाञ्छन्तु । मा । त्वत् । राष्ट्रम् । अधि । भ्रशत् ॥ १ ॥

वेङ्कट० ध्रुव आङ्गिरसः । कञ्चन राजानं प्रति इदं ददर्श । राष्ट्राद् भ्रष्टं त्वाम् आ-हृतवान् अस्मि । इदानीं राष्ट्रस्य मध्ये भव । तत्र ध्रुवः तिष्ठ अविचाचलिः । सर्वाः विशः[2] त्वाम् वाञ्छन्तु । मा[3] त्वत्तः राष्ट्रम् अधि भ्रश्यतु ॥ १ ॥

इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ २ ॥

इह । एव । एधि । मा । अप । च्योष्ठाः । पर्वतःऽइव । अविऽचाचलिः ।
इन्द्रःऽइव । इह । ध्रुवः । तिष्ठ । इह । राष्ट्रम् । ॐ इति । धारय ॥ २ ॥

वेङ्कट० इह एव भव मा अप गच्छ पर्वतः इव निश्चलः । इन्द्रः इव इति स्पष्टम् इति ॥ २ ॥

इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवत् तस्मा उ ब्रह्मणस्पतिः ॥ ३ ॥

इमम् । इन्द्रः । अदीधरत् । ध्रुवम् । ध्रुवेण । हविषा ।
तस्मै । सोमः । अधि । ब्रवत् । तस्मै । ॐ इति । ब्रह्मणः । पतिः ॥ ३ ॥

---

१-१. नास्ति मूको. २. त्रुटितम् मूको. ३. ममा मूको.

वेङ्कट० 'अभिद्यमानेन उदकेन' इन्द्रः एनम् ध्रुवम् धारयतु। तम् इमम् सोमः ब्रह्मणः पतिः च अधि ब्रूताम् इति ॥ ३ ॥

ध्रुवा द्यौर्ध्रुवा पृ॑थि॒वी ध्रु॒वास॒ः पर्व॑ता इ॒मे ।
ध्रु॒वं विश्व॑मि॒दं जग॑द् ध्रु॒वो राजा॑ वि॒शाम॒यम् ॥ ४ ॥

ध्रु॒वा । द्यौः । ध्रु॒वा । पृ॒थि॒वी । ध्रु॒वासः॑ । पर्व॑ताः । इ॒मे ।
ध्रु॒वम् । विश्व॑म् । इ॒दम् । जग॑त् । ध्रु॒वः । राजा॑ । वि॒शाम् । अ॒यम् ॥ ४ ॥

वेङ्कट० निगदसिद्धा ॥ ४ ॥

ध्रु॒वं ते॒ राजा॒ वरु॑णो ध्रु॒वं दे॒वो बृह॒स्पति॑ः ।
ध्रु॒वं त॒ इन्द्र॑श्चा॒ग्निश्च॑ रा॒ष्ट्रं धा॑रयतां ध्रु॒वम् ॥ ५ ॥

ध्रु॒वम् । ते॒ । राजा॑ । वरु॑णः । ध्रु॒वम् । दे॒वः । बृह॒स्पति॑ः ।
ध्रु॒वम् । ते॒ । इन्द्र॑ः । च॒ । अ॒ग्निः । च॒ । रा॒ष्ट्रम् । धा॒र॒य॒ताम् । ध्रु॒वम् ॥ ५ ॥

वेङ्कट० इमे तव राष्ट्रम् ध्रुवम् धारयन्तु। पुनः ध्रुवम् इति पूरणम् इति ॥ ५ ॥

ध्रु॒वं ध्रु॒वेण॑ ह॒विषा॒भि सोमं॑ मृशामसि ।
अथो॑ त॒ इन्द्र॒ः केव॑ली॒र्विशो॑ बलि॒हृत॑स्करत् ॥ ६ ॥

ध्रु॒वम् । ध्रु॒वेण॑ । ह॒विषा॑ । अ॒भि । सोम॑म् । मृ॒शा॒म॒सि॒ ।
अथो॒ इति॑ । ते॒ । इन्द्र॑ः । केव॑लीः । विशः॑ । ब॒लि॒ऽहृत॑ः । क॒र॒त् ॥ ६ ॥

वेङ्कट० ध्रुवम् ध्रुवेण उदकेन सोतारम् त्वाम् अभि मृशामः अभिषिञ्चामः। अथ तव इन्द्रः सर्वाः विशः करप्रदायिनीः करोतु ॥ ६ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[2] ॥

## [ १७४ ]

[1]अभीवर्त आङ्गिरस ऋषिः । राजा देवता। अनुष्टुप् छन्दः[1] ।

अ॒भी॒व॒र्तेन॑ ह॒विषा॒ येनेन्द्रो॑ अभिवावृ॒ते ।
तेना॒स्मान् ब्र॑ह्मणस्पते॒ऽभि रा॒ष्ट्राय॑ वर्तय ॥ १ ॥

अ॒भि॒ऽव॒र्तेन॑ । ह॒विषा॑ । येन॑ । इन्द्र॑ः । अ॒भि॒ऽव॒वृ॒ते ।
तेन॑ । अ॒स्मान् । ब्र॒ह्म॒णः॒ । प॒ते॒ । अ॒भि । रा॒ष्ट्राय॑ । व॒र्त॒य॒ ॥ १ ॥

---

१-१. अभिन्यमानोद° मूको. २-२. नास्ति मूको.

वेङ्कट० अभीवर्त आङ्गिरसः। अभिवर्तमानेन उदकेन येन इन्द्रः अभिवृत्तवान्, तेन अस्मान् ब्रह्मणः पते! राष्ट्राय अभि वर्तय ॥ १ ॥

अभिवृत्य सपत्नानभि या नो अरातयः ।
अभि पृतन्यन्तं तिष्ठाभि यो न इरस्यति ॥ २ ॥

अभिऽवृत्य । सऽपत्नान् । अभि । याः । नः । अरातयः ।
अभि । पृतन्यन्तम् । तिष्ठ । अभि । यः । नः । इरस्यति ॥ २ ॥

वेङ्कट० अभिवृत्य तिष्ठ सपत्नान्। अभि-वृत्यैव तिष्ठ ये अस्माकम् अरातयः। तथा [1]पृतन्यन्तम् त्वम्[1] अभि तिष्ठ। अभि तिष्ठ च तम् यः अस्माकम् अन्नमिच्छति[2] ॥ २ ॥

अभि त्वा देवः सविताभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥ ३ ॥

अभि । त्वा । देवः । सविता । अभि । सोमः । अवीवृतत् ।
अभि । त्वा । विश्वा । भूतानि । अभिऽवर्तः । यथा । अससि ॥ ३ ॥

वेङ्कट० ... ... ... अभि वर्तयतु, यथा त्वम् अभिवृत्तो भवसि सपत्नानाम् इति ॥ ३ ॥

येनेन्द्रो हविषा कृत्व्यभवद् द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्नः किलाभुवम् ॥ ४ ॥

येन । इन्द्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः ।
इदम् । तत् । अक्रि । देवाः । असपत्नः । किल । अभुवम् ॥ ४ ॥

वेङ्कट० येन इन्द्रः हविषा कर्मवान् अभवत् यशस्वी च उत्तमः, इदम् तत् हविः [3]अहम् अकार्षम्[3] देवाः!। असपत्नः च अहम् अभवम् इति ॥ ४ ॥

असपत्नः सपत्नहाभिराष्ट्रो विषासहिः ।
यथाहमेषां भूतानां विराजानि जनस्य च ॥ ५ ॥

असपत्नः । सपत्नऽहा । अभिऽराष्ट्रः । विऽससहिः ।
यथा । अहम् । एषाम् । भूतानाम् । विऽराजानि । जनस्य । च ॥ ५ ॥

वेङ्कट० अभियोक्तृसपत्नवर्जितः [4]सपत्नानां हन्ता अभिगतराष्ट्रः[4] अभिभावुकः यथा अहम् एषाम्

---

१-१. अभिपृतन्यन्तं त्वा मूको. २. अन्नमि ... मूको. ३-३. अकार्षम् अहम् अ[1]. ४-४. सप ... गत° वि[2]; ... राष्ट्रः अ[1].

भूतानाम् ईश्वरो भवामि 'जातस्य सर्वस्य च', तथा मां कुरुत इति राजा भूत्वा पुरः अभितः वदति इति ॥ ५ ॥

²इति अष्टमाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः² ॥

[ १७५ ]

³ऊर्ध्वग्रावा सर्प आर्बुदिर्ऋषिः । ग्रावाणो देवता । गायत्री छन्दः³ ।

प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुत ॥ १ ॥

प्र । वः । ग्रावाणः । सविता । देवः । सुवतु । धर्मणा । धूःऽसु । युज्यध्वम् । सुनुत ॥ १ ॥

वेङ्कट० ऊर्ध्वग्रावा ³सर्प आर्बुदिः³ । ग्रावस्तुतिः । अनुजानातु युष्मान् हे ग्रावाणः! सविता देवः कर्मणा । ते यूयं तेन प्रसूता ⁴अभिषवस्थानेषु युक्ता भवत, अनन्तरम्⁴ अभि-षुणुत सोमम् ॥ १ ॥

ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिम् । उस्राः कर्तन भेषजम् ॥ २ ॥

ग्रावाणः । अप । दुच्छुनाम् । अप । सेधत । दुःऽमतिम् । उस्राः । कर्तन । भेषजम् ॥ २ ॥

वेङ्कट० ग्रावाणः! दुच्छुनाम् दुर्मतिम् च अप सेधत, पशून् कुरुत भेषजम् च ॥ २ ॥

ग्रावाण उपरेष्वा महीयन्ते सजोषसः । वृष्णे दधतो वृष्ण्यम् ॥ ३ ॥

ग्रावाणः । उपरेषु । आ । महीयन्ते । सऽजोषसः । वृष्णे । दधतः । वृष्ण्यम् ॥ ३ ॥

वेङ्कट० उपरः प्रतिष्ठो मध्यस्थो ग्रावा । तेषु उपरेषु ग्रावाणः अभिषवे प्रवृत्ताः स्तूयन्ते सङ्गताः इन्द्राय धारयन्तः सोमं बलकरम् ॥ ३ ॥

ग्रावाणः सविता नु वो देवः सुवतु धर्मणा । यजमानाय सुन्वते ॥ ४ ॥

ग्रावाणः । सविता । नु । वः । देवः । सुवतु । धर्मणा । यजमानाय । सुन्वते ॥ ४ ॥

वेङ्कट० हे ग्रावाणः! सविता क्षिप्रम् युष्मान् देवः प्र-सुवतु कर्मणा हस्तचलनेन यजमानाय सुन्वते इति ॥ ४ ॥

²इति अष्टमाष्टके अष्टमाध्याये त्रयस्त्रिंशो वर्गः² ॥

[ १७६ ]

¹सूनुरार्भव ऋषिः । अग्निर्देवता, आद्याया ऋभवः । अनुष्टुप् छन्दः, द्वितीया गायत्री¹ ।

प्र सूनव ऋभूणां बृहन्नवन्त वृजना ।
क्षामा ये विश्वधायसोऽश्नन् धेनुं न मातरम् ॥ १ ॥

---

१-१. जात स च सर्व च मूको. २-२. नास्ति मूको. ३-३. बुदिः वि³; बुधिः अ¹. ४-४. त्रुटितम् मूको.; सा. अनु. पूर्तिः द्र.

प्र । सूनवः । ऋभुणाम् । बृहत् । नवन्त । वृजना ।
क्षाम । ये । विश्वऽधायसः । अश्नन् । धेनुम् । न । मातरम् ॥ १ ॥

वेङ्कट० सूनुराभवः[1] । आग्नेयम् । आद्याऽऽभवी । प्र स्तुवन्ति पुत्राः ऋभूणाम् महान्ति बलानि ये कृशां भूतम् रक्षणाय प्राप्नुवन्ति विश्वस्य धातारः धेनुम् इव पयसः[2] निर्मात्रीम् कृशां घासेन श्रद्दधाना इति ॥ १ ॥

प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् ॥ २ ॥

प्र । देवम् । देव्या । धिया । भरत । जातऽवेदसम् । हव्या । नः । वक्षत् । आनुषक् ॥ २ ॥

वेङ्कट० प्र भरत देवम् देव्या प्रज्ञया जातप्रज्ञम् । हवींषि नः वहतु अनुषक्तम् ॥ २ ॥

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते ।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥ ३ ॥

अयम् । ऊँ इति । स्यः । प्र । देवऽयुः । होता । यज्ञाय । नीयते ।
रथः । न । योः । अभिऽवृतः । घृणिऽवान् । चेतति । त्मना ॥ ३ ॥

वेङ्कट० सः अयम् प्र नीयते देवकामः होता यज्ञार्थम् । रथः इव धनस्य मिश्रयिता परिवृतः तेजोभिः दीप्तिमान्[3] प्रज्ञापयति सर्वम् आत्मना एव ॥ ३ ॥

अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चित् सहीयान् देवो जीवातवे कृतः ॥ ४ ॥

अयम् । अग्निः । उरुष्यति । अमृतात्ऽइव । जन्मनः ।
सहसः । चित् । सहीयान् । देवः । जीवातवे । कृतः ॥ ४ ॥

वेङ्कट० अयम् अग्निः रक्षति अमृतात् देववर्गात् इव जन्मनः जायमानात्[4] मनुष्यवर्गाद् अपि स्तोतारम् बलाद् अपि बलवत्तरः । सोऽयम् देवः जीवितुं निर्मितः[5] ईश्वरैः इति ॥ ४ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये चतुस्त्रिंशो वर्गः[6] ॥

## [ १७७ ]

[6]पतङ्गः प्राजापत्य ऋषिः । मायाभेदो देवता । त्रिष्टुप् छन्दः, आद्या जगती[6] ।

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।
समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥ १ ॥

पतङ्गम् । अक्तम् । असुरस्य । मायया । हृदा । पश्यन्ति । मनसा । विपःऽचितः ।
समुद्रे । अन्तरिति । कवयः । वि । चक्षते । मरीचीनाम् । पदम् । इच्छन्ति । वेधसः ॥ १ ॥

---

१. °भवम् मूको. २. यवसः मूको. ३. दीप्तिः मूको. ४. °माना मूको. ५. °तम् मूको.
६-६. नास्ति मूको.

वेङ्कट० पतङ्गः प्राजापत्यः[1]। पतङ्गम् अक्तम्[2] प्राज्ञस्य तस्य मायया प्रच्छन्नम् हृदयेन पश्यन्ति मनसा च विपश्चितः। तम् इमं मायापरिवृतम् समुद्रे अन्तः वि पश्यन्ति कवयः हृदये।[3] मरीचीनाम् पदम् आवासस्थानम् अन्विच्छन्ति वेधसः ॥ १ ॥

पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः ।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥ २ ॥

पतङ्गः । वाचम् । मनसा । बिभर्ति । ताम । गन्धर्वः । अवदत् । गर्भे । अन्तरिति ।
ताम् । द्योतमानाम् । स्वर्यम् । मनीषाम् । [4]ऋतस्य । पदे । कवयः । नि । पान्ति[4] ॥ २ ॥

वेङ्कट० सोऽयम् अन्तरिक्षेण गच्छन् आदित्यः माध्यमिकाम् वाचम् मनसा बिभर्ति। ताम् गन्धर्वः[5] वाचो धर्ता उदकस्य वा वदति गर्भे अन्तः वर्तमानः इति पर्जन्यम् उक्तं मन्यन्ते। प्राणम् अपरे गन्धर्वम् आहुः। ताम् दीप्यमानाम् स्वरणकुशलाम्[6] मनस ईशित्रीम् उदकस्थाने अन्तरिक्षे पतङ्गे वा कवयः देवान् इतरान् रक्षन्ति ॥ २ ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ३ ॥

अपश्यम् । गोऽपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३ ॥

वेङ्कट० गता ( ऋ १,१६४,३१ द्र. )। अत्र च मायाच्छन्नो देव उक्तः। स कः कथं चात्र अभिहित इति सूक्ष्मेक्षिका कार्या प्राज्ञैः इति ॥ ३ ॥

[7]इति अष्टमाष्टके अष्टमाध्याये पञ्चत्रिंशो वर्गः[7] ॥

[ १७८ ]

[8]अरिष्टनेमिस्तार्क्ष्य ऋषिः। तार्क्ष्यो देवता। त्रिष्टुप् छन्दः[8]।

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥ १ ॥

त्यम् । ऊँ इति । सु । वाजिनम् । देवऽजूतम् । सहऽवानम् । तरुतारम् । रथानाम् ।
अरिष्टऽनेमिम् । पृतनाजम् । आशुम् । स्वस्तये । तार्क्ष्यम् । इह । हुवेम ॥ १ ॥[8]

वेङ्कट० अरिष्टनेमिः तार्क्ष्यः। तम् एव बलिनम् देवैः आकृष्टम् वेगवन्तम् तारकम् शत्रुरथानाम् अहिंसितायुधम् पृतनां जेतारम् आशुम् अविनाशाय तार्क्ष्यम् इह सुष्ठु आ हुवेम इति ॥ १ ॥

---

१. प्राजातयम् मूको. २. उक्तम् मूको. ३. तु. ऋ १,१५९,४; ४,५८,५;११. ४-४. तु. ऋ १०,५,२. ५. तु. ऋ १०,१२३,४. ६. स्मर° अ[1]. ७-७. नास्ति मूको. ८. अत्र या. (१०,२८) द्र.

देवता ।

उत्तिष्ठतावं पश्यतेन्द्रस्य [illegible]

यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥ १ ॥

उत् । तिष्ठत । अवं । पश्यत । इन्द्रस्य । भागम् । ऋत्वियम् ।

यदि । श्रातः । जुहोतन । यदि । अश्रातः । ममत्तन ॥ १ ॥

वेङ्कट० शिबिरौशीनरः, काशिराजः प्रतर्दनः, रौहिदश्वो वसुमनाः इति एकर्चाः । उत् तिष्ठत ऋत्विजः!, अव पश्यत इन्द्रस्य भागम् ऋतौ भवं यः तस्य कालः तत्र भवम् । सः यदि भागः पक्वः शीघ्रं जुहुत । अथ यदि अशृतः, तावत् इन्द्रं स्तुत ॥ १ ॥

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम् ।

परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥ २ ॥

---

१. स्वरतः सम्बुद्ध्यन्तं द्र. ( तु. सा. प्रभृतयः । वें. प्रथमान्तमिति विमृश्यम् ) । विभक्तिभेदे तु. ऋ १,१८५,८; ४,२३,१०. २. अत्र या. (१०,२९) द्र. ३-३. नास्ति मूको.

इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम ।
उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥ २ ॥

इन्द्रस्यऽइव । रातिम् । आऽजोहुवानाः । स्वस्तये । नावम्ऽइव । आ । रुहेम ।
उर्वी इति[१] । न । पृथ्वी इति[१] । बहुले इति[१] । गभीरे इति[१] । मा । वाम् । आऽईतौ । मा । पराऽइतौ । रिषाम ॥

वेङ्कट० इन्द्रस्य इव रातिम् दानम् आभिमुख्येन आह्वयन्तः ताक्ष्यर्म् स्वस्तये नावम् इव आ रुहेम । द्यावापृथिव्यौ इव बहुले अतिगम्भीरे मा तव आगमने मा च परागमने वयं रिषेम इति । वाम् इति एकवचनेऽपि द्रष्टम् इति ॥ २ ॥

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥ ३ ॥

सद्यः । चित् । यः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।
सहस्रऽसाः । शतऽसाः । अस्य । रंहिः । न । स्म । वरन्ते । युवतिम् । न । शर्याम् ॥ ३ ॥[१]

वेङ्कट० तदानीम् एव यः बलेन पञ्च जनान् सूर्यः इव तेजसा अन्तरिक्षम् तनोति विस्तारयति । तस्य अस्य ताक्ष्यर्स्य शतसहस्रयोः संभक्ता वेगः । न च एनं केचन निवारयन्ति गच्छन्तीं युवतीम् इव विशीर्णचारित्राम् असतीम् इति ॥ ३ ॥

[२]इति अष्टमाष्टके अष्टमाध्याये षट्त्रिंशो वर्गः[२] ॥

## [ १७९ ]

[३]१ शिबिरौशीनर ऋषिः, २ काशिराजः प्रतर्दनः, ३ रौहिदश्वो वसुमनाः । इन्द्रो देवता । त्रिष्टुप् छन्दः, आद्या अनुष्टुप्[३] ।

उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम् ।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥ १ ॥

उत् । तिष्ठत । अव । पश्यत । इन्द्रस्य । भागम् । ऋत्वियम् ।
यदि । श्रातः । जुहोतन । यदि । अश्रातः । ममत्तन ॥ १ ॥

वेङ्कट० शिबिरौशीनरः, काशिराजः प्रतर्दनः, रौहिदश्वो वसुमनाः इति एकर्चाः । उत् तिष्ठत ऋत्विजः !, अव पश्यत इन्द्रस्य भागम् ऋतौ भवं यः तस्य कालः तत्र भवम् । सः यदि भागः पक्कः शीघ्रं जुहुत । अथ यदि अशृतः, तावत् इन्द्रं स्तुत ॥ १ ॥

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम् ।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥ २ ॥

---

१. स्वरतः सम्बुद्ध्यन्तं द्र. ( तु. सा. प्रभृतयः । वें. प्रथमान्तमिति विमृश्यम् ) । विभक्तिभेदे तु. ऋ १,१८५,७; ४,२३,१०. २. अत्र या. (१०,२९) द्र. ३-३. नास्ति मूको.

श्रातम् । हविः । ओ इति । सु । इन्द्र । प्र । याहि । जगाम । सूरः । अध्वनः । विऽमध्यम् ।
परि । त्वा । आसते । निधिऽभिः । सखायः । कुलऽपाः । न । व्राजऽपतिम् । चरन्तम् ॥ २ ॥

**वेङ्कट०** पक्वम् हविः आ प्र याहि क्षिप्रम् इन्द्र!, [1]जगाम सूरः अध्वनः विमध्यम्[1] । तस्मिन् हि काले माध्यन्दिनं सवनं भवति। परि आसते त्वाम् पात्रैः सखायः कुलं रक्षन्त्यः इव स्त्रियः प्रोषितं पतिम् पुनः आगच्छन्तम् इति ॥ २ ॥

श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः ।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ॥ ३ ॥

श्रातम् । मन्ये । ऊधनि । श्रातम् । अग्नौ । सुऽश्रातम् । मन्ये । तत् । ऋतम् । नवीयः ।
माध्यन्दिनस्य । सवनस्य । दध्नः । पिब । इन्द्र । वज्रिन् । पुरुऽकृत् । जुषाणः ॥ ३ ॥

**वेङ्कट०** श्रतम् मन्ये गोः ऊधनि, श्रतम् च अग्नौ पश्चात्, पश्चात् सुश्रातम् एवं जानामि तत् ऋतम् नवतरम्। माध्यन्दिनस्य सवनस्य स्वभूतं दधि पिब इन्द्र! वज्रिन्! पुरोः कर्तः! प्रीयमाणः ॥ ३ ॥

[2]इति अष्टमाष्टके अष्टमाध्याये सप्तत्रिंशो वर्गः[2] ॥

## [ १८० ]

[3]जय ऐन्द्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[3] ।

प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् ॥ १ ॥

प्र । ससहिषे । पुरुऽहूत । शत्रून् । ज्येष्ठः । ते । शुष्मः । इह । रातिः । अस्तु ।
इन्द्र । आ । भर । दक्षिणेन । वसूनि । पतिः । सिन्धूनाम् । असि । रेवतीनाम् ॥ १ ॥

**वेङ्कट०** जय ऐन्द्रः । प्रकर्षेण अभिभूतवान् असि पुरुहूत! शत्रून्। प्रशस्यम् तव बलम्। अपि च मयि तव आदानम् अस्तु। इन्द्र! आ भर दक्षिणेन हस्तेन धनानि। पतिः असि त्वं नदीनाम् पशुमतीनाम् इति। आपो हि पशून् वर्धयन्ति ॥ १ ॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व ॥ २ ॥

[1]मृगः । न । भीमः । कुचरः । गिरिऽस्थाः[1] । पराऽवतः । आ । जगन्थ । परस्याः ।
सृकम् । सम्ऽशाय । पविम् । इन्द्र । तिग्मम् । वि । शत्रून् । ताळ्हि । वि । मृधः । नुदस्व ॥ २ ॥

**वेङ्कट०** मृगः इव भीमः कुत्सितं कर्म चरन् पर्वते वर्तमानः परस्याः परावतः अत्यन्तं दूरात्

---

१-१. °म ··· मध्य° मूको. २-२. नास्ति मूको. ३-३. अत्र या. ( १,२० ) द्र.

आ जगन्थ। स त्वं वज्रम् पविम् आह्यम् शिलायां तीक्ष्णम् संशाय तीक्ष्णधारं कृत्वा शत्रून् विदारय, वि नुदस्व मृधः इति ॥ २ ॥

इन्द्रं क्षत्रम॒भि वा॒ममोजोऽजा॑यथा वृषभ चर्षणी॒नाम् ।
अपा॑नुदो जन॑ममित्र॒यन्त॑मु॒रुं दे॒वेभ्यो॑ अकृणोरु लो॒कम् ॥ ३ ॥

इन्द्रं । क्ष॒त्रम् । अ॒भि । वा॒मम् । ओज॑: । अजा॑यथाः । वृ॒ष॒भ॒ । च॒र्ष॒णी॒नाम् ।
अप॑ । अ॒नु॒द॒: । जन॑म् । अ॒मि॒त्र॒ऽयन्त॑म् । उ॒रुम् । दे॒वेभ्य॑: । अ॒कृ॒णो॒: । ऊँ इति॑ । लो॒कम् ॥३॥

वेङ्कट० इन्द्र! बलम् अभि अजायथाः वननीयम् ओजः च मनुष्याणां रक्षणार्थम् वृषभ! । अप अनुदः च जनम् शत्रूयन्तम्, विस्तीर्णम् च देवेभ्यः कृतवान् असि लोकम् इति ॥ ३ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये अष्टात्रिंशो वर्गः[1] ॥

[ १८१ ]

[1]१ प्रथो वासिष्ठ ऋषिः, २ सप्रथो भारद्वाजः, ३ घर्मः सौर्यः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[1] ।

प्रथ॑श्च॒ यस्य॑ स॒प्रथ॑श्च॒ नामानु॑ष्टुभस्य ह॒विषो॑ ह॒विर्यत् ।
धा॒तुर्द्युता॑नात् सवि॒तुश्च॒ विष्णो॑ रथन्त॒रमा ज॑भारा॒ वसि॑ष्ठः ॥ १ ॥

प्रथ॑: । च॒ । यस्य॑ । स॒ऽप्रथ॑: । च॒ । नाम॑ । आनु॑ऽस्तुभस्य । ह॒विष॑: । ह॒विः । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णो॑: । र॒थ॒म्ऽत॒रम् । आ । ज॒भा॒र॒ । वसि॑ष्ठः ॥ १ ॥

वेङ्कट० प्रथो वासिष्ठः, सप्रथो भारद्वाजः, घर्मः सौर्य इत्येकर्चाः। वैश्वदेवम्। प्रथः[2] च सप्रथः[1] च इति यस्य रथन्तरस्य द्वे नामनी, यत् च रथन्तरम् वाचा संस्कृतस्य सर्वस्य हविषः हविः भवति। प्रयच्छति तत् सर्वं देवेभ्य इत्यर्थः। तत् रथन्तरम् वसिष्ठः ऋषिः एतेभ्यः आ जहार इति इतिहासापेक्षम् इति ॥ १ ॥

अवि॑न्दन् ते अति॑हितं॒ यदासी॑द् य॒ज्ञस्य॒ धाम॑ पर॒मं गुहा॒ यत् ।
धा॒तुर्द्युता॑नात् सवि॒तुश्च॒ विष्णो॑र्भ॒रद्वा॑जो बृ॒हदा च॑क्रे अ॒ग्नेः ॥ २ ॥

अवि॑न्दन् । ते । अति॑ऽहितम् । यत् । आसी॑त् । य॒ज्ञस्य॑ । धाम॑ । प॒र॒मम् । गुहा॑ । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णो॑: । भ॒रत्ऽवा॑जः । बृ॒हत् । आ । च॒क्रे॒ । अ॒ग्नेः ॥२॥

वेङ्कट० अविन्दन् ते अतिहितम्[4] तिरोहितम् यत् आसीत् बृहत् यज्ञस्य स्थानम् परमम्, गुहायाम् यत् अतिहितम्, तत् आदित्येभ्यः पञ्चभ्यः भरद्वाजः आ चक्रे आजहार इति ॥ २ ॥

तेऽवि॑न्द॒न् मन॑सा॒ दीध्या॑ना॒ यजुः॒ ष्कन्नं॑ प्रथ॒मं दे॑व॒यान॑म् ।
धा॒तुर्द्युता॑नात् सवि॒तुश्च॒ विष्णो॒रा सूर्या॑दभरन् घ॒र्ममे॒ते ॥ ३ ॥

---

१-१. नास्ति मूको. २. प्रथय मूको. ३. °थयः मूको. ४. हितं मूको.

ते । अविन्दन् । मनसा । दीध्यानाः । यजुः । स्कन्नम् । प्रथमम् । देवऽयानम् ।
धातुः । द्युतानात् । सवितुः । च । विष्णोः । आ । सूर्यात् । अभरन् । घर्मम् । एते ॥ ३ ॥

वेङ्कट० ते लब्धवन्तः मनसा ध्यायन्तः यज्ञम् स्कन्नम् प्रथमम् देवयानम्। तद्देवोक्तम्—धातुः इति । सूर्यात् घर्मम् प्रवर्ग्यम् आ-हृतवन्तः देवाः इति ॥ ३ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये एकोनचत्वारिंशो वर्गः[1] ॥

[ १८२ ]

[1]तपुर्मूर्धा बार्हस्पत्य ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः[1] ।

बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ १ ॥

बृहस्पतिः । नयतु । दुःऽगहा । तिरः । पुनः । नेषत् । अघऽशंसाय । मन्म ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥१॥

वेङ्कट० बृहस्पतिः दुष्टानां गाहयिता राक्षसम् तिरः नयतु। पुनः नयतु राक्षसाय मननीयम् आयुधम्। क्षिपतु पापम्। अप हन्तु दुर्मतिम्। अथ करोतु यजमानाय शम् च योः च ॥१॥

नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ २ ॥

नराशंसः । नः । अवतु । प्रऽयाजे । शम् । नः । अस्तु । अनुऽयाजः । हवेषु ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥२॥

वेङ्कट० नरैः शस्यमानः बृहस्पतिः अस्मान् रक्षतु यज्ञस्य प्रयाजेषु इज्यमानेषु। अपि च शङ्करः अस्माकम् अनुयाजः बृहस्पतेः हवेषु इति ॥ २ ॥

तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ ३ ॥

तपुःऽमूर्धा । तपतु । रक्षसः । ये । ब्रह्मऽद्विषः । शरवे । हन्तवै । ऊँ इति ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥ ३ ॥

वेङ्कट० तापकशिरस्कः बृहस्पतिः तपतु रक्षसः ब्राह्मणान् द्वेष्टॄन् विशरणाय हननाय च। ये रश्मयः प्रभवन्ति तैः तद् रक्ष इति ॥ ३ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये चत्वारिंशो वर्गः[1] ॥

---

१-१. नास्ति मूको.

## [ १८३ ]

[1]प्रजावान् प्राजापत्य ऋषिः । १ यजमानो देवता, २ यजमानपत्नी, ३ होत्राशिषः । त्रिष्टुप् छन्दः[1] ।

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥ १ ॥

अपश्यम् । त्वा । मनसा । चेकितानम् । तपसः । जातम् । तपसः । विऽभूतम् ।
इह । प्रऽजाम् । इह । रयिम् । रराणः । प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥ १ ॥

वेङ्कट० प्रजावान् प्राजापत्यः । प्रत्यृचम् यजमानपत्नीहोत्राशिषः । तृचं सूक्तम् । आद्यया यजमानम् ईक्षते, द्वितीयया पत्नीम्, तृतीयया आत्मानमिति । अपश्यम् त्वा यजमानम् मनसा जानन्तम् तपसः जातम् तपसः विभूतम् इति दीक्षातपसोः जातम् आह । स त्वम् अस्मिन् लोके पुत्रम् धनम् च प्रति रराणः प्रजया प्र जायस्व पुत्रकाम! इति ॥ १ ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥ २ ॥

अपश्यम् । त्वा । मनसा । दीध्यानाम् । स्वायाम् । तनू इति । ऋत्व्ये । नाधमानाम् ।
उप । माम् । उच्चा । युवतिः । बभूयाः । प्र । जायस्व । प्रजया । पुत्रऽकामे ॥ २ ॥

वेङ्कट० पश्यामि त्वा मनसा ध्यायन्तीम् स्वायाम् तन्वाम् पुत्रम् ऋतुकाले याचमानाम् । सा त्वम् माम् उप भव शयने[2] उच्छ्रिते युवतिः । प्र जायस्व प्रजया पुत्रकामे! इति ॥ २ ॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ ३ ॥

अहम् । गर्भम् । अदधाम् । ओषधीषु । अहम् । विश्वेषु । भुवनेषु । अन्तरिति ।
अहम् । प्रऽजाः । अजनयम् । पृथिव्याम् । अहम् । जनिऽभ्यः । अपरीषु । पुत्रान् ॥ ३ ॥

वेङ्कट० होता यजमानो भूत्वा वदति—अहम् यज्ञस्य प्रवर्तकः गर्भम् अदधाम् ओषधीषु, अहम् एव विश्वेषु भुवनेषु अन्तः, अहम् एव प्रजाः जनयामि पृथिव्याम्, अहम् जनयितृभ्यः पतिभ्यः अपरीषु स्त्रीषु असगोत्रासु पुत्रान् जनयामि ॥ ३ ॥

[1]इति अष्टमाष्टके अष्टमाध्याये एकचत्वारिंशो वर्गः[1] ॥

## [ १८४ ]

[1]त्वष्टा गर्भकर्ता ऋषिः, विष्णुः प्राजापत्यो वा । आद्याया विष्णु-त्वष्टृ-प्रजापति-धातारो देवता, द्वितीयस्याः सिनीवाली-सरस्वत्यश्विनः, तृतीयस्या अश्विनौ । अनुष्टुप् छन्दः[1] ।

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥

१-१. नास्ति मूको. २. मयने मूको.

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।
आ । सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ १ ॥

**वेङ्कट०** त्वष्टा गर्भकर्ता[1] । आशीः । लिङ्गोक्तदैवतम् । विष्णुः योनिम् कल्पयतु । [2]त्वष्टा रूपाणि[2] रेतसः पिंशतु । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि वि करोति तावच्छो वै तत् प्रजायते' ( तै १,५,९,१-२ ) इति ब्राह्मणम् । आ सिञ्चतु रेतः प्रजापतिः । अथ धारयतु गर्भम् धाता तव इति ॥ १ ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति ।
गर्भम् । ते । अश्विनौ । देवौ । आ । धत्ताम् । पुष्करऽस्रजा ॥ २ ॥

**वेङ्कट०** गर्भम् धारय [2]सिनीवालि! । गर्भम् धेहि सरस्वति![2] । [3]गर्भम् तव अश्विनौ[3] उभौ अपि देवौ आ धत्ताम् पुष्करमालिनौ ॥ २ ॥

हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ ३ ॥

हिरण्ययी इति । अरणी इति । यम् । निःऽमन्थतः । अश्विना ।
तम् । ते । गर्भम् । हवामहे । दशमे । मासि । सूतवे ॥ ३ ॥

**वेङ्कट०** हिरण्मय्यौ अरणी द्यावापृथिव्यौ यम् अग्निम् गर्भम् निर्मथितवन्तौ अश्विनौ, तम् तव उदरे गर्भम् जुहुमः दशमे मासि सोतुम् ॥ ३ ॥

[4]इति अष्टमाष्टके अष्टमाध्याये द्विचत्वारिंशो वर्गः[4] ॥

## [ १८५ ]

[4]सत्यधृतिर्वारुणिर्ऋषिः । आदित्यः ( स्वस्त्ययनम् ) देवता । गायत्री छन्दः[4] ।

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ १ ॥

महि । त्रीणाम् । अवः । अस्तु । द्युक्षम् । मित्रस्य । अर्यम्णः । दुःऽआधर्षम् । वरुणस्य ॥ १ ॥

**वेङ्कट०** सत्यधृतिः[5] वारुणिः । महत्[6] त्रयाणाम् आदित्यानाम् [2]मित्रस्य अर्यम्णः च दीप्तं रक्षणम् अस्तु[2], तथा वरुणस्य च दुराधर्षम् [2]रक्षणम् अस्तु[2] ॥ १ ॥

नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ २ ॥

---

१. रूपकर्ता अ[1]. २-२. त्रुटितम् मूको. ३-३. ...वश्विनौ वि[2]; अश्विनौ अ[1]. ४-४. नास्ति मूको. ५. सन्ततिः मूको. ६. मह मूको.

नहि । तेषाम् । अमा । चन । न । अध्वऽसु । वारणेषु । ईशे । रिपुः । अघऽशंसः ॥ २ ॥

वेङ्कट० यान् आदित्याः रक्षन्ति, नहि तेषाम् गृहेषु च न अपि मार्गेषु चोरसद्भावात् गच्छतां वारकेषु ईष्टे रिपुः अघशंसः इति ॥ २ ॥[1]

यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३ ॥

यस्मै । पुत्रासः । अदितेः । प्र । जीवसे । मर्त्याय । ज्योतिः । यच्छन्ति । अजस्रम् ॥ ३ ॥

वेङ्कट० यस्मै मनुष्याय[2] अदितेः पुत्राः[3] प्र यच्छन्ति [4]जीवनाय ज्योतिः अजस्रम्[4] आदित्याख्यम् तस्मै नेशे[5] स्तेन इति ॥ ३ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये त्रिचत्वारिंशो वर्गः[6] ॥

[ १८६ ]

[6]उलो वातायन ऋषिः । वायुर्देवता । गायत्री छन्दः[6] ।

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ॥ १ ॥

वातः । आ । वातु । भेषजम् । शम्ऽभु । मयःऽभु । नः । हृदे । प्र । नः । आयूंषि । तारिषत् ॥

वेङ्कट० उलो वातायनः । वातः आ गमयतु भेषजम् शंभु मयोभु च । शंमयसोः[7] अल्पो भेदः । अस्माकम् हृदयाय, वर्धयतु च अस्माकम् आयूंषि ॥ १ ॥

उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ २ ॥

उत । वात । पिता । असि । नः । उत । भ्राता । उत । नः । सखा । सः । नः । जीवातवे । कृधि ॥२॥

वेङ्कट० अपि च हे वात! पिता असि नः, अपि च भ्राता, [8]अपि च नः सखा[8] । सः अस्माकम् जीवनाय कुरु इति ॥ २ ॥

यददो वात ते गृहे३मृतस्य निधिर्हितः । ततो नो देहि जीवसे ॥ ३ ॥

यत् । अदः । वात । ते । गृहे । अमृतस्य । निऽधिः । हितः । ततः । नः । देहि । जीवसे ॥ ३ ॥

वेङ्कट० यत् अमुत्र 'हे वात! तव गृहे अमृतस्य' निधिः हितः, ततः किञ्चिद् अस्मभ्यम् प्रयच्छ जीवनाय ॥ ३ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये चतुश्चत्वारिंशो वर्गः[6] ॥

[ १८७ ]

[6]वत्स आग्नेय ऋषिः । अग्निर्देवता । गायत्री छन्दः[6] ।

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः ॥ १ ॥

प्र । अग्नये । वाचम् । ईरय । वृषभाय । क्षितीनाम् । सः । नः । पर्षत् । अति । द्विषः ॥ १ ॥

---

१. पादान्ते छन्दस्तः '°णेषु वा' इति शोधः द्र. (तु. वैप १,२८२३ k). २. पुत्राय अ[1]. ३. मनुष्याः अ[1]. ४-४. जीव…रज° मूको. ५. नैशे अ[1]. ६-६. नास्ति मूको. ७. शर्मयशसोः मूको. ८-८. त्रुटितम् मूको.

**वेङ्कट०** वत्स[1] आग्नेयः। प्र ईरय अग्नये वाचम् वर्षित्रे मनुष्याणाम्। सः अस्मान् अति-पारयतु द्वेष्टॄन् इति ॥ १ ॥

यः पर॑स्याः परा॒वत॑स्ति॒रो धन्वा॑ति॒रोच॑ते । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ २ ॥

यः । पर॑स्याः । प॒रा॒ऽवतः॑ । ति॒रः । धन्व॑ । अ॒ति॒ऽरोच॑ते । सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ २ ॥

**वेङ्कट०** [2]यः परस्याः परावतः अत्यन्तं दूरात्[2] आगच्छन् तिरः कुर्वन् [3]अन्तरिक्षे अतिरोचते[3] ॥ २ ॥

यो रक्षां॑सि नि॒जूर्व॑त्य॒ग्निस्ति॒ग्मेन॒ ... 

यो रक्षां॑सि नि॒जूर्व॑ति॒ वृषा॑ शु॒क्रेण॑ शो॒चिषा॑ । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ ३ ॥

यः । रक्षां॑सि । नि॒ऽजूर्व॑ति । वृषा॑ । शु॒क्रेण॑ । शो॒चिषा॑ । सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ ३ ॥

**वेङ्कट०** यः रक्षांसि निहन्ति वर्षिता[4] शुक्रेण शोचिषा ॥ ३ ॥

यो विश्वा॒भि वि॒पश्य॑ति॒ भुव॑ना॒ सं च॒ पश्य॑ति । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ ४ ॥

यः । विश्वा॑ । अ॒भि । वि॒ऽपश्य॑ति । भुव॑ना । सम् । च॒ । पश्य॑ति । सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥

**वेङ्कट०** निगदसिद्धेति ॥ ४ ॥

यो अ॒स्य पा॒रे रज॑सः शु॒क्रो अ॒ग्निरजा॑यत । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ ५ ॥

यः । अ॒स्य । पा॒रे । रज॑सः । शु॒क्रः । अ॒ग्निः । अजा॑यत । सः । न॒ः । प॒र्ष॒त् । अति॑ । द्विषः॑ ॥ ५ ॥

**वेङ्कट०** यः अस्य लोकस्य पारे [5]प्रातः ज्वलन्[5] अग्निः अजायत आदित्यरूप इति ॥ ५ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये पञ्चचत्वारिंशो वर्गः[6] ॥

## [ १८८ ]

[6]आग्नेयः श्येन ऋषिः। जातवेदा अग्निर्देवता। गायत्री छन्दः[6]।

प्र नू॒नं जा॒तवे॑दस॒मश्वं॑ हिनोत वा॒जिन॑म् । इ॒दं नो॑ ब॒र्हिरा॒सदे॑ ॥ १ ॥

प्र । नू॒नम् । जा॒तऽवे॑दसम् । अश्व॑म् । हि॒नो॒त॒ । वा॒जिन॑म् । इ॒दम् । न॒ः । ब॒र्हिः । आ॒ऽसदे॑ ॥ १ ॥

**वेङ्कट०** [7]श्येन आग्नेयः[7]। प्र-हिणुत क्षिप्रम् [8]जातवेदसम् अश्वम् वाजिनम्। औपमिकम्[8]। इदम् अस्माकम् बर्हिः आसत्तुम्[9] ॥ १ ॥

अ॒स्य प्र जा॒तवे॑द॒सो विप्र॑वीरस्य मी॒ळ्हुषः॑ । म॒हीमि॑यर्मि सुष्टु॒तिम् ॥ २ ॥

अ॒स्य । प्र । जा॒तऽवे॑दसः । विप्र॑ऽवीरस्य । मी॒ळ्हुषः॑ । म॒हीम् । इ॒य॒र्मि॒ । सु॒ऽस्तु॒तिम् ॥ २ ॥

---

१. त्रुटितम् मूको. २-२. यत परस्या यः परस्या ··· परावनो दूरात् वि[२]; यत् परस्याः यः परस्या परावतो दूरात अ[१]. ३-३. अन्तरिते वि[२]; अन्तरिक्षे अ[१]. ४. °र्षितः मूको. ५. प्रतज्व° वि[२]; प्रजज्व° अ[१]. ६-६. नास्ति मूको. ७-७. ···नआइने° वि[२]; ···नाग्ने° अ[१]. ८-८. °वेदौप° मूको. ९. आसक्तम् मूको.

वेङ्कट० अस्य प्र ईरयामि जातवेदसः मेधाविवीरस्य। वीराः स्तोत्रस्य प्रेरकाः। सेक्तुः महतीम् सुष्टुतिम् ॥ २ ॥

या रुचो जातवेदसो देवत्रा हव्यवाहनीः। ताभिर्नो यज्ञमिन्वतु ॥ ३ ॥

याः। रुचः। जातऽवेदसः। देवऽत्रा। हव्यऽवाहनीः। ताभिः। नः। यज्ञम्। इन्वतु ॥ ३ ॥

वेङ्कट० याः[1] दीप्तयः जातवेदसः [2]देवान् प्रति हविषां[2] बोढ्यः[3] ताभिः सह [4]सोऽस्माकम् यज्ञम् व्याप्नोतु[4] ॥ ३ ॥

[5]इति अष्टमाष्टके अष्टमाध्याये षट्चत्वारिंशो वर्गः[5] ॥

[ १८९ ]

[5]सार्पराज्ञी ऋषिका। आत्मा सूर्यो वा देवता। गायत्री छन्दः[5]।

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः ॥ १ ॥

आ। अयम्। गौः। पृश्निः। अक्रमीत्। असदत्। मातरम्। पुरः। पितरम्। च। प्रऽयन्। स्वरिति स्वः ॥

वेङ्कट० सार्पराज्ञी। गमनशीलः अयम् आ क्रामति त्रैलोक्यं पृश्निवर्णः सीदति च पृथिवीम् प्रति पुनः-पुनः पितरम् च दिवम् प्रति गच्छन् इति ॥ १ ॥

अन्तश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवम् ॥ २ ॥

अन्तरिति। चरति। रोचना। अस्य। प्राणात्। अपऽअनती। वि। अख्यत्। महिषः। दिवम् ॥ २ ॥

वेङ्कट० मनुष्याणाम् अन्तः चरति [6]रोचना अस्य[6] दीप्तिः प्राणव्यापाराद् [7]अनन्तरम् अपानती[7]। वि चष्टे [7]महान् सूर्यः[7] द्युलोकम् इति ॥ २ ॥

त्रिंशद्धाम वि राजति वाक् पतङ्गाय धीयते। प्रति वस्तोरह द्युभिः ॥ ३ ॥

त्रिंशत्। धाम। वि। राजति। वाक्। पतङ्गाय। धीयते। प्रति। वस्तोः। अह। द्युऽभिः ॥ ३ ॥

वेङ्कट० सोऽयम् अग्निः त्रिंशतम्[8] मुहूर्तान् वि राजति, रात्रौ न तु तिरोभवति। एतस्मै गमनशीलाय स्तुतिः प्रति धीयते[9] स्तोतृभिः [10]दीप्तैः मन्त्रैः वेति[10] ॥ ३ ॥

[5]इति अष्टमाष्टके अष्टमाध्याये सप्तचत्वारिंशो वर्गः[5] ॥

[ १९० ]

[5]माधुच्छन्दसोऽघमर्षण ऋषिः। भाववृत्तं देवता। अनुष्टुप् छन्दः[5]।

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥

---

१. या रुचः अ[1]. २-२. ···ह० वि[2]; नास्ति अ[1]. ३. वोढाः अ[1]. ४-४. त्रुटितम् मूको. ५-५. नास्ति मूको. ६-६. रे···नास्य वि[2]; ···नास्य अ[1]. ७-७. °न्तान् मूको. ८. त्रिंशतः मूको. ९. दीयते मूको. १०-१०. दीप्ते···वेति मूको.

ऋतम् । च । सत्यम् । च । अभिऽइद्धात् । तपसः । अधि । अजायत ।
ततः । रात्री । अजायत । ततः । समुद्रः । अर्णवः ॥ १ ॥

**वेङ्कट०** '**माधुच्छन्दसोऽघमर्षणः । ऋतम् च सत्यम्**[1] च अभीद्धात् तप्यमानात् ब्रह्मणः अजायत । 'तत् यत् ऋतम् इति वाक् सा यत् सत्यम् इति प्राणः' इति शाट्यायनकम् ( तु. जैमि ३,३६०;२,४२५ ) । ततः रात्रिः अजायत, ततः समुद्रः उदकवान् इति । 'इदं वा अग्रे नैव [2]किंचनासीत्' ( तैब्रा २, २,९,१ ) इति अध्वर्युब्राह्मणम्[2] इति ॥ १ ॥

**समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥२॥**

समुद्रात् । अर्णवात् । अधि । संवत्सरः । अजायत । अहोरात्राणि । विऽदधत् । विश्वस्य । मिषतः । वशी ॥

**वेङ्कट०** समुद्रात् उदकवतः [3]संवत्सरः अब्दः अजायत[3] अहोरात्राणि विदधत् विश्वस्य मिषतः पश्यतो भूतस्य वशी इति ॥ २ ॥

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥३॥**

सूर्याचन्द्रमसौ । धाता । यथाऽपूर्वम् । अकल्पयत् । दिवम् । च । पृथिवीम् । च । अन्तरिक्षम् । अथो । स्वः ॥

**वेङ्कट०** एतत् सर्वं सृष्ट्वा[4] धाता सूर्यादिकमपि पूर्वकल्पानुरूप्येण अकल्पयत् अथ स्वः[5] सर्वमित्यर्थः ॥ ३ ॥

[6]इति अष्टमाष्टके अष्टमाध्याये अष्टचत्वारिंशो वर्गः[6] ॥

## [ १९१ ]

[7]संवनन आङ्गिरस ऋषिः । १ अग्निर्देवता, २-४ संज्ञानम् । अनुष्टुप् छन्दः, तृतीया त्रिष्टुप्[7] ।

**संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्या भर ॥१॥**

समऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ १ ॥

**वेङ्कट० संवनन आङ्गिरसः । संवननम् । सम्मिश्रयसि एव वर्षितः! अग्ने!** विश्वानि **धनानि च स्वामी त्वम् आभिमुख्येन । स त्वम्** इडायाः पदे सम् इध्यसे । सः **अस्मभ्यम्** [8]धनानि आ भर[8] ॥ १ ॥

**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथा पूर्वे संजानाना उपासते ॥ २ ॥**

सम् । गच्छध्वम् । सम् । वदध्वम् । सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे । सम्ऽजानानाः । उपऽआसते ॥ २ ॥

**वेङ्कट० स्तोतारः** '**यूयम्** सम् गच्छध्वम्', सम् वदध्वम्, मनांसि **च युष्माकम्** सम् जानताम् **अस्मदी-**

---

**१-१.** °सो···सत्यम् **मूको. २-२.** °ना···ध्व° वि[२]. **३-३.** °त्सराब्देवोजा° **मूको. ४.** दृष्ट्वा **मूको. ५. सुवः मूको. ६-६. नास्ति मूको. ७-७.** धना···**मूको. ८-८. त्रुटितम् मूको.**

योऽयमिति[१]। देवाः भागम् **यज्ञीयम्** यथा इतरम् सञ्जानानाः उपासते प्रज्ञाः[२], **तथा यूयमपि** कुरुध्वम् इति ॥ २ ॥

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ ३ ॥

समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । मनः । सह । चित्तम् । एषाम् ।
समानम् । मन्त्रम् । अभि । मन्त्रये । वः । समानेन । वः । हविषा । जुहोमि ॥ ३ ॥

**वेङ्कट०** [३]समानः मन्त्रः समितिः समानी **युष्माकम्**[३], समानम् मनः[४] चित्तम् **च** [५]**अनुसन्धानसाधनम् सह**[५] भवतु एषाम् **युष्माकम्** इति। [६]समानम् मन्त्रम् अभि[६] **उच्चारयामि युष्माकम्, येन सङ्गताः स्यात।** तथाऽनेन समानेन हविषा **युष्माकम्** जुहोमि इति ॥ ३ ॥

समानी व आकूतिः समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति ॥४॥

समानी । वः । आऽकूतिः । समाना । हृदयानि । वः ।
समानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ४ ॥

[७]इति अष्टमाष्टके अष्टमाध्याये एकोनपञ्चाशो वर्गः[७] ॥

व्याख्यदष्टममध्यायम् अष्टमस्याष्टकस्य सः ।
तीरमाश्रित्य निवसन् कावेर्या दक्षिणं सुखम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने अष्टमाष्टके अष्टमोऽध्यायः ॥

—:※:—

इति ऋग्वेदे सभाष्ये दशमं मण्डलं समाप्तम् ॥



---

१. अस्म…यमिति मूको. २. प्रश्नाः मूको. ३-३. …स्मा° मूको. ४. नास्ति मूको.
५-५. °धानां…सह मूको. ६-६. °मं…अ° मूको. ७-७. नास्ति मूको.

# शोधपत्रम्[1]

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३४६१ | १ | 'वपः' | 'वेपः' |
| ,, | २ | ईंष° | ईष° |
| ,, | २१ | सर्वभूतानि | सर्वस्वभूतानि |
| ३४७२ | १३ | भोज्यत्वाद् | भोज्यवत्त्वाद् |
| ३४८० | १५ | इनः | इ॒नः |
| ३४८४ | १० | [५]यसश्चन्व° | यमश्चान्व° |
| ३४८६ | २८ | स्विष्टदा° | स्विष्टकृदा° |
| ३४८८ | २० | सम्परिचारा-र्थस्याधि° | सम्परिचारार्थं यज्ञस्याधि° |
| ३४९४ | ५ | प्रब्रुवाणो | प्रब्रुवाणो |
| ३५०२ | ३ | प्रजावन्तः | प्र॒जाव॑न्तः |
| ३५०४ | १८ | °गापायना | °गौपायना |
| ३५११ | २३ | आदिश्यं | आदिश्य |
| ३५२६ | २७ | रिवृद्ध° | परिवृद्ध° |
| ३५२८ | १४ | स्तोतृश्चा° | स्तोतृंश्चा° |
| ३५३४ | १३ | [४]ऊत्या गत्या | ऊत्या [४]गत्या |
| ,, | १४ | गच्छ | गच्छ- |
| ३५३५ | १३ | की॰दशम् | कीदृशम् । |
| ३५३७ | १६ | हविः सह° | हविःसह° |
| ३५४० | २१ | लाडर्थे | लडर्थे |
| ३५४१ | १७ | सहाऽऽदित्ये[६] | सहाऽदित्या[६] |
| ३५४४ | १५ | सुमित्राः, | सुमित्र्याः, |
| ३५४३ | २ | °घृत्वं | °घृत्वं |
| ,, | ११ | तौग्रं | तौग्र्यं |
| ३५५४ | १८ | निः | यज्ञनिः |
| ३५५५ | १२ | दिव | दिवः |
| ३५५६ | २० | होतारा | होता॑रा |
| ३५५९ | ११ | होतृत्वेन[४] | हेतुकर्तृत्वेन[४] |
| ३५६२ | ६/,१० | °मिथोऽव° | मिथो अ° |
| ,, | १८ | शस्त्रवृष्टिं | शस्त्रवृष्टेः |
| ३५६५ | ५ | कृषीबलाः[१] | कृषीवलाः[१] |
| ३५७२ | २१ | सवस्व | सेवस्व |
| ,, | ,, | स्वशत्रु° | सः शत्रु° |
| ३५७२ | ३० | सशत्रु° वि[२] अ[१]. | स्वशत्रु° वि[१]. |
| ३५७५ | १६ | स्तुवन्त | स्तुतवन्त |
| ३५८० | २३ | यज्ञपुत्राणि | यज्ञपात्राणि |
| ३५८१ | १७ | आन्ट् | आनट् |
| ३५८४ | ७ | धीमन्त | धीमन्तः |
| ३५८७ | १९ | ऊ॒ | ऊँ॒ |
| ३५८८ | १२ | °प्रज्ञं | °प्रज्ञम् |
| ,, | ,, | किल्वि° | किल्वि° |
| ३५९० | १२ | °ध्यर्युः | °ध्वर्युः |
| ३५९३ | ५ | वय | वयं |
| ३५९४ | २० | जाता | जाताः |
| ३६०५ | १७ | कामानां | कामानाम् |
| ३३०६ | ११ | त्रयस्त्रिंशतां | त्रयस्त्रिंशतो |
| ३६१७ | १३ | पुत्रः | पुत्राः |
| ३६२३ | १२ | आऽदुर्दि° | आ॒ऽदु॒र्दि॒° |
| ३६२९ | २४ | आ॒ग्नरात्रिं | अ॒ग्निरात्रिं |
| ३६४४ | ४ | शत्रन् | शत्रून् |
| ३६४५ | १२ | लंयन्ताम् | लंयन्ताम् |
| ३६५५ | ४ | दत्वा | दत्त्वा |
| ३६५७ | २२ | वीरसू | वीरसूः |
| ३६६३ | २४ | इन्द्रः | (*वृषाकपिः) |
| ,, | ,, | ऋते | इन्द्रादृते |
| ,, | ,, | सकाशम् | × |
| ,, | २५ | मध्ये | मध्ये सकाशम् (?) |
| ,, | २७ | इन्द्रा° | × |
| ३६६५ | १५ | विषयेऽवर्त° | विषये वर्त° |
| ३६६६ | ७ | त्वम्[२] | तान्[२] |
| ,, | ८ | °तमात् | °तमान् |

१. × इत्येतच्चिह्न-परामृष्टः पाठो नेष्टः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६६६ | ८ | अन्तिकभूतान्³ | आसिकाभूतान्³ |
| ,, | ,, | उप-आ-गच्छ | उप आ-गच्छ |
| ,, | २१ | अपुनरागंत | पुनरागतं |
| ३६७० | १८ | ³परुषा वाचः³ | परुषवाचः³ |
| ,, | २७ | परुषवा° वि². | × |
| ३६७३ | ७ | विषेणं। | विषेणं। |
| ३६७८ | २१ | प्रश्नः। ⁶उप-स्पिजम् न | प्रश्नः ⁶उप-स्पिक्। न तं |
| ३६८० | २७ | तनू | अतनू |
| ३६९६ | २३ | द्यावा° | द्यावा° |
| ३७०१ | ७ | अरु° | अरु° |
| ३७०७ | १० | अध्वर्यै° | अध्वर्यो° |
| ३७०८ | २ | तथैति | तथेति |
| ,, | ९ | पुनर्वृत्तये। | अपुनरावृत्तये। |
| ३७११ | २५ | मया | मयि |
| ३७१२ | १५ | स्त्रणं | स्त्रैणं |
| ३७१८ | २५ | रक्षः° | रक्षः° |
| ३७२० | ५ | °ङ्गंमङ्गं | °ङ्गंमङ्गं |
| ३७२३ | ४ | प्रेतिपेदे | प्रतिपेदे |
| ३७२४ | ४ | रथोऽधिकं | रथोऽधिकस्तत् |
| ३७३२ | १४ | पञ्चमाष्टके | पञ्चमाध्याये |
| ३७३७ | २३ | °मुदर्हन्नस्य | °मुदहन्नस्य |
| ३७३८ | २५ | परिऽवृक्तेकं | परिवृक्तेवं |
| ३७३९ | १ | परिवृऽक्ताऽइव | परिवृक्ताऽइव |
| ३७४८ | २ | अपि | अपि¹ |
| ३७४९ | ११ | °व्येष्विवं | °व्येष्विह |
| ३७५६ | १९ | °र्णीऽइव | °र्णीऽइव |
| ३७६७ | १० | सत्रूः। | सत्रुः। |
| ३७७२ | २१ | वर्चस्ययां। | वचस्ययां |
| ३७८९ | ११ | °र्थोऽय | °र्थोऽयं |
| ,, | २४ | व्यसायिनः | व्यवसायिनः |
| ३७९० | १५ | शाट्या° | शाट्या° |
| ३८०० | ७ | सेव्य° | असेव्य³ |
| ३८०२ | ६ | 'वाग्वाऽनुष्टुप् | 'वाग्वा अनुष्टुप् |
| ३८०५ | ११ | सुप्रणयनाः | सुप्रणयनाः! |
| ३८०८ | १ | °वेपुं। | °वेपुं। |
| ३८११ | १ | उपप्लवत। | उदप्लवत। |
| ,, | २८ | °ब्धव्यम् अ. | × |
| ३८१५ | २२ | द्वेर्षः। | द्वेषः। |
| ३८१९ | ८ | °च्छसि¹, | °च्छति¹, |
| ,, | २६ | ३ °च्छति वि². | ३. °च्छसि अ². |
| ३८२३ | १९ | इयर्मस्य | इयर्मस्य |
| ३८४१ | १३ | उक्तम् (?)। | दत्तम्। |
| ३८४४ | ४ | अत्क्रो° | उत्क्रो° |
| ३८५२ | २ | सङ्कामं | सङ्ग्रामं |
| ,, | ८ | उपगमय | अपगमय |
| ३८५७ | ९ | यदांयन् | यदायन् |
| ३८६५ | ४ | क्राम | क्राम् |
| ३८७२ | १९ | पिवतु | पिबतु |
| ३८८२ | १९ | आदानम् | दानम् |
| ३८८७ | ३ | वारकपु | वारकेषु |
| ,, | १८ | यददो | यद्दो |
| ३८९० | ८ | वशी | वशी |
|  | २६ | स्तोतारः | स्तोतारः! |

# V. V. RESEARCH INSTITUTE

## SOME RECENT PUBLICATIONS

| | | Rs |
|---|---|---|
| 1-2. | A Vedic Word-Concordance, Section II (Brāhmaṇa-s and Āraṇyaka-s), Parts 1-2 (Revised and Enlarged Second Edition)—*Vishva Bandhu* ... | 200 |
| 3. | A Vedic Word-Concordance, Section I (Saṁhitā-s), Part 1 (Revised and Enlarged Second Edition) —*Vishva Bandhu*, ed. *S. Bhaskaran Nair* ... | 100 |
| 4. | Critical Studies on the Mahābhāṣya —*V.P. Limaye* ... | 125 |
| 5-6. | Hindī-Sāhitya-Sāriṇī (A Bibliography of Hindi Books published upto 1964), Parts 1-2 —*Pitambar Narain Sharma* and *S. Bhaskaran Nair* ... | 200 |
| 7. | Satyaloka in Ṛgveda : A Study —*A. Venkatasubbiah*, ed. *S. Bhaskaran Nair* ... | 75 |
| 8. | Līlāvatī of Bhāskarācārya with a rationalistic commentary called Kriyākramakarī —Cr. ed. *K. V. Sarma* ... | 80 |
| 9. | Atharvaveda : A Literary Study ( अथर्ववेद : एक साहित्यिक अध्ययन) —*Matri Datta Trivedi* ... | 50 |
| 10. | Kālidāsa : An Assessment by Ānandavardhana —*P. K. Narayana Pillai* ... | 15 |
| 11. | Indian Riddles : A Forgotten Chapter in the History of Sanskrit literature —*Ludwik Sternbach* ... | 45 |
| 12. | The Resurrection of Cow in India —Ed. *H.K. Lal* ... | 35 |
| 13. | Teachings of Swami Dayananda (Talks and Sermons) —*Raghunath Prasad Pathak* ... | 15 |
| 14. | Beginning of Punjabi Nationalism (Autobiography of R. B. Mul Raj) ... | 20 |
| 15. | Leninamṛtam : A Poetical Biography of Comrade V.I. Lenin, in Sanskrit with Hindi Translation ; (Soviet Land Nehru Award-winning publication) —*Padma Shastri* ... | 14 |
| 16. | Panjabi Rāmāyaṇa (in Gurumukhī script) —*Ram Labhaya Anand 'Dilshad'* ... | 25 |
| 17. | Vedic Textuo-linguistic Studies —*Vishva Bandhu*, ed. *K.V. Sarma* ... | 60 |
| 18. | Poetic Elements in the Upaniṣads (उपनिषदों में काव्यतत्त्व ) —*K. K. Dhavan* ... | 50 |
| 19-23. | Mahā-Subhāṣita-Saṁgraha, Vols. I to V—*Ludwik Sternbach*, ed. *S. Bhaskaran Nair* : *K. V. Sarma* (Vol. VI in press). per vol. | 150 |
| 24. | Ārṣeyakalpa with the Commentary of Varadarāja —Cr. ed. *B.R. Sharma* ... | 125 |
| 25. | Nānak Sandesh (A Poetical Composition in Hindi)—*Girish Ojha* .. | 12 |
| 26. | Snowbirds and Other Poems—*Sri Ananda Acharya* ... | 12 |
| 27. | Arctic Swallows and Other Poems—*Sri Ananda Acharya* ... | 15 |
| 28. | Śāṅkhāyana-Āraṇyaka —Cr. ed. *Bhim Dev* ... | 45 |
| 29. | India Office : Its First Decade —*Donavan William* ... | 200 |
| 30. | Tattvajñānam —*Sri Ananda Acharya* | (in press) |
| 31. | Kalpa Sutra (कल्पसूत्र—वैदिक वाङ्मय का बृहद् इतिहास, सप्तम खण्ड)— *Kundan Lal Sharma* ... | 60 |
| 32. | Vedāṅg (वेदाङ्ग— ,, ,, ,, *Kundan Lal Sharma* ... | 60 |

*Place your orders with :*

**Vishveshvaranand Book Agency**

**P. O. Sadhu Ashram, Hoshiarpur—146 021 (Pb., India)**